# *BENARES SANSKRIT SERIES;*

A

COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PAṆḌITS OF THE BENARES SANSKṚIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH M. A.,

LATE DIRECTOR OF PUBLIC INSTRUCTION, N. W. P. & OUDH,

& G. THIBAUT PH. DR.,

PRINCIPAL, BENARES COLLEGE.

*Nos. 11, 19 & 24.*

---

श्रीविश्वनाथो विजयते ।

# वाक्यपदीयं

साङ्गवैयाकरणसिद्धान्तनिरूपणं श्रीभर्तृहरिमहावैयाकरणविरचितं

श्रीपुण्यराजकृतप्रकाशाख्यटीकायुतम् ।

# VÁKYAPADÍYA

A TREATISE ON THE PHILOSOPHY OF SANSKṚIT GRAMMAR BY BHARTṚIHARI, WITH A COMMENTARY BY PUṆYARÁJA.

EDITED BY PAṆḌIT GAṄGÁDHARA ŚÁSTRÍ MANAVALLI,
PROFESSOR OF LITERATURE, SANSKRIT COLLEGE, BENARES.




*BENARES:*

**PUBLISHED BY MESSRS. BRAJ B. DAS & CO.**

PRINTED AT THE BENARES PRINTING PRESS

BY CHHANNULAL.

1887.

॥ श्रीः ॥

# वाक्यपदीयस्य सटीकस्योपसंहारः ।

इदं वाक्यपदीयं काण्डद्वयात्मकमादौ काशिकराजकीयपाठशालायां सांख्यशास्त्राध्यापकेन श्रीयुतरामकृष्णशास्त्रिणा मुद्रयितुमुपक्रान्तम् । अथ स्तोकावशिष्टे प्रथमकाण्डमुद्रणे केन चित्कारणेन संजातवैरस्येनामुना विरमिते तदुत्तरभागपरिशोधने काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यक्षैः श्रीयुतथीबोसाहिबमहाशयैरेतत्कार्यसमापनायादिष्टो ऽहं रसगङ्गाधरस्य सटीकस्य परिशोधने व्यापृतोपि तत्रावश्यकटिप्पण्यादिनिवेशनमुपेक्ष्यैतत्कार्यसंपादनाय प्रावर्तिषि । अत्र चान्विष्यन् पुस्तकसाहायकं समासाद्य समस्तवसुधातलविख्यातमदीयगुरुवरश्री६बालशास्त्रिचरणसरस्वतीभवनस्थं द्वितीयकाण्डान्तमेकं पुस्तकमपरं च किं चित्खण्डितं तावदेव पण्डितवरश्रीढुण्ढिराजाचार्याणां तृतीयं च काण्डत्रयात्मकं मूलमेव तुरीयं तु खण्डितमशुद्धं च तृतीयकाण्डमात्रस्य । तानि चालम्ब्य निर्वाहयन् कार्यमिदं समापय्य पुण्यराजकृतव्याख्यया समलंकृतं द्वितीयकाण्डम् । मूलकारिकापुस्तके ऽत्रैव समाप्ता वाक्यपदीयकारिकेति लेखं वाक्यपदे अधिकृत्य कृतो ग्रन्थ इत्यर्थे अधिकृत्य कृते ग्रन्थे इत्यधिकारीयेण शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः इति सूत्रेण विहितच्छप्रत्ययान्तवाक्यपदीयशब्दस्य वाक्यपदविचारकग्रन्थपरतया काण्डद्वयस्यैव तथात्वमत्रैव ग्रन्थसमाप्तावुपन्यसनीयानां ग्रन्थनिर्माणहेतुप्रयोजनविषयपरिगणनादीनां च निरूपणं तृतीयकाण्डे प्रायः कारकप्रकरणसम्बन्धिविचारं च समीक्ष्य युक्ततमं मन्यमानः समापयामि साम्प्रतमियतैवैतद्ग्रन्थसंमुद्रणम् ॥

तृतीयकाण्डस्य तु पूर्वोदाहृतं हेलाराजकृतव्याख्यासहितं खण्डितमशुद्धं चैकमेव पुस्तकं न कार्यनिर्वाहायालमिति विरतो ऽपि लभेय चेत्समग्रं शुद्धं च पुस्तकं संपादयेयमचिरेणैव तस्यापि मुद्रणमित्यर्थये शास्त्ररसिकान् विलुप्तप्रायसंस्कृतपुस्तकपुनरुज्जीवनमहोत्साहिनो महाशयान् स्वसमीपस्थितैतत्पुस्तकं मां प्रबोधयितुं येनोचितप्रबन्धेन तत्संग्रहीतास्मि। प्रार्थये च गुणैकदर्शिनः परदूषणवाचंयमव्रतान् विपश्चितो मदीयमतिदोषेण सीसकाक्षरयोजकदोषेण च सुलभान्यत्र स्खलितान्युपेक्ष्यास्वादयन्तु प्राचीनतमगभीरवैयाकरणसिद्धान्तसुधारसं सप्रमोदमिति।

मानवल्ल्युपाह्वो गङ्गाधरशास्त्री।

सं० १९४४ आषाढ सुदि ११ शुक्रे।

॥ श्रीः ॥

# श्रीविश्वनाथो जयति ।

## वाक्यपदीयं

पुण्यराजकृतप्रकाशाख्यटीकासहितं प्रारभ्यते ।

॥ श्रीगणेशाय नमः ॥

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥ १ ॥

यतस्सर्वधर्म्मपरिकल्पनातीतं भेदसंसर्गसमतिक्रमेण सर्वाभिः शक्तिभिः समाविष्टं च विद्याऽविद्याप्रविभागरूपं च व्यवहारानुपातिभिर्धर्म्माधर्म्मैः सर्व्वावस्थास्वनाश्रितं च अत एवानादिनिधनं ब्रह्मेति प्रतिज्ञायते । यतोऽनवच्छिन्नं रूपाभिमतानामपि विकाराणां प्रकृत्यन्वयाद् व्यापकं च । सर्व्वशब्दरूपतया सर्व्वशब्दोपग्राह्यतया च शब्दतत्त्वमभिधीयते । तच्चानिमित्तत्वादक्षरम् । अयं भावः । प्रत्यक्चैतन्यस्यान्तः सन्निविष्टस्य परबोधनाय शक्तिरभिष्यन्दत इति । तथा च श्रुतिः । 'सूक्ष्मामर्थेनाप्रविभक्ततत्त्वामेकां वाचमभिष्यन्दमानाम् । उतान्ये विदुरन्यामिव च पूर्तां नानारूपामात्मनि सन्निविष्टा'मिति । विवर्ततेऽर्थभावेनेति । एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्या विभक्तान्यरूपोपग्राहिता विवर्त्तः स्वप्नविषयप्रतिभासवत् । उक्तं च । 'मूर्तिक्रियाविवर्तौ विद्याशक्तिप्रवृत्तिमात्रगतौ । विद्यात्मनिष्ठरूपौ तत्त्वान्यत्वाभ्यामनाख्येयौ । एतच्च तदविद्याया अविद्यात्व'मिति । प्रक्रियेति । यतः शब्दाख्यादुपसंहृतक्रमात्ब्रह्मणः

सर्व्वविकारप्रत्यस्तमये वर्तमानादस्याज्जातात्पूर्वं विकारग्रन्थिरूपत्वे-नाव्यपदेश्याज्जगदाख्या विकाराः प्रक्रियन्त इत्यर्थः । उक्तं च । 'श-ब्देदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम् । विवृतं शब्दमात्राभ्यस्तास्वेव प्रविलीयते' इति ॥ १ ॥

तदेवोपपादयति ॥

**एकमेव यदाम्नातं भिन्नं शक्तिव्यपाश्रयात् ।**
**अपृथक्त्वेऽपि शक्तिभ्यः पृथक्त्वेनेव वर्तते ॥ २ ॥**

यद्विकारविकारिविषयमेकत्वरूपं पृथक्त्वरूपं वा तत्सर्व्वं प्रकृत्येक-त्वादेकमित्याम्नातम् 'एकमेवाद्वितीयम्' 'प्रणव एवैकस्त्रेधा ऽभि-व्यज्यते' इत्यादिश्रुतिभिः । नन्वेवं पृथक्त्वरूपमनुपपन्नमत आह । भि-न्नमिति । शब्दतत्त्वे ब्रह्मणि एकत्त्वाविरोधिन्यः समुचिता आत्मभू-ताः शक्तयः सन्ति मिथो भिन्नास्तद्भेदारोपेण भिन्नं पृथग्रूपमित्यर्थः । तद्यथा एकस्यामुपलब्धौ अर्थाकारप्रत्ययभासमात्रा पृथिवीलोका इति नहि ज्ञेयगताकारावग्रहो ज्ञानस्यैकत्वेन विरुध्यते तथेत्यर्थः । शक्तिभ्यो ब्रह्मणोऽपृथक्त्वेऽपि आरोपितः पृथक्त्वावभास इत्यर्थः । न खलु जातिव्यक्तिवदन्याः शक्तयो ब्रह्मणो विद्यन्ते तत्तत्प्रकाशवत् । तद्वदेव च काल्पनिको भेदव्यवहार इति भावः ॥ २ ॥

ब्रह्मण एकत्वेऽपि शक्तिभेदनियामकमाह ॥

**अध्याहृताः कला यस्य कालशक्तिमुपाश्रिताः ।**
**जन्मादयो विकाराः षट् भावभेदस्य योनयः ॥ ३ ॥**

तत्स्वरूपत्वेनाध्याहृता नित्या अपि यस्य कलाः शक्तयः काल-शक्तिमाश्रिता भावभेदस्य योनयः षड् जन्मादयो विकारा भवन्ती-त्यन्वयः । कालाख्येन स्वातन्त्र्येण सर्व्वाः परतन्त्रा जन्मादिमय्यश्श-क्तयः तत्समाविष्टाः कालशक्तिवृत्तिमनुपतन्ति ततश्च प्रतिभावं स्वरू-

यस्य प्रतिबन्धाभ्यनुज्ञाभ्यां शक्त्यवच्छेदेन क्रमवानिवाभासोपगमो लक्ष्यते। सर्व्वेषां हि विकाराणां कारणान्तरेषु सत्स्वपि अपेक्षावशात् प्रतिबन्धजन्मनामभ्यनुज्ञया सहकारिकारणंकालः तस्य क्रमवद्भिर्मात्रारूपैः शक्तिः प्रविभज्यमाना विकारगतं भेदं तत्राध्यारोपयति तुलासूत्रइव संयोगिद्रव्यान्तरगुरुत्वप्रतिबन्धकाले दण्डलेखावच्छेदम्। एवं च अभूत् भविष्यतीति अपूर्वापरस्य पौर्व्वापर्य्यव्यवस्थाविकल्पे सति जन्मादयो विकाराः षट् परिणामाः सतां विकाराणां योनय उपप्लवन्तइत्यर्थः। भावविकाराश्च जातिसमुद्देशे वक्ष्यन्ते॥ ३॥

का सा कालशक्तिरत आह॥

**एकस्य सर्वबीजस्य यस्य चेयमनेकधा।**
**भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥ ४॥**

एकस्य सर्वबीजस्य ब्रह्मणस्तत्त्वान्यत्त्वाभ्यां सत्त्वासत्त्वाभ्यां चानिर्वाच्या शक्तिरूपा स्थितिरनेकधा भोक्तृभोक्तव्यभोगरूपेण लोकव्यवहाराय प्रवर्त्ततइत्यर्थः॥ ४॥

व्याकरणस्य तत्प्राप्त्युपायतां परम्परया दर्शयितुमाह॥

**प्राप्त्युपायोऽनुकारश्च तस्य वेदो महर्षिभिः।**
**एकोप्यनेकवर्त्मेव समाम्नातः पृथक्पृथक्॥ ५॥**

ममाहमित्यहङ्कारग्रन्थिसमतिक्रमणमात्रं ब्रह्मणः प्राप्तिः। तदुपायो वेदः। एवं ह्याह वेदाभ्यासात्परमान्तरं शुक्लमजरं ज्योतिरस्मिन्नेवापारे तमसि पीते विवर्ततइति। अनुकार इति। यां सूक्ष्मां नित्यामतीन्द्रियां वाचमृषयः साक्षात्कृतधर्म्माणो मन्त्रदृशः पश्यन्ति। तामसाक्षात्कृतधर्म्मभ्यः परेभ्यः प्रतिवेदयिष्यमाणा बिल्मं समामनन्ति। स्वप्ने वृत्तमिव दृष्टश्रुतानुभूतमाचिख्यासन्ते इत्येष पुराकल्प-

माह विद्म:(१)। वेदवेदाङ्गानि विद्म:। स वेद एकोपि महर्षिभि-रनेकवर्त्मेव समाम्नातः। एकस्य वेदस्य स्वरूपेण भेदाभावादभिव्यक्तिलक्षणशब्दक्रमरूपं वागात्मत्वं प्रापय्य अध्येतॄणामध्ययननिमित्तं चरणसमाख्याव्यवस्था ऋषिभिः कृता ॥ ५ ॥

**भेदानां बहुमार्गत्वं कर्मण्येकत्र चाङ्गता ।**
**शब्दानां यतशक्तित्वं तस्य शाखासु दृश्यते ॥ ६ ॥**

भेदानां शाखानां बहुमार्गत्वं शतमध्वर्युशाखाः सहस्रं साम्नः एकविंशतिधा बह्वृचां पञ्चदशधेत्येके। नवधाथर्व्वणो वेद इत्येवं प्रतिभामार्गा बहवः सर्वशाखाप्रत्ययमेकं कर्म्मेति। एककर्माङ्गता कल्पसूत्रकारैरुक्ता। तथा शब्दानां यतशक्तित्वं नियतार्थप्रत्यायनसामर्थ्यमभ्युदयहेतुतासामर्थ्यं च नियतं, तस्य शाखासु तद्विषयत्वेन व्याकरणं दृश्यते। 'देवसुम्नयोर्यजुषि काठके'सिमस्याथर्व्वणेऽन्त उदात्त, इति। अयं शाखाभेदो विच्छेदे पुनःपुनर्भवतीत्यागमः, प्राक् प्रविभागात्त्वेकत्वमेवेति भावः ॥ ६ ॥

एवं तर्हि स्मृतीनामप्रामाण्यं स्यादत आह ॥

**स्मृतयो बहुरूपाश्च दृष्टादृष्टप्रयोजनाः ॥**
**तमेवाश्रित्य लिङ्गेभ्यो वेदविद्भिः प्रकाशिताः ॥ ७ ॥**

दृष्टप्रयोजनाश्चिकित्सादिविषयाः। अदृष्टप्रयोजना भक्ष्याभक्ष्यादिविषयाः। तमेवाश्रित्य लिङ्गेभ्य इत्यनेन सर्व्वासां स्मृतीनां वेदमूलकत्वेन प्रामाण्यं दर्शितम् ॥ ७ ॥

ननु सर्वस्य वेदमूलकत्वे तस्य चैकरूपत्वात् मतभेदो निर्मूलः स्यादत आह ॥

**तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः ।**

(१) इत्येष पुराकल्पमाह विद्म इत्यस्य स्थाने इत्येष पुराकल्पः इति पाठान्तरम् ।

एकत्विनां द्वैतिनां च प्रवादा बहुधा मताः ॥ ८ ॥

अर्थवादरूपाणि अर्थवादप्रकाराणि वाक्यानि तेभ्यः प्रवादाः पौरुषेयाः परस्परविरुद्धा दृश्यन्ते । पुरुषबुद्धिविकल्पाञ्च प्रवादभेदाः सम्भवन्ति । तद्यथा । 'असद्वा इदमग्रआसीदि'त्यग्निचयनस्थाम-स्तुत्यर्थोऽर्थवादः । 'सदेव सौम्येदमग्रआसीदि'तिचान्यत्र । 'तम एव खल्विदमग्रआसीदि'ति चान्यत्र । अन्यत्रोक्तम् । 'इदं पीनो न कश्चि-द्वा बुद्बुदो वा न कश्चन । मायैषा बत दुष्पारा विपश्चिदिति पश्य-ति' । 'अन्धो मणिमविन्दत्तमनङ्गुलिरावयत् । तमग्रीवः प्रत्यमुञ्च-त्तमजिह्वोभ्यपूजयत्'(१) । 'तथा आप एवेदमग्रआसीदिति' । द्वैति-नः खल्वाहुः । 'नित्याश्चानित्याश्च मात्रायोनयः यासु रूपि चारूपि च सूक्ष्मं च स्थूलं चेदं भुवनं विषक्तमि'ति । तथा 'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्न-न्नन्यो अभिचाकशीति' इति । इन्द्रियग्रामश्चान्तर्य्यामी च बुद्धिश्च चे-तनश्चेति । अथापरे विवृतं सत्त्वमेव बहुधा न किञ्चन चैतन्यमि-त्याहुः । एकत्विन आहुः । 'तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्व्वस्य तदु सर्व्वस्यास्य बाह्यत'इति, एवं दर्शनविक-ल्पाः ॥ ८ ॥

तत एव खल्वेवं प्रवादेषु किं सत्यं तत्राह ॥

सत्या विशुद्धिस्तत्रोक्ता विद्यैवैकपदागमा ।
युक्ता प्रणवरूपेण सर्व्ववादाविरोधिनी ॥ ९ ॥

इहैकस्मिन्ब्रह्मणि सर्वं कल्पितं स चान्तरः पुरुषस्सर्वविकल्परहि-त इत्यत्र प्रणवः सर्व्वस्याभ्यनुज्ञाविषयः सर्व्वश्रुतिरूपः प्रकृतिसर्व-

(१) अन्धो मणिमविन्दत्तमनङ्गुलिरावयत् अग्रीवः प्रत्यमुञ्चत् तमजिह्वा अस-श्चत इति तैत्तिरीयारण्यके पाठः ।

नामत्वात्सर्व्वदर्शनोदयप्रत्ययसमययोनिः सर्व्वाविरुद्धार्थोपग्राही सर्व्व थेदं ब्रह्माभ्यनुजानाति सर्व्वथा च प्रतिषेधति । तथा च श्रुतिः । 'तदेकं च न चैकं च तथोभे नाप्युभे ततः । कर्मस्य विषयं ब्रूयुः सत्त्वस्थाः समदर्शिन' इति ॥ ९ ॥

प्रणवस्य सर्वरूपत्वमाह ॥

**विधातुस्तस्य लोकानामङ्गोपाङ्गनिबन्धनाः ।**
**विद्याभेदाः प्रतायन्ते ज्ञानसंस्कारहेतवः ॥ १० ॥**

प्रकृतित्वेन सर्वलोकविधाता प्रणवः । तदाहुः । 'स हि सर्व्वशब्दार्थप्रकृति'रिति । एवं च विद्याभेदाः प्रणवात्मतया वेदं नातिक्रामन्ति । तदाहुः । 'सर्व्वा वाचो वेदमनुप्रविष्टा नावेदविन्मनुते ब्रह्म किञ्चिदि'ति । एवं च प्रणवादेव साङ्गोपाङ्गश्रुतिस्मृतित्रय्यन्ता विद्याभागाः प्रभवन्ति सम्यग्ज्ञानहेतवः पुरुषसंस्कारहेतवश्च तस्य वेदाख्यस्य प्रसिद्धस्य ब्रह्मणोऽङ्गेभ्यो ज्योतिषादयः उपाङ्गेभ्यश्चिकित्सादयो विद्याभेदाः प्रभवन्ति ॥ १० ॥

**आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।**
**प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥ ११ ॥**

तस्य वेदाख्यस्य ब्रह्मणः साधुत्वप्रतिपत्त्यर्थं स्वरूपसंस्कारस्य साक्षादुपकारकं व्याकरणमित्यासत्तिः । तपसां चान्द्रायणादीनां स्वाध्यायादीनां च मध्ये दृष्टफलहेतुत्वादिदमधिकं तपः । यस्याक्षरसमाम्नायस्य ज्ञानमात्रेण सर्व्वपुण्यफलावाप्तिरागमेन स्मर्य्यते । तच्छन्दसां प्रथममङ्गं प्रधानत्वात् । एवं ह्याह भाष्यकारः । 'प्रधानं च षट्स्वङ्गेषु व्याकरणं प्रधाने च कृतो यत्नः फलवान्भवती'ति ॥ ११ ॥

तस्य प्राधान्यमेवोपपादयति ॥

**प्राप्तरूपविभागाया यो वाचः परमो रसः ।**

**यत्तत्पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः ॥१२॥**

अभिन्नात्संहृतक्रमाच्छब्दतत्त्वाद्वर्णपदवाक्यलक्षणं रूपविभागं प्राप्ताया वाचो ऽभिधेयत्वेनार्थविभागोपग्राहं नित्येनार्थसम्बन्धेन प्राप्ताया वाचः यतो वागेवाविभागापन्ना गवादिरूपेणावतिष्ठते । गवादयश्च बाह्यार्थविभागाः पुनः श्रुतिरूपत्वेन परिणमन्ते । अत एव शब्दार्थयोः कार्यकारणभावसम्बन्ध इत्येके । श्रुतिरपि । 'नामेदं रूपत्वेन च ब्रह्मरूपं रूपं चेदं नामभावेन तस्थे । एके तदेकमविभक्तं विभेजुः प्रागेवान्ये भेदरूपं वदन्ति' इति । तस्याः परमो रस इति वाचकत्वादभ्युदयहेतुत्वाच्च व्यवस्थितसाधुभावः शब्दसमूहो ऽभिधीयते । एवं ह्याह । रसजीषमेतद्वाचो यः संस्कारहीनश्शब्द इति । यत्तत्पुण्यतममिति । एवं ह्याह । त्रीणि ज्योतींषि त्रयः प्रकाशाः योयं जातवेदा यश्च पुरुषेष्वान्तरः प्रकाशः यश्च प्रकाशयोः प्रकाशयिता शब्दाख्यः प्रकाशः तत्रैतत्सर्वमुपनिबद्धं यावत्स्थास्नु चरिष्णु चेति । तस्य मार्गो यमाञ्जसः । अयं सामान्यविशेषलक्षणवान्व्याकरणरूपः । तदुक्तम् । 'शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेपि च साध्वसाधून् । साधुप्रयोगानुचितांश्च शिष्टान्न वेद यो व्याकरणन्न वेद' इति ॥ १२॥

तदेवाह ॥

**अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् ।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ १३ ॥**

अर्थप्रवृत्तितत्त्वं विवक्षा न तु वस्तुनः स्वरूपेण सत्त्वमसत्त्वं वा । विवक्षैव हि शब्दप्रयोगनिबन्धनम् । योग्यं हि शब्दं प्रयोक्ता विवक्षाप्रापितसाधुभावेष्वर्थेषु प्रयुङ्क्ते । यथा । प्रतिविषयं योग्यमेवेन्द्रियमुपलब्धौ प्रणिधत्ते । यद्वा । अर्थप्रवृत्तितत्त्वं सामान्यं तस्य शब्दानिबन्धनमित्यर्थः । यद्वा । अर्थानां प्रवृत्तेराख्यातोपात्तजन्मादिक्रिया-

यास्तत्त्वं साध्यत्वं साधनाकाङ्क्षारूपं कालाभिव्यक्तिहेतुत्वं च तथा शब्दानां तत्त्वं साधुत्वं स साधुर्यस्य व्याकरणावगतः संस्कारो ऽविकलः तद्विकलास्त्वपभ्रंशा इति ॥ १३ ॥

पुनर्व्याकरणस्य प्राशस्त्यमाह ।

तद्द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥ १४ ॥

शब्दस्वरूपतत्त्वज्ञः क्रमसंहारेण योगं लभते साधुप्रयोगाच्चाभिव्यक्तधर्मविशेषो महान्तं शब्दात्मानमभिसंभवं कैवल्यं प्राप्नोति, सोऽव्यतिकीर्णां वागवस्थां मध्यमाख्यामधिगम्य वाग्विकाराणां प्रकृतिं पश्यन्त्याख्यां प्रतिभामुपैति तस्माच्च सत्तामात्रात्प्रतिभाख्याच्छब्दात्पूर्वयोगभावनाभ्यासात् प्रत्यस्तमितसर्व्वविकारोल्लेखां परां प्रकृतिं प्रतिपद्यते । वाङ्मलानां चिकित्सितम् । आयुर्व्वेद इव शारीराणां, व्याकरणज्ञो हि प्रत्यवायहेतूनपशब्दान्न प्रयुङ्क्ते ज्ञानं हि तस्य शरणम् । पवित्रं सर्व्वविद्यानाम् । तन्निमित्तत्वात्संस्कारस्य, शब्दोपगृहीतो हि विद्यास्वर्थः । उक्तं च । 'आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमञ्च मन्त्राः । तेषाञ्च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहु'रिति । अधिविद्यं विद्यासु ॥ १४ ॥

पुनस्तदेव स्तौति ॥

यथार्थजातयः सर्वाः शब्दाकृतिनिबन्धनाः ।
तथैव लोके विद्यानामेषा विद्या परायणम् ॥ १५ ॥
इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥ १६ ॥
अत्रातीतविपर्य्यासः केवलामनुपश्यति ।
छन्दस्यश्छन्दसां योनिमात्माच्छन्दोमयीं तनुम् ॥ १७ ॥

प्रत्यस्तमितरूपाया यद्वाचो रूपमुत्तमम्।
यदग्निनेव तमसि ज्योतिः शुद्धं प्रवर्त्तते॥ १८॥
वैकृतं समतिक्रान्ता मूर्तिव्यापारदर्शनम्।
व्यतीत्यालोकतमसी प्रकाशं यमुपासते॥ १९॥
यत्र वाचो निमित्तानि चिह्नानीवाक्षरस्मृतेः।
शब्दपूर्वेण योगेन भासन्ते प्रतिबिम्बवत्॥ २०॥
अथर्वणामङ्गिरसां साम्नामृग्यजुषस्य च।
यस्मिन्नुच्चावचा वर्णाः पृथक्स्थितपरिग्रहाः॥२१॥
यदेकं प्रक्रियाभेदैर्बहुधा प्रविभज्यते।
तद्व्याकरणमागम्य परं ब्रह्माधिगम्यते॥ २२॥

ननूत्पन्नविनष्टानां शब्दानां किं व्याकरणेनेत्यत आह॥

नित्याः शब्दार्थसम्बन्धाः समाम्नाता महर्षिभिः।
सूत्राणां सानुतन्त्राणां भाष्याणाञ्च प्रणेतृभिः॥२३॥

इह शब्दार्थशब्दाभ्यां तद्गता जातिरभिधीयते। सा च नित्येति केचित्। तथाहि। शब्दत्वव्याप्यवृक्षशब्दत्वादयो जातयः सन्ति ताभिः स्वाश्रयतया वस्तुसम्मोहे(१) निमित्तस्वरूपतामापन्ना अभिव्यक्ताः शब्दा इत्यभिधीयन्ते। ननु व्यवस्थितावयवेषु घटादिष्ववयवी सामान्याभिव्यक्तिहेतुरस्तु। अनवस्थितावयवास्तु शब्दा इति। तैः क्रमजन्मभिरयुगपत्कालाभिव्यक्तैर्वाऽविद्यमानानेकसमवायिकारणं शब्दान्तरमारब्धुं न शक्यते इति क्व तासां समवायः स्यात्। प्रत्यवयवं परिसमाप्तत्वे वर्णान्तरोच्चारणमनर्थकं स्यादिति चेन्न। उत्क्षेपणभ्रमणादिकर्म्मवदुपपत्तेः। न च तत्र तावदवयवैः कर्म्मान्तरमवयविनि

---

(१) संबोधे इति पाठान्तरम्।

किञ्चिदारभ्यते। न च तद्व्यतिरेकेणोत्क्षेपणत्वादीनां समवायो नाभ्युपगम्यते। नापि कर्म्मावयवदर्शने तत्प्रत्यय उत्पद्यते। एवं च तत्र यथावयवकर्म्माणि उत्क्षेपणत्वादीनामाधारत्वमपि प्रतिपद्यमानानि न विशिष्टजातिविषयां बुद्धिं जनयन्ति। यदैवावयवसमूहः क्रमेणोपलब्धो भवति तदा तां जनयन्ति तद्वदिहापि। न चात्र शास्त्रान्तरपरिदृष्टा जात्यभिव्यक्तिप्रक्रिया वैयाकरणैः परिगृह्यते। नाप्यभिव्यक्तिमतामभिव्यञ्जकैराश्रितानामेवाभिव्यक्तिर्दृश्यते। प्रदीपे व्यभिचारात्। तत्रासत्यपि शब्दव्यक्तिसमवाये क्रमगृहीतवर्णजसंस्कारसंस्कृते अन्तःकरणे चरमवर्णविज्ञानतः सा गृह्यते। तदस्तित्वे मानं तु शुक्राद्युदीरितेषु वृक्षादिशब्देषु स एवायमिति प्रत्यभिज्ञैव। अपरे आकृतिमनङ्गीकुर्वाणा अनेकध्वनिव्यङ्ग्यां नित्यां शब्दव्यक्तिमेव प्रतिजानते। तत्रापि शब्दव्यक्तिगतो वर्णभेदो ऽभ्युपगम्यते कैश्चित्। अन्ये तु प्रतिवर्णं प्रतिपदं प्रतिवाक्यं चैक एव शब्दात्मा क्रमोत्पन्नावयवरूपप्रत्यवभासः प्रकाशते इत्याहुः। परे पुनर्व्यवहारानादित्वेनैषां नित्यत्वं स्वतो ऽनित्यत्वं चेति मन्यन्ते। अर्थानामप्याकृतिनित्यत्वाद् व्यक्तिनित्यत्वाद्वा नित्यतां मन्यन्ते। सम्बन्धोपि नित्यः। स हि नेदंप्रथमतया शक्यः कर्त्तुम् अर्थादेशनस्याशक्यकर्त्तव्यत्वात् किन्त्वात्यन्तिकः स्वभावसिद्धो ऽनादिः प्राप्ताविच्छेद इति नित्य इत्यर्थः। यथेन्द्रियविषययोः प्रकाश्यप्रकाशकभावस्तथा समयोपाधिस्तादात्म्यरूपा योग्यता शब्दार्थयोः सम्बन्धः। यद्वा शब्दैरर्थानां बुद्धौ कल्पनाद् अर्थबुद्ध्या च तत्प्रतिपादनाय शब्दकल्पनात् कार्य्यकारणभावस्तयोः सम्बन्धः। तदुक्तम्। तेषामुत्पत्तिप्रभृत्याविनाशाद् बुद्धीर्व्यापद्याणाः सतो बुद्धिविषयान्प्रकाशयन्ति इति। सूत्रादिप्रणेतृभिर्ऋषिभिराम्नाता इत्यर्थः। सूत्रादीनि च प्रकृतत्वाद् व्याकरणस्यैव। सूत्रारम्भादेव शब्दस्य नित्यत्वमनुमीयते। नह्यनित्यत्वे शब्दानां

शास्त्रारम्भे किञ्चिदपि प्रयोजनमस्ति । किञ्च व्यवहारमात्रमनर्थकं शिष्टाः समनुगन्तुमर्हन्ति । क्रयविक्रयविषयकव्यवहारार्थमपि शास्त्रारम्भापत्तेः । तस्माद् व्यवस्थितसाधुत्वेषु शब्देषु स्मृतिशास्त्रं प्रवृत्तमिति । यद्वा 'तदशिष्यं संज्ञाप्रमाणत्वादि'त्यादिसूत्राणि नित्यत्वं समर्थयन्ते । अनुतन्त्रं वार्त्तिकम् । तत्राप्युक्तम् । 'सिद्धे शब्दार्थसम्बन्ध'-इति । भाष्येप्युक्तम् । 'नित्येषु शब्देषु कूटस्थै'रित्यादि । अथ वा यैः प्रत्यक्षधर्म्मभिः शब्दैः तत्तत्सूत्रानुतन्त्रभाष्यप्रणेतृभिरेव व्याकरणं प्रणीतं तैरेव नित्याः शब्दार्थसम्बन्धा इति चोक्तम् । तेषाञ्च व्यवस्थितं लोके प्रामाण्यमिति ॥ २३ ॥

ननु वाक्यस्यैव लोके प्रयोगान्नित्यत्वमर्थसम्बन्धस्येति प्रकृतिप्रत्ययाद्यन्वाख्यानमफलमत आह ॥

अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।
अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः ॥२४॥
कार्य्यकारणभावेन योग्यभावेन च स्थिताः ।
धर्म्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु ॥ २५ ॥
ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपदर्शिताः ।
स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम् ॥ २६ ॥

अपोद्धारपदार्थो नामात्यन्तसंसृष्टानुमानबुद्ध्या परिकल्पितमसंसृष्टरूपं भेदवत् विविक्तस्य हि तस्य वस्तुतो व्यवहारातीतं रूपं, तत्तु प्रत्ययानुसारेण यथागमं भावनाभ्यासवशादुत्प्रेक्षया प्रायेण व्यवस्थाप्यते । तथैव चार्थरूपं कार्यार्थमन्वयव्यतिरेकाभ्यां समुदायादपोद्धृतानां शब्दानामभिधेयत्वेनाश्रीयते । सोयमपोद्धारपदार्थः शास्त्रव्यवहारमनुपतति । शास्त्रव्यवहारं दृष्ट्वैव लौकिका अपि भेदव्यवहारं कुर्वन्ति । स चैकैकपदनिबन्धनः सत्यासत्यभावेनानुपाख्येयः

केवलं वृक्ष इत्युक्ते क्रियापदं विनार्थनिरूपणाभावात् क्रियाविशेषापेक्षानियमात् । अनुपात्तक्रियेष्वप्यस्तिभवतिपरोक्ष्येव । एवं च तानि एकपदस्वरूपाणि आक्षिप्तक्रियापदानि वाक्यानीति पदानि व्याख्यायन्ते तथा पूर्वपदोत्तरपदार्थः प्रातिपदिकार्थो धात्वर्थः प्रत्ययार्थ इति । एकपदवाच्योयमनियतावधिर्बहुधा प्रविभज्य कैश्चित्कथञ्चिदपोद्ध्रियते । स्थितलक्षणस्तु वाक्यार्थः सत्यामपि विच्छेदप्रतीतावविच्छिन्नत्वेन प्रत्ययविषयः तत्रापोद्धृतपदस्यैवार्थवत्त्वमिति मत्वा 'कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वेति' भाष्ये उक्तम् । ततो ऽपोद्धृतप्रकृत्यादीनामप्यर्थवत्त्वेन व्यवहारोर्थवत्सूत्रे भाष्ये । अन्वाख्येयाश्चेति । प्रकृतिप्रत्ययादय इत्यर्थः । तत्र केषाञ्चित्पदावधिकमन्वाख्यानं केषाञ्चिद्वाक्यावधिकम् । तत्र पदावधिकेन्वाख्याने सामान्यमात्रे लब्धसंस्काराणि पदानि पदान्तरसम्बन्धप्राप्तेषु विशेषेषु सामान्यलब्धमन्तरङ्गं संस्कारमादायैव प्रवर्त्तन्ते । तत्रैकवचनान्तो नपुंसकलिङ्गश्च शब्दो भिन्नलिङ्गसङ्ख्यैराश्रयैः सम्बन्धं प्रतिपद्यते । तदर्थं 'विशेषणानां चाजाते'रित्यनेन बहिरङ्गे भाविन्याश्रये प्रक्रान्ते गुणवचनानामाश्रयतो लिङ्गवचनान्युच्यन्ते । वाक्यावधिके त्वन्वाख्याने नित्यसंसृष्टस्य गुणाश्रयेणाविवेकात्सामान्यार्थत्वमेव नास्ति । तदुक्तम् स्वाभाविकमेतदिति । तथा प्रत्यवयवं द्वन्द्वपदानां संस्कारे द्वन्द्वे बहुषु लुग्वचनमुपन्यस्तम् । वाक्यसंस्कारमादाय न वा सर्वेषां द्वन्द्वे बह्वर्थत्वादित्युक्तम् । तथा 'विशेषणं विशेष्येण' 'उपमानानि सामान्यवचनै'रित्याद्युक्तम् । प्रतिपादकाः शब्दाः भूतिर्भूपतिरित्यादीनि पदानि वाक्यानि च । ते कार्य्यकारणभावेन अर्थाकारनिर्भासमात्रानुगतप्रत्ययस्यार्थेषु प्रत्यस्तमितरूपस्यार्थत्वेनाध्यवसायात्तस्यार्थात्मनः शब्दो निमित्तम् । तथा बुद्ध्या गृहीतार्थप्रतिपादनाय शब्दप्रयोगादर्थः शब्दस्य निमित्तम् । कार्य्यकारणयोश्चाभेदाध्यवसाया-

सोयमिति प्रतीयमानं तादात्म्यमेव शब्दार्थयोःसम्बन्धः नादाभिव्यक्तस्यान्तःकरणसन्निवेशिनःशब्दस्यार्थबोधने कारणम्। इन्द्रियविषयवच्च प्रकाश्यप्रकाशकभावेन तद्योग्यताग्रहः। एवं विशिष्टानां शब्दानां विशिष्टेष्वर्थेष्वव्यभिचरितप्रसिद्धसाधुभावानां वाचकानां वाच्येषु योग्यत्वम् अप्रसिद्धानां समयोपाधिकम्। तत्र साधोर्येर्थेन सम्बन्धः स ज्ञाने शास्त्रपूर्वकप्रयोगे वा धर्म्माभिव्यक्तौ अङ्गत्वं प्रतिपद्यते विशिष्टप्रत्ययोत्पत्तौ च। अपभ्रंशास्तु प्रत्ययमात्रएव। ते लिङ्गैश्चेति। ते अपोद्धारपदार्था अपोद्धृतपदैस्तेषां सम्बन्धाश्च। तत्र शास्त्रव्यवहारार्थेऽपोद्धारे समुदाये संसृष्टायाः कस्याश्चिदर्थमात्राया अपोद्धारे क्रियमाणे तत्तदवधेस्तत्तदर्थकल्पने नानाविधाः पुरुषविकल्पाः। तथाहि। व्यापारेभिधेये णिच् द्योत्ये वा। स्त्रियां टाबादयः स्वार्थवृत्तेः प्रातिपदिकाद्वा। तथा नञ्समासः किंप्रधानइति। तथैकत्वकर्म्मादयो विभक्त्यर्थाः। पञ्चकः प्रातिपदिकार्थः चतुष्कः त्रिक इति। तथा क्रियासाधनकालादयोपि कैश्चित्कथं चिदभिधेयत्वेन प्रविभक्ताः। तथा भावकर्म्मणोरात्मनेपदम्। कर्त्तरि परस्मैपदमिति। ते के चन सूत्रकारादिभिर्लिङ्गैः के चन स्वशब्देन प्रतिपादिता अपोद्धारकल्पनायां व्यवस्थामाश्रित्य स्वार्थद्रव्यादीनां क्रमिको बोध इति प्रतिपत्तिक्रमानुगममात्रं लघ्यसंस्काराय कल्पितम्। नहि शब्दस्य क्रमवती विरम्यविरम्य स्वार्थादिवृत्तिः सम्भवति सकृदुच्चारणात्। नाप्ययं क्रमः श्रोतुरभिधातुर्वा व्यवस्थितः। सर्वार्थकलापस्य पदाद्वा वाक्याद्वा युगपदेव बुद्धिविषयत्वादुत्तरकालं शास्त्रजवासनया प्रविभज्यते। विभक्तस्याप्यनुसन्धानमन्तरेणार्थक्रियाविषयप्रतिभानुत्पत्तेः पुनःपुनः समुदायमेव परामृशति। योप्यभिधाता श्रोता वा विभागेनार्थमात्रासु प्रतिपत्तिं लभते तस्यापि ग्राह्यासु अर्थमात्रासु अनियमेनैव बुद्धिक्रमो व्यवतिष्ठते। तदुक्तम्।

'एकोऽयं शक्तिभेदेन भावात्मा प्रविभज्यते । बुद्धिवृत्त्यनुसारेण बहुधा ज्ञानवादिभि'रिति । स्थितलक्षणस्तु पदार्थो वाक्यार्थो वा । तदुक्तम् । पदस्यार्थे प्रयोगाद्यदत्राधिकं वाक्यार्थः स इति । तत्रापि वाक्यं वाक्यार्थो वा मुख्यः । तदुक्तं सङ्ग्रहे । 'नहि किञ्चित्पदं नाम रूपेण नियतं क्व चित् । पदानामर्थरूपं च वाक्यार्थादेव जायते'इति । किञ्चापोद्धृतस्य पदस्य प्रकृतिप्रत्ययादिविभागेऽनियमो दृश्यते । ऐकागारिकगिरिशश्रोत्रियादिषु । 'अर्थात्पदं साभिधेयं पदाद्वाक्यार्थनिर्णयः । पदसङ्घातजं वाक्यं वर्णसङ्घातजं पद'मित्यभियुक्तैः कार्य्यकारणभावः सम्बन्धो दर्शितः । तथा तेषामुत्पत्तिप्रभृत्याविनाशाद्बुद्धीर्व्याचक्षाणाः सतो बुद्धिविषयान्प्रकाशयन्तीत्यनेन योग्यतापि सम्बन्धो दर्शितः । अभिधानं पुनः स्वाभाविकमिति च भाष्ये उक्तम् । के चिदर्थैर्युज्यन्ते परे नेत्यादि च तत्रोक्तम् । तथाजातीयकाः खल्वप्याचार्य्येण स्वरितञितः पठिताः । येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्तीति । सङ्ग्रहेप्युक्तम् । 'शब्दार्थयोरसम्भेदे व्यवहारे पृथक्क्रिया । यतः शब्दार्थयोस्तत्त्वमेकं तत्समवस्थितम् ॥ सम्बन्धस्य न कर्त्तास्ति शब्दानां लोकवेदयोः । शब्दैरेव हि शब्दानां सम्बन्धः स्यात्कृतः कथम्'इति । स्मृत्यर्थं स्मृतिप्रणयनाय ये उपदर्शितास्ते लोकैरपि कैश्चित्के चिदेवानुगम्यन्तइत्यर्थः ॥ २६ ॥

नन्वेषा साध्वसाधुव्यवस्था निर्मूलेत्यत आह ॥

**शिष्टेभ्य आगमात्सिद्धाः साधवो धर्मसाधनम् ।**
**अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः ॥ २७ ॥**

यथान्यानि धर्म्माधर्म्मसाधनानि शिष्टमन्वाद्युक्तान्यविगीतानि । एवं साध्वसाधुव्यवस्थापि अविच्छिन्नपारम्पर्या शिष्टस्मृतिमूलागमादेव सिद्धेत्यर्थः । अर्थप्रत्यायकत्वस्य तुल्यत्वेपि शास्त्राननुगता असाधव इत्यर्थः ॥ २७ ॥

ननु व्याकरणनिष्पाद्याः शब्दा इति मते कथमस्या आगममूलत्वमत आह ॥

नित्यत्वे कृतकत्वे वा तेषामादिर्न विद्यते ।
प्राणिनामिव सा चैषा व्यवस्थानित्यतोच्यते ॥२८॥

ये अभिव्यक्तिवादिनः ये च जन्मवादिनस्तेषां सर्वेषामप्रवृत्तशब्दव्यवहारा प्रथमा कोटिर्विद्यते। यथा ये ईश्वरकालपुरुषाविद्याचेतनाद्यभिमतत्वात् प्राणिनामुत्पत्तिमाहुः येपि केवलमविद्यामात्रं मन्यन्ते तेषां प्राणिव्यवहारो यथानादिरित्यर्थः। तदुक्तं भाष्ये। 'तदपि नित्यं यस्मिँस्तत्त्वं न विहन्यत'इति ॥ २८ ॥

ननु लोकत एव साध्वसाधुव्यवस्थाज्ञानं भविष्यति किं शास्त्रेणेत्यत आह ॥

नानर्थिकामिमां कश्चिद्
व्यवस्थां कर्तुमर्हति ।
तस्मान्निबध्यते नित्या
साधुत्वविषया स्मृतिः ॥ २९ ॥

को हि सम्भिन्नबुद्धिर्लोके प्रत्यभिनिविष्टः शिष्टो दुर्ज्ञेयं दुरध्येयं दुरनुष्ठेयं च स्वरसंस्कारादिनियमं लौकिकवैदिकानां प्रयोगविषयं व्यवस्थापयितुमुत्सहते। नाप्यनर्थकोयं नियमः। तस्मादनादिर्गुरुपूर्वक्रमागता शिष्टप्रयोगानुमानहेतुर्लक्षणप्रपञ्चाभ्यां व्याकरणस्मृतिर्निबध्यतइत्यर्थः ॥ २९ ॥

ननु तर्केणैवैषा व्यवस्था कार्येत्यत आह ॥

न चागमादृते धर्मस्तर्केण व्यवतिष्ठते ।
ऋषीणामपि यद् ज्ञानं तदप्यागमहेतुकम् ॥३०॥

आगमिनः सर्वे सुदूरमपि गत्वा स्वभावं न व्यतिवर्तन्ते । अदृष्टार्थानां कर्मणां फलनियमे स्वभावज्ञानं न तर्कैः साध्यम् । अनवस्थितसाधर्म्यवैधर्म्येषु नित्यमलब्धनिश्चयेषु पुरुषतर्केष्वनाश्वासाद् इत्यागममूलक एव धर्माधर्मनिश्चय इत्यर्थः । न च ऋषयो ऽतीन्द्रियद्रष्टारः स्वभावं निर्णयन्ति तद्वचसा चान्ये इति न दोषः । आगमोक्तधर्मसंस्कृतानामेव ऋषित्वेन तज्ज्ञानस्याप्यागमपूर्वकत्वात् ॥ ३० ॥

नह्यागमस्तर्कबाध्य इत्याह ॥

**धर्मस्य चाव्यवच्छिन्नाः पन्थानो ये व्यवस्थिताः ।**
**न ताँल्लोकप्रसिद्धत्वात्कश्चित्तर्केण बाधते ॥ ३१ ॥**

आगमाद्धि लोकविरुद्धं तर्कविरुद्धमप्याचरणं प्रतिपद्यन्ते शिष्टाः । तस्मादागमो न तर्कबाध्य इति भावः ॥ ३१ ॥

अनुमानादीनां व्यभिचारमाह ॥

**अवस्था देशकालानां भेदाद्भिन्नासु शक्तिषु ।**
**भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥ ३२ ॥**

पूर्वं विलक्षणशक्त्वादिमतामवस्थान्तरे विपर्ययो दृश्यते । एवं देशभेदादपि, हिमवति जलस्पर्शो ऽतिशीतलः । बलाहकाग्निकुण्डादिषु उष्णः । कालादपि,ग्रीष्मे वह्नेरत्युष्णः स्पर्शः न तथा हेमन्ते । एवं च स्वभावो नानुमानाद्गन्तुं शक्यः किन्त्वागमादेवेति भावः ॥ ३२ ॥

**निर्ज्ञातशक्तेर्द्रव्यस्य तांतामर्थक्रियां प्रति ।**
**विशिष्टद्रव्यसम्बन्धे सा शक्तिः प्रतिबध्यते ॥ ३३ ॥**

यथाग्नेर्दाहकताशक्तिरभ्रपटलादिषु प्रतिबध्यते तथा मन्त्रौषधादिभिरपि । अतोनुमानादीनामव्यापार इत्यर्थः ॥ ३३ ॥

**यत्नेनानुमितो ऽप्यर्थः कुशलैरनुमातृभिः ।**
**अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥ ३४ ॥**

यथाऽन्यद्द्रव्यं गुणेभ्यो व्यपदेशात्। तद्यथा, सति विशेषणविशेष्य-भेदे राज्ञा राष्ट्रं विशेष्यते न परिव्राजकेन। तथा चन्दनेन गन्धो न रूपादिभिरिति। केन चिदनुमानेन साधिते अपर आह। विशिष्टो विशिष्टाभिधेयनिबन्धन इति। विशिष्टरूपादिवचनेन चन्दनशब्देन न विशेषणमनर्थकम्। रूपादिभिस्त्वनर्थकमिति। तावतोऽर्थस्य निर्ज्ञातत्वात्। यथा कस्यायं पुरुष इतिप्रश्ने विशेषान्तरविच्छेदाय राज्ञ इति व्यपदिश्यते न तु निर्ज्ञातत्वात्पुरुषस्येति। अपर आह। यथा पदेन ऋचः समुदायैकदेशभावेपि पदमृचा व्यपदिश्यते न पदेन ऋक्, तद्वदिदमिति। अपर आह। एकत्वाभ्युपगमेनैव चन्दनेन व्यपदेशो गन्धादीनां न रूपादिभिर्व्यपदेश इति। तस्मादागम एव मुख्यं प्रमाणं नानुमानमिति भावः॥ ३४॥

नन्वेवमृषीणामपि ज्ञानस्यानुमानिकत्वेन तत्राप्यविश्वासः स्यादत आह॥

परेषामसमाख्येयमभ्यासादेव जायते।
मणिरूप्यादिविज्ञानं तद्विदां नानुमानिकम्॥३५॥

यथा रूपतर्काणां मणिरूप्यादिविज्ञानमभ्यासादेव जायते परेभ्य आख्यातुं च न शक्नुवन्ति। यथा च षड्जादिस्वरभेदं प्रत्यक्षविषयमपि शास्त्रज्ञानसहकृताभ्यासादेव जायते तथा ऋषीणामपि योगजप्रत्यक्षगम्यमेव नानुमानगम्यमिति न तदप्रमाणमितिभावः॥ ३५॥

प्रत्यक्षमनुमानं च व्यतिक्रम्य व्यवस्थिताः।
रक्षःपितृपिशाचानां कर्मजा एव सिद्धयः॥ ३६॥

तेषां यत्कुड्यादीनामवयवविभागमन्तरैवान्तर्वैश्मस्थसूक्ष्मविषयकं दर्शनं तददृष्टशक्तिसाधनकमेव नान्यसाधनकं, तद्वदृषीणामपि तपःसम्पाद्यादृष्टनिष्पाद्यमित्यर्थः। प्रत्यक्षं चात्र लौकिकसामग्रीजन्यं वि-

वचितम् ॥ ३६ ॥

तदेवाह ॥

आविर्भूतप्रकाशानामनुपद्रुतचेतसाम् ।
अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते ॥ ३७ ॥

उत्पत्तिपक्षेऽभिव्यक्तिपक्षे वा कथमपदमवस्तु निरात्मकम् अविद्यमानादृष्टशक्ति नावगन्तुं शक्यते । तपसा निर्दग्धदोषा निरावरणख्यातयः शिष्टाः प्रतिबिम्बन्यायेन प्रत्यक्षमिव सङ्क्रान्ताः परिग्रहं पश्यन्तीत्यर्थः ॥ ३७ ॥

नन्वनुमानविरुद्धं तेषां प्रत्यक्षमत आह ॥

अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥ ३८ ॥

अन्तर्यामिणः अनभिव्यक्तं शक्त्यधिष्ठानं शब्दब्रह्म व्यावहारिकादन्येन चक्षुषा मुक्तसंशयमुपलभन्ते तेषां वचनव्यभिचारिणानुमानेनापाकर्तुमशक्यमित्यर्थः ॥ ३८ ॥

तत्र दृष्टान्तभूतं तदीयं लौकिकप्रत्यक्षमाह ॥

यो यस्य स्वमिव ज्ञानं दर्शनं नाभिशङ्कते ।
स्थितं प्रत्यक्षपक्षे तं कथमन्यो निवर्तयेत् ॥ ३९ ॥

आप्तानां ज्ञानं स्वप्रत्यक्षमिव नाभिशङ्कनीयम् । अन्यस्तर्कशरणः ॥ ३९ ॥

लोकान्तरभावीष्टानिष्टमपि आप्तवचनादेव निर्णीयतइत्याह ॥

इदं पुण्यमिदं पाप-
मित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणां

**समं (१) शास्त्रप्रयोजनम् ॥ ४० ॥**

तस्मादार्षं प्रत्यक्षं च विरोधे अनुमानस्य बाधकमित्यर्थः ॥ ४० ॥

**चैतन्यमिव यश्चायमविच्छेदेन वर्तते ।**
**आगमस्तमुपासीनो हेतुवादैर्न बाध्यते ॥ ४१ ॥**

यथा ऽहंममेत्यादिप्रत्ययानुगतं चैतन्यं न केनापि बाध्यते एवं श्रुतिस्मृतिलक्षण आगमः शिष्टपरिगृहीतो भक्ष्याभक्ष्यादिविषयको यस्तमुपासीनः स नानुमानेन ततः प्रच्यावयितुं शक्य इत्यर्थः ॥४१॥

**हस्तस्पर्शादिबाधेन (२) विषमेऽप्यभिधावता ।**
**अनुमानप्रधानेन विनिपातो न दुर्लभः ॥ ४२ ॥**

यथान्धो विषमे गिरिमार्गे चक्षुष्मन्तं नेतारमन्तरेण त्वरया परिपतन् कश्चिदेवमार्गैकदेशं हस्तस्पर्शेनावगम्य समतिक्रान्तस्तत्प्रत्ययादपरमपि तथैव परिपतन्यथापतनं लभते । तद्वदागमचक्षुषा विना तर्कानुपाती केनकेनानुमानेन क्वचिदाहितप्रत्ययो दृष्टफलेषु कर्मस्वागममुत्क्रम्य प्रवर्तमानो महता प्रत्यवायेन संयुज्यत इत्यर्थः ॥ ४२ ॥

**तस्मादकृतकं शास्त्रं स्मृतिं वा (३) सनिबन्धनाम् ।**
**आश्रित्यारभ्यते शिष्टैः शब्दानामनुशासनम् ॥४३॥**

अकृतकमनादिपरंपरया आगतत्वात् पुरुषहितोपदेशाय प्रवृत्तमाम्नायं प्रमाणीकृत्य साधुशब्दप्रयोगेषु शिष्टाचरितमविच्छिन्नपारंपर्यं स्मरणसमाचारं परिगृह्य पूर्वकृषीणां स्मृतिशास्त्राणि च समाश्रित्याचार्यैः शब्दानुशासनमारभ्यत इत्यर्थः ॥ ४३ ॥

---

(१) अल्पमिति पाठान्तरम् ।
(२) बन्धेनेति पाठान्तरम् ।
(३) चेति पा० २ ।

तत्र कः शब्द इत्यत आह ॥

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः ।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते ॥ ४४ ॥**

उपादीयते येनार्थः स्वरूपेऽध्यारोप्यते तद्भावमिवापन्नः स उपादानशब्दः । तदुक्तं, वाचक उपादानस्वरूपवानिति । उपादेयो वा समुदाय उपादानः । तथाहि । स्वरूपपदार्थकेष्ववयवानामनुपादेयत्वाद्विभागानामप्रतिपत्तिः । एको निमित्तमिति । यदुपाश्रयाः पदादिश्रुतयः प्रत्याय्यमर्थं प्रतिपद्यन्ते तस्य निमित्तं कारणं व्यापारव्यक्तः श्रोत्रानुपाती तत्प्रकाशकत्वेन कारणं बोध्यः । अपरः प्रकाश्यः । एवं ह्याह 'अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः । शब्दस्तत्रार्थरूपात्मा सम्भेदमुपगच्छती'ति ॥ ४४ ॥

**आत्मभेदस्तयोः केचिदस्तीत्याहुः पुराणगाः ।**
**बुद्धिभेदादभिन्नस्य भेदमेके प्रचक्षते ॥ ४५ ॥**

कार्यकारणयोरन्यत्वपक्षे भेदः पक्षान्तरे त्वेकस्यैवात्मनः शब्दप्रविभागरूपपरिग्रहे कृताभ्यवच्छेदान्नानात्वकल्पना ॥ ४५ ॥

इदमेव प्रपञ्चयति ॥

**अरणिस्थं यथा ज्योतिः प्रकाशान्तरकारणम् ।**
**तद्वच्छब्दोऽपि बुद्धिस्थः श्रुतीनां कारणं पृथक् ॥४६॥**

एकत्वपक्षे नानात्वपक्षे वा बीजरूपस्याविष्टतस्य ज्योतिषो यथोत्तरेण प्रकाशात्मनाभिज्वलितस्य स्वरूपप्रतिपत्तिकारणत्वं प्रागसंवेद्यं पश्चादुपजायमानं दृश्यते तथैव शब्दभेदभावनाख्यतत्त्वानुगते बुद्धितत्त्वे योयः स्थानकरणाद्यनुगृह्णीतो विवर्तते स व्यञ्जकध्वनिभेदानुपातेन पौर्वापर्यवानुपलभ्यमानः स्वरूपपररूपयोः प्रकाशको भवति ॥ ४६ ॥

वितर्कितः पुरा बुद्ध्या क्वचिदर्थे निवेशितः ।
करणेभ्यो विवृत्तेन(१) ध्वनिना सोऽनुगृह्यते ॥४७॥

शब्दार्थयोस्तादात्म्यानुपगमे यच्छब्दरूपं यत्रार्थे निवेशं लभते तत्र रूपविपर्यासे तदर्थनिवेशो न दृश्यते । अर्थान्तरे निवेशश्च दृश्यतइतीयं व्यवस्था न स्यात् । तस्माद्बुद्धिकृतमर्थसंसर्गं प्रापित एव क्वचिदर्थविशेषे निवेशितो भवतीत्यर्थः । करणेभ्य इति । अविक्रियाधर्मकं हि शब्दतत्त्वं ध्वनिधर्मैरनुगृह्यते दीर्घत्वकत्वादिभिरित्यर्थः । क्रमिके ध्वनौ प्रतीयमानेऽभ्रसङ्घातवदुपलभ्यते । प्राप्तविवर्तेन नादात्मना तद्विवर्तानुसारेणाप्राप्तविवर्तमपि विवर्तमानमिव गृह्यतइति वार्थः ॥ ४७ ॥

नादस्य क्रमजातत्वा(२)न्न पूर्वो नापरश्च सः ।
अक्रमः (३) क्रमरूपेण भेदवानिव गृह्यते ॥ ४८ ॥

नादव्यङ्ग्यः स्फोट एकोपि नित्योपि नादाभिव्यक्तिगतक्रमेण सक्रमो भेदवांश्च गृह्यते न स्वतस्तस्य पूर्वत्वपरत्वकृतक्रमो भेदश्च वास्तवोस्ति नित्यत्वैकत्वाभ्यां विरोधात् ॥ ४८ ॥

तत्र दृष्टान्तमाह ॥

प्रतिबिम्बं यथान्यत्र स्थितं तोयक्रियावशात् ।
तत्प्रवृत्तिमिवान्वेति स धर्मः स्फोटनादयोः ॥ ४९ ॥

तत्त्वपक्षेऽन्यत्त्वपक्षे वा चन्द्रादिप्रतिबिम्बं यत्राधारे संसृष्टं तत्क्रियावशात्स्वतो निष्क्रियमपि क्रियावदुपलभ्यते । एवं नादस्य ह्रस्वदीर्घप्लुतत्वोदात्तत्वादिभिर्द्रुतादिवृत्तिभिश्च तावानेव स्फोटो

(१) करणेभ्यो निवृत्तेनेति पा० २ ।
(२) क्रमजन्मत्वात् इति पा० २ ।
(३) सक्रम इति पाठान्तरं युक्तम् ।

विचित्रां वृत्तिमनुविधत्तइत्यर्थः ॥ ४९ ॥

**आत्मरूपं यथा ज्ञाने ज्ञेयरूपं च दृश्यते ।**
**अर्थरूपं तथा शब्दे स्वरूपं च प्रकाशते ॥ ५० ॥**

यथा ज्ञाने ज्ञेयं घटादिरूपमतीतमनागतं वर्तमानं च गृह्यते । ज्ञानस्वरूपं च स्वप्रकाशत्वात् तद्वच्छब्दोप्यभिधेयतन्त्रस्तद्रूपोपग्राही स्वरूपमपि प्रत्यवभासयति । स तु सन्निहितप्रत्यवभासोपि लोके भुज्यादिक्रियासम्बन्धाद्विशेषणत्वेन भासते । व्याकरणे त्वर्थे कार्यस्य बाधात्तं प्रति विशेष्यत्वेनाश्रीयतइति भावः ॥ ५० ॥

प्रकारान्तरमाह ॥

**अखण्डभावमिवापन्नो यः क्रतुःशब्दसंज्ञकः ।**
**वृत्तिस्तस्य क्रियारूपा भागशो भजते क्रमम् ॥५१॥**

सर्वविभागप्रतिसंहारेण बाह्यव्यावहारिकः शब्दोन्तःकरणे मयूराण्डरसवद्विभागोद्ग्राहमात्रामतिक्रामन् लीनस्तिष्ठति । स चैवंभूतः प्रत्यस्तमितभागः प्राप्तविवक्षो वाक्यपदादिविवर्तमुद्गृह्य प्रत्येकमवयवोद्ग्राहेण क्रमशक्तिं प्रतिगृह्णाति । सा चास्योदयप्रत्यस्तमयनिर्ह्रासमात्रा क्रियारूपेणावसीयते ॥ ५१ ॥

शब्दस्य स्वग्राह्यत्वे दृष्टान्तपूर्वकं युक्त्यन्तरमाह ॥

**यथैकबुद्धिविषया मूर्तिराक्रियते पटे ।**
**मूर्त्यन्तरस्य त्रितयमेवं शब्देपि दृश्यते ॥ ५२ ॥**

यथा मूर्त्यन्तरस्य पुरुषादेर्मूर्तिरालिखितुमिष्टा क्रमोपलब्धाप्येकबुद्धिविषयत्वं प्राप्ता पटकुड्यादिषु क्रमेणाक्रियते । तथा व्यावहारिको वैखरीरूपः शब्दः क्रमग्राह्योपि प्रतिसंहृतक्रम एकबुद्धिविषयो भूत्वा निरवयवाक्रमरूपेण बुद्धिविषयोऽन्तःकरणे भूत्वाऽन्तःकरणवृत्तिरूपक्रमरूपध्वनिधर्मप्रतिपत्त्या पुनरपि व्यवहारमवतरति ।

एवं चावस्थान्यथावच्छेदाद्ग्राह्यग्राहकभावं नातिवर्त्ततइति ॥ ५२ ॥

तत्रैव युक्त्यन्तरमाह ॥

यथा प्रयोक्तुः प्राग्बुद्धिः शब्देष्वेव प्रवर्तते ।
व्यवसायो ग्रहीतृणामेवं तेष्वेव जायते ॥ ५३ ॥

यथा प्रयोक्ता शब्दविशेषं विषयं प्रतिपादयितुकामः मनःप्रणिधानेन बुद्धिविषयीकरोति । तथा प्रतिपत्तापि शब्दरूपपरिच्छेदाधीनमर्थग्रहणं मन्यमानः शब्दं जानाति । तत्र शब्दः सर्वैः सम्बन्धिभिराश्रितः संसर्गं निर्धारयति । तत्र भावनावशाच्छब्दरूपविशेषणावच्छिन्नमेव प्रत्येति । तस्मात्प्राधान्यमनुभूय सर्वार्थयोनयः सर्वे शब्दाः गुणभावं प्रपद्यन्ते ॥ ५३ ॥

नन्वेवं शब्दस्यापि क्रियान्वयः स्यादत आह ॥

अर्थोपसर्जनीभूतानभिधेयेषु केषु चित् ।
चरितार्थान् परार्थत्वान्न लोकः प्रतिपद्यते ॥ ५४ ॥

यथायं शुक्ल इति शब्दस्तत्त्वगुणे गुणिनि प्रतीयमाने क्रियाविशेषविषयमुपलक्षणत्वमपि प्रतीयते शुक्लवाससं भोजयेत्यादौ तथा योयो गोशब्दः सोऽयं पिण्ड इत्यभिसम्बन्धेन शब्दविशिष्टार्थप्रतीतावपि क्रियाविशेषं प्रत्युपलक्षणत्वेन चरितार्थं शब्दमभिधेयमिव क्रियासाधनभावेन न लोकः प्रतिपद्यते इत्यर्थः ॥ ५४ ॥

तत्रैव प्रकारान्तरं वदन्नुपसंहरति ॥

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा ।
तथैव सर्व्वशब्दानामेते पृथगव(१)स्थिते ॥ ५५ ॥

यद्यपि घटादयो ग्राह्या एव चक्षुरादीनि ग्राहकाण्येव तथापि तेजो यथा उपलब्धौ विषयीभावमापन्नमेव विषयोपलब्धौ कारणत्वं

(१) पृथगिवेतिपाठान्तरम् ।

प्रतिपद्यते । तथा शब्दोऽपीत्यर्थः । ते चास्य प्रतिपाद्यप्रतिपादकस्वशक्ती नित्यमात्मभूते पृथगिव प्रत्यवभासेते ॥ ५५ ॥

यतश्चैवं तस्मात् ॥

विषयत्वमनापन्नैः शब्दैर्नार्थः प्रतीयते ।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ॥ ५६ ॥

यदि शब्दा विशेषणं न स्युस्तदा ते सत्तासम्बन्धमात्रेणोपलब्धा अनुपलब्धाश्च स्वंस्वमर्थं प्रत्याययेयुः न तु प्रत्याययन्ति । उपस्थितौ च स्वोपस्थितेतरपदार्थवत्स्वस्याविशेषणत्वे न किञ्चिन् मानमित्यर्थः ॥ ५६ ॥

अतोऽनिर्ज्ञातरूपत्वात्किमाहेत्यभिधीयते ।
नेन्द्रियाणां प्रकाश्येऽर्थे स्वरूपं गृह्यते तथा ॥ ५७ ॥

शब्दस्वरूपं प्रत्ययाधीनमेवार्थप्रत्यायनं मन्यमाना लौकिकाः प्रयुक्तेष्वपि शब्देष्वप्रतीतेषु तत्प्रतिपत्तये किं भवानाहेत्याहुः । इन्द्रियाणां त्वज्ञातानामेव कारणत्वेनोपस्थित्यभावान्न तद्ग्राह्यविषयोपलब्धौ तानि विशेषणभावं प्राप्नुवन्तीत्यर्थः ॥ ५७ ॥

ननु स्वंरूपमित्यादिविषये अग्नेर्ढगित्यादौ समानानुपूर्वीकयोः सञ्ज्ञासञ्ज्ञिभावोऽनुपपन्नोऽत आह ॥

भेदेनावगृहीतौ द्वौ शब्दधर्मावपोद्धृतौ ।
भेदकार्येषु हेतुत्वमविरोधेन गच्छतः ॥ ५८ ॥

धर्मपदेनार्थः, यथा व्यपदेशिवद्भावविषयेष्वर्थात्मसु निमित्तभेदाद्बुद्धिप्रकल्पनयाङ्गीकृतभेदेषु लोके शास्त्रे च भेदविषयाणि क्रियन्ते तथा शब्देष्वपि बुद्ध्या परिगृहीतग्राह्यग्राहकशक्त्यपोद्धारे मुख्यार्थविषयाणीव शास्त्रे सञ्ज्ञासञ्ज्ञिसम्बन्धादीनि भेदकार्याणि क्रियन्त इत्यर्थः ॥ ५८ ॥

तदेवाह ॥

इच्छादयो यथा शब्दाः
स्वरूपोपनिबन्धनाः ।
आद्यैरप्रत्यायितैः शब्दैः
सम्बन्धं यान्ति सञ्ज्ञिभिः ॥ ५८ ॥

स्वरूपरूपार्थेनार्थवन्तः स्वरानुनासिक्यभिन्नैराकारादिभिराद्यै-
रप्रत्यायितैर्येन प्रकारेण सम्बन्धमुपयान्ति तेनैव प्रकारेण भे-
दाभावेऽपि ॥ ५८ ॥

तदाह ॥

अग्निशब्दस्तथैवा(१)यमग्निशब्दनिबन्धनः ।
अग्निश्रुत्यैति सम्बन्धमग्निशब्दाभिधेयया(२) ॥६०॥

काल्पनिकभेदेनेति भावः । अर्थपरस्य सञ्ज्ञिता केवलशब्दस्व-
रूपपरस्य सञ्ज्ञात्वमिति तात्पर्य्यम् ॥ ६० ॥

ननूच्चारितस्यैव कार्य्यभाक्त्वमस्त्वित्यत आह ॥

यो य उच्चार्य्यते शब्दो नियतं न स कार्य्यभाक् ।
अन्यप्रत्यायने शक्तिर्न तस्य प्रतिबध्यते ॥ ६१ ॥

कार्य्यभाक्त्वाभाववत् प्रत्यायकत्वमपि न स्यादत उक्तम् अन्यप्र-
त्यायने इति । प्रतिबन्धकाभावादिति भावः ॥ ६१ ॥

कार्य्यभाक्त्वाभावे हेतुमाह ॥

उच्चरन्परतन्त्रत्वाद्गुणः कार्य्यैर्न युज्यते ।
तस्मात्तदर्थैः कार्य्याणां सम्बन्धः परिकल्प्यते ॥६२॥

तथैव गामानयेत्यादावर्थतन्त्रा श्रुतिः क्रियासु साधनत्वं न प्रति-

(१) तदर्थे इति पा० २ ।
(२) धीरिति पाठान्तरम् ।

पद्यते तथा शब्दार्थिकापि पारार्थ्याविशिष्टत्वात् तस्मात्सर्वस्य प्रत्याय्यस्य चक्षुरादिग्राह्यस्य श्रोत्रग्राह्यस्य वा क्रियासु साधनत्वमित्यर्थः ॥ ६२ ॥

नन्वर्थभूतस्याप्यग्निशब्दस्योच्चारणे उच्चारणपरतन्त्रत्वात्कार्य्ययोगो न स्यात् । अनुच्चारितेन तु कार्य्यबोधनमशक्यमत आह ॥

सामान्यमाश्रितं यद्यदुपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्म्मोन्यो व्यतिरिच्यते ॥ ६३ ॥

यथा ब्राह्मणइवाधीते क्षत्रिय इत्युपमेये श्रूयमाणं सामान्यमध्ययनमुपमानेपि प्रतीयते ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनमित्यादावध्ययनयोस्तत्त्वे सौष्ठवादयो धर्म्माः साधारणत्वेन प्रतीयन्ते । सौष्ठवादीनामप्यध्ययनसम्बन्धिनां तत्त्वे परिनिष्पत्त्यादयो धर्म्मा इति नास्ति तस्य विच्छेदः ॥ ६३ ॥

यथा वा ॥

गुणः प्रकर्षहेतुर्य्यः स्वातन्त्र्येणोपदिश्यते ।
तस्याश्रिताद्गुणादेव प्रकृष्टत्वं प्रतीयते ॥ ६४ ॥

यदिदं तदिति प्राधान्येनोपादीयते तद् द्रव्यम् । न च द्रव्यस्य प्रकर्षापकर्षौ स्त इत्याश्रितैर्भेदहेतुभिः परतन्त्रैः संसर्गिभिर्गुणैः प्रकर्षेण सव्यापारैस्तत्प्रकृष्यते । यथा शुक्लः पट इति शुक्लेन रूपेण सत्यपि परतन्त्रत्वे प्रकर्षं प्रति सव्यापारेण तद्दानप्रकृष्टव्यपाश्रयः प्रकृष्टव्यपदेशं लभते । शुक्लतरं रूपमस्येत्यत्र तु रूपस्य द्रव्यत्वेनोपादानाद्रूपाश्रितनिमित्तात्प्रकृष्टव्यपदेशः । यतो गुणः प्रकर्षहेतुरतो यः पदार्थः स्वातन्त्र्येण द्रव्यरूपेणोपदिश्यते तस्य स्वाश्रितगुणादेव प्रकर्ष इत्यन्वयः । यद्यपि श्वेतादिसमवायिश्वैत्याद्येकं तथापि संसर्गिधर्म्मान्तराश्रयएकस्यापि तस्य भेदः परिकल्प्यते । एवं तावद्वि-

च्छिन्नोऽयं निमित्तान्तरकल्पनामार्गः। ते च धर्म्माः संविज्ञातपदान्तराभावात् भावप्रत्ययैरनिर्देश्याः शुक्लादिशब्दोपसंगृहीताः शौक्ल्यवदेव प्रकर्षव्यपदेशहेतवो भवन्ति ॥ ६४ ॥

एवं प्रकृतेपीत्युपसंहरति ॥

तस्याभिधेयभावेन यः शब्दः समवस्थितः ।
तस्याप्युच्चारणे रूपमन्यत्तस्माद्विविच्यते ॥ ६५ ॥

तस्योच्चार्य्यमाणस्य तस्यापि अभिधेयभूतस्यापि यदा निदर्शनार्थमुच्चारणं क्रियते तदा सर्व्वस्यैवोच्चार्य्यमाणस्यैवंधर्म्मत्वात्तस्यापि निबन्धनरूपं स्वरूपान्तरमन्यत्प्रविविच्यते । यथा अग्नेर्ढगित्यस्य विवरणे अग्निशब्दाड्ढग्भवतीत्यादौ । सङ्ग्रहकारस्तु अभिधेयं स्वरूपं नाभिधेयतां प्रतिपद्यते तत्त्वभिधेयमेव गोपिण्डादिवत्तुल्यरूपतया अभिधानतामनापन्नमपि समुच्चार्य्यमाणत्वेनावसीयत इत्याह ॥६५॥

इदानीमभिधेयान्तरस्य प्रविवेकेऽपि अभिधानस्य स्वरूपेणाविवेकं दर्शयति ॥

प्राक् संज्ञिताभिसम्बन्धात्संज्ञा रूपपदार्थिका ।
षष्ठ्याश्च प्रथमायाश्च निमित्तत्वाय कल्पते ॥ ६६ ॥

उपसर्ज्जनीभूतस्वरूपार्थौ हि शब्दोऽर्थान्तरे वर्त्तते। अतो यावत्संज्ञा संज्ञिना सम्बद्धत्वेन न ज्ञाता तावन्न संज्ञिपदार्थकत्वम्। एवं चार्थान्तराभावेऽर्थवत्त्वाभावेन प्रातिपदिकत्वाभावान्न विभक्तिः स्यात् अतस्स्वरूपेणैवार्थवत्त्वमभ्युपेयमित्यव्यतिरिक्तः सोऽर्थ इति भावः ॥ ६६ ॥

अथ ते विभक्ती उपपादयति ॥

तत्रार्थवत्त्वात्प्रथमा संज्ञाशब्दाद्विधीयते ।
अस्येति व्यतिरेकश्च तदर्थादेव जायते ॥ ६७ ॥

शास्त्रेष्वर्थास्तु शब्दानां शास्त्रादिभिः स्वरूपाध्यारोपचिकीर्षया स्वरूपेणार्थवत्त्वात्प्रथमा विधीयते । गौर्वाहीक इतिवत्सोऽयमिति सञ्ज्ञिना शब्दवच्छेदलक्षणः सम्बन्धी नियम्यते । अतो न शब्दार्थसम्बन्धनित्यताहानिः । प्रातिपदिकार्थव्यतिरेकविवक्षायां च षष्ठीत्यर्थः । यथोक्त इत्यादौ स्वरूपार्थेनार्थवद्भुञ्शब्दस्य प्रगृह्यमिति सञ्ज्ञेति हि तदर्थः । एवं ह्याह । अर्थवता व्यपदेशः सोऽयं तस्येति वा इति ॥ ६७ ॥

स्वं रूपमिति सूत्रविषये प्रकारान्तरमाह ॥

स्वं रूपमिति केश्चित्तु व्यक्तिसञ्ज्ञोपदिश्यते ।
व्यक्तौ कार्य्याणि संसृष्टा जातिस्तु प्रतिपद्यते ॥६८॥
सञ्ज्ञिनीं व्यक्तिमिच्छन्ति सूत्रग्राह्यामथापरे ।
जातिप्रत्यायिता व्यक्तिः प्रदेशेषूपतिष्ठते ॥ ६९ ॥

इह केचिद्वृत्तिकाराः पठन्ति स्वं रूपं शब्दस्य प्रत्यायकमिति । अपरे स्वं रूपं शब्दस्य प्रत्याय्यमिति । तदनेन श्लोकद्वयेनोपन्यस्तम् । जातावपि द्वैधं केचिदाहुः । प्रतिनियतस्वरूपभेदा व्यक्तयोऽनन्ताः नह्यसंवेद्यमव्यपदेश्यमविद्यमानं वा व्यक्तीनां स्वरूपं, व्यक्तिरेव हि गौर्न जातिः । गुण एव हि नीलो न नीलत्वम् । जातिर्हि भेदवत्स्वर्थेषु स एवायमिति बुद्धिनिमित्तमिति । अन्ये तु जातौ प्रतिलब्धस्वरूपाः शब्दास्तद्रूपतयैव व्यक्तिमव्यपदेश्यस्वरूपां प्रत्याययन्ति । सर्व्वत्रैव हि निमित्तान्निमित्तवत्स्वर्थे निमित्तस्वरूपः प्रत्यय उत्पद्यते । तथा च स्वं रूपमिति जातिरेव कैश्चिद्व्यपदिश्यते । शब्दस्येति । शब्दशब्देन व्यक्तिरुच्यते । केषांचित्तु विपर्ययेण व्यपदेशः । एवं च जातेर्व्यक्तिः सञ्ज्ञा व्यक्तेर्वा जातिः, सा च प्रदेशेषूच्चरिता व्यक्तिं कार्य्ययोगेन प्रत्याययति । सा च जातिरसंसृष्टा व्यक्त्या नोपतिष्ठतेति व्यक्ति-

रपि आख्याऽसंस्कृष्टा प्रयोगविषयं नावतरति । तात्पर्य्येण तु विवक्षा भिद्यते । किञ्चिदत्र प्रधानं किञ्चिन्नान्तरीयकमिति तत्र प्रतिज्ञाभेदमात्रं स्वरूपार्थरूपमात्रासमुदायः शब्दः तदेकदेशाः स्वरूपादयो मात्राः । अस्ति च मात्राभिर्मात्रावतां भेदव्यपदेशः वार्क्षी शाखेति यथा । विस्तरभयात्त्वेतत्सूत्रविषया अन्ये मतभेदा नोदाक्रियन्तइति दिक् ॥ ६८ ॥

येषामेकशब्दत्वं तेषामयं जातिव्यक्तिव्यवहारो न सम्भवतीति वक्तुमाह ॥

कार्य्यत्त्वे नित्त्यतायां वा
केचिदेकत्ववादिनः ।
कार्य्यत्त्वे नित्त्यतायां वा
केचिन्नानात्त्ववादिनः ॥ ७० ॥

तत्र नित्यतायां मुख्यमेकत्त्वं कार्य्यत्त्वे तु उच्चारितस्य वर्णस्य पदस्य वा पुनरुच्चारणे स एवायमित्यव्यभिचारिप्रत्त्ययाभेद उत्पद्यमान एकत्त्वं प्रकल्पयति । तस्मान्नानात्त्ववादिमते उक्तो जातिव्यक्तिव्यवहार इति भावः ॥ ७० ॥

इदानीं शब्दाभिव्यक्तिप्रक्रियां प्रतिजानीते ॥

पदे भेदेऽपि वर्णानामेकत्त्वं न निवर्त्तते ।
वाक्येषु पदमेकं च भिन्नेष्वप्युपलभ्यते ॥ ७१ ॥
तद्वर्णव्यतिरेकेण पदमन्यन्न विद्यते (१) ।
वाक्यं वर्णपदाभ्यां च व्यतिरिक्तं न किञ्चन ॥ ७२ ॥

परमतमुक्त्वा स्वमतमाह ॥

---

(१) न वर्णव्यतिरेकेण पदमन्यत्र विद्यते इति पा० २ ।

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा इव (१) ।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ॥ ७३ ॥

किन्त्वपोद्धारकल्पनयैव विवेक इति भावः ॥ ७३ ॥

भिन्नं दर्शनमाश्रित्य व्यवहारोऽनुगम्यते ।
तत्र यन्मुख्यमेकेषां तत्रैतेषां विपर्य्ययः ॥ ७४ ॥

पदानि सत्यानीति परे । तत्रैतेषां वैयाकरणानां विपर्य्ययः । तानि असत्यानि वाक्यमेव सत्यमित्यर्थः ॥ ७४ ॥

स्फोटस्याभिन्नकालस्य ध्वनिकालानुपातिनः ।
ग्रहणोपाधिभेदेन वृत्तिभेदं प्रचक्षते ॥ ७५ ॥

स्वभावभेदान्नित्यत्वे ह्रस्वदीर्घप्लुतादिषु ।
प्राकृतस्य ध्वनेः कालः शब्दस्येत्युपचर्य्यते ॥७६ ॥

वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।
वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥ ७७ ॥

शब्दस्योर्द्धमभिव्यक्तेर्वृत्तिभेदे तु वैकृताः ।
ध्वनयस्समुपोहन्ते स्फोटात्मा तैर्न भिद्यते ॥७८॥

111878

इन्द्रियस्यैव संस्कारः
शब्दस्योभयस्य वा ।
क्रियते ध्वनिभिर्वादा-
स्त्रयोऽभिव्यक्तिवादिनाम् ॥ ७९ ॥

तत्र के चिन्मन्यन्ते ध्वनिरुत्पद्यमानः श्रोत्रं संस्कुर्वञ्छब्दोपलब्धौ द्वारतां प्रतिपद्यत इति । अन्ये तु मन्यन्ते शब्द एव ध्वनिसंसर्गात्-

(१) न वेति पा० २ ।

प्रसंस्कारः श्रोत्रस्य विषयत्वमापद्यते। के चित्तु मन्यन्ते ध्वनिरुभयो-रपि श्रोत्रशब्दयोः संस्कारे वर्त्ततइति ॥ ७९ ॥

तत्र दृष्टान्तमाह ॥

इन्द्रियस्यैव संस्कारः समाधानाञ्जनादिभिः।
विषयस्य तु संस्कारस्तद्गन्धप्रतिपत्तये ॥ ८० ॥

समाधानं चित्तस्यैकाग्रता सा अञ्जनादिद्रव्यं च चक्षुरेव सं-स्करोति विषयानुग्रहे हि तस्यान्यैरपि ग्रहणं प्रसज्येत विशेषा-भावात् तथात्रापीति केषां चिन्मतम्। पृथिव्या उदकेन संस्कार-स्तद्गन्धप्रतिपत्तये दृष्टः न तु घ्राणेन्द्रियस्य तथा सति संस्कृतासंस्कृ-तेषु प्रतिपत्तिभेदो न स्यात् विशेषाभावात् तथात्रापीति अन्येषां मतम् ॥ ८० ॥

अन्त्यमुपपादयति ॥

चक्षुषः प्राप्यकारित्वे तेजसा तु द्वयोरपि।
विषयेन्द्रिययोरिष्टः संस्कारः स क्रमो ध्वनेः॥ ८१॥

तेजसा आलोकेन यथा सन्तमसेऽवस्थितो य आलोकानुगृहीतं घटादिविषयं पश्यति तत्रालोकेन विषयेन्द्रिययोरुभयोरपि संस्कारः क्रियते। इन्द्रियस्यापि संस्कारे प्राप्यकारित्वं हेतुः। न च विषय-संस्कारे मानाभावः। आलोके स्थितस्यान्धकारस्थघटादर्शनात् ॥ ८१॥

तत्र ध्वनिस्फोटयोर्ग्रहणप्रकारमुपपादयति ॥

स्फोटरूपाविभागेन ध्वनेर्ग्रहणमिष्यते।
कैश्चिद्ध्वनिरसंवेद्यः स्वतन्त्रोऽन्यैः प्रकाशकः॥ ८२ ॥

यथा जवाकुसुमरूपानुषक्तमेव स्फटिकादीनां ग्रहणं तथा ध्वनि-रूपानुषक्त एव स्फोटस्तदविभागेनोपलभ्यतइति केषां चिन्मतम्। अन्येषां तु यथेन्द्रियगुणा असंवेद्यस्वरूपा एव विषयोपलब्धिहेतवः।

तथा ध्वनिरगृह्यमाण एव शब्दग्रहणे निमित्तं भवति । अन्ये तु दूरत्वदोषात्स्फोटस्वरूपानवधारणे केवलध्वनेरुपलब्धिर्दृष्टेत्याहुः । अपरे तु स्फोटो भासतएव तत्रापि, किं तु दूरत्वदोषादस्फुटः । यथा दूरत्वदोषाद्द्रव्यस्यापचितपरिमाणतया ग्रहणमित्याहुः ॥ ८२ ॥

इदानीं क्रमिकत्वेपि ध्वनीनां पदादिग्रहणमुपपादयति ॥

यथानुवाकः श्लोको वा सोढत्वमुपगच्छति ।
आवृत्त्या न तु स ग्रन्थः प्रत्यावृत्त्या निरूप्यते ॥ ८३ ॥

सोढत्वमेकबुद्धिविषयत्वम् । एवं वर्णपदवाक्यविषयाः प्रयत्नविशेषसाध्या ध्वनयो वर्णपदवाक्याख्यान् स्फोटान् पुनःपुनराविर्भावयन्तो बुद्धिष्वध्यारोपयन्ति । क्रमेण तु वर्णग्रहणे सति समुदायाभावादविषयत्वं तेषां बुद्धौ स्यादिति संहितासूत्रभाष्ये स्पष्टम् । न त्वेतावता ऽऽनन्त्यं स्फोटानाम् । यथा वृत्तौ न श्लोकाद्यानन्त्यम् । तदेवाह । न तु प्रत्यावृत्त्या स ग्रन्थः श्लोकसमुदायात्मको भेदेन निरूप्यतइत्यर्थः । तत्रान्त्यध्वनिना सम्यग्बुद्धौ निवेशः । यावच्चानुपगृहीतविशेषं बुद्धावसन्निविष्टं तावदनुपलब्धमेव नहि तेन कश्चिदपि व्यवहारः प्रकल्प्यतइति भावः ॥ ८३ ॥

नन्ववान्तरप्रत्यया यदि स्फोटविषयाः कृतमन्त्येन ध्वनिनेत्यत आह ॥

प्रत्ययैरनुपाख्येयैर्ग्रहणानुगुणैस्तथा ।
ध्वनिप्रकाशिते शब्दे स्वरूपमवधार्यते ॥ ८४ ॥

अनुपाख्येयैरनुपाख्येयाकारैरुपायभूतैः प्रत्ययैस्तद्द्वारा ध्वनिभिः सम्यक्प्रकाशिते शब्दे स्वरूपावग्रहो भवतीत्यर्थः ॥ ८४ ॥

तत्र क्रममाह ॥

नादैराहितबीजायामन्त्येन ध्वनिना सह ।

**आहृत्तपरिपाकायां बुद्धौ शब्दो ऽवधार्य्यते ॥८५॥**

नादैर्ध्वनिभिर्बीजं व्यक्तपरिच्छेदानुगुणसंस्कारः ततश्चान्त्यो ध्वनिः पूर्व्वपूर्व्वसंस्कारसहकृततायामावृत्तिलाभप्राप्तयोग्यतापरिपाकायां बुद्धौ शब्दस्वरूपं सन्निवेशयति ॥ ८५ ॥

नन्वान्तरस्य स्फोटस्याखण्डतया मध्येमध्ये वर्णपदावभासोऽसङ्गतः स्यादत आह ॥

**असतश्चान्तराले यांञ्छब्दानस्तीति मन्यते ।**
**प्रतिपत्तुरशक्तिस्सा ग्रहणोपाय एव सः ॥ ८६ ॥**

इह निर्भागेष्वपि वर्णपदवाक्येषु ध्वनिभिर्व्यङ्ग्येषु वर्णे तावद्वर्णसरूपभागाभिनिवेशिनी बुद्धिर्जायते पदे वर्णरूपभागाभिनिवेशिनी वाक्ये पदरूपभागाभिनिवेशिनी ताभिश्च बुद्धिभिरुपलब्धारो भागभूतानसतः शब्दानन्तराले मध्ये ऽस्तित्वेन मन्यन्ते । सा खलु तेषां प्रतिपत्तॄणामशक्तिः । यतस्तथाभूतोपायसाध्यमेव तेषां शब्ददर्शनमिति भावः ॥ ८६ ॥

नन्वेवं वाक्यानां पदानां च परस्परं भेदो न स्यादत आह ॥

**भेदानुकारो ज्ञानस्य वाचश्चोपप्लवो ध्रुवः ।**
**क्रमोपसृष्टरूपाया ज्ञानं ज्ञेयव्यपाश्रयम् ॥ ८७ ॥**

यथा यतो ज्ञानं ज्ञेयव्यपाश्रयमतो ज्ञानस्य भेदानुकारस्तथा क्रमोपसृष्टरूपाया वाच उपप्लवो भेदो ध्रुव इत्यन्वयः । यथा अभिन्नमपि ज्ञानमरूपं नानाज्ञेयरूपोपग्राहित्वाद्भेदरूपतया प्रत्यवभासते घटज्ञानं पटज्ञानमिति । तथा संहृतसर्व्वबीजोऽयमान्तरः शब्दात्मा व्यञ्जकध्वनिभेदक्रमानुकारेणाविर्भावकाले नानेव प्रत्यवभासते । एवं च ब्रह्माख्यं शब्दतत्त्वमेवावाङ्मनसगोचरमन्यदीयरूपभेदोपग्रहेणान्यथान्यथा प्रतीयत इति । एवं ह्याह । 'ज्ञेयेन न विना ज्ञानं

व्यवहारेऽवतिष्ठते । मातृस्वक्रमया वाचा कश्चिदर्थोऽभिधीयते' इ-ति ॥ ८७ ॥

ग्रहणोपाय एव स इति उक्तमेवार्थं दृष्टान्तेनोपपादयति ॥

यथाद्यसङ्ख्याग्रहण-
मुपायः प्रतिपत्तये ।
सङ्ख्यान्तराणां भेदेऽपि
तथा शब्दान्तरश्रुतिः ॥ ८८ ॥

यथा । दशशतादिसङ्ख्याप्रतिपित्समानो ऽपेक्षाबुद्धिविषयतया तदुपायभूतानेकत्वादीन् भिन्नकार्याच्छतादीनामवयवानिव प्रतिपद्यते तथा वाक्यादौ देवदत्तादिशब्दान्तरश्रुतिरुपायभूतापि अवयवत्वेन प्रतिपद्यते ग्रहीतृभिरित्यर्थः ॥ ८८ ॥

इदानीं वाक्यपदादिविषयदेवदत्तादिश्रुतीनां ध्वनिभेदेपि ऐक्यमुपपादयति ॥

प्रत्येकं व्यञ्जका भिन्ना वर्णा वाक्यपदेषु ये ।
तेषामत्यन्तभेदेपि सङ्कीर्णाइव शक्तयः ॥ ८९ ॥

पदवाक्यविषया हि विशिष्टाः प्रयत्नास्तत्प्रेरिताश्च वायवः तत्स्थानाभिघातेन ध्वनीनुत्पादयन्ति अभिव्यञ्जन्ति वेति ते परस्परव्यावृत्तस्वभावा यद्यपि तथापि गोत्वादिजात्युपव्यञ्जकानामिव भ्रमत्वादिजातिव्यञ्जकानामिव च तेषामुपव्यञ्जकानां दुर्ज्ञानो भेदः कया चित्सामान्यमात्रयानुगतत्वात् । न च सामान्यमात्राणां शक्तिरूपाणामप्याश्रयभेदेन कार्यभेदेन च भेद एव । प्रविभक्तकार्याणामपि शक्तीनां कुतश्चित्कार्यविशेषासङ्करेणैव स्थितेः । एवं च निरवयवेष्वपि वर्णपदवाक्येषु मात्राविभागो वर्णविभागः पदविभागश्च तत्कृत एव काल्पनिको मिथ्येति भावः ॥ ८९ ॥

अमुमेवार्थं दृष्टान्तपूर्वकमुपपादयति ॥

यथैव दर्शनैः पूर्वैर्दूरात्सन्तमसेऽपि वा।

अन्यथाकृत्य विषयमन्यथैवाध्यवस्यति ॥ ९० ॥

यथा चक्षुषा दूरादन्धकारे वा आकृतिमात्रोपलब्धौ वृक्षादीन् हस्त्यादिवत्प्रतिपद्यन्ते। ततः प्रणिधानाद् व्यक्तालोकाच्च क्रमेण पुनर्यथावदुपलभन्ते। यथा च रज्ज्वादीन् पूर्वं सर्पत्वेन प्रतिपद्य ततः प्रणिधानाच्चक्षुषि प्रकृतिस्थे रज्जुत्वेनोपलभन्त इति ॥ ९० ॥

दृष्टान्तं व्युत्पाद्य दार्ष्टान्तिके आह ॥

व्यज्यमाने तथा वाक्ये वाक्याभिव्यक्तिहेतुभिः।

भागावग्रहरूपेण पूर्वं बुद्धिः प्रवर्तते ॥ ९१ ॥

निर्भागवाक्याद्यभिव्यक्तिविषयैः प्रयत्नविशेषैर्जायमाना ध्वनयः सत्यपि भेदे सामान्यशक्तिसमन्वयशक्तिसमन्वयाद्वर्णपदप्रत्ययभासावग्रहरूपां बुद्धिं पूर्वं प्रवर्तयन्तीत्यर्थः। ततः प्रणिधानादिना वास्तवमखण्डमेव बुद्ध्या विषयीकुर्वन्तीति तात्पर्यम्। तादृशप्रणिधानासमर्थास्त्वस्मदादयः सावयवत्वमेव सत्यतया मन्यन्ते ॥ ९१ ॥

अमुमर्थं दृष्टान्तेनोपपादयति ॥

यथानुपूर्वीनियमो विकारे क्षीरबीजयोः।

तथैव प्रतिपत्तॄणां नियतो बुद्धिषु क्रमः ॥ ९२ ॥

क्रम आनुपूर्वी। यथा क्षीरं दधिरूपविकारमापद्यमानं मन्द(१)कनिलीनकोसरकलैरवस्थाविशेषैर्मन्द(२)कत्वादिक्रमानतिक्रमेणैव दधिप्रयोजिकां विकारशक्तिं दर्शयति। यथा च बीजं वटादिरूपतामापाद्यमानमङ्कुरावस्थाक्रमेणैव तद्रूपमापद्यते। तथैषामर्वाग्द-

(१) मण्डेति पा० २।

(२) मण्डेति पा०।

र्थानामां प्रतिपत्तॄणां स्फोटविषयासु बुद्धिषु क्रम इत्यर्थः ॥ ९२ ॥

इयं सरणिः परेषामप्यावश्यकीत्याह ॥

**भागवत्स्वपि तेष्वेवं रूपभेदो ध्वनेः क्रमात् ।**
**निर्भागेष्वप्युपायो वा भागभेदप्रकल्पनम्(१) ॥९३॥**

येपि गौरित्यत्र गकारौकारविसर्गमात्रमेव प्रतिपन्नाः नान्यस्त-द्व्यतिरिक्तो वर्णरूपग्रहणोपायग्राह्यो निर्भागः शब्दात्मा विद्यत इति मन्यन्ते नित्यत्वं च शब्दानामवगच्छन्ति तेषामपि क्रमेण वर्णाभिव्यक्तौ पदस्वरूपानवधारणमेव प्रसज्यते । युगपत्सर्वावयवा-भिव्यक्तौ तु नदीदीनयोरविशेषप्रसङ्गः । तस्मादभिव्यञ्जकध्वनिक्र-मकृतैव भेदप्रतिपत्तिर्वाच्या । पूर्वपूर्ववर्णाभिव्यक्तिस्तूपायोऽन्त्यवर्ण-प्रत्यक्षकाले समुदायग्रहस्येति वाच्यम् । दृष्टो हि मण्डूकवसासक्त-प्रदीपाभिव्यक्तरज्ज्वां सर्पादिप्रतिपत्तिभेदः । एवं च तत्र पूर्वपूर्व-वर्णाभिव्यक्तेरुपायत्ववत् निर्भागशब्दात्मग्रहणोपायो भागभेदकल्प-नमित्यर्थः । उपपादितं चैतत् पूर्वमेव ॥ ९३ ॥

मतान्तरमाह ॥

**अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ।**
**कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥ ९४ ॥**

आकृतिनित्यत्वाच्छब्दनित्यत्वं व्याचक्षाणाः केचिदुभयतः स्फोट-मात्रं निर्दिश्यते रश्रुतेर्लश्रुतिरित्येवमादिष्वेओङित्यादिसूत्रस्थभा-ष्येषु स्फोटशब्देन शब्दाकृतिमाचक्षते । उत्पत्तिमत्यस्तु शब्दव्यक्तयो जातिरूपं स्फोटं द्योतयन्त्यो ध्वनिव्यपदेशं लभन्ते । सा च क्रमोत्प-न्नैस्तथैवानुभूतैरनेकवर्णैरन्त्यवर्णप्रत्यक्षकाले पूर्वपूर्ववर्णानुभवजसं-स्कारसहकारिणाभिव्यज्यत इति तात्पर्यम् ॥ ९४ ॥

---

(१) प्रकल्पना इति पा० २ ।

सिद्धान्तिसम्मतत्वेन मुख्यत्वं च तस्य दर्शयितुं पुनः पूर्वमतमेवाह ॥

अविकारस्य शब्दस्य निमित्तैर्विकृतो ध्वनिः ।
उपलब्धौ निमित्तत्वमुपयाति प्रकाशवत् ॥ ६५ ॥

अन्ये त्वाकृतिमसहमाना एकमेव शब्दतत्त्वं नित्यं मन्यन्ते । तच्च स्वनिमित्तेभ्यः प्राप्तविकारैर्ध्वनिभिर्ध्वनिष्वनाश्रितमेव प्रकाशन्यायेन व्यञ्जकध्वनिरूपानुषक्तमेवाभिव्यज्यते । यथा प्रकाशेन स्वानुषक्तमेव घटाद्यभिव्यज्यतइत्यर्थः ॥ ६५ ॥

ननु शब्दोऽभिव्यज्यते उत्पद्यते वा । उभयथाप्यनित्य एव । आद्ये अनित्यः शब्दोऽभिव्यङ्ग्यत्वात् घटादिवत् । अनित्यानां हि घटादीनां प्रदीपादिभिरभिव्यक्तिर्दृष्टा । शब्दस्यायं ध्वनिव्यङ्ग्य उच्यते । तस्मादनित्यः । अथ नाभिव्यज्यते तदोत्पद्यतइति प्राप्तमेवमप्यनित्य एवेत्यत आह ॥

न चानित्येष्वभिव्यक्तिर्नियमेन व्यवस्थिता ।
आश्रयैरपि नित्यानां जातीनां व्यक्तिरिष्यते ॥६६॥

उक्तमनुमानं जातौ व्यभिचारीति भावः ॥ ६६ ॥

ननु ताल्वोष्ठपुटव्यापारेण ध्वनयोऽभिव्यज्यन्ते श्रोत्रदेशइत्ययुक्तम् । समानदेशस्थानामेव घटादीनां तादृशैः प्रदीपादिभिरभिव्यक्तिदर्शनात् । प्रकृते च भिन्नदेशत्वं स्पष्टमेव । एवमेव ध्वनिभिरान्तरशब्दात्मा अभिव्यज्यतइत्यप्ययुक्तम् । शब्दस्यैकदेशस्थत्वात् ध्वनीनां नानादेशत्वात् अतिविप्रकृष्टत्वाच्चेत्यत आह ॥

देशादिभिश्च सम्बन्धो दृष्टः कायवतामिह (१) ।
देशभेदविकल्पेपि न भेदो ध्वनिशब्दयोः ॥ ६७ ॥

कायवतां मूर्तानामेव देशैक्यनानादेशत्वव्यवहारो दृष्टः । अमूर्त-

(१) मपि इति पा० ।

योस्तु ध्वनिशब्दयोस्तथा व्यवहार एव नासीत्यर्थः । सत्यपि तथा व्यवहारे न क्षतिरित्याह । देशभेदेति । तयोरसौ भेदो न विद्यते । आकाशरूपैकदेशत्वात्तयोः ध्वनिरूपेणान्तरस्यैवाभिव्यञ्जनादित्यर्थः ॥ ९७ ॥

नन्वभिव्यञ्जके प्रदीपादावनियमेन पटघटाद्यभिव्यञ्जकता दृश्यते । ध्वनीनां नियताभिव्यञ्जकता दृश्यते । कादिवर्णाभिव्यक्तिहेतुभिर्नादैर्वर्णान्तरानभिव्यक्तेस्तस्मान्नाभिव्यज्यतइत्यत आह ॥

ग्रहणग्राह्ययोः सिद्धा योग्यता नियता यथा ।

व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः ॥ ९८ ॥

यथा चक्षुःसमवेतं रूपमेव बाह्यरूपाभिव्यक्तौ निमित्तम् । न गुणान्तराणि नापीतराणीन्द्रियाणि नापीन्द्रियान्तरगुणाः नाप्यन्याभिव्यक्तिः तथा प्रकृतेपि नियम इत्यर्थः ॥ ९८ ॥

ननु तुल्येन्द्रियग्राह्येष्वप्ययं नियमो नेति पर्य्यनुयोगमाह ॥

सदृशग्रहणानां च गन्धादीनां प्रकाशकम् ।

निमित्तं नियतं लोके प्रतिद्रव्यमवस्थितम् ॥ ९९ ॥

तुल्येन्द्रियग्राह्येष्वप्ययं धर्मो दृश्यते । तद्यथा । शैलेयादीनां द्रव्याणां किञ्चिदेव संयोगि द्रव्यान्तरं कस्य चिदेव द्रव्यस्य गन्धविशेषाभिव्यक्तौ समर्थं भवतीत्यर्थः ॥ ९९ ॥

नन्वेवमपि नाभिव्यज्यते शब्दः । अभिव्यञ्जकानां वृद्धिह्रासस‍ङ्ख्याभेदेपि अभिव्यङ्ग्यस्य तत्समन्वयाभावात् । यथा प्रदीपस्य वृद्धिह्रासयोर्न घटादीनां तौ नापि प्रदीपसङ्ख्याभेदे घटादीनां सङ्ख्यान्तरयोगः । शब्दस्य त्वभिघातभेदाद्दृश्यते सङ्ख्यापरिमाणभेदोऽत आह ॥

प्रकाशकानां भेदांश्च प्रकाश्योऽर्थोनुवर्त्तते ।

**तैलोदकादिभेदे तत्प्रत्यक्षं प्रतिबिम्बकं(१) ॥ १०० ॥**

अभिव्यङ्ग्यानामप्यभिव्यञ्जकभेदानुविधानं दृष्टं यथा निम्नोन्नताद-र्शतलेषु मुखप्रतिबिम्बमुन्नतं दृश्यते । उन्नते निम्नं प्रियङ्गुतैले श्यामं च । अल्पकायादिपरिमाणभेदात्प्रतिबिम्बे परिमाणभेदोपि दृष्टः । आदर्शादीनां जलतरङ्गाणां च सङ्ख्याभेदोपि दृष्ट इत्यर्थः ॥ १०० ॥

ननु प्रतिबिम्बमादर्शादिषु चन्द्रादिभ्यो भावान्तरमेव सन्निविष्ट-मुपलभ्यतइति न तेऽभिव्यञ्जका इत्यत आह ॥

**विरुद्धपरिमाणेषु वज्रादर्शतलादिषु ।**
**पर्वतादिसरूपाणां भावानां नास्ति सम्भवः ॥१०१॥**

नहि वज्रादिष्वाधारेषु विरुद्धपरिमाणानामन्तःसन्निवेशिनां प-र्वतादिसरूपाणां भावानामुत्पत्तिः सम्भवतीत्यर्थः । तस्मात्तेप्यभिव्य-ञ्जका एवेति भावः ॥ १०१ ॥

नन्वेवं स्फोटस्य पौर्वापर्याभावात्पूर्वपरादिव्यवहारोऽसङ्गतः स्या-द् इकोयणचीत्यादौ तथा ह्रस्वदीर्घादिव्यवहारो द्रुतविलम्बितादि-व्यवहारश्च न स्यादत आह ॥

**तस्मादभिन्नकालेषु वर्णवाक्यपदादिषु ।**
**वृत्तिकालः स्वकालश्च नादभेदाद्विभज्यते ॥ १०२ ॥**

नादकृतपौर्वापर्यव्यवहारः प्राकृतध्वनिभेदकृतश्च ह्रस्वदीर्घादिव्य-वहारः वैकृतध्वनिकृतस्तु द्रुतमध्यमविलम्बितव्यवहार इत्यर्थः ॥१०२॥

इदानीं नादस्फोटयोः स्वरूपमाह ॥

**यः संयोगविभागाभ्यां**
**करणैरुपजन्यते ।**
**स स्फोटः शब्दजाः शब्दा**

(१) भेदेन प्रत्यक्षं प्रतिबिम्बकम् इति पाठान्तरम् ।

ध्वनयोऽन्यैरुदाहृताः ॥ १०३ ॥

अनित्यत्वपक्षे स्थानकरणप्राप्तिविभागहेतुकः प्रथमाभिव्यक्तो यः शब्दः स स्फोट इत्युच्यते । तस्य मुख्यः समवायिदेश आकाशः । आकाशस्यापि संयोगिद्रव्यान्तरकृते भेदे सति तन्निमित्तस्तेषां पौर्वापर्यव्यवहारः । ततस्तु सर्वदिक्कास्तद्रूपप्रतिबिम्बावग्राहिणो मन्दप्रदीपप्रकाशितरूपभानक्रमेण प्रभासमाना ये वर्णश्रुतिं विभजन्ति ते ध्वनय इत्युच्यन्ते । नित्यत्वपक्षे तु संयोगविभागजध्वनिव्यङ्ग्यस्फोट इति केषांचिन्मतम् । अन्येषां संयोगविभागफलजध्वनिसम्भूतनादाभिव्यङ्ग्य इति मतम् । तत्र पूर्वावस्थास्ते ह्रस्वदीर्घादिव्यवहारहेतवः यथोत्तरमुपचीयमानाभिव्यक्तयस्तु ध्वनयो नादा वा द्रुतादिवृत्तिभेदव्यवस्थाहेतव इति बोध्यम् ॥ १०३ ॥

इदानीं प्राकृतवैकृतयोर्विशेषं श्लोकद्वयेनाह ॥

अल्पे महति वा शब्दे स्फोटकालो न भिद्यते ।
परस्तु शब्दसन्तानः प्रचयापचयात्मकः ॥ १०४ ॥

देशव्याप्तिसामान्यादल्पत्वमहत्वे शब्दस्योपचर्येते लोकप्रसिद्धेर्वा लोकप्रसिद्धिरेव हि सर्वत्र व्यवस्थाकारणं, शब्दोऽत्र ध्वनिः स च द्विविध उत्तरोत्तरशब्दानां कारणरूप आद्यः कार्यरूप उत्तरश्च । तत्राद्यः स्फोटव्यञ्जकः स्फोट एव वा । तस्य कारणरूपस्य कार्यारम्भे शक्तिः सामर्थ्यं निमित्तभेदाद्भिद्यते । यथा भेरीदण्डाभिघातजस्य कार्यपरम्परा दूरमनुपतति । लोहकंसाभिघातजस्तु प्रत्यासन्नदेशं दीर्घकालग्राह्यमविच्छेदेनारभते । तदाह । परस्त्विति । तत्राद्यः प्राकृतः परो वैकृत इति बोध्यम् ॥ १०४ ॥

मतान्तरमाह ॥

दूरात्प्रभेव दीपस्य ध्वनिमात्रं तु लक्ष्यते ।

घण्टादीनां च शब्देषु व्यक्तो भेदः स दृश्यते ॥१०५॥

इह के चिदाचार्या मन्यन्ते । यथा एकैव दीपप्रभा दूराद्दृश्यते तथा प्राकृत एव ध्वनिः सर्वतो दूरव्यापी लक्ष्यते । तस्मिं वैकृतो नास्त्येव । अस्तीत्याह । घण्टादीनां चेति । घण्टायामिव सर्ववर्णनिष्पत्तौ प्राकृतवैकृतौ ध्वनिनादौ द्रष्टव्यावित्यर्थः ॥ १०५ ॥

इदानीं तयोः कार्यविशेषमाह ।

द्रव्याभिघातात्प्रचितौ भिन्नौ दीर्घप्लुतावपि ।

कम्पे तूपरते जाता नादा वृत्तेर्विशेषकाः ॥ १०६ ॥

नित्येपि शब्दे नैव शब्दानां प्रचयेन दीर्घप्लुतौ प्रचीयेते किं तु द्रव्याभिघातप्रचयादेव, स्वरूपमेव हि तयोस्तावद्भिरभिघातैर्निष्पाद्यते । तत्र करणानामभिघातविशेषादितरेतरसंसर्गजव्यक्तवाक्प्रस्यन्दनानुगतः कम्पोऽनुवर्तते । तस्मिन्नुपरते ये नादजा नादास्ते द्रुतादिवृत्तिभेदव्यवस्थाहेतवो भवन्तीत्यर्थः ॥ १०६ ॥

मतान्तरमाह ।

अनवस्थितकम्पेऽपि
करणे ध्वनयोपरे ।
स्फोटादेवोपजायन्ते
ज्वाला ज्वालान्तरादिव ॥ १०७ ॥

कम्पे ऽविच्छेदेनानुवर्तमानेपि यो ऽभिघातजः शब्दो नासौ कदाचिदपि अनारब्धकार्यो निवर्तते । तत्र ये कम्पजाः शब्दसमानकाला ध्वनयः स्फोटमभिव्यञ्जयन्ति तानङ्गानित्याचक्षते । तेषामपि च प्रत्यनुषङ्गं कार्यपरम्परा यावत्कम्पो न विच्छिद्यते तावत्स्फोटानुग्रहमात्रयानुवर्ततइत्याहुः । अन्ये सा चेयमुत्पत्तिरिन्धनज्वालाप्रबन्धप्रवृत्तिधर्मेणाख्यायते । तद्यथेन्धनाश्रितज्वालाभिर्ज्वालाकार्यस-

त्मानसमुद्भवा ज्वालाः संप्रवर्तन्ते प्रकाशेन चार्थानुपकुर्वन्ति । तथेयमपि भेदप्रवृत्तिरिति ॥ १०७ ॥

इदानीं शब्दविषये मतभेदानाह ।

वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते ।
कैश्चिद्दर्शनभेदो हि प्रवादेष्वनवस्थितः ॥ १०८ ॥

तत्र वायोः शब्दत्वमुपपादयति ।

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना ।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥१०९॥

वक्तुरिच्छेत्यनेन एकस्यैव वायोरनेकरूपशब्दत्वोपपत्तिः ॥ १०९ ॥

ननु कथं वायोः कत्वादिनाभिव्यक्तिरत आह ॥

तस्य कारणसामर्थ्याद्वेगप्रचयधर्मिणः ।
सन्निपाताद्विभज्यन्ते सारवत्योपि मूर्तयः ॥ ११० ॥

सन्निपातात्प्रयत्नविशेषरूपकारणसम्बन्धादित्येवमादि सर्वमनुगन्तव्यम् ॥ ११० ॥

अणूनां शब्दत्वमुपपादयति ॥

अणवः सर्वशक्तित्वाद्भेदसंसर्गवृत्तयः ।
छायातपतमःशब्दभावेन परिणामिनः ॥ १११ ॥

स्वशक्तौ व्यज्यमानायां प्रयत्नेन समीरिताः ।
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ॥११२॥

इत्येवमादि सर्वमनुगन्तव्यम् ॥ ११२ ॥

ज्ञानस्य शब्दत्वमुपपादयति ॥

अथेदमान्तरं ज्ञानं सूक्ष्मवागात्मना स्थितम् (१) ।

---

(१) अथायमान्तरो ज्ञाता सूक्ष्मे रागात्मनि स्थित इति पा० २ ।

व्यक्तये स्वस्य रूपस्य शब्दत्वेन निवर्तते ॥ ११३ ॥
स मनो(१)भावमापद्य तेजसा पाकमागतः ।
वायुमाविशति प्राणमथासौ समुदीर्यते ॥ ११४ ॥
अन्तःकरणतत्त्वस्य वायुराश्रयतां गतः ।
तद्धर्मेण समाविष्टस्तेजसैव विवर्तते ॥ ११५ ॥

विभज्य स्वात्मनो ग्रन्थीन् (२)
श्रुतिरूपैः पृथग्विधैः ।
प्राणो वर्णानभिव्यज्य
वर्णेष्वेवोपलीयते ॥ ११६ ॥

इत्येवमादि सर्वमनुगन्तव्यम् । मतान्तराण्यप्यत्र सन्ति । तथा-ह । अन्तर्वर्तिना प्रयत्नेनोर्ध्वमुदीरितः प्राणो वायुस्तेजसानुगृही-: शब्दतामापद्य शब्दघनसंहन्यमानया प्रकाशमात्रया युक्तस्यान्तः-न्निवेशिनः शब्दस्याविभक्तं बिम्बमुपगृह्णातीत्येकेषां मतम् । ना-नप्रदेशात्प्रयत्नप्रेरितो वायुरूर्ध्वमाक्रमन्नुरःप्रभृतीनि स्थानान्याह-त तेन चान्तःस्थितशब्दस्य कत्वादिनाभिव्यक्तिरित्यपरमतम् । आ-र्यैः खल्वप्याह । 'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्ष-। । मनः कायाग्निमाहन्ति स प्रेरयति मारुत'मिति । अपर आ-। मनोभिहतः कायाग्निः प्राणमुदीरयति स नाभेरुध्वमूर्धन्य-हतो ऽन्येन पुनरुच्चताभिहन्यमानः ख इति क इति वा ध्वनिः म्यत इति ॥ ११६ ॥

मतान्तरमाह ॥

---

(१) समता इति पा० २ ।
(२) विभज्य स्वात्मनो ग्रन्थान् इति पा० २ ।

**अजस्रवृत्तिर्यः शब्दः सूक्ष्मत्वान्नोपलभ्यते (१) ।**
**व्यञ्जनाद्वायुरिव स स्वनिमित्तात्प्रतीयते ॥ ११७ ॥**

सूक्ष्मो वायुरिव सर्वमूर्त्तीनामन्तर्बहिश्च ध्वनिरवस्थितः । स एव केश्चिदाकाश इति पठ्यते । तत्र यथा सूक्ष्मस्य वायोर्व्यञ्जनादभिव्यक्तिः तथा सूक्ष्मो ध्वनिः स्वनिमित्तैरभिदयत्नप्रचितविक्रियारूपः श्रोत्रदेशं प्राप्त उपलभ्यतइत्यर्थः ॥ ११७ ॥

पुनः पक्षान्तरमाह ॥

**तस्य प्राणे च या शक्तिर्या च बुद्धौ व्यवस्थिता ।**
**विवर्त्तमाना स्थानेषु सैषा भेदं प्रपद्यते ॥ ११८ ॥**

शब्दः प्राणाधिष्ठानो बुद्ध्यधिष्ठानश्च द्वाभ्यां प्राणबुद्धिशक्तिभ्यामभिव्यक्तोर्थं प्रत्याययति । तत्र बुद्धितस्थान्तरासन्निविष्टः प्राण ऊर्ध्वमभिप्रवृत्तस्तत्स्थानेषु प्रयत्नानुविधाय्याघातेनानित्यशब्दरूपेण विवर्तते स च प्राप्तविवर्तः पृथिवीकललन्यग्रोधादिवद्भेदं प्राप्य परस्मिन् शब्दात्मनि भेदानुरागं संनिवेशयति ॥ ११८ ॥

इदानीं शब्दस्यैव जगन्मूलत्वं प्रपञ्चयति ॥

**शब्देष्वेवाश्रिता शक्तिर्विश्वस्यास्य निबन्धनी (२) ।**
**यन्नेत्रः प्रतिभात्मायं भेदरूपः प्रतीयते ॥ ११९ ॥**

सर्वा अप्यर्थजातयः सूक्ष्मरूपेण शब्दाधिष्ठानाः । ताः क्रियात्माभिव्यक्तिमधिष्ठानपरिणामेन प्रतिलभमाना वाच्यवाचकभावरूपेण भेदेन प्रतीयन्ते । एवं ह्याह । 'वागेवार्थं पश्यति वाग्ब्रवीति वागीवार्थं सन्निहितं सन्तनोति । वाचैव विश्वं बहुरूपं निबद्धं तदेतदेकं प्रविभज्योपभुङ्क्ते' इति ॥ ११९ ॥

---

(१) सूक्ष्मत्वेनोपलभ्यते सूक्ष्मत्वान्नोपलभ्यते इति च पा० २ ।
(२) निबन्धनम् । इति पा० २ ।

षड्जादिभेदः शब्देन
व्याख्यातो रूप्यते यतः।
तस्मादर्थविधाः सर्वाः
शब्दमात्राः सुनिश्चिताः ॥१२०॥

संविज्ञातपदनिबन्धनो हि सर्वोऽर्थः शब्देन निरूप्यमाणो व्यवहारमवतरति। अत एवासंविज्ञातपदानां विशेषावधारणं निबन्धनपदप्रत्ययमन्तरेण न जायते। गोपालादयोपि हि निबन्धनपदानि प्रकल्प्य गवादिविशेषविषयं व्यवहारमीहन्ते। तस्मात्सर्वत्र शब्दाध्यारूढो भेदवानर्थः शब्दशक्तिसंसृष्टः शब्दविषयया बुद्ध्या प्रकाश्यत इत्यर्थः ॥ १२० ॥

शब्दस्य (१) परिणामोऽयमित्याम्नायविदो विदुः।
छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत ॥ १२१ ॥

यथैव मृद्धर्मसमन्वयान्मृद्विवर्तं घटं व्यवस्थापयन्ति तथैवाम्नाये सभूतभोग्यभोक्तृशक्तेर्वागात्मनो बहुधा करणत्वमाम्नातं सर्वत्र शब्दमात्रासमन्वयात्। तमाम्नायमेवाह। छन्दोभ्य इत्यादि। अन्यत्रापि। 'ऋङ्मयो यजुर्मयः साममयो वैराजः पुरुषो वै यज्ञस्तस्यैता लोकंपृणास्तिस्र आहुतयस्ता वै त्रयो लोका' इति। तथा 'एष वै छन्दस्यः साममयः प्रथमो वैराजः पुरुषो योऽन्नमसृजत तस्मात्पशवो ऽजायन्त पशुभ्यो वनस्पतयो वनस्पतिभ्यो दिश' इति। ऋग्वर्णोपि 'वागेव विश्वा भुवनानि जज्ञे वाच इत्सर्वममृतं यच्च मर्त्यमि'ति। पुराकल्पोप्याह। 'विभज्य बहुधात्मानं सच्छन्दस्यः प्रजापतिः। छन्दोमयीभिर्मात्राभिर्बहुधैव विवेश तम् ॥ शाब्दी वाग्(२) भूयसी येषु पुरुषेषु

(१) छन्दस्य इति पा० २।
(२) साध्वी वा इति पा० २।

व्यवस्थिता । अधिकं वर्तते तेषु पुण्यं रूपं प्रजापतेः ॥ प्राजापत्यं मह-त्तेजस्तत्पाचैरिव (१) संवृतम् । शरीरभेदे विदुषां स्वां योनिमुपधावति ॥ यदेतन्मण्डलं भास्वद्धाम चित्रस्य राधसः (२) । तद्भावमभिसम्भूय विद्यायां प्रतिलीयते ॥' (३) इति ॥ १२१ ॥

सर्वत्र शब्दमात्रासमन्वयमुपपादयति ।

इतिकर्तव्यता लोके सर्वा शब्दव्यपाश्रया ।
यां पूर्वाहितसंस्कारो बालोपि प्रतिपद्यते ॥ १२२ ॥

सदपि व्यवहारेणानुपगृहीतमसता तुल्यम् । अत्यन्तासच्च लोके शशविषाणादि प्राप्ताविर्भावतिरोभावं च गन्धर्वनगरादि वाचा समुत्थाप्यमानं मुख्यसत्तायुक्तमिव तेषुतेषु कार्येषु प्रत्यवभासते बालानामपि स्वस्वजातिषु पूर्वपूर्वतनशब्दावेशभावनासंस्कारेण यातार्थक्रियायामनाख्येयशब्दनिबन्धना प्रवृत्तिरिति न दोषः ॥ १२२ ॥

युक्त्यन्तरमाह ॥

आद्यः करणविन्यासः प्राणस्योर्ध्वं समीरणम् ।
स्थानानामभिघातश्च न विना शब्दभावनाम् ॥ १२३ ॥

प्रथमोत्पन्नस्य बालस्यायमिन्द्रियविन्यासादि उपदेशाभावेपि शानसाध्यं जायमानं दृश्यते । तस्मादनादिशानबीजशब्दपरिग्रहा शब्दभावना प्रतिपुरुषमवस्थितेति मन्तव्यम् । अर्थस्मरणस्यापि शब्दोल्लेखेनैव दर्शनात् ॥ १२३ ॥

तदेवाह ॥

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।

---

(१) तस्मात्तैरेवेति पा० २ ।

(२) धाम वित्तस्य राधस इति पा० २ ।

(३) विप्रलभ्यतइति प्रविलीयते इति च पाठान्तरम् ।

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥ १२४ ॥

का चिदेव सा ज्ञानावस्था सविकल्पकाख्या यस्याभिमुखीभूतशब्दभावनाबीजायामाविर्भूतासु प्रत्यर्थनियतासु अर्थोपग्राहिणीषु शक्तिषु शब्दानुविद्धेन शब्दशक्त्यनुपातिना ज्ञानेनोपगृह्यमाणो वस्त्वात्मा ज्ञानानुगतो व्यक्तरूपप्रत्यवभासो ज्ञायतइत्यभिधीयते तादृश एव च स्मृतिविषयो भवति । अनुभवसमानाकारत्वात्तस्याः । अत एव के चिदाचार्याः सुप्तस्यापि जाग्रद्वृत्त्या सदृशो ज्ञानवृत्तिप्रतिबन्धः केवलं तु शब्दभावनाबीजानि तदा सूक्ष्मां वृत्तिं लभन्ते सा च तामसी अवस्थेत्याहुः । तदेषा ज्ञानावस्था शब्दप्रकृतिविकृतिविकारभावेनाविर्भावतिरोभावावजस्रमनुभवति ॥ १२४ ॥

तदेव पुनरुपपादयति ॥

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।

न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥१२५॥

यथान्तर्यामिणः प्रकाशत्वस्वरूपं चैतन्यम् । तथा प्रकाशो ज्ञानमपि सर्ववाग्रूपानुगतं, योपि प्रथमनिपाती बाह्येष्वर्थेषु प्रकाशः स विशेषनिमित्तापरिग्रहेपि वस्तुमात्रमिदं तदिति प्रत्यवभासयति । स्मृतिकालेपि च तादृशानामुपलब्धिबीजानामाभिमुख्ये स्मर्तव्याः श्लोकादयः कोप्यसावनुवाकः श्लोको वेति बुद्धौ विपरिवर्तते । वाग्रूपतायां च सत्यामुत्पन्नोपि प्रकाशो विशेषवाग्रूपमस्वीकुर्वन् प्रकाशक्रियासाधनतायां न व्यवतिष्ठते । सा हि वाग्रूपता हि प्रत्यवमर्शः सविकल्पकज्ञानं तत्संपादिकेत्यर्थः । तदेव च प्रकाशनक्रियासाधनमित्यर्थः ॥ १२५ ॥

पुनरपि सर्वस्य वाग्रूपत्वे बीजमाह ॥

सा सर्वविद्या शिल्पानां कलानां चोपबन्धनी ।

तद्वशादभिनिष्पत्तौ (१) सर्वं वस्तु विभज्यते ॥१२६॥

विद्याशिल्पकलादिभिर्लौकिकेषु वैदिकेषु वार्थेषु मनुष्याणां प्रायेण व्यवहारः प्रतिबद्धः मनुष्याधीनाश्चेतरस्य भूतग्रामस्य स्थावरजङ्गमस्य प्रवृत्तयः विद्यादयश्च वाग्रूपायां बुद्धौ निबद्धाः । घटादीनां चाभिनिष्पादने प्रयोज्यप्रयोजकानामुपदेशसमीहादि वाग्रूपतानुसारेणैव प्रकल्प्यते । अभिनिष्पन्नवस्तूनां समानाकाराणां विभागोपि वाक्कृत एवेत्यर्थः ॥ १२६ ॥

सैषा संसारिणां सञ्ज्ञा बहिरन्तश्च वर्तते ।
तन्मात्रामव्यतिक्रान्ते चैतन्यं सर्वजन्तुषु (२) ॥१२७॥

योयं चैतन्ये वाग्रूपतानुगमस्तेन लोके ससञ्ज्ञो विसञ्ज्ञ इति च व्यपदेशः क्रियतइत्यर्थः ॥ १२७ ॥

अर्थक्रियासु वाक् सर्वी
समीहयति देहिनः ।
तदुत्क्रान्तौ विसञ्ज्ञोयं (३)
दृश्यते काष्ठकुड्यवत् ॥ १२८ ॥

सुखदुःखसंविज्ञानरूपान्तःसञ्ज्ञापि यावद्वाग्रूपतानुवृत्तिस्तावदेव भवति । बहिःसञ्ज्ञा लोकव्यवहारः सोपि वागधीन एव तदभावे विसञ्ज्ञत्वं व्यवहरन्ति । नहि वाक् चैतन्यानाविष्टा सञ्ज्ञास्ति यतश्चितिक्रियारूपमलब्धवाक्शक्तिपरिग्रहं विद्यतइति वाग्रूपत्वमेव चितिक्रियारूपमित्येके । एवं ह्याह । 'भेदोद्ग्राहविवर्तेन लब्धाकारपरिग्रहा । आम्नाता सर्वविद्यासु वागेव प्रकृतिः परा ॥ एकत्वमभिनि-

---

(१) तद्वशादभिनिष्पन्नमिति पाठान्तरम् ।

(२) तन्मात्रामव्यतिक्रान्तं चैतन्यं सर्वजातिषु इति पा० २ ।

(३) तदुत्क्रान्तौ विसंज्ञेयमिति पाठान्तरम् ।

त्क्रान्ता वाङ्नैवा वाङ्निबन्धना:। पृथग्वदवभासन्ते (१) वाग्विभागा गवादय:। षड्द्वारां षडधिष्ठानां षट्प्रबोधां षडव्ययाम्। ते मृत्युमतिवर्तन्ते ये वै वाचमुपासतइति ॥ १२८ ॥

प्रविभागे यथा कर्ता तथा कार्ये प्रवर्तते।
अविभागे तथा सैव कार्यत्वेनावतिष्ठते ॥ १२९ ॥

प्रविभक्तसाध्यसाधनभावरूपो हि शब्दब्रह्मणो विवर्त:। प्राप्तजन्मादिक्रिया वाक् यतो जागरणाजागरणयोर्वृत्तिकाले वाग्रूपतामनुगच्छति चैतन्यं निर्वृत्तिक्रियाप्राप्तिभिन्न कार्य्येषु प्रवर्तते। स्वरूपाविभागे तु सैव वाक् बाह्यवस्तुस्वरूपतया निर्वृत्तिविक्रियाप्राप्तिषु कर्मभावं प्रपद्यतइत्यर्थ:। एवं ह्याह। प्रविभज्यात्मनात्मानं (२)सृष्ट्वा भावान् पृथग्विधान्। सर्वेश्वर: सर्वमय: स्वप्ने भोक्ता प्रवर्ततइति ॥१२९॥

पुनरपि शब्दस्यैव जगत्कारणत्वमुपपादयति ॥

स्वमात्रा परमात्रा वा श्रुत्वा प्रक्रम्यते यथा (३)।
तथैव रूढतामेति तथा ह्यर्थो विधीयते ॥ १३० ॥

सर्व्वो हि विकार आत्ममात्रेति केषां चिद्दर्शनम्। स च प्रतिपुरुषमन्त:सन्निविष्टो बाह्यइव प्रत्यवभासते वस्तुतस्तस्यैकत्वादमूर्तत्वादरूपत्वाच्च व्यवहारमात्रमिदमन्तर्बहिरिति अपरेषां मतम्। एकस्य चितितत्त्वस्यायं परिणाम इत्यादिस्वमात्रावादिनां दर्शनम्। चैतन्यं भूतयोनितिलक्षोदरसवत्प्रविभज्यतइत्येकेषां मतम्। अन्येषान्तु दर्शनं यथा महतोऽग्नेर्विस्फुलिङ्गा: सूक्ष्मा वायोरभ्रसंघातसम्क्रान्तादविभागिन्यस्तोयधारा: पृथिव्या वासावारोहप्रसवान्यग्रोधा इत्येवमादिपरमात्रावादिनान्दर्शनं विद्याभाष्येभ्य: प्रतिपत्तव्यम्। ए-

(१) पृथग्वदेव भासन्त इति पा० २।
(२) अविभज्यात्मनात्मानमिति पा० २।
(३) श्रुत्वा प्रक्रम्यते यथा इति पा० २।

वंभूतः सर्वोऽपि प्रपञ्चः यथा श्रुत्या प्रक्रम्यते । श्रुत्यान्तःसन्निवेशिना शब्देन सुखदुःखादिभावेन प्राणिषु बहुधा प्रक्रम्यते दृश्यते स तथैव तत्र शब्दे रूढतामेति । अत एव तया श्रुत्यार्थो विधीयते निश्चीयते न सङ्कीर्यतइत्यर्थः ॥ १३० ॥

तदेवोपपादयति ॥

**अत्यन्तमतथाभूते निमित्ते श्रुत्यपाश्रयात् ।**
**दृश्यते ऽलातचक्रादौ वस्त्वाकारनिरूपणा ॥ १३१ ॥**

श्रुतौ सर्व्वमर्थस्वरूपं संनिविष्टं यतः सा तमर्थं जनयतीव स हि तस्यां प्रत्याय्यात्मना नित्यमवस्थितः । नहि बाह्यं वस्तुगतं सत्त्वं श्रुतिरपेक्षते । यथा सर्वप्रदेशव्यापिक्रियायां शब्दभावनानुगतायामलातचक्रादिश्रुतिरवतिष्ठमाना व्यावहारिकाणां तेषां शब्दानां स्वानुगतार्थेनार्थवत्तां प्रकल्पयति । तथा च श्रुत्या कल्पितो वस्त्वाकारः सत्यप्यनुमानबलीयस्त्वे रूढो भवति । अत्यन्तासत्सु च शशविषाणादिषु श्रुतिरेवार्थं नयति प्रत्यक्षविरोधेपि । एवं च सर्वत्र प्रत्यक्षसिद्धे ऽत्यन्तासिद्धे वार्थे बोधोपयोगिशब्द एव कारणमिति तात्पर्यम् ॥ १३१ ॥

अन्तर्यामिण एव शब्दत्वे युक्त्यन्तरमाह ॥

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते (१) ॥ १३२ ॥**

इह द्वौ शब्दात्मानौ कार्यो नित्यश्च तत्राद्यो व्यावहारिकः पुरुषस्य वागात्मनः प्रतिबिम्बोपग्राही अन्यस्तु सर्वव्यवहारयोनिः संहृतक्रमः सर्वेषामन्तःसंनिवेशी प्रभवो विकाराणामाश्रयः । सर्वकर्मणामधिष्ठानं सुखदुःखयोः सर्वत्राप्रतिहितकार्यशक्तिः परिच्छिन्नभोगदेशावधिः सर्वमूर्तीनामपरिणामा प्रकृतिः बोधरूपतया नित्य-

---

(१) सायुज्यमश्नुतइति पा० २ ।

प्रवृत्तप्रत्यवभासप्रवृत्तिनिवृत्तिपदाभ्यां पर्जन्यवदभिवच प्रसवोच्छेद-शक्तियुक्तः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तस्मिन् खलु वाग्योग-विदो विच्छिद्याहङ्कारग्रन्थीनत्यन्तं संसृज्यन्ते । आह च । 'चत्वारि शृङ्गा त्रयो अस्य पादा' इत्यादिऋग्वर्णः ॥ १३२ ॥

**तस्माद्यः शब्दसंस्कारः सा सिद्धिः परमात्मनः ।**
**तस्य प्रवृत्तितत्त्वज्ञस्तद्ब्रह्मामृतमश्नुते ॥ १३३ ॥**

व्यवस्थितसाधुभावे हि शब्दतत्त्वे संस्क्रियमाणे ऽपभ्रंशापगमादा-विर्भूते धर्मविशेषे नियतोभ्युदयः । तदभ्यासाच्च शब्दपूर्वकं योगम-धिगम्य प्रतिभातत्त्वप्रभवां भावविकारप्रकृतिसत्तां साध्यसाधनश-क्तियुक्तां सम्यगवबुध्य नियतं क्षेममाप्नोतीत्यर्थः । आह च । 'शब्दवृ-त्तिमतिक्रान्ते वाचस्तत्त्वे व्यवस्थितः । क्रमसंहारयोगेन संहृत्यात्मा-नमात्मनि ॥ वाचः संस्कारमाधाय वाचः स्थाने निवेश्य च (१) । विभज्य बन्धनान्यस्याः कृत्वा तां छिन्नबन्धनाम् ॥ ज्योतिरान्तरमा-साद्य छिन्नग्रन्थिपरिग्रहम् । परेण ज्योतिषैकत्वं (२) छित्त्वा ग्रन्थी-न्प्रपद्यत (३)' इति ॥ १३३ ॥

**न जात्वकर्तृकं कश्चिदा(४)गमं प्रतिपद्यते ।**
**बीजं सर्वागमापाये(५) त्रय्येवादौ व्यवस्थिता ॥१३४॥**

अनेन सर्वागमानां प्रवाहानादित्वं व्यवस्थापयति । सर्वप्रवादे-ष्वागमवाक्यानां स्मृतिवाक्यानां प्रणेतृपरिग्रहेण पौरुषेयत्वमुपगम्य-ते । वेदवाक्यान्येव त्वपौरुषेयाणि । तानि पूर्वागमेषु विच्छिन्नेषु अ-

---

(१) वाचं स्थाने निवेश्य चेति पा॰ २ ।
(२) कारणज्योतिषैकत्वमिति पा॰ २ ।
(३) प्रवर्त्तत इति पा॰ २ ।
(४) न जात्वकर्तृकं कश्चिदिति पा॰ २ ।
(५) सर्वागमोपाये इति पा॰ २ ।

न्येषु प्रणीतेषु आगमान्तरानुसंधाने बीजवदवतिष्ठन्ते । तान्येव बीजान्यासाद्य पुनः प्रणेतृभिरागमा निबध्यन्त इति प्रवाहानादित्वं सिद्धमिति नागमा अप्रमाणमिति भावः ॥ १३४ ॥

तमेवार्थं युक्त्यन्तरेण साधयति ॥

अस्तं यातेषु वादेषु कर्तृष्वन्येष्वसत्स्वपि ।
श्रुतिस्मृतिगतं धर्मं लोको न व्यतिवर्तते ॥ १३५ ॥

इह प्रणीतवदागमानामपि प्रवादेषु विच्छेदो नावगम्यते । तेषु प्रत्यस्तमितेषु यावदन्ये प्रणेतारो नोत्पद्यन्ते आगमान्तराणि च न प्रतायन्ते । तत्राप्यन्तरा श्रुतिविहितानि कर्माणि स्मृतिनिबन्धनांश्च भक्ष्यादिनियमाद्यातिक्रामन्ति शिष्टा इत्यर्थः ॥ १३५ ॥

ज्ञाने स्वाभाविके नार्थः (१)
शास्त्रैः कश्चन विद्यते ।
धर्मो ज्ञानस्य हेतुश्चे-
त्तस्याम्नायो (२) निबन्धनम् ॥ १३६ ॥

अनुपदेशं हि ज्ञानं कस्य चिदभ्युपगच्छतामहितप्रतिषेधार्थानां हितप्रतिपादनार्थानां चोपदेशशास्त्राणां वैयर्थ्यं प्रसज्येत । यदि तु धर्मविशेषात्कस्य चिदेवोपदेशमन्तरापि ज्ञानमुत्पद्यते कस्य चित्तता-दृशस्य शास्त्रेण तथापि तस्य धर्मस्य व्यवस्थितेन निबन्धनेन भवितव्यम् । विच्छिद्यन्ते चान्यानि निबन्धनानि । तस्मादाम्नायनिबन्धनं धर्ममासेवमानाः पृथक् प्रवादानाम्प्रणेतारस्तां तां बहुविकल्पां सिद्धिं लभन्त इत्येष्टव्यमिति भावः ॥ १३६ ॥

ननु तर्क एव ज्ञानसाधनमस्त्वत आह ॥

---

(१) स्वाभाविके कोर्थ इति पा० २ ।

(२) तस्य स्तेय इति पा० २ ।

**वेदशास्त्राविरोधी च तर्कश्चक्षुरपश्यताम् ।**
**रूपमात्राद्धि वाक्यार्थः केवलान्नावतिष्ठते ॥१३७॥**

एवं चागमाविरोधी तर्क एव प्रमाणम् । अतर्कश्चागमो विफल इति भावः ॥ १३७ ॥

तदेवोपपादयति ॥

**यतो विवक्षा पारार्थ्यं (१) व्यक्तिरर्थस्य लैङ्गिकी (२) ।**
**इति न्यायो बहुविधस्तर्केण प्रविभज्यते ॥ १३८ ॥**

'कर्तुरीप्सिततमं कर्म' 'तस्यापत्यं' 'ग्रहं सम्मार्ष्टि' 'कर्मणा यमभिप्रैति' इत्यादौ लिङ्गसङ्ख्याकालानामविवक्षा क्व चित् क्व चिच्च विवक्षेति लक्षणव्यवस्था तर्काधीना। पारार्थ्यं यथा 'नक्षत्रं दृष्ट्वा वाचं विसृजेदि'त्यादौ कालोपलक्षणार्थं नक्षत्रग्रहणम् । अतः सत्यपि दिवा नक्षत्रदर्शने न सा विसृज्यते । यथा वा काकेभ्यो दधि रक्ष्यतामित्यादौ उपघातप्रतिषेधस्य चिकीर्षितत्वात्काकेष्वसत्स्वपि श्वभ्यो रक्ष्यते । यथा वा पात्राणि सम्मृज्यन्तामिति भुजिक्रियाङ्गोपसंहारपरत्वात्पात्राभावेप्यङ्गान्तराण्युपसंक्रियन्ते । लैङ्गिकी खल्वपि व्यक्तिः । अक्ताः शर्करा उपदधातीति सर्वाञ्जनद्रव्यप्रसङ्गे तेजो वै घृतमिति लिङ्गाद्विशेषप्रतिपत्तिरिति। एवञ्च तर्काधीना शास्त्रव्यवस्थेत्यर्थः ॥ १३८ ॥

**शब्दानामेव सा शक्तिस्तर्को यः (३) पुरुषाश्रयः ।**
**स शब्दानुगतो न्यायो ऽनागमेष्वनिबन्धनः ॥१३९॥**

शब्दसामर्थ्यमेवानुगच्छन्तो वक्तारो ऽविवक्षादौ वर्तन्ते । नियता-

---

(१) वागर्थेति पा० २ ।

(२) लौकिकीति पा० २ ।

(३) तत्कार्य इति पा० २ ।

नु शब्दशक्तिमर्थप्रकरणलिङ्गवाक्यादिभिरनुगच्छन्ति । शब्दाश्रित-मेव सामर्थ्यं पुरुषाश्रयो ऽयं तर्क इति मन्यन्ते । शब्दशक्तिरूपापरि-गृहीतस्तु साधर्म्यवैधर्म्यमात्रानुसारी सर्वागमोपघातहेतुत्वादनिब-न्धनः शुष्कतर्क इत्युच्यते । यथा । 'यदुदुम्बरवर्णानां घटीनां मण्डल-म्महत् । पीतं न गमयेत्स्वर्गं किन्तत् क्रतुगतं नयेदि'ति ॥ १३९ ॥

रूपादयो यथा दृष्टाः प्रत्यर्थं यतशक्तयः (१) ।

शब्दास्तथैव दृश्यन्ते विषापहरणादिषु ॥ १४० ॥

इहैषां रूपरसगन्धस्पर्शानां प्रत्येकं समुदितानाञ्च दृष्टादृष्टफलाः प्रत्यर्थनियतशक्तयो दृश्यन्ते । दृष्टफलास्तावत् विषौषध्ययस्कान्तप्रभृ-तीनाम् अदृष्टफलास्तीर्थोदकादीनां शब्दानाञ्च विषापहरणादि दृष्टं फलमुपलभ्यते । तथा सूक्तादीनामभ्यासादभ्युपगम्यते विशिष्ट-मदृष्टम्फलं शास्त्रज्ञानपूर्वके प्रयोगे ऽभ्युदय इत्यागमादेव प्रतिपन्नम् । उपोद्घलकमात्रं त्विदमुक्तम् ॥ १४० ॥

यथैषान्तत्र सामर्थ्यं

धर्मेऽप्येवम्प्रतीयते (२) ।

साधूनां साधुभिस्तस्मात्

वाच्यमभ्युदयार्थिभिः (३) ॥ १४१ ॥

सन्ति च दृष्टफलाः काश्चिच्छब्दशक्तय इत्यागमात्प्रतीतम् एवमा-गमादेव साधूनामाश्रीयतान्धर्मसाधनत्वम् । अत आगमादेवाभ्युद-यार्थिभिः साधव एव प्रयोक्तव्या इति सिद्धम् ॥ १४१ ॥

ननु विषापहरणादिषु सामर्थ्यवद्धर्मेऽपि कस्मान्न प्रतीयते किञ्चा-

---

(२) प्रत्यर्थयतशक्तय इति पा० २ ।

(३) प्रतीयताम् इति पा० २ ।

(४) वाच्यमभ्युदयार्थिनामिति पा० २ ।

आदेव दृष्टान्तादस्तु शब्दविपर्य्ययप्रतिपत्तिरत आह ॥

सर्वो दृष्टफलानर्थानागमात्प्रतिपद्यते।
विपरीतञ्च सर्वत्र शक्यते वक्तुमागमे (१)॥ १४२ ॥

सर्वेष्वागमेषु अदृष्टफलासु प्रतिपत्तिषु विपरीतफलप्राप्तिः शक्यते वक्तुम्। तस्मादागमम्प्रमाणीकृत्य का चियुक्तिरुच्यमाना उपोद्बलकत्वं लभतइति तात्पर्य्यम् ॥ १४२ ॥

किमेतावता प्रकृते समागतमत आह ॥

साधुत्वज्ञानविषया
सैषा व्याकरणस्मृतिः।
अविच्छेदेन शिष्टाना-
मिदं स्मृतिनिबन्धनम् (२) ॥ १४३ ॥

यथैव भक्ष्याभक्ष्यगम्यागम्यवाच्यावाच्यविषया व्यवस्थिताः स्मृतयस्तासु निबद्धं समाचारं शिष्टा न व्यतिक्रामन्ति। तथेयमपि वाच्यावाच्यविशेषविषया व्याकरणस्मृतिः। स्मृतो ह्यर्थः पारम्पर्य्योदविच्छेदेन पुनःपुनर्निबध्यतइत्यनादिरागममूला चेयमपि स्मृतिः स्मृत्यन्तरवदत्यादरणीयेति तात्पर्य्यम् ॥ १४३ ॥

व्याकरणमेव स्तौति ॥

वैखर्य्या मध्यमायाश्च
पश्यन्त्याश्चैतदद्भुतम्।
अनेकतीर्थभेदाया-
स्त्रय्या वाचः परं पदम् (३) ॥ १४४ ॥

---

(१) वक्तुमागतइति पा० २।
(२) व्याकरणं धनमिति पा० २।
(३) अनेकतीर्थभेदायास्त्रयीवाचः परम्पदमिति पा० २।

यस्याः श्रोत्रविषयत्वेन प्रतिनियतं श्रुतिरूपं सा वैखरी श्लिष्टव्यक्तवर्णसमुच्चारणप्रसिद्धसाधुभावा भ्रष्टसंस्कारा च दुन्दुभिवेणुवीणादिशब्दरूपा चेत्यपरिमितभेदा। मध्यमा त्वन्तःसन्निवेशिनी परिगृहीतक्रमेव बुद्धिमात्रोपादाना सूक्ष्मा प्राणवृत्त्यनुगता प्रतिसंहृतक्रमा सत्यप्यभेदे समाविष्टक्रमशक्तिः। पश्यन्ती तु सा चलाचलाप्रतिबद्धसमाधाना सन्निविष्टज्ञेयाकारा प्रतिलीनाकारा निराकारा च परिच्छिन्नार्थप्रत्यवभासा संसृष्टार्थप्रत्यवभासा च प्रशान्तसर्वार्थप्रत्यवभासा चेत्यपरिमितभेदा। तत्र व्यावहारिकीषु सर्वासु वागवस्थासु व्यवस्थितसाध्वसाधुप्रविभागा पुरुषसंस्कारहेतुः परन्तु पश्यन्त्या रूपमनपभ्रंशमसङ्कीर्णं लोकव्यवहारातीतम्। तस्या एव वाचो व्याकरणेन साधुत्वज्ञानलभ्येन शब्दपूर्वेण योगेनाधिगम इत्येकेषामागमः। तदुक्तमितिहासे आश्वमेधिके पर्वणि ब्राह्मणगीतासु। 'गौरिव प्रचरत्येका रसमुत्तमशालिनी। दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता॥ एतयोरन्तरम्पश्य सूक्ष्मयोः स्यन्दमानयोः। प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति॥ अन्या त्वपरिमाणैव(१) विना प्राणेन वर्त्तते। जायते हि ततः प्राणो वाचमाप्याययन्पुनः॥ प्राणेनाप्यायिता सैव व्यवहारनिबन्धनम्(२)। सर्व्वस्योच्छ्वासमासाद्य न वाग्वदति कर्हिचित्॥ घोषिणी (३) जातनिर्घोषा अघोषा च प्रवर्तते। तयोरपि च घोषिण्या निर्घोषैव गरीयसी'ति॥ पुनश्चाह। 'स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा। वैखरी वाक् प्रयोक्तॄणाम्प्राणवृत्तिनिबन्धिनी (४)॥ केवलम्बुद्ध्युपादानक्रमरूपानु-

(१) अन्या त्वप्रेर्यमाणेवेति पा० २।

(२) प्राणेनाप्याययत्सैव व्यवहारनिबन्धिनीति पा० २।

(३) घोषिणामिति पा० २।

(४) प्राणवृत्तिनिबन्धनेति पा० २।

पातिनी। प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥ अविभागा तु पश्यन्ती सर्वतःसंहृतक्रमा। स्वरूपज्योतिरेवान्तःसूक्ष्मा वागनपायिनी॥ सैषा सङ्कीर्यमाणापि नित्यमागन्तुकैर्मलैः (१)। अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते॥ तस्यां दृष्टस्वरूपायामधिकारो निवर्तते। पुरुषे षोडशकले तामाहुरमृताङ्कलाम्' (२) इति॥ सैषा त्रयीवाक् चैतन्यग्रन्थिविवर्तवदनाख्येयपरिमाणा तुरीयेण भागेन मनुष्येषु प्रत्यवभासते। तत्रापि चास्याः किञ्चिदेव व्यावहारिकमन्यत्तु सामान्यव्यवहारातीतम्। आह खल्वपि। चत्वारि वाक्परिमिता पदानीत्यादि। तस्याश्चासङ्कीर्णं वाचो रूपं सामान्यविशेषवत्यस्मिन् लक्षणे व्याकरणाख्ये निबन्धनम्। अर्वाग्दर्शिनां तु पुरुषाणामार्येण सातिशयाः प्रतिघातिन्यः सापराधाः शक्तयः निरपराधशास्त्रमार्गो यः शब्दानां प्रतिपत्त्युपायो व्याकरणाख्यः॥ १४४॥

तद्विभागाविभागाभ्यां क्रियमाणमवस्थितम्।
स्वभावश्चैव (३) भावानां दृश्यन्ते शब्दशक्तयः॥१४५॥

विभागो नाम परप्रत्यायनाय कल्पितः प्रकृतिप्रत्ययादिभेदः। यथा धातोस्तव्यदादय इति। अविभागस्तु यत्र स्वरूपेणोच्चारणम्। यथा दाधर्ति दर्धर्तीति। तत्र कानि चिद्व्याकरणानि बहून् शब्दान् विभागेन बहुप्रत्यक्षपक्षेण प्रतिपादयन्ति कानि चित्तु विभज्यविभज्यानुमानपक्षेण बहुतरं समुदायानां प्रतिपादनं कुर्वन्ति। सैषा स्मृतिर्यथाकालं पुरुषशक्त्यपेक्षया साधुप्रयोगानुमेयैः शिष्टैस्सर्वत्रैवेयेष्वप्रतिबद्धान्तःप्रकाशैः विशिष्टकालावधि प्रविभागं यथाकालं धर्माधर्मसाधनभावेन समन्वितं शब्दस्वभावमव्यभिचारेण ये पश्यन्ति तैस्तथा

(१) नित्यमागन्तुभिर्मलैरिति पा० २।
(२) तामाहुरमृतां कलामिति पा० २।
(३) तु इति पा० २।

अवस्थाप्यते ॥ १४५ ॥

अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकाम् ।
शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिः ॥ १४६ ॥

ये केवलं शब्दप्रमाणका: सर्वमेव पुरुषदर्शनमदृष्टफलेष्वर्थेषु अतिशङ्कनीयत्वादप्रमाणमन्यन्ते ते श्रुतिस्मृत्योरविच्छेदाविशेषे तुल्येपि उभयोरप्यर्थस्य नित्यत्वेपि श्रुतिरव्यभिचरितस्वरवर्णानुपूर्व्वी अदेशकालनियमा न केन चित्कर्त्रा प्रकारान्तरेणावस्थापितपूर्वा स्मृतिस्त्वेतद्विपरीता सर्वेषु च देशेषु शास्त्रादेव केवलन्धर्म्माधर्माभिव्यक्तिः शास्त्रीयानुष्ठाने च धर्म्मः तदतिक्रमे च प्रत्यवायः येषामेव हि गोवधादीनां विषयान्तरे पापजनकत्वन्तेषामेव विषयान्तरेभ्युदयहेतुत्वं शास्त्रेणोच्यतइति न विना शास्त्रन्धर्म्माद्यवगम इति तात्पर्यम् ॥ १४६ ॥

मतान्तरमाह ॥

अविभातादिदृष्टत्तानामभिख्या स्वप्नवच्छ्रुतौ(१) ।
भावतत्त्वन्तु विज्ञाय लिङ्गेभ्यो विहिता स्मृतिः ॥ १४७ ॥

कायवाग्बुद्धिविषया
ये मलास्समवस्थिताः ।
चिकित्सालक्षणाध्यात्म-
शास्त्रैस्तेषां(२) विशुद्धयः ॥ १४८ ॥

यथा शरीरे दोषशक्तिं रत्नौषधादिषु दोषप्रतीकारसामर्थ्यञ्च दृष्ट्वा चिकित्साशास्त्रमारब्धम् । यथा च रागादीन्बुद्धेरुपप्लवान्दृष्ट्वा तदुपघातहेतुज्ञानोपायभूतान्यध्यात्मशास्त्राण्युपनिबद्धानि । तथेदमपि सा-

(१) अविभागाद्विवृत्तानामभिधा स्वप्नवच्छुभाविति पा० २ ।
(२) चिकित्सालक्षणाध्यात्मशास्त्रे तेषाम् इति पा० २ ।

ध्रुवाक्संस्कारादाच्छापनार्थमपभ्रंशानाद्योपघातकानाविष्टत्वर्थं ल-च्यमारव्धमित्यर्थः ॥ १४८ ॥

के पुनरपभ्रंशास्तत्राह ॥

**शब्दसंस्कारहीनो यो गौरिति प्रयुयुक्षिते ।**
**तमपभ्रंशमिच्छन्ति विशिष्टार्थनिवेशिनम् ॥ १४९ ॥**

शब्दप्रकृतिरपभ्रंश इति सङ्ग्रहकारोक्तेरपभ्रंशो नाम न स्वतन्त्रः कश्चन विद्यते । सर्वस्य ह्यपभ्रंशस्य साधुरेव प्रकृतिः प्रसिद्धेस्तु रूढि-मापाद्यमानाः स्वातन्त्र्यमिव केचिदपभ्रंशा लभन्ते । एवञ्च गौरिति प्रयोक्तव्ये अशक्त्या प्रमादादिभिर्वा गोण्यादयस्तत्प्रकृतयोपभ्रंशाः प्रयु-ज्यन्ते । ते च व्यवहारात्तावत्येव लब्धस्वरूपाः साधुत्वं विजहतीत्य-र्थः । अर्थान्तरे तु प्रयुज्यमानाः केचित्साधव एव विज्ञायन्ते ॥ १४९ ॥

नह्येषां रूपमात्रप्रतिबद्धमसाधुत्वमित्याह ॥

**अस्वगोण्यादयः (१) शब्दाः साधवो विषयान्तरे ।**
**निमित्तभेदात्सर्वत्र साधुत्वन्तु व्यवस्थितम् ॥ १५० ॥**

आवपने गोणीति स्ववियोगाभिधाने च अस्व इति साध्वेव । सास्नादिमति क्लेषितादिमति च निमित्तान्तराग्रहणयोरत्र विषये लब्धसंस्कारयोः साधुत्वमेव विज्ञायते । गोणीवेयं गौः गोणी बहु-क्षीरधारणविषयादावपनत्वसामान्यादभिधीयते । तथा अविद्यमानं स्वमस्यास्व इति । यदा तु निमित्तं विनैव गवादिष्विमे प्रयुज्यन्ते त-दा असाधव एव । न तेषां नियतं साधुत्वमसाधुत्वं वा व्यवस्थितम-स्ति ॥ १५० ॥

अथ तेषामवबोधजनने उपायमाह ॥

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।**

---

(१) यथा गोण्यादय इति पा० २ ।

तादात्म्यमुपगम्येव शब्दार्थस्य प्रकाशकाः ॥ १५१ ॥

अश्विनिकोचादिवदपभ्रंशा अपि साधुप्रनाडिकयार्थम्प्रत्याययन्ति ॥ १५१ ॥

ननु साक्षादेव वाचकाः सन्तु गाव्यादयश्च गोशब्दस्य पर्यायाश्चन्तु अत आह ।

न शिष्टैरनुगम्यन्ते पर्य्यायाइव साधवः ।

न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः ॥१५२॥

एते यदि पर्य्यायाः स्युस्तदा स्मृतिशास्त्रेण लक्षणेनानुगम्येरन् शिष्टैश्च गोशब्दतुल्यतया प्रयुज्येरन् नैवं दृश्यते तस्मान्न पर्य्यायाः । अत एव साक्षादवाचका इत्यर्थः ॥ १५२ ॥

साध्वनुमानेनैव वाचकत्वं सदृष्टान्तमुपपादयति ।

अम्बाम्बेति यदा बालः शिक्ष्यमाणोपभाषते ।

अव्यक्तन्तद्विदान्तेन व्यक्ते (१) भवति निश्चयः ॥१५३॥

बालो हि करणशक्तिवैकल्यादव्यक्तां श्रुतिम्प्रयुङ्क्ते प्रतिपत्तारश्च तत्प्रकृतिं व्यक्तं शब्दमवधारयन्ति तमेव चार्थबोधकम्मन्यन्ते न बालप्रयुक्तमव्यक्तम् ॥ १५३ ॥

एवं साधौ प्रयोक्तव्ये यो ऽपशब्दः (२) प्रयुज्यते ।

तेन साधुव्यवहितः कश्चिदर्थोऽभिधीयते ॥ १५४ ॥

सङ्कीर्णायां वाचि ये ऽपशब्दाः प्रयुज्यन्ते तैः शिष्टा लक्षणविदः साधून्प्रतिपद्यन्ते । तैश्च साधुभिरर्थमभिधीयमानम्पश्यन्ति अनुमानन्तु धूमइवाग्नेः ॥ १५४ ॥

केषाञ्चित्त्वसाधुरेव साक्षाद्वाचक इत्याह ।

---

(१) व्यक्तैरिति पा॰ २ ।

(२) अपभ्रंश इति पा॰ २ ।

पारम्पर्यादपभ्रंशा निर्गुणेष्वभिधातृषु (१) ।
प्रसिद्धिमागता ये तु तेषां साधुरवाचकः ॥ १५५ ॥

दृष्टाभ्यासात् स्त्रीशूद्रबालादिभिरपभ्रंशाः प्रयुज्यन्ते प्रमादवद्भिश्च शक्तृभिस्तेषां च तैरेव प्रसिद्धतरो व्यवहारः । अत एव प्रयुक्ते साधौ संशये यः तस्यापभ्रंशस्तेन सम्प्रति निर्णयः क्रियते । ते तमेवासाधुप्रत्यक्षपक्षेण वाचकम्मन्यन्ते । साधुं त्वसाध्वनुमानेनेत्यर्थः ॥ १५५ ॥

दैवी वाग् व्यवकीर्णेयमशक्तैरभिधातृभिः ।
अनित्यदर्शिनां त्वस्मिन्वादे (२) बुद्धिविपर्ययः ॥ १५६ ॥

श्रूयते हि पुराकल्पे सशरीरज्योतिषाम्मनुष्याणां यथैवानृतादिभिरसङ्कीर्णा वागासीत् एवं सर्वैरपभ्रंशै,रिदानीन्तु तत्सङ्कीर्णा वक्तृशक्तेः कालवशात्ति प्रकृतिरिव प्रयोक्तॄणां तथा रूढिमुपागता । अनित्यवादी तु स यः साधूनां धर्म्महेतुत्वं न प्रतिपद्यते । स हि सर्वशब्दानां समूहं स्वाभाविकमाचष्टे ॥ १५६ ॥

तन्मतेपि ।

उभयेषामविच्छेदे
ऽप्यन्यशब्दविवक्षया (३) ।
योऽन्यः प्रयुज्यते शब्दो
न सो ऽर्थस्याभिधायकः ॥ १५७ ॥

येषामपि दैवी वाङ्न कदा चिदप्यसङ्कीर्णा तेषामपि गम्यागम्यादिव्यवस्थावदियं साध्वसाधुव्यवस्था नित्यमविच्छेदेन स्मर्यते शिष्टैः । तथान्यशब्दविवक्षया बालप्रलापवदन्यः साधुरसाधुरर्थबोधाय प्रयु-

(१) द्विगुणेष्वभिधातृष्विति पा० २ ।
(२) यस्मिन्वादे इति पा० २ ।
(३) अश्वशब्दाविवक्षयेति पा० २ ।

च्यमानो नार्थस्य वाचक इत्यर्थः ॥ १५७ ॥

इति श्रीमहावैयाकरणहरिवृषभविरचितवाक्यपदीयप्रकाशे आगमसमुच्चयो नाम ब्रह्मकाण्डं प्रथमं समाप्तम् ॥



श्रीः

# अथ सटीके वाक्यपदीये

## द्वितीयकाण्डारम्भः ।

अविघ्नमस्तु ।

एवं शब्दस्य प्रयोजनसहितं स्वरूपादिकं लेशतो निर्णीतं तस्य च साधारण्येन वाचकत्वं व्यवस्थापितम् इदानीं मतभेदेन केषां चित्पदं वाचकमन्येषां वाक्यमिति वाचकात्मनो वाक्यस्वरूपस्य तावद्वितत्य स्वरूपप्रतिपादनाय द्वितीयकाण्डप्रारम्भः । तत्राचार्यमतभेदाश्रयेण तावद्वाक्योद्देशार्थमाह ॥

आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्त्तिनी ।
एकोनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ॥ १ ॥
पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमित्यपि ।
वाक्यं प्रति मतिर्भिन्ना बहुधा न्यायवादिनाम् ॥२॥

एते ऽष्टौ वाक्यविकल्पा आचार्याणाम् । तत्राखण्डपक्षे जातिः सङ्घातवर्त्तिन्येकोनवयवः शब्दो बुद्ध्यनुसंहृतिरिति त्रीणि लक्षणानि । खण्डपक्षे तु आख्यातशब्दः क्रमः सङ्घातः पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमिति पञ्च लक्षणानि । अत्रापि सङ्घातः क्रम इत्यभिहितान्वयपक्षे लक्षणद्वयम् । आख्यातशब्दः पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमित्यन्विताभिधानपक्षे लक्षणत्रयमिति विभागः । इह च पदप्रकृतिः संहितेति प्रातिशाख्यम् । तत्र पदानां प्रकृतिः कारणं पदप्रकृतिः संहितेत्यखण्डपक्षः । पदानि प्रकृतिर्यस्याः सेति खण्डपक्षः प्रादुर्भव-

ति। तत्राख्यातशब्दो वाक्यमिति परस्ताच्छब्दार्थनिर्णयइति प्रकरणे दर्शयिष्यति। यथा "आख्यातशब्दो नियतं साधनं यत्र गम्यते। तदप्येकं समाप्तार्थं वाक्यमित्यभिधीयत" इति । केवलेन पदेनार्थ इत्यादिना श्लोकाष्टकेन सङ्घातो वाक्यमिति दर्शयिष्यति। यथैक एव सर्वार्थ इत्यादिना देवदत्तादयो वाक्ये तथैव स्युरनर्थका इत्यन्तेन ग्रन्थेन। तथा अव्यक्तः क्रमवानित्यादिना व्यावृत्तभेदो येनार्थ इत्यन्तेन चाखण्ड एव स्फोटलक्षणः शब्दो वाक्यमिति दर्शितम् । उक्तञ्च येनोच्चरितेन सास्नालाङ्गूलखुरककुदविषाण्यर्थरूपं प्रतिपाद्यते स शब्दः। तथा स्फोटः शब्दो ध्वनिः शब्दगुण इति। स्फोटश्च द्विविधो बाह्य आभ्यन्तरश्चेति । बाह्योपि जातिव्यक्तिभेदेन द्विविधः। तत्र जातिलक्षणस्य जातिः सङ्घातवर्त्तिनीति। व्यक्तिलक्षणस्यैकोनवयवः शब्द इति। आभ्यन्तरस्य तु बुद्ध्यनुसंहृतिरित्यनेनोद्देशः। तत्र जातिव्यक्तिलक्षणस्य बाह्यस्य यथैक एवेत्यादिना पुनरव्यक्तः क्रमवानित्यादिना ग्रन्थेन स्वरूपमुक्तम्। यदन्तःशब्दतत्त्वमित्यादिना श्लोकचतुष्टयेन आन्तरस्य स्वरूपमुक्तं, संप्रत्ययेत्यादिश्लोकचतुष्टयेन क्रमो वाक्यमिति दर्शयिष्यति, नियतं साधने साध्यमित्यनेन च श्लोकद्वयेन पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमिति लक्षणद्वयं व्याख्यास्यति। अन्यदपि वार्त्तिककारीयं पारिभाषिकं शास्त्रे वाक्यलक्षणमस्ति। आख्यातं साव्ययकारकविशेषणं वाक्यमेकतिङिति च । जरन्मीमांसकोक्तं लौकिकमप्यस्ति 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि'ति। अनयोः सङ्घातपक्षे ऽन्तर्भावः। एतेपि प्रथममेव निघातादिव्यवस्थार्थमित्यादिना विचारयिष्यन्ते। इत्यमष्टावेव वाक्यविकल्पा मतभेदेन सम्पद्यन्तइति बोद्धव्यम् । यत्पुनरनेन द्वत्तावुक्तम् उदाहरणमात्रमेतत् अन्यान्यपि वाक्यलक्षणानि दर्शयिष्यतीति । तद्वार्त्तिककारीयवाक्यलक्षणादेरन्तर्भावमनपेक्ष्येति मन्तव्यम् । उद्दिष्टानां च

वाक्यलक्षणानां यथान्यासमर्थे कारिकाभिरेव दर्शितक्रमेण स्वरूप-
मुन्मीलयिष्यतीति नार्थ इह तत्प्रदर्शनेन, वाक्यलक्षणप्रसङ्गेन च त-
था वाक्यार्थस्य सम्बन्धस्य च मतभेदं दर्शयिष्यति। तत्राखण्डपक्षे चि-
ष्वपि लक्षणेषु प्रतिभा वाक्यार्थः। यथा दर्शयिष्यति "विच्छेदग्रहणे-
ऽर्थानां प्रतिभान्यैव जायते। वाक्यार्थ इति तामाहु"रिति। अवशि-
ष्टेषु पञ्चसु लक्षणेषु मध्यादाख्यातशब्दो वाक्यमित्यस्मिन्पक्षे क्रिया
वाक्यार्थः। यथा वक्ष्यति, क्रिया क्रियान्तराद्भिन्नेत्यादि। यथा च "प्र-
तिभा यत्प्रभूतार्था यामनुष्ठानमाश्रितम्। फलं प्रसूयेत यतः सा क्रि-
या वाक्यगोचर" इति। सङ्घातपक्षे क्रमपक्षे च संसर्गो वाक्यार्थः।
स च "सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते। वाक्यार्थमेतं सम्प्रा-
हुरनेकपदसंश्रय"मित्यादिना दर्शयिष्यते। तथा सङ्घातपक्षएव सर्वभे-
दानुगुण्यमित्यादिना प्रकारान्तरेणाभिहितान्वयपक्षे प्रतिपाद्यमाने
"कार्यानुमेयः सम्बन्धो रूपं तस्य न विद्यते" इत्यनेन श्लोकेन विशेष-
विश्रान्तः पदानामेवार्थो वाक्यार्थ इति लभ्यते। पदमाद्यं पृथक्सर्व-
पदं साकाङ्क्षमित्यस्मिन् तु (१) पक्षद्वये संसृष्ट एव प्रथमतरं प्रक्रम्यते
वाक्यार्थः। यथा निरूपयिष्यति "तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं
समाप्यते"। तथा "पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः। संसर्ग
एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुष्वि" (२)ति। "अभिधेयः (३) पदस्यार्थो
वाक्यस्यार्थः प्रयोजनम्" इत्यनेन प्रयोजनं वाक्यार्थत्वेन प्रदर्शितम्।
तच्चैषामिष्यते सर्वलक्षणसाधारणमिति न प्रयोजनवाक्यार्थो वाक्य-
लक्षणेषु पृथग्विभज्यते। तदेवं प्रतिभा संसर्गः संसर्गवशान्नि-
राकाङ्क्षो विशेषावस्थितः पदार्थ एव संसृष्ट एवार्थः क्रिया

(१) तु इति पुस्तकान्तरे नास्ति।
(२) तथाद्येष्वपि वस्तुष्विति पा० २।
(३) अविधेय इति पा० २।

प्रयोजनं चेति षड्वाक्यार्था इहोपदर्शिताः । संसर्गे संसर्गव-शाद्विशेषावस्थिते पदार्थे च वाक्यार्थेऽभिहितान्वयः । संसृष्टे क्रियायां चान्विताभिधानम् । प्रतिभायां त्वेकस्यैव प्रतिपत्तिरिति न तत्र काचिदभिहितान्वयान्विताभिधानचर्चा । प्रयोजने त्वभिहितान्वय एव विधिनियोगभावनासंज्ञास्तु वाक्यार्था न निरूपिताः । यस्माद्भावना-क्रिययोः पर्यायता प्रायशो लक्ष्यते । केवलं प्रकृत्यर्थप्रत्ययार्थतायामत्र वैयाकरणमीमांसकयोर्विवादः । किञ्च भावना सकर्मिकैवाकर्मिकापि क्रियेति सत्यपि भेदे साध्यत्वाविशेषादभेद एवानयोः । यथा धात्वर्थभूता क्रिया साध्यरूपैव तथा भावनापीति कथमवान्तरभेदा-द्भेदोऽनयोर्भवेत् । विधिनियोगौ तु लिङ्लोट्कृत्यान्तेष्वेव वाक्येष्वर्थावि-त्यसर्वविषयत्वादनादृताविहेति न तत्प्रदर्शनं कृतम् । तत्तदनादिवा-क्यार्थविकल्पाहितवासनाप्रबोधजन्मा क्रमवद्भिरिवाक्रमैर्बहीरूपतया ऽध्यस्तैः पदार्थैश्चित्रीकृत इव विकल्पविशेषोल्लिख्यमान आकारो बहीरूपतयाऽध्यस्तो निर्विभाग एव ज्ञाक्यानां वाक्यार्थ इति प्रायशः प्रतिभासोदर एवासौ मन्तव्यः । वाक्यमपि तत्तदनादिवाक्यविकल्पा-हितवासनाप्रबोधजन्म क्रमवद्भिरिवाक्रमैः पदैश्चित्रीकृत इव बहीरू-पतया ऽध्यस्यमानो विशिष्टविकल्पोल्लिख्यमान आकारविशेष एव बहीरूपतयाध्यस्त इति प्रायशो बुद्ध्यनुसंहृतिरित्यस्य सोदरमेवेति न तन्मतानुसारेण वाक्यवाक्यार्थयोरिहासङ्ग्रहो वेदितव्यः । नैयायिकादीनां तु पूर्वपूर्ववर्णस्मृतिसचिवोऽन्त्यो वर्णो नश्यदवस्थानुभवविषयीक्रियमाणः पदं यथा तथैव पूर्वपूर्वपदस्मृतिसचिवमन्त्यमेव पदं नश्यदवस्थानुभवविषयीक्रियमाणं वाक्यमिति प्रायशः संसर्गपक्षएवान्तर्भवति । तथा पूर्वपूर्वपदार्थस्मरणसचिवेनान्त्येन पदेनोपजन्यमाना प्रतीतिर्वाक्यार्थ इति प्रायशः संसर्गपक्षएवास्यान्तर्भाव इति न तदसङ्ग्रहेणाव्याप्तिरत्र वक्तव्या । अथावानवयवएव एकस्मिन्

स्फोटात्मके वाक्ये प्रतिभालक्षणे च वाक्यार्थे वाक्यवाक्यार्थयोरध्यासरूपः सम्बन्धः । यद्वक्ष्यति वाक्यहृत्तस्य वाक्यार्थे हृत्तिरित्यादि । अवशिष्टेषु पक्षेषु वाच्यवाचकभावलक्षणो योग्यताख्य एव शब्दार्थयोः सम्बन्धो मीमांसकदृष्ट्या । शाक्यदर्शनानुसारेण तु विज्ञानवादनयेन बौद्धे शब्दार्थे सर्वत्र कार्यकारणभाव एव । बाह्यार्थवादे तु तत्र संकेतलक्षणोऽसौ बोद्धव्यः । नैयायिकाद्यनुसारेण च संकेतलक्षण एवासावित्येवमत्र वाक्यवाक्यार्थसम्बन्धानां संक्षेपतः स्वरूपं बोद्धव्यं सम्बन्धेषु मध्यादध्याध्यासमेव दर्शयिष्यति पदकाण्डे तु सर्वानभिधास्यति । तत्र वैयाकरणस्याखण्ड एवैकोनवयवः शब्दः स्फोटलक्षणो वाक्यं प्रतिभैव वाक्यार्थोऽध्यासश्च सम्बन्ध इति पदवादिपक्षदूषणपरः परं टीकाकारो व्यवस्थापयतीत्यस्य काण्डस्य संक्षेपः ॥ २ ॥

अथ वार्त्तिककारमीमांसकोक्तयोर्वाक्यलक्षणयोः किं समावेश उत भिन्नविषयतेति विचारार्थमाह ॥

**निघातादिव्यवस्थार्थं शास्त्रे यत्परिभाषितम् ।**
**साकाङ्क्षावयवं तेन (१) न सर्वं तुल्यलक्षणम् ॥ ३ ॥**

इह पदविधिः सामर्थ्ये सति परिभाषितः । तत्र सत्यपि पदानां सामर्थ्ये निघातादयः क्वचिन्नेष्यन्ते । यथा । अयं दण्डो हरानेन । ओदनं पच मम भविष्यति । ओदनं पच तव भविष्यतीति । अत्रानेनेति सर्वनाम्ना दण्डस्य परामर्शाद्धरतिना सह तस्य सामर्थ्यम् । तथा युष्मदर्थस्यौदनेन सम्बन्धात्पचत्यर्थस्य तेन सह सामर्थ्यम् । एवं च सति सामर्थ्ये तिङ्ङतिङ इति निघातः प्राप्नोति । तेमयावेकवचनस्येति चादेशौ । नचेष्यन्ते । वाक्यभेदात् । सामर्थ्याभावेपीष्यन्ते । यथा, मयास्तिष्ठति कूले शालीनां ते ओदनं दास्यामीति । अत्र न-

(१) साक्षाद्बहुविधानेनेति पा० २ ।

आस्तिष्ठतीत्यस्य च सम्बन्धानुपपत्तेः सामर्थ्यं नास्ति । दृश्यते च नि-
घातः । तथा शालीनां युष्मदश्च सामर्थ्याभावः । दृश्यते च तेमयावेक-
वचनस्येति युष्मदादेश इत्यालोच्य वार्त्तिककृता निघातादिव्यवस्था-
र्थमारब्धं 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या' इति । एवं
चायं दण्ड इत्यत्र सत्यपि सामर्थ्ये नास्ति निघातस्य प्रसङ्गो ऽवध्यव-
धिमतोर्भिन्नवाक्यतयावस्थानात् । अस्तीत्यध्याहारेण अयं दण्ड इ-
त्येकं वाक्यम् । हरानेनेति च द्वितीयं वाक्यम् । नद्यास्तिष्ठतीत्यादौ
त्ववध्यवधिमतोः पदयोः सामर्थ्याभावेऽप्येकवाक्यव्यवस्थितौ प्रवर्त्तन्त-
एव निघातादय इति नास्त्येषामव्यवस्था । समानवाक्ये निघाताद-
शो वक्तव्या इत्युक्तम् । तत्र वाक्ये विज्ञाते समानवाक्यत्वं ज्ञायत इति
प्रसङ्गात्तत्र वार्त्तिककारेणादावेव वाक्यलक्षणमुक्तम् 'आख्यातं सा-
व्ययकारकविशेषणं वाक्यमेकतिङिति चे'ति । एवं च मीमांसको-
क्तेनास्य सर्वत्र समावेशोऽस्ति न वेति विचार्यते । शास्त्रे वाक्यकारेण
निघातादिव्यवस्थार्थं यद्वाक्यलक्षणं परिभाषितं तेन मीमांसकोक्तं
वाक्यलक्षणं सकलं न तुल्यलक्षणम् । साकाङ्क्षावयवमित्यनेन मीमां-
सकोक्तं वाक्यलक्षणं सूचितम् । तत्र क्व चिद्देते समाविशतः । यथा
नद्यास्तिष्ठति कूले शालीनां तओदनं दास्यामीति । अयं दण्डो ह-
रानेन ओदनं पच तव भविष्यतीत्यादावसमावेशः । मीमांसक-
वाक्यलक्षणसमाश्रयणेनात्र प्राप्नुवन्ति निघातादय एकप्रयोजनत्वा-
त् । न चेष्यन्ते । तस्माद्वार्त्तिककारीयमेव वाक्यलक्षणं ज्यायः ॥ ३ ॥

अथात्र प्रसङ्गान्मीमांसकवाक्यलक्षणमर्थद्वारेण प्रदर्शयितुमाह ॥

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।**
**कर्मप्रधानं गुणवदेकार्थं वाक्यमिष्यते (१) ॥ ४ ॥**

भेदे विभागे विशेषजिज्ञासायां यत्साकाङ्क्षावयवम् । अविभागे तु

(१) वाक्यमुच्यतइति पा० २ ।

पराणामाकाङ्क्षाः मन्दाः पदानि यस्मिन् तत्पराणामाकाङ्क्षमन्दकम् । कर्मप्रधानं क्रियापदप्रधानमित्यर्थः । तस्यैव प्रधानाभिधेयप्रयुक्तत्वादित्यभिप्रायः । गुणवद्विशेषणपदयुक्तम् । एकार्थमेकप्रयोजनम् ॥ ४ ॥

इदानीं वार्त्तिककारीयस्य वाक्यलक्षणस्याव्याप्तिमाशङ्काह ॥

**सम्बोधनपदं यच्च तत् क्रियाया विशेषकम् ।**
**व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ ५ ॥**

व्रजानि देवदत्तेत्यत्र देवदत्तेत्येतत्पदं नाव्ययं न च कारकं नापि तद्विशेषणमिति वाक्यलक्षणेनासंगृहीतत्वादाष्टमिक आमन्त्रितस्य चेति निघातो न प्राप्नोतीति चोद्यम् । आख्यातं साव्ययं सकारकं सविशेषणमिति सामान्येनाभिधानात्तत्क्रियाविशेषणस्याप्याख्यातस्य वाक्यतेत्यदोषः । तथाहि । अत्र संबोध्यमानदेवदत्तविषया व्रजतिक्रिया असंबोध्यमानदेवदत्तविषयायाः संबोध्यमानयज्ञदत्तविषयाया वा पृथगेवेति विशिष्टैवात्र व्रजतिक्रिया । क्रियायाश्च विशेषणं कदाचित्सामानाधिकरण्येन भवति । यथा सुष्ठु करोति शोभनं करोतीति । अत्र करोत्यर्थस्य सुष्ठ्वित्यादिविशेषणविशिष्टस्यैव प्रतीतेः सुष्ठ्वित्यादीनां करोत्यादिक्रियया सामानाधिकरण्यम् । एवं चासत्त्वभूतायाः क्रियाया विशेषणमित्यसत्त्वप्रधानत्वाल्लिङ्गसर्वनाम्ना नपुंसकेन योगः क्रियायाश्च निर्वर्त्यत्वात्कर्मत्वमिति न्यायसिद्धमेव कर्मत्वं नपुंसकता चेति 'क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गता चे'ति नारम्भणीयं वचनम् । वैयधिकरण्येनापि विशेषणं भवति यथा व्रजानि देवदत्तेति । अत्र हि देवदत्त व्रजानीति देवदत्तस्य व्रजनक्रियायाश्च सामानाधिकरण्यं नास्ति । केवलमामन्त्र्य देवदत्तं व्रजत्यसाविति देवदत्तामन्त्रणविशेषिता केवला या विलक्षणा व्रजनक्रियेत्याख्यातं सविशेषणमेवेति वाक्यलक्षणसद्भावात्प्रवर्त्तते एव निघा-

तः । देवदत्त ब्रजासीत्येवमुदाहरणं न प्रदर्शितम् । आमन्त्रितं पूर्वमविद्यमानवदिति न निघातः स्यादिति ॥ ५ ॥

पुनरप्यव्याप्तिं वार्त्तिककारलक्षणस्याशङ्क्य परिहर्त्तुमाह ॥

यथानेकमपि क्त्वान्तं तिङन्तस्य विशेषकम् ।
तथा तिङन्तं तत्राङ्गस्तिङन्तस्य(१) विशेषकम् ॥ ६ ॥

इह पूर्वं स्नाति पचति ततो व्रजति तत इत्यत्र तत इत्येतस्मादुत्तरस्य व्रजतीत्यस्य निघातो न प्राप्नोति वाक्यभेदात् । इष्यते च । अत्र तिङन्तादुत्तरस्य तु तिङन्तस्यातिङिति प्रतिषेधान्निघातनिवृत्तिः सिद्धेति नात्र स्नातीत्यस्मादुत्तरस्य पचतिशब्दस्य निघातः प्राप्नोतीति चोद्यमुद्भावनीयम् । इष्टस्य निघातस्याप्राप्तिरेवात्रोद्भावनीया । अत्रोच्यते । नास्त्यत्र वाक्यभेदः व्रजतीत्येतत्प्राधान्येनैकं क्रियापदमत्र स्थितम् अन्यानि क्रियान्तराणि तद्विशेषणान्येव । यथा स्नानभोजनपानैः क्त्वान्तैर्विशिष्यते व्रजतिक्रिया तथात्र तिङन्तैः स्नातिप्रभृतिभिः प्रधानं व्रजतिक्रियैव विशिष्यत इत्येकैवात्र सविशेषणा व्रजतिक्रिया । केवलायास्त्वस्याः पृथगेवेत्येतत्सविशेषणमेकमेव वाक्यमिति वाक्यभेदाभावान्नास्ति निघातासिद्धिदोषः । एकवाक्यत्वे च तिङन्तादुत्तरस्य तिङन्तस्यातिङिति प्रतिषेधान्निघाताभावः । यथा वक्ष्यति । 'बह्वष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता । तिङां तिङ्भ्यो निघातस्य पर्युदासस्तथार्थवान्' इति एवं चातिङ्ग्रहणे सप्रयोजने स्थिते वार्त्तिककारेण यदुक्तमतिङ्ग्रहणमनर्थकं समानवाक्याधिकारादिति तत्राभिप्रायो वाच्यः । एवं वादिनस्तस्य वाक्यभेदोऽनाभिमत इत्यभिप्राय आख्यातं साव्ययकारकविशेषणमित्यत्रैकवचनस्य विवक्षितत्वादिति । तथा च टीकाका-

(१) अत्राहुस्तिङन्तस्येति पा० २ ।

र्ः प्रदर्शयिष्यति। "एकतिङ्स्य वाक्यं तु शास्त्रे नियतलक्षणम्। तस्यातिङ्ग्रहणे नार्थो वाक्यभेदान्न विद्यत" इति। सूत्रकारस्य त्वतिङ्ग्रहणादेकमेवाखण्डं वाक्यमर्थैकत्वादाख्यातभेदेऽप्यभिप्रेतमिति गम्यते। तदभिप्रायानुसारेणैव निरूपयिष्यति। "अनेकाख्यातयोगेऽपि वाक्यं न्यायपथानुगैः। एकमेवेष्यते कैश्चिद्भिन्नरूपमिवस्थित"मिति॥ ६॥

टीकाकारस्वामुमेव पक्षं सूत्रकाराभिप्रायसमाश्रयणेन युक्तियुक्तं मन्यमानो वह्नीरूप आन्तरो वा निर्विभागः शब्दार्थमयो बोधस्वभावः शब्दः स्फोटलक्षण एव वाक्यमिति क्रमेण व्याजिहीर्षुश्चित्रज्ञानचित्ररूपदृष्टान्तप्रदर्शनं पूर्वमुपक्रमते। तत्र चित्रबुद्धिदृष्टान्तप्रदर्शनार्थमाह॥

यथैक एव सर्वार्थप्रत्ययः (१) प्रविभज्यते।
दृश्यभेदानुकारेण वाक्यार्थानुगमस्तथा॥ ७॥

चित्रज्ञानं सर्वाकारमेकमेव। प्रविभागस्त्वस्य दृश्यभेदसमाश्रयेण क्रियते। नीलपीताद्यनेकाकारमेव विज्ञानमुपजातमिति। वस्तुस्थित्या तत्र ज्ञानआकारभेदो नास्ति। तथा वाक्यवाक्यार्थयोः स्वरूपं बोद्धव्यम्। वाक्यार्थानुगमस्तथेत्यनेन हि वाक्यवाक्यार्थयोरखण्डत्वं पानकरसमयूराण्डरसचित्ररूपनरसिंहगवयचित्रज्ञानवत्समानमेवेत्युच्यते यथा वाक्यं निर्विभागं स्फोटलक्षणं वाचकं तथा वाक्यार्थोऽपि तथाविध एवेत्यनयोरेकयोगक्षेमत्वमुक्तम्॥ ७॥

एवमान्तरं दृष्टान्तमुपदर्श्य बाह्यमप्युपदर्शयितुमाह॥

चित्रस्यैकस्वरूपस्य यथा भेदनिदर्शनैः (२)।

---

(१) सर्वार्थप्रकाश इति पा० २।
(२) चित्रस्यैकस्य रूपस्य यथा भेदनिदर्शनमिति पा० २।

नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः ॥ ८ ॥

चित्रं हि रूपमवयविगतमनंशमेकमेव । तस्यैवावयवगतैर्यथा नीलादिभिः भेदेन निदर्शनं प्रदर्शनं येषां तैः पृथग्रूपैरेव समाख्यानं क्रियते ॥ ८ ॥

तथा प्रकृते किमित्याह ॥

तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः ।

शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते ॥ ९ ॥

एकस्य निर्विभागस्य वाक्यस्य सर्वतः परिपूर्णस्य वाक्यान्तरगतैः पदान्तरैरन्वाख्यानं तथैव क्रियतइति ॥ ९ ॥

न वा पदस्यार्थे प्रयोगादित्यस्मिन् दर्शने यथाखण्डमेव पदं प्रकृतिप्रत्ययादिभिः कल्पितैरेव विभज्यते । तथा वाक्येप्यसत्यभूतानामेवाबुधबोधनाय पदानां विभागो द्रष्टव्य इति प्रदर्शयितुमाह ॥

यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।

अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते ॥ १० ॥

पदे हि यथा प्रकृतिप्रत्ययविभागोऽसत्य एव बालव्युत्पादनाय क्रियते । तथा वाक्ये वाक्यार्थप्रतिपादनायापोद्धारः पदानामुपवर्ण्यतइति बोद्धव्यम् ॥ १० ॥

तत्र वाक्यादपोद्धृतानां पदानां केवलमितरपदसारूप्यमात्रं दृश्यतइति प्रतिपादयितुमाह ॥

वर्णान्तरसरूपं च वर्णभागेषु दृश्यते ।

पदान्तरसरूपाश्च पदभागा अवस्थिताः ॥ ११ ॥

यथा संध्यक्षरेषु भागा वर्णान्तरसरूपा दृश्यन्ते परमार्थतस्त्वव्यवहृतत्वान्निर्विभागा एव । एवं वाक्ये पदान्तरसरूपाः पदरूपा भागाः पदभागाः । पदे वा निरंशे ये भागाः प्रकृतिप्रत्ययरूपास्तेव-

ल्पिता इति ॥ ११ ॥

एतदेव व्यक्तीकुर्वन्नाह ॥

**भागैरनर्थकैर्युक्ता वृषभोदकयावकाः ।**

**अन्वयव्यतिरेकौ तु (१) व्यवहारनिबन्धनम् ॥ १२ ॥**

नहि वृषभे ऋषभस्योदकयावकयोर्वोदयावशब्दयोरर्थानुगमः कश्चिदस्ति । अपि तु शास्त्रे पदस्य प्रकृतिप्रत्यययोरन्वयव्यतिरेकाभ्यां विना कथमयं व्युत्पाद्येत । एवं च निरंशमेव वाक्यं वाचकमित्येव युक्तम् ॥ १२ ॥

अथ वाक्यार्थस्यापि तथैव निर्विभागत्वं प्रतिपादयितुमाह ॥

**शब्दस्य न विभागोस्ति कुतोर्थस्य भविष्यति ।**

**विभागैः प्रक्रियाभेदमविद्वान्प्रतिपद्यते ॥ १३ ॥**

शब्दस्य स्फोटलक्षणस्य विभागो नास्ति । तद्वाच्यस्य प्रतिभारूपस्यार्थस्य कुतो भविष्यति । यथा निदर्शयिष्यति । 'विच्छेदग्रहणेर्थानां प्रतिभान्यैव जायते । वाक्यार्थ इति तामाहु'रिति । तस्य पदानुरोधेन पदार्थस्यापि प्रकृतिप्रत्ययानुरोधेन भागकल्पना । मूढस्तु विभागेन प्रक्रियाभेदं प्रक्रियाभेदे चार्थभेदमसत्यमपि प्रतिपद्यतइति । किं कुर्मः ॥ १३ ॥

युक्तं चैतत् यद्वाक्ये पदार्थभेदो नास्तीति दृष्टान्तप्रदर्शनपूर्वकमाह ॥

**ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले ।**

**देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ॥ १४ ॥**

यथा ब्राह्मणकम्बलशब्दे ब्राह्मणशब्दस्य न कश्चिदर्थो विद्यते । तथैव देवदत्त गामभ्याजेत्यादौ वाक्ये देवदत्तादीनां पृथगर्थो नास्ती-

(१) नैमि पा० २ ।

त्यनर्थकान्येव पदानि । अतश्च स्थितमेतत्, पदखण्डं निराकाङ्क्षं कं पदव्यतिरिक्तं वाक्यं पदार्थव्यतिरिक्तो वाक्यार्थश्च तथैवेति ॥ १४ ॥

यत्पुनर्मीमांसकैरुच्यते । यथा पदसंघात एवाकाङ्क्षायोग्यतासन्निधानवशात्परस्परसमन्वितो वाक्यं संसर्गश्च वाक्यार्थ इति तद्दूषयितुमाह ॥

सामान्यार्थस्तिरोभूतो न विशेषेवतिष्ठते ।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम् ॥ १५ ॥

इह देवदत्त गामभ्याज शुक्लां दण्डेनेति देवदत्तादीन्येव पदानि वाक्यम् । तत्र देवदत्तपदं तावद्यदि सामान्यमात्रे प्रथमं वर्तते तत्तस्य गवादिपदकाले वाचः क्रमवर्त्तित्वात्तिरोधानादसत्त्वमेवेति कुतः पदान्तरश्रवणकाले तदर्थप्रतीतिरसत्त्वादेव च न पदान्तरसंनिधाने तस्य विशेषे ऽवस्थानम् । अभ्युपगम्यापि स्मर्यमाणपदान्तरसंनिधाने विद्यमानत्वं पदस्य न विशेषेवस्थानं युज्यतइत्याह । उपात्तस्येति । सामान्यलक्षणस्य सकलपदार्थसाधारणस्यार्थस्य पूर्वमुपात्तस्य वाच्यत्वेन परिगृहीतस्येदानीं पदान्तरसंनिधाने त्यागः कुतो युज्यते शब्दार्थसम्बन्धस्यानित्यताप्राप्तेः । न च तथा मीमांसकस्याभ्युपगम इति । तदप्यभ्युपगम्योच्यते । निवृत्त इति । स्वार्थान्निवृत्तोसौ पदान्तरसंनिधाने शब्दः क्वेदानीमवतिष्ठताम् । शब्दान्तरबोध्येर्थे तस्य वाचकभावविरहात्स्थितिः कथं युज्यते ॥ १५ ॥

अथोच्यते अर्थप्रतिपत्तिर्दृष्टा देवदत्तेत्यादिकात्समुदायात् सा कथमपह्नूयते तत्राह ॥

अशब्दो यदि वाक्यार्थः पदार्थोपि तथा भवेत् ।
एवं च सति सम्बन्धः शब्दस्यार्थे न हीयते ॥ १६ ॥

उक्तनीत्या शब्दा न युज्यन्ते वाचकाः । तदभावाच्चाशब्दो वाक्या-

र्थो यत्राभ्युपगम्यते । तदयमपरस्ते दोषः । पदार्थोऽपि पदप्रतिपाद्यो न कश्चिदनेकवर्णवर्त्तित्वाद्दाय उच्चरितप्रध्वंसित्वाच्च वर्णानामिति पदमर्थिकं नास्ति तदभावात्कः पदार्थः स्यात् । इत्थमशब्दो ऽवाचको वाक्यार्थ इति वाच्यवाचकभावलक्षणः सम्बन्धः शब्दार्थयोस्त्वत्कः स्यान्मीमांसकेनेत्याह । एवं चेति ॥ १६ ॥

एवं तावदभिहितान्वयवादी निरस्तः इदानीमन्विताभिधानसमाश्रयणेन पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमित्युद्दिष्टे वाक्यलक्षणे प्रदर्शयितुकाम आह ॥

विशेषशब्दाः केषां चित्सामान्यप्रतिरूपकाः ।
शब्दान्तराभिसम्बन्धाद्यज्यन्ते प्रतिपत्तृषु ॥ १७ ॥

इह देवदत्त गामभ्याजेत्यत्र देवदत्तपदं गां बधानेत्यस्माद्विशिष्टमेव वक्ता समुदीरितं भ्रमात् तु सकलसाधारणं प्रतिभाति । उत्तरकालं गवादिपदसम्बन्धाद्विशिष्टा प्रतिपत्तिरभिव्यज्यतइति तदेव वाक्यम् । सकलविशेषणखचितश्च प्रथमतरमेवोपक्रान्तः संसृष्ट एवार्थो वाक्यार्थ इति । यथा वक्ष्यति "पूर्वैरर्थैरनुगतो यथार्थात्मापरः परः । संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु" इति ॥ १७ ॥

एतदेव स्फुटीकर्त्तुमाह ॥

तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते ॥१७ऽऽ॥

उपक्रम एव विवक्षितार्थप्रत्यायनाय विशिष्टपदोदीरणमारभतइत्याद्य एव पदे प्रत्येकं वा सकलस्य वाक्यार्थस्य समाप्तिरवगन्तव्या ॥ १७ऽऽ ॥

यद्येकस्मादेव पदात्सकलवाक्यार्थप्रतीतिः तर्हि इतरपदवैयर्थ्यमित्याशङ्क्याह ॥

व्यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु ॥ १८ ॥

प्रतिपत्तृषु वाक्यार्थस्य सिद्धिरवगतिर्व्यक्तोपव्यञ्जना । व्यक्ता उ-दीरिता उपव्यञ्जना अभिव्यञ्जकाः पदविशेषा यस्याः सा तथो-क्ता । अभिव्यक्ताभिव्यञ्जका वाक्यार्थावगतिरिति पदान्तराणां वा-क्ये नास्त्येव वैयर्थ्यमित्यन्विताभिधानप्रदर्शनम् । दूषणमस्यापि तमत-माभिधास्यति । यथा, नियमार्था श्रुतिर्भवेदित्यादि । तथाहि । य-द्येकेन पदेन सकलवाक्यार्थस्याशेषविशेषखचितस्यावगतिस्तदोत्तरे-षां पदानां नियमायानुवादाय वोच्चारणं स्यात्, न चैतद्युक्तमिति वक्ष्यामः । एकस्मादेव पदात्समस्तविशेषखचितस्य वाक्यार्थस्य प्रती-तिरुत्तरेषामानर्थक्यं स्यादेव । न च तस्मादेव वाक्यार्थप्रतीतिर्दृश्यते । व्यक्तोपव्यञ्जनेत्यसमाधानमेव । यतः किमेकस्माद्वाक्यार्थावसायोन्ये-षामुपव्यञ्जकत्वम् । अथ समस्तेभ्य एव तेभ्यः सर्वथोत्तराणि पदानि वाक्यार्थप्रतीतय उपादीयन्तएवेत्यन्विताभिधानमसमञ्जसमेव । ए-कस्य वा परपदोच्चारणकाले तिरोधानादभिहितान्वयस्याप्यसम्भव इत्यर्थभागे दूषणं शब्दभागसमाश्रयणेन द्वयोरपि पक्षयोर्दूषणं पदानि वाक्ये तान्येवेत्यादि श्लोकद्वयेनाभिधास्यति ॥ १८ ॥

सम्प्रति प्रतिभाभेदव्याचिख्यासया ऽखण्डपक्षमेवानुबध्नन्नाह ॥

**अव्यक्तः क्रमवान् शब्द उपांश्वयमधीयते (१) ।**
**अक्रमस्तु वितत्येव बुद्धिर्यत्रावतिष्ठते ॥ १९ ॥**

इह निरंश एवाभिन्नो व्यक्तिस्फोटो जातिस्फोटो वा बहीरूप आन्तरः शब्दार्थमयो वा बुद्ध्यनुसंहारो वाक्यमिति स एव वाचक उपपन्नः । यस्तु भेदप्रतिभासः सो ऽसावुपाधिकृत एवेत्यर्थः । तथो-पांशुपरमोपांशुव्यक्तो व्यक्ततरश्च विलम्बितो विलम्बिततरश्च द्रुतो द्रुततरश्चेत्यादिकाः प्रतिभासा अभिव्यञ्जकध्वनिकृता न पुनः स-

---

(१) उपांशु समधीयतइति पा० ॥

त्या इति बोद्धव्यम् । तथायः शब्दो ऽत्र उपांशु त्वाधीयते । सो ऽभिव्यञ्जकध्वनिकृतात्क्रमात्क्रमवान्नानाविधावस्थायुक्तः प्रतीयते । परमार्थतस्त्वसावक्रम एव स्फोटात्मा प्रतिभास उपाधिवशात्तु तत्र बुद्धिर्विततेवानुगम्यत इति बोद्धव्यम् । अनेनैकोनवयवः शब्द इत्युद्दिष्टस्य व्यक्तिस्फोटस्य स्वरूपमुक्तमिति बोध्यम् ॥ १९ ॥

अथ जातिः सङ्घातवर्त्तिनीत्युद्दिष्टस्य जातिस्फोटस्यापि दृष्टान्तप्रदर्शनद्वारेण स्फुटीकरणायाह ॥

**यथाक्षेपविशेषे ऽपि कर्मभेदो न गृह्यते ।**
**आवृत्तौ व्यज्यते जातिः कर्मभिर्भ्रमणादिभिः ॥२०॥**
**वर्णवाक्यपदेष्वेवं तुल्योपव्यञ्जना श्रुतिः ।**
**अत्यन्तभेदे तत्त्वस्य सरूपेव प्रतीयते ॥ २१ ॥**

इह भ्रमणलक्षणा कर्मजातिर्यथा विशिष्टप्रयत्नजनितेन क्षेपविशेषेणाभिव्यक्ता प्रत्येकपरिसमाप्तत्वात् । न च पार्श्वस्थेन सा विज्ञायते । भ्रमणानामावृत्तौ तु भ्रमणंभ्रमणं प्रति प्रतिपन्ना सा गृह्यते । एवं वर्णपदवाक्येषु श्रुतिरभिव्यञ्जको ध्वनिरत्यन्तभेदे तत्त्वस्य वर्णपदवाक्यस्फोटलक्षणस्य साभिव्यञ्जिका सरूपेव प्रतीयते । परमार्थतो भिन्ना ऽपि (१) सती । कीदृशी, तुल्योपव्यञ्जनेति । तुल्यः सदृश उपव्यञ्जनः स्थानकरणाभिघातलक्षणो यस्याः सा तथेति । तेन भिन्नप्रयत्नोदीरितध्वन्यभिव्यक्तो ऽयं जातिस्फोटो विलक्षण एवेति बोद्धव्यम् । युक्तं चैतत्, यथा निरंशस्यास्य स्फोटस्य पूर्वापरभाव उपाधिकृतो न स्वतो नित्यत्वादिति ॥ २१ ॥

वैतत्येन नित्यत्वसमर्थनार्थमाह ॥

**नित्येषु तु कुतः पूर्वं परं वा परमार्थतः ।**

---

(१) अपीति पुस्तकान्तरे नास्ति ॥

एकस्यैव तु सा शक्तिर्यद्देवमवभासते ॥ २२ ॥

नित्येषु हि परमार्थतः पूर्वापरभावो ऽसंभव्युपाधिकृतो दृश्यत-एव । ननु सदैकरूपतया किं नावभासते नहि तत्र स्वभावभेदस्य सम्भव इत्याशङ्क्योक्तमेकस्येत्यादि । एकस्वभावोपि तथाविधशक्तियुक्त एव वस्तुस्वाभाव्यात् । यद्देवं वैतत्येन पूर्वापरभावस्वरूपतया उपाधिभेदानुवर्तनेनावभासतइति ॥ २२ ॥

पुनरप्युपाधिभेदेनैव शब्दस्य भेदप्रतिभासो न स्वतो नित्यत्वादिति दृष्टान्तप्रदर्शनपूर्वकमाह ॥

चिरं चिप्रमिति ज्ञाने कालभेदाद्दते यथा ।
भिन्नकाले प्रकाशेते स धर्मो ह्रस्वदीर्घयोः ॥ २३ ॥

चिरमिति ज्ञानं चिप्रमिति च यथा ज्ञानत्वाविशेषादेककालमपि ज्ञेयसमाश्रयणेन भिन्नकालमिव प्रथते । चिरज्ञानं विततप्रतिभासमिवाभाति । चिप्रज्ञानमेतद्विपरीतम् । तद्वद्ध्रस्वदीर्घयोर्धर्मः स्वभावो ऽवगन्तव्यः । न तु ह्रस्वादिरूपता का चित्स्फोट इति नास्ति स्फोटस्य स्वतो भेदः ॥ २३ ॥

अथोच्यते न नित्यमुपाधिवशाद्भिन्नं वक्तुं युक्तं स्वभावभेदप्रसङ्गादित्याशङ्क्याह ॥

न नित्यः परमात्राभिः कालो भेदमिहार्हति ॥२३ऽऽ॥

इह कालोपि नित्य एवाभ्युपगतो नित्यमेकमित्यादिलक्षणकथनात् तस्येदानीं क्षणलवनिमेषेत्यादिव्यवहारः कथमुपपद्यते । अथ परमात्राभिस्तस्य भेद उपचर्यते । यथा परमाणोः स्वावरुद्धनभोदेशत्यागोपलक्षितः कालः क्षणः क्षणद्वयं च लव इत्यादि । तथा निरंशे वाक्यशोपाधिकभेदपरिकल्पनायां कः प्रद्वेषः ॥ २३ऽऽ ॥

अथ ब्रूषे न वयं नित्यमेकमित्यादिलक्षणलक्षितं कालं व्यतिरिक्तं

जानीमः पूर्वापरीभूताः पदार्थमात्रा एव स्वभावभिन्नाः कालस्त-त्समाश्रयणेन चायं क्रमयौगपद्यव्यवहारः न पुनस्तद्व्यतिरिक्तनित्य-स्वभावकालकृत इति, तत्राप्याह ॥

**व्यावर्त्तिनीनां मात्राणामभावे कीदृशः क्रमः ॥ २४ ॥**

ताः पूर्वापरीभूताः पदार्थमात्रा उदयव्यययोगिन्य एवेति विप्र-राकृणास्तासां कीदृशः क्रमः कथं च तत्समाश्रयणेन कालव्यवहार इति यत्किञ्चिदेतत् ॥ २४ ॥

अथ तथाविधपदार्थसमाश्रयणेन बुद्धिरुपजायमाना कालव्यव-हारं निर्वर्तयिष्यतीत्याशङ्क्याह ॥

**ताभ्यो या जायते बुद्धि-**
**रेका सा भागवर्तिनी (१) ॥ २४ऽऽ ॥**

ताभ्यः पदार्थमात्राभ्यो या जायते बुद्धिः सापि न शक्नोति का-लव्यवहारं निर्वर्त्तयितुं यत एकासौ बुद्धिर्निर्विभागेति कथं पूर्वाप-रव्यवहारं निर्वर्तयेत् ॥ २४ऽऽ ॥

तत्राह ॥

**सा हि स्वशक्त्या भिन्नेव**
**क्रमप्रत्यवमर्शिनी ॥ २५ ॥**
**क्रमोल्लेखानुषङ्गेण ॥ २५ऽ ॥**

बुद्धिर्हि भिन्नेव स्वशक्त्या क्रमप्रत्यवमर्शिनी भविष्यति यतः क्रमो-ल्लेखानुषङ्गेणैवासावनुभववासनावशादुपजायतइति कालव्यवहार-निवर्तनचतुरेव सा ॥

एतद्रूपयितुमाह ॥

**तस्यां यद्बीजमाहितम् ।**

---

(१) बुद्धिरेका ऽसौ भागवर्जितेति पा० २ ।

तत्त्वनानात्वयोस्तस्य
निरुक्तिर्नावतिष्ठते ॥ २६ ॥

तस्यां बुद्धौ यदाहितं पदार्थमात्राभिरनुभववशाद्बीजं वासनारूपं संस्कारस्वभावं तत्किं व्यतिरिक्तं तस्या उताव्यतिरिक्तमिति द्वयी गतिः । व्यतिरेके तस्यास्तेन न किञ्चिदिति कथं तद्वशात्क्रमादिको व्यवहारः । अव्यतिरेके पुनरपि सैवैका निर्विभागेति पदार्थमात्रावत् कालव्यवहारं कथं निर्वाहयेदिति तत्त्वनानात्वाभ्यां निर्वचनं बुद्धेः कर्त्तुं न पार्यतइति यत् किञ्चिदेतत् ॥ २६ ॥

पुनश्चातकाण्डकललवदविभक्त एव युक्त इति प्रतिपादयितुमाह ॥

भावनासमये त्वेतत् क्रमसामर्थ्यमक्रमम् ।
व्यावृत्तभेदो येनार्थो भेदवानुपलभ्यते ॥ २७ ॥

ब्रह्मकाण्डे सर्वशङ्कानिवारणपूर्वकं स्फोटस्वरूपं निरूपितमेव । तस्मादेतद्वाक्यमक्रमं स्फोटस्वभावमेकं वाचकं स्वपदार्थभावनावसरे तूपाधिवशात्क्रमसामर्थ्यं क्रमे सामर्थ्यं शक्तिर्यस्य तत्क्रमसामर्थ्यमवगतम् । येनार्थो वाच्यस्वरूपो व्यावृत्तभेदो ऽखण्ड एव पदार्थोपाधिवशाद्भेदवानिवोपलभ्यते न परमार्थतः ॥ २७ ॥

यस्य पुनस्तानि पदान्येवोपलभ्यमानानि वस्तुसन्ति वाक्ये ऽभिमतानि न तद्व्यतिरिक्तमेकमनंशमस्त्यखण्डस्वभावं वाक्यम् । तस्य पदान्यपि न वर्णव्यतिरेकेण विद्यन्ते । वर्णा अपि भागवन्त इति प्रकर्षप्राप्तो भेद एव सर्वत्र स्यादिति पदवादिनं दूषयितुमाह ॥

पदानि वाक्ये तान्येव वर्णास्ते च पदे यदि ।
वर्णेषु वर्णभागानां भेदः स्यात्परमाणुवत् ॥ २८ ॥

यथावयवव्यतिरेकेणावयविन एकस्यानङ्गीकारे ऽवयवानामपि भागवत्त्वाद्भागपरिकल्पनाया अतिप्रसङ्गात् परमाणूनामवशेषः । ते-

णामपि केषांचिन्मते षट्केन युगपद्योगात्साधितायामपीयत्तोप्यवय-वस्यानुपपत्तिः । अतश्च व्यपदेश्यपदार्थविरहितं निरीक्षमेव जगदा-पतितम् ॥ २८ ॥

तथैव वर्णभागानामनुपश्लेषान्न वर्ण एकः कश्चित्स्यात् तदभावे पदमपि न भवेदिति प्रतिपादयितुमाह ॥

भागानामनुपश्लेषान्न वर्णो न पदं भवेत् ।
तेषामव्यपदेश्यत्वात्किमन्यदपदिश्यताम् ॥ २९ ॥

अतश्चोक्तरीत्या भागानामसत्त्वाद्व्यपदेश्यविरहात्किमत्र वाचकमि-तद्व्यतिरिक्तमन्यदपदिश्यताम् । अखण्डस्यानङ्गीकरणात्पदानामुक्तेन न्यायेनानुपपत्तेरिति न कश्चिद्वाचकः स्यात् । अस्ति च वाक्यार्थस्य प्रतीतिः सा सनिमित्ता भवितुमर्हतीत्येक एव नित्यः पदाभिधेयो (१) ऽखण्डो व्यक्तिस्फोटो जातिस्फोटो वा वाचको ऽङ्गीकार्य इति सिद्धान्तः ॥ २९ ॥

एवं तावदखण्डरूपं व्यक्तिस्फोटं जातिस्फोटं वा वाचकमाश्रित्य वा-क्यं व्याख्यातम् । इदानीमन्तरे वानवयवं बोधस्वभावं शब्दार्थमयं निर्विभागं शब्दतत्त्वमिति यद्गीतं तदेव नादैर्बहिः प्रकाशितं वाक्य-माहुराचार्या इत्यान्तरं बुद्ध्यनुसंहृतिरित्युद्दिष्टं व्याख्यातुमाह ॥

यदन्तः शब्दतत्त्वं तु नादैरेकं (२) प्रकाशितम् ।
तदाहुरपरे शब्दं तस्य वाक्ये तथैकता (३) ॥ ३० ॥

वाक्यविचारे प्रस्तुते तस्यान्तरस्यैकतास्तु निरंशतैव प्रतिपाद्यतइति तदेव सत्यत्वाद्वाक्यमस्तु किं तद्व्यतिरिक्तेनासत्येन वाक्येनेत्यर्थः ॥३०॥

---

(१) पदाभिव्यङ्ग्य इति पा० २ ।
(२) भागैरेकमिति पा० २ ।
(३) तथैकतामिति पा० २ ।

न केवलं वाक्यं तथा यावद्वाक्यार्थोप्यखण्डः प्रतिभात्मकः पदार्थभागैरभिव्यज्यतइति प्रसङ्गादाह ॥

**अर्थभागैस्तथा तेषामान्तरोर्थः प्रकाश्यते ॥ ३०ऽऽ ॥**

तेषामान्तरवाक्यवादिनामाचार्याणां मते आन्तर एवात्रापि वाक्यार्थ इति बोद्धव्यम् ॥ ३०ऽऽ ॥

तौ च शब्दार्थावभिन्नाविकस्यान्तरस्य तत्त्वस्य सम्बन्धिनौ वस्तुतः बहिः स्थितौ भेदाविव प्रतिभासेते इति बोध्यमित्याह ॥

**एकस्यैवात्मनो भेदौ शब्दार्थावपृथक्स्थितौ ॥ ३१ ॥**

ननु शब्दार्थौ वाच्यवाचकाविति प्रसिद्धमतः कथं तयोरभेद इत्याशङ्क्याह ॥

**प्रकाशकप्रकाश्यत्वं कार्यकारणरूपता ।**

**अन्तर्मात्रात्मनस्तस्य शब्दतत्त्वस्य सर्वदा ॥ ३२ ॥**

तस्य हि शब्दतत्त्वस्यान्तरस्य ज्योतीरूपस्य शक्तिभेदादयं भेदप्रतिभासो न विरुद्धः । एतच्चादावुक्त (१) मागमकाण्डएकस्य सर्वबीजस्येत्यादिना ॥ ३२ ॥

इदमपि तस्य शक्तिभेदादवभासतइति प्रसङ्गादाह ॥

**तस्यैवास्तित्वनास्तित्वसामर्थ्ये समवस्थिते ।**

**अक्रमे क्रमनिर्भासे व्यवहारनिबन्धने ॥ ३३ ॥**

तस्य तदेवैकं निर्विभागं परं तत्त्वमाश्रित्यायं सकललोकसंव्यवहारः शक्तिभेदात्प्रतीयते । किं पुनरयं वाच्यवाचकविभागमात्ररूप इत्यखण्डपक्ष एव युक्तः ॥ ३३ ॥

इदानीं पदवादिमतमाशङ्क्य पुनरपि दूषयितुमाह ॥

**संप्रत्ययप्रमाणत्वात्पदार्थास्तित्वकल्पने ।**

---

(१) एवेति पुस्तकान्तरे ऽधिकमत्र ।

पदार्थाभ्युदये त्यागादानर्थक्यं प्रसज्यते ॥ ३४ ॥

यदि पदार्थसंप्रत्ययः प्रमाणं पदपदार्थसत्तायामुच्यते तदा देवदत्त गामभ्याज शुक्लां दण्डेनेत्यस्मिन्वाक्ये पूर्वपूर्वपदार्थानामुत्तरोत्तरपदार्थाभ्युदये स्वार्थत्यागात्तत्तत्पदोपादानस्यानर्थक्यं प्रसज्यते । ततश्चानर्थकस्योच्चारणवैफल्यादुच्चारिताद्वा तस्माच्छब्दमात्रात्पदार्थप्रत्ययस्यानुपपत्तेः किंनिबन्धना वाक्यार्थप्रतीतिः स्यादिति यत्किंचिदेतत् ॥ ३४ ॥

तथा च पदानामव्यवस्थितेः पदवादोऽनुपपन्न एव लक्ष्यते इत्यभिधातुमाह ॥

राजशब्देन राजार्थो
भिन्नरूपेण गम्यते ॥ ३४ऽऽ ॥

राजा राजानं राज्ञा राज्ञे राज्ञो राज्ञि राजनीत्येवमनियतस्वरूपेण राजपदेन राजार्थप्रतीतिर्दृश्यते । यदि पदस्य सत्यता स्यात्तदा नियतं तत्परिदृश्येत सर्वत्र न च दृश्यते ऽतो मन्यामहे मिथ्यैव पदानीति ॥ ३४ऽऽ ॥

इतोपि नास्ति पदमित्याह ॥

वृत्तावाख्यातसदृशं पदमन्यत्र युज्यते ॥ ३५ ॥

राजपुरुष इत्यस्यां वृत्तौ राजशब्द आख्यातसदृशः ततश्च हे राजपुरुषेत्यत्र राज आजस्व पुरुषेत्यर्थप्रतीतिः स्यात् न चैतदिष्टं तस्मात्पारमार्थिकानि पदानि न सन्त्येव ॥ ३५ ॥

न केवलं केवलानां नियतरूपासंभवस्तेषां यावद्वृत्तावपि स्थितानामित्याह ॥

यथाश्वकर्ण इत्युक्ते विनैवाश्वेन गम्यते ।
कश्चिदेव विशिष्टोर्थः सर्वेषु प्रत्ययस्तथा ॥ ३६ ॥

एवमर्थं वाक्यावयवपदार्थेन विनैव वाक्यान्तरविशिष्टः कश्चिदर्थो गम्यते । तस्मात्सर्वेष्वपि पदेषु परामृष्टविभागेषु वाक्याभिव्यञ्जकेषु सत्स्वखण्डवाक्यावगतिपूर्वको वाक्यार्थप्रत्यय इत्येव युक्तम् ॥ ३६ ॥

ननु एवं सति योयं रूढ्यरूढिविभागः शब्दानामुच्यते स हयेत्याशङ्क्याह ॥

वाक्ये त्वर्थान्तरगतेः सादृश्यपरिकल्पने ।
केषां चिद्रूढिशब्दत्वं शास्त्रएवानुगम्यते ॥ ३७ ॥

वृत्तिवाक्ययोः सादृश्यपरिकल्पने केषां चिच्छब्दानां वाक्ये विग्रहरूपे ऽर्थान्तरप्रतीतेः रूढिशब्दत्वमुच्यते यथा तैलपायिकेति । अत्र तैलं पिबतीति वाक्यवेलायामर्थप्रादुर्भावः । वृत्त्यवस्थायां तैलपायिकेति जात्यन्तरयुक्तार्थस्य कस्य चित्प्रतीतिः । न च तस्य तैलपानक्रिया लक्ष्यतइति रूढिरूपतास्योच्यते । केषां चित्तु वृत्तिवाक्ययोरर्थस्य सादृश्यात् यौगिकत्वम्, यथा राजपुरुष इति । परिकल्पनइत्यनेन सर्वमेतदवयवविभागादिकं शास्त्रसमयएव कल्पनामात्रम् । परमार्थतस्तु व्यवहारकाले निर्विभागमेवोपलभ्यतइति प्रतिपाद्यते । एतदेव शास्त्रएवानुगम्यतइत्यनेन व्यक्तीकृतम् ॥ ३७ ॥

कथमेतदुच्यतइत्याह ॥

उपादायापि ये हेयास्तानुपायान् प्रचक्षते ॥३७ऽऽ॥

शास्त्रमुपायः शब्दपरिज्ञाने । ज्ञातेषु च तेषु प्रयोजनसंपत्तेरनुपयोग इति तस्य परित्यागः ॥ ३७ ॥

उपायाश्च न नियता इत्याह ॥

उपायानां च नियमो नावश्यमवतिष्ठते ॥ ३८ ॥
अर्थं कथं चित्पुरुषः कश्चित्संप्रतिपद्यते ॥ ३८ऽऽ ॥

कश्चिदाचार्यः प्रकृतिनिर्देशकेन शब्दप्रयोगेण शब्दानधिगच्छ-

ति कश्चिदन्योऽस्तीति न नियमः । एतदेव चाष्टौजातमयं मार्गं निदि-
श्याहिता ॥ ३८ ॥

तस्मात्संसृष्टस्य विभक्तस्य वार्थविशेषस्य वाक्यमेकमनंशमेव प्रतीतिनिबन्धनमिति पदपदार्थप्रविभागकल्पनमसमञ्जसमेवेति प्रतिपादयितुमाह ॥

संसृष्टा वा विभक्ता वा भेदा वाक्यनिबन्धनाः ॥ ३९ ॥

अतश्च निरंश एवायं पदार्थशून्यो वाक्यार्थोऽध्यासमात्रसंबन्धगर्भ एकस्मादपि वर्णात्प्रतीयतएवेत्यभिधातुमाह ॥

सोयमित्यभिसंबन्धो बुद्ध्या प्रक्रम्यते यदा ।
वाक्यार्थस्य तदैकोपि वर्णः प्रत्यायकः क्वचित् ॥ ४० ॥

सोयमित्यभिसम्बन्धो ऽध्यासरूपो वाक्यार्थस्य वाक्येन सह यदा वक्त्रा प्रक्रम्यते । तदैकोपि वर्णो वाक्यार्थस्य वाचको भवत्येव । किं पुनरनेकमशेषविशेषा (१) भिधानविवक्षयोदीरितं पदमिति । एवमध्यासवशाद्वाक्यवाक्यार्थयोरभिन्नस्वरूपत्वाद्वाक्यार्थाभिव्यक्तौ वाक्यमपि स्फोटात्मकमभिव्यक्तमेवेत्युक्तं वाक्यार्थस्य तदैकोपीत्यादि ॥ ४० ॥

इदानीमभिहितान्वयपक्षसमाश्रयणेन संघातपक्षस्य प्रश्नेनाचाह ॥

केवलेन पदेनार्थो यावानेवाभिधीयते ।
वाक्यस्थं तावतो ऽर्थस्य तदाहुरभिधायकम् ॥ ४१ ॥
संबन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम् ॥ ४२ ॥

केवलं पदं यस्यैवार्थस्य वाचकम् । वाक्यस्थमपि तमेवाभिदधाति

(१) विशेषेति पुस्तकान्तरे नास्ति ।

ततः समुदये पदानां परस्परान्वये पदार्थव्यत्यदाधिक्यं संसर्गः स वाक्यार्थः । उक्तं च । यदत्राधिक्यं वाक्यार्थः स इति । अनेकपदसं-श्रयमित्यनेन संघातो वाक्यमिति दर्शितम् ॥ ४२ ॥

वाक्यार्थस्य जातिवत्प्रत्येकपरिसमाप्तिः केषां चिन्मते संख्यावत्स-मुदायपरिसमाप्तिरिति पक्षद्वयं दर्शयितुमाह ॥

**स त्वनेकपदस्थोपि प्रतिभेदं समाप्यते ।**
**जातिवत्समुदायेपि संख्यावत् कल्प्यते परैः ॥ ४३ ॥**

अथात्र संघातपक्षएव प्रकारान्तरेणान्विताभिधानप्रदर्शनात्पदा-र्थ एव वाक्यार्थ इति प्रक्रमितुमाह ॥

**सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः ।**
**तदर्थान्तरसंसर्गाद्भजते भेदरूपताम् ॥ ४४ ॥**

सर्वेषां भेदानामानुगुण्यं यस्मिन् तत्तथाविधं सामान्यं संसर्गलक्ष-णमाकाङ्क्षायोग्यतासन्निधानवशेन पदान्तरसंसर्गान्नियतस्वरूपं वा-क्यार्थः ॥ ४४ ॥

तत्र चाकाङ्क्षावसरे येयमस्फुटरूपता वाक्यार्थस्य तामितरपदा-र्थसंनिधिर्निवारयतीत्याह ॥

**भेदानाकाङ्क्षतस्तस्य या परिप्लवमानता ।**
**अवच्छिनत्ति संबन्धस्तां विशेषे निवेशयन् ॥ ४५ ॥**

पूर्वत्र पदानां वाक्ये तावानेवार्थो यावानेव केवलानां संसर्गस्तु संघातवाच्यः । इह तु तथाभूत एव सामान्यरूपः पदस्यार्थः यस्तत्त-द्विशेषसन्निधौ तत्तद्विशेषविश्रान्त इति ॥ ४६ ॥

संघातपक्षे संसर्गो वाक्यार्थ इत्युक्तं स च पूर्वत्र जातिवत् सं-ख्यावद्वा पदार्थव्यतिरेकेण वाक्यार्थत्वेन कल्पित इदानीं पदार्थ-व्यतिरेकेणासत्त्वेनैकान्तानुमेयो न समुदायवाच्यः किं तर्हि सर्वभे-

द्यागुणसामान्यरूपो विशेषान्तरसन्निधानाद्विशेषविश्रान्तः पदार्थ एव वाक्यार्थ इति दर्शयितुमाह ॥

कार्यानुमेयः संबन्धो रूपं तस्य न दृश्यते ।
असत्त्वभूतमत्यन्तमतस्तं प्रतिजानते ॥ ४७ ॥

कार्येण पदार्थानां विशेषविश्रान्तिलक्षणेनानुमीयतइति कार्यानुमेयः । इदं तदिति तु रूपं तस्य न दृश्यते । अत एवासत्त्वभूतं पदार्थव्यतिरेकेण सत्त्वं नास्ति यस्य तमेवंभूतमाचार्याः प्रतिजानते ॥ ४७ ॥

एतदेव व्यक्तीकर्तुमाह ॥

नियतं साधने साध्यं क्रिया नियतसाधना ।
स सन्निधानमात्रेण नियमः सन् प्रकाशते ॥ ४८ ॥

साध्यं साधनं च परस्परं नियतमेव केवलमाकाङ्क्षावशादितरपदार्थसंनिधाने सति नियमः सन्नेव प्रकाशतइत्याश्रितपदान्तराणि पदान्येव वाक्यं, पदार्थाश्च वाक्यार्थ इत्यव्यतिरिक्तः संघातपक्षोयम् ॥ ४८ ॥

अथाच परस्परापेक्षायां समानायां विशेषमभिधातुमाह ॥

गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्त्तते ।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते ॥ ४९ ॥

नाम कारकपदं क्रियायां गुणभूतं सत् पदान्तरमाकाङ्क्षति । क्रियापदं तु प्रधानभावेनावस्थितं कारकपदान्यपेक्षते इति ॥ ४९ ॥

क्रमो वाक्यमित्युद्दिष्टम् । क्रमपक्षं व्याख्यातुमाह ॥

सन्त एव विशेषा ये पदार्थेषु व्यवस्थिताः ।
ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम् ॥ ५० ॥

पदार्थेषु देवदत्तादिपदवाच्येषु गोकर्मिकायामभ्याजक्रियायां देव-

इत्यपदार्थस्य कर्तृत्वं गोपदार्थस्य देवदत्तकर्तृकायां कर्मत्वमित्यादयो विशेषाः सन्त एव पदेभ्यः क्रमेण प्रतीतिभ्योवगम्यन्त इति क्रम एव वाक्यं न वाक्यमभिधायकमित्यनेन क्रमव्यतिरेकेण शब्दात्मकं न वाक्यमभिधायकमस्तीत्युच्यते ॥ ५० ॥

एतदेव स्फुटीकुर्वन्नाह ॥

शब्दानां क्रममात्रे च
नान्यः शब्दोस्ति वाचकः ॥ ५०ऽऽ ॥

अनपेक्षितविशिष्टानुपूर्वीकः क्रमः क्रममात्रम् । तस्मिन्सत्यर्थप्रतीतेर्नान्यस्तद्व्यतिरिक्तः कश्चित्स्फोटादिः शब्दो वाचकोभ्युपगन्तुं युक्तः । अपि तु क्रम एवोपलभ्यमानो वाचकः ॥ ५०ऽऽ ॥

अथ क्रम इति किमुच्यत इत्याह ॥

क्रमो हि धर्मः कालस्य तेन वाक्यं न विद्यते ॥ ५१ ॥

क्रमवत्पदपदार्थोपाधिवशेनापि कालस्य स धर्म उच्यते ॥ ५१ ॥

युक्तं चैतत् । यत्क्रम एव वाक्यमित्याह ॥

ये च संभेदिनो भेदाः पदार्थेष्वविभाविताः ।
ते संनिधाने व्यज्यन्ते न तु वर्णेष्वयं क्रमः ॥ ५२ ॥

पदार्थेषु ये भेदाः पूर्वोक्ताः सन्ति ते केवलेष्वविभाविताः सन्तः क्रमवत्पदार्थान्तरसंनिधानेभिव्यज्यन्त इति दर्शनात्क्रम एव वाक्यमिति पदक्रमो वाक्यमुक्तम् । वर्णक्रमस्तु न तथेत्युक्तं न तु वर्णेष्वयं क्रम इति ॥ ५२ ॥

एतदेवोपसंहारेण स्फुटयितुमाह ॥

वर्णानां च पदानां च
क्रममात्रनिवेशिनी ।
पदाख्या वाक्यसंज्ञा च ॥ ५२ऽऽऽ ॥

वर्णक्रमः पदमुच्यतां नाम । वाक्यसंज्ञा पदक्रमएव युक्ता तयार्थ-प्रतीतिदर्शनात् ॥ ५२ऽऽऽ ॥

क्रम एव शब्दो न वर्णपदे इत्युक्तमुपसंहर्तुमाह ॥

शब्दत्वं नेष्यते तयोः ॥ ५३ ॥

तयोर्वर्णपदयोः शब्दत्वं श्रोत्रेन्द्रियग्राह्यत्वेपि वाचकत्वलक्षणं नेष्यते अपि तु क्रमस्यैव ॥ ५३ ॥

पदक्रमस्य शब्दत्वं वाक्यार्थेनार्थवत्तायाम् । वाक्यार्थभागैस्तु पदानामर्थवत्त्वम् । एवं वर्णक्रमस्यापि शब्दत्वं पदार्थेनार्थवतः तदर्थवतां वर्णानां किं नाङ्गीक्रियतइत्याह ॥

समानेपि तु शब्दत्वे दृष्टः संप्रत्ययः पदात् ।
प्रतिवर्णं त्वसौ नास्ति पदस्यार्थमतो विदुः ॥ ५४ ॥

वर्णपदलक्षणस्योभयरूपस्यास्य शब्दत्वे समाने पदानां क्रमाद्वाक्यार्थस्यावगमो दृश्यते न वर्णादित्यतः पदान्येवार्थवन्ति । तत्क्रमस्यैव वाक्यं संसर्गो वाक्यार्थ इति ॥ ५४ ॥

इदानीं संघातः क्रमस्तथैकोनवयवश्च शब्दः स्फोटात्मेति व्याख्यातानि त्रीणि वाक्यलक्षणानि श्लोकत्रयेणोपसंहरति । तत्र संघातपक्षमुपसंहर्तुं तावदाह ॥

यथा सावयवा वर्णा विना वाच्येन केन चित् ।
अर्थवन्तः समुदिता वाक्यमप्येवमिष्यते ॥ ५५ ॥

वर्णानां समुदायार्थवत्त्वे केवलानामनर्थकत्वं यथा तथा पदानां केवलानामर्थासंभवात्तत्समुदाय एव वाक्यमिति ॥ ५५ ॥

व्याख्यातं क्रमपक्षमप्युपसंहर्तुमाह ॥

अनर्थकान्युपायत्वात्पदार्थेनार्थवन्ति वा ।

क्रमेणोच्चरितान्याहुर्वाक्यार्थं भिन्नलक्षणम् ॥ ५६ ॥

पदानि केवलान्यनर्थकानि केषांचिन्मते स्वार्थेनार्थवन्ति क्रमेणोच्चारितानि वाक्यम् । तथाविधाद्वाक्याद्वाक्यार्थं भिन्नलक्षणं व्यतिरिक्तस्वरूपं संसर्गात्मकं विशिष्टमेव वा संसर्गवशान्निराकाङ्क्षविशेषावस्थितपदार्थस्वरूपमेव व्यतिरिक्तमवगम्यत इति ॥ ५६ ॥

स्फोटपक्षमप्युपसंहर्तुमाह ॥

नित्यत्वे समुदायानां
जातेर्वा परिकल्पने ।
एकस्यैवार्थतामाहु-
र्वाक्यस्याव्यभिचारिणीम् (१) ॥ ५७ ॥

इह देवदत्त गामभ्याज शुक्लां दण्डेनेत्यादिकानि भिन्नवदुदीरितानि पदसमुदायात्मकानि शब्दरूपाण्यभिन्नान्येव । अयमर्थः । तत्र तत्र वक्तरि भिन्ना अपि ध्वनय एकमेव स्फोटं व्यक्तिस्फोटात्मकं नित्यमभिव्यञ्जन्ति । देवदत्त गामभ्याजेत्यादिकेषु भिन्नवक्त्रुदीरितेषु वा स्फोटजातिर्नित्या देवदत्तपदसमुदायाभिव्यङ्ग्या वाक्यार्थस्यैकस्य प्रतिभात्मकस्य प्रतिपादिकेति मतभेदाज्जातिव्यक्तिस्फोटोपसंहारः ॥ ५७ ॥

तदेवं संघातादीनि त्रीणि वाक्यलक्षणानि व्याख्यातानि आख्यातं वाक्यमिति व्याख्यास्यति । एषां च मध्यादिति (२) सूत्रकाराभिप्रायमनुसृत्याखण्डपक्ष एव वाक्यवाक्यार्थयो (३) रभ्युपगम्यत इति प्रदर्शितम् । इदानीं भाष्यकाराभिप्रायेणापि स एवाभ्युपगन्तव्य

---

(१) एकस्यैकार्थतामाहुर्वाच्यस्याव्यभिचारिणीमिति पा० २ ।

(२) पूर्वोक्तमिदम् ।

(३) उभयोरिति पुस्तकान्तरेऽधिकम् ।

इत्युपक्रंस्यति । तथा च भाष्यं 'न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्' । तथा । 'यथालक्षणमप्रयुक्ते' इति । अत्र यदि पदानां सत्यता स्यात् तदा तेषां स्वत एव सिद्धत्वात् पदानि कुर्वन्तीति पदाकारा इत्येतदसङ्गतं स्यात् । लक्षणेन च तदननुवर्तनं वस्तुसत्त्वात्तेषां पदकारैर्नाम लक्षणमनुवर्त्यमित्यप्यसंगतम् । तथा ऽप्रयुक्तपदविषये पदानां सत्यत्वात् तत्प्रविभागो ऽयं न सिद्ध इति । यथालक्षणं लक्षणानुसारेण पदकरणमप्रयुक्तमित्येतदनुपपन्नमेव । आह चैवं भाष्यकारः । तस्मान्मन्यामहे पदान्यसत्यानि एकमभिन्नस्वभावकं वाक्यम् । तदबुधबोधनाय पदविभागः कल्पित इति । तदेवाभिधातुमाह ॥

**अभेदपूर्वका भेदाः**
**कल्पिता वाक्यवादिभिः ॥ ५७ऽऽ ॥**

यत एवं सूत्रकारस्य भाष्यकारस्य चाखण्डपक्षो ऽभिरुचितः । तस्माद्वाक्यवादिभिः स्फोटवादिभिरभेदकल्पनमाश्रितम् । काल्पनिकः पदवादो ऽभ्युपगत इत्यर्थः ॥ ५७ऽऽ ॥

पदवादिमतमपि प्रसङ्गादुपदर्शयति ॥

**भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः ॥ ५८ ॥**

भेदप्रतिभासपूर्वकानभेदान् स्वाभिमतान् पददर्शिनः पदमेव सत्यं ये मन्यन्ते तेष्वेकमखण्डं वाक्यं नाम काल्पनिकमाहुः ॥ ५८ ॥

अथ यदि नैवं स्थितिः तत्कथं पदप्रकृतिः संहितेति प्रातिशाख्यम् । अत्र हि पदानि प्रकृतिर्यस्याः संहितायाः इत्यर्थो व्याख्यायते । पदानां चासत्यत्वात् तत्कारणिका संहिता ऽप्ययुक्ता स्यादित्याशङ्क्याखण्डपक्षेणाप्येतत्संवादयितुमाह ॥

**पदप्रकृतिभावश्च वृत्तिभेदेन वर्ण्यते ॥ ५८ऽऽ ॥**

वृत्तिभेदमेव प्रदर्शयितुमाह ॥

पदानां संहिता योनिः संहिता वा पदाश्रया ॥ ५८ ॥

अखण्डपक्षे पदप्रकृतिः संहितेति षष्ठीसमासेन व्याख्यायतइत्यर्थः ॥ ५८ ॥

इदानीं येनाभिप्रायेण भाष्ये न लक्षणेनेत्यादिकमुक्तं तमभिव्यक्तुमाह ॥

पदाम्नायस्य यद्यन्यः संहिताया निदर्शकः ।
नित्यस्तत्र कथं कार्यं पदं लक्षणदर्शनात् ॥ ६० ॥

यदि हि पदाम्नायः संहिताप्रदर्शको नित्यः सत्यभूतोभ्युपगतस्तदा कथं लक्षणदर्शनात् पदं कार्यमिति न लक्षणेन पदकारा इत्यादिना भाष्यकारो दर्शयेत् । यतश्च पदान्यसत्यानि तस्य प्रतिभासन्ते तत एवमभिहितमिति भाष्यकारस्याप्यखण्डपक्षोभिप्रेत इति दर्शितम् ॥ ६० ॥

इदानीं पदवादिनं प्रति दूषणमाह ॥

प्रतिवर्णमसंवेद्यः पदार्थप्रत्ययो यथा ।
पदेष्वेवमसंवेद्यं वाक्यार्थस्य निरूपणम् ॥ ६१ ॥

देवदत्तादौ पदे यथा न दकारादि वर्णंवर्णं प्रति देवदत्तप्रत्ययो जायते । तथैव देवदत्त गामभ्याजेत्यादिवाक्यार्थस्य देवदत्तादि पदंपदं प्रति नास्ति प्रत्ययो ऽत उच्यते एतान्यनर्थकान्येव वाक्यादेवार्थप्रतीतिदर्शनात् वाक्यमेवार्थवदिति ॥ ६१ ॥

एतावत् प्रतिविधातुं पदवाद्याह ॥

वाक्यार्थः संनिविद्यते पदेषु सहवृत्तिषु ।
यथा तथैव वर्णेषु पदार्थः सहवृत्तिषु ॥ ६२ ॥

इह पदे वर्णा अर्थवन्तो वाक्ये पदान्यपीति द्रष्टव्यम् । केवलं य-

था समुदितेषु पदेषु सत्सु वाक्यार्थः संनिविशते स्वरूपं प्रतिलभते। तथैव वर्णेष्वपि बुद्धौ सन्निविष्टेष्वेव पदार्थ उपजायतइति। नैतावता वर्णदृष्टान्तेन पदानामनर्थकत्वम्॥ ६२॥

एतदेव दृष्टान्तेन दर्शयितुमाह॥

**सूक्ष्मं ग्राह्यं यथा ऽन्येन संसृष्टं सह गृह्यते।**
**वर्णो ऽप्यन्येन वर्णेन संबद्धो वाचकस्तथा॥ ६३॥**

ग्राह्यमपि सूक्ष्मं वस्तु रजःप्रभृति यथा ऽन्येन केन चित्सजातीयेन विलक्षणेन वा संसृष्टं सद् गृह्यते एवमर्थवानपि वर्ण एकैकं न संप्रत्यायको ऽन्येन संसृष्टस्तु वाचक एव। एतदुक्तं भवति। अर्थवन्त एव वर्णाः प्रतिपत्ता तु पाटवविरहादेकैकं न तथा गृह्यन्तइति नात्र तेषामपराधः॥ ६३॥

न चानर्थकमेव पदमिति वक्तुं युक्तं प्रत्यक्षविरोधादित्याह॥

**पदस्योच्चारणादर्थो यथा कश्चिन्निरूप्यते॥ ६३ऽऽ॥**

नहि किं चित् पदं केन चिदर्थेनानिरूपितमिति युज्यते वक्तुमनुभवविरोधात्॥ ६३ऽऽ॥

यथा चैवं पदोच्चारणकाले ऽस्ति का चिदर्थप्रतीतिरेवं तेनैवार्थेन संहता अप्यर्थवन्त इति प्रतिपादयितुमाह॥

**वर्णानामपि सान्निध्यात्तथा सो ऽर्थः प्रतीयते॥ ६४॥**

केवलं सान्निध्यात्सहोच्चारणादसावर्थस्तेषां प्रतीयते। तस्माद्यथा समुदिताः परस्परशक्त्यावेशाद्वर्णा वाचका एवं पदान्यपि तथैवेति वर्णपदव्यतिरेकेण वाक्यं नाम नास्तीति। तदुक्तम्। "यावन्तो यादृशा ये च यदर्थप्रतिपादने। वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः" इति॥ ६४॥

यदि च पदार्थनिबन्धनो वाक्यार्थावभासो नाङ्गीक्रियते तदा प्र-

तिनिधिकल्पनं पिष्टादिनियतपदग्रहः श्रुतिवाक्ययोर्विरोधे श्रुतिर्बलीयसीत्यवान्तरवाक्यानामनर्थकत्वं च न स्यादबाधानुपपत्तिश्चेति पञ्च चोद्यान्यापतन्ति । तानि क्रमेण प्रदर्शयितुमाह ॥

प्राप्तस्य यस्य सामर्थ्यान्नियमार्था यतः(१) श्रुतिः ।
तेनात्यन्तं विशेषेण सामान्यं यदि बाध्यते ॥ ६५ ॥

इह यजेतेत्याख्यातपदप्रतिपाद्यो यजनविधिरुपदिश्यते । तत्र क्रियाप्रधानमाख्यातमित्यत्र यजतिक्रिया साधननिर्वर्त्येत्यसौ कारकमात्रस्याक्षेपिका । कदा चिद्विशिष्टस्यैवेति द्वयी गतिः । तत्र यस्य व्रीहित्वस्य यजतिक्रियासामर्थ्यात्प्राप्तस्य व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुतिरुच्चरन्ती नियममवगमयति व्रीहिभिरेव न यवैरिति । ततश्च तेन द्रव्यविशेषेणात्यन्तं द्रव्यसामान्यमात्रं यदि बाध्यते ॥ ६६ ॥

अतः किमित्याह ॥

यजेतेति यदा (२) द्रव्यं प्राप्तं सामर्थ्यलक्षणम् ।
व्रीहिश्रुत्या निवर्त्तेत न स्यात्प्रतिनिधिस्तदा ॥ ६७ ॥

यजेतेत्येतया क्रियया निःसाधना क्रिया न भवतीति सामर्थ्याद्यदाक्षिप्तं द्रव्यमात्रं तद्व्रीहिभिर्यजेतेति पुनर्व्रीहिश्रुत्या बाधितं सन्निवर्तेत तदभावे प्रतिनिधिर्न स्यात् । क्रियया द्रव्यमात्राक्षेपे व्रीहिलक्षणस्य द्रव्यस्याभावे तत्सदृशं द्रव्यान्तरमेव नीवारादिकं समानीय तन्निर्वर्त्तनं क्रियते । विशिष्टद्रव्याक्षेपे तु तया कृते तदुपादानं नियमाय पर्यवस्यतीति कथं व्रीहिकरणकं यजनमन्यो निर्वर्त्तयेदिति प्रतिनिध्यभावः । तस्माद् द्रव्यमात्राक्षेपे प्रतिनिध्युपपत्तिः ॥ ६७ ॥

तदेतदेव दर्शयितुमाह ॥

---

(१) पुनरिति पा० २ ।

(२) व्रत इति पा० २ ।

तस्माद् व्रीहित्वमधिकं व्रीहिशब्दः प्रकल्पयन्(१)।
द्रव्यत्वमविरुद्धत्वात्प्राप्त्यर्थः सन्न बाधते ॥ ६८ ॥

तस्माद्द्रव्यमात्राक्षेपे व्रीहिशब्दो ऽत्र प्राप्त्यर्थो व्रीहित्वमात्रप्रापणप्रयोजनो व्रीहित्वमेवाधिकं कृत्वा ऽभ्युपकल्पयन् प्रकटीकुर्वन् द्रव्यत्वं न बाधते अविरुद्धत्वात्। सामान्यस्य विशेषेण सहाविरोधात् ॥ ६८ ॥

अतश्च किमित्याह ॥

तेन चापि व्यवच्छिन्ने द्रव्यत्वे सहचारिणि।
असंभवाद्विशेषाणां तत्रान्येषामदर्शनम् ॥ ६९ ॥

तेन च व्रीहिशब्देन व्यवच्छिन्ने कृताभ्युच्चये दत्तोपचये द्रव्यत्वे सति। कीदृशे सहचारिणि अविरुद्धैकार्थसमवेते। द्रव्यविशेषाणां तत्रान्येषां समस्तानामसंभवाददर्शनमनाक्षेप एव ॥ ६९ ॥

एतदेवोन्मीलयितुमाह ॥

न च सामान्यवत्सर्वे क्रियाशब्देन लक्षिताः।
विशेषा नहि सर्वेषां सतां शब्दो ऽभिधायकः ॥ ७० ॥

यजतिना हि क्रियाशब्देनात्र द्रव्यत्वसामान्यवत्सर्वे विशेषास्तदन्तर्गता न लक्षिता आक्षिप्ता अपि तु द्रव्यत्व(२)मेव। तदेव चाभ्युच्चयीकृतं व्रीहिशब्देन। सामान्यमात्राक्षेपः किमिति नाङ्गीक्रियत इत्याशङ्क्याह। नहीत्यादि। नहि सकलसंनिहितविशेषाभिधायकः शब्दः परिदृष्टः तथा ऽप्रतीतेः ॥ ७० ॥

एतदेव दृष्टान्तेन स्फुटीकर्तुमाह ॥

शुक्लादयो गुणाः सन्तो यथा तत्राविवक्षिताः।
तथा ऽविवक्षा भेदानां द्रव्यत्वसहचारिणाम् ॥ ७१ ॥

---

(१) प्रकल्पयेदिति पा० २।

(२) द्रव्यत्वमात्रमिति पा० २।

व्रीहिभिरित्यत्र यथा शुक्लत्वादिगुणयोगी न विवक्षितः तथात्र व्रीहिभिर्यजेतेति भेदानां द्रव्यविशेषाणां सामान्याविरोधिनामविवक्षैवेति । ततश्च स्थितमेतत् । यदत्र यजतिक्रियाक्षिप्तद्रव्यमात्राभ्युच्चयाभिधायको व्रीहिशब्दो न द्रव्यविशेषवचन इति । ततश्च न क्रिया प्रतिनिधीयते द्रव्यं तु प्रतिनिधीयतइति मुख्याभावे तत्सदृशनीवारादिद्रव्यान्तरोपादानेन यागनिर्वृत्तिरिति प्रतिनिधिसमाश्रयणेन विध्यर्थानुष्ठानं सिध्यतीति न तदवसादः ॥ ७१ ॥

तदेतदेव प्रतिनिधिप्रयोजनमाह ॥

**असंनिधौ प्रतिनिधिर्मा भून्नित्यस्य कर्मणः ।**
**काम्यस्य वा प्रवृत्तस्य लोप इत्युपदिश्यते(१) ॥ ७२ ॥**

मुख्यस्यासन्निधानेऽभावे मा भून्नित्यस्य कर्मणो लोप इति प्रतिनिधिरुपपद्यते । काम्यस्य वा प्रवृत्तस्य तथैव लोपो मा भूदिति । प्रवृत्तस्य काम्यस्येत्यनेनैतदाह । यन्मुख्याभावे काम्येऽप्रवृत्तिरेव न ज्यायसी । प्रवृत्तौ वा केन चिद्वैगुण्येनासंपत्तौ समुदायस्य(२) प्रतीतेः तत्रापि प्रतिनिध्युपादानेन तन्निर्वर्त्तनं विधेयम् । अन्यथा शिष्टविगर्हणलक्षणः प्रत्यवायः ॥ ७२ ॥

एवं द्रव्यमात्राक्षेपपक्षे प्रतिनिधिमुपपाद्येदानीं पदपदार्थानामनङ्गीकरणेऽखण्डवादिनो दूषणमाह ॥

**विशिष्टैव क्रिया येन वाक्यार्थः परिकल्प्यते ।**
**द्रव्याभावे प्रतिनिधौ तस्य तत्स्यात्क्रियान्तरम् ॥ ७३ ॥**

येनाखण्डवाक्यवादिना व्रीहिकरणिका यजतिक्रिया निरस्तावयवार्था व्रीहिभिर्यजेतेत्यत्र वाक्यार्थ इत्युच्यते । तेन द्रव्यस्य व्रीहि-

---

(१) उपपद्यते इति पा० २ ।

(२) कर्तव्यतयेति शेषोऽत्र बोध्यः ।

लक्षणस्याभावे यदा प्रतिनिधिसमाश्रयणेन तन्निर्वर्त्तनं कार्यं तदा व्रीहिभिर्यजेतेति व्रीहिकरणकयागलक्षणस्य वाक्यार्थस्य त्यागात् प्रतिनिधिना तन्निर्वर्त्तने नीवारकरणिका यजतिक्रिया ऽन्यैवानुष्ठिता भवतीति न क्रिया प्रतिनिधीयते द्रव्यं तु प्रतिनिधीयतइति न्यायस्योपेक्षणात् चोदितस्याकरणमेव स्यात् । अथ त्वया प्रतिनिधिर्नाश्रीयतइत्युच्यते, तन्न । मा भून्नित्यस्येत्यादिना तदाश्रयणस्य सप्रयोजनत्वादवश्याश्रयणीयः प्रतिनिधिरिति पदपदार्थानामभावे

अस्याखण्डरूपस्याभ्युपगमे प्रतिनिध्यभाव इति चोद्यम् ॥ ७३ ॥

पिकादिनियतपदप्रश्नो नोपपद्यतइत्यप्यभिधातुमाह ॥

विज्ञातार्थं पदं यत्र तदर्थे प्रतिपादिते ।

पिकादि यदविज्ञातं (१) तत्किमित्यनुयुज्यते ॥७४॥

वनात् पिक आनीयतामित्युक्ते वनादानीयतामिति पदद्वयं विज्ञातार्थं तदर्थे चावगते कः पिक इति कस्य चिन्नागरिकस्य प्रश्नो नोपपद्यते किल । वनादित्याद्यखण्डमेव निरस्तपदप्रविभागं वाक्यमनंशमेव वाचकं वैयाकरणस्य मतम् । अतः किं पिकपदार्थः पृथगविज्ञातः कश्चिदस्ति । तदविज्ञातपिकपदार्थानुयोगो नोपपद्येत । अस्ति च तदर्थे कस्य चित्संदेह इति पृथगेवार्थवन्ति पदानि विज्ञातानि वाक्यमित्येव वक्तुं युक्तमिति ॥ ७४ ॥

इदानीं श्रुतिवाक्ययोर्विरोधे श्रुतिरेव बलीयसीति न्यायो न स्यादिति प्रदर्शयितुमाह ॥

सामर्थ्यप्रापितं यत्र व्यक्त्यर्थमनुषज्यते ।

श्रुतिरेवानुषङ्गे सा बाधिका लिङ्गवाक्ययोः ॥ ७५ ॥

इह श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यालक्षणाः संदिग्धवाक्या-

(१) पिकादिपदविज्ञानमिति पा० २ ।

यैर्विचारे वाक्यविदां प्रसिद्धा: । तेषां च परस्परविरोधे पूर्व: पूर्वो बलीयानिति व्यवस्थाप्यते । तत्र श्वेतं छागमालभेतेत्यत्रालम्भनक्रियया यो द्रव्यस्य सम्बन्ध: स द्वितीयया (१) श्रुत्या साक्षात्प्रतिपादित: । गुणस्य तु तत्सामानाधिकरण्याद्वाक्यीय: । निर्गुणस्य हि द्रव्यस्याभावाद्गुणस्य च निरधिकरणस्यासम्भवाद्वाक्यीय आश्रयाश्रयिणो: सम्बन्ध: । 'तदुच्यते । आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठत' इति । यदा तु द्रव्यगुणयोर्द्वयोरप्यालम्भनक्रियया साक्षात्सम्बन्ध: । यद्वक्ष्यति । 'क्रियया यो ऽभिसम्बन्ध: स श्रुतिप्रापितस्तयो'रिति । ततश्च श्वेताभावे ऽन्यगुणस्य छागस्यालम्भनमनुष्ठीयते । छागाभावे च श्वेतगुणयुक्तस्य मेषस्याप्यालम्भनमिति प्रतिनिधिसमाश्रयणेन श्रुतिबाध: । वक्ष्यति च । "तत्र द्रव्यगुणाभावे प्रत्येकं स्याद्विकल्पनम् । श्रुतिप्राप्तो हि सम्बन्धो बलवान्वाक्यलक्षणा"दिति । यदि च वाक्यीय: सम्बन्धो बलवान्स्या(२)त्तदा ऽन्यतराभावे नालम्भनमनुष्ठीयेतेति । विध्यर्थ: श्रुति: । अत: श्रौतस्यैव सम्बन्धस्य वाक्याद्बलीयस्त्वादन्यतराभावे ऽपि श्रुतिप्रापितमालम्भनमनुष्ठितमिति न कश्चिच्छ्रुतिबाध: । तदेतत्प्रतिपादयितुमुक्तम् । सामर्थ्यप्रापितमित्यादि । निर्गुणस्य द्रव्यस्याभावाच्छ्वेतगुणयुक्तस्यालम्भनं क्रियासामर्थ्यप्रापितं श्रौतमेव व्यक्तार्थस्फुटीकरणाय श्वेतमालभेतेति श्वेतादि तत् संबध्यते । तत: किमित्याह । श्रुतिरित्यादि । ततश्च साक्षाद् द्रव्यगुणयो: श्रुतावनुषक्तो ऽभिसम्बन्ध: श्रुतिरेव तत्र लिङ्गवाक्ययोर्बाधिकेति न वाक्यीयसम्बधस्तत्र भवति ॥ ७५ ॥

श्रौतवाक्यीययोर्भेदमुपदर्शयितुमाह ॥

**अप्राप्तो यस्तु शुक्लादि: सन्निधानेन गम्यते ।**

---

(१) द्वितीयाश्रुत्येति पा० ३ ।

(२) बलवान्न स्यादिति पा० ३ ।

स यत्नप्रापितो वाक्ये श्रुतिधर्मविलक्षणः ॥ ७६ ॥

छागमालभेतेत्यत्र द्रव्यस्यैव साक्षात्सम्बन्धः शुक्लादिगुणस्य तु सन्निधानवशाद्वाक्यीयो यत्नप्रतिपाद्यः स वाक्ये यत्नादवगतः श्रुतिधर्मविलक्षणः साक्षात्सम्बन्धविलक्षण इति व्यक्तम् ॥ ७६ ॥

इदानीं प्रकृते योजयितुमाह ॥

अभिन्नमेव वाक्यं तु यद्यभिन्नार्थमिष्यते ।
तत्सर्वं श्रुतिभूतत्वान्न श्रुत्यैव विरोत्स्यते ॥ ७७ ॥

यदि पुनरभिन्नमखण्डमेव निरस्तपदविभागं वाक्यमभिन्नार्थं श्वेतगुणविशिष्टच्छागालम्भनरूपक एव नाना अर्थो यस्य तत्तथाभूतमभ्युपगम्यते । तदा कुत्रायं प्रविभागो ऽयं श्रौतो ऽयं वाक्यीय इति । ततश्च सर्वस्य (१) श्रौतत्वात्केन कस्य बाध इति न श्वेतगुणाभावे छागालम्भनं छागाभावे च श्वेतगुणयुक्तस्यान्यस्य स्यादिति श्वेतं छागमालभेतेत्यत्रान्यतराभावे आलम्भनानुपपत्तेर्विध्यर्थस्य संकोच इति ॥ ७७ ॥

अवान्तरवाक्यार्थानुपपत्तिमप्यत्रोपदर्शयितुमाह ॥

वाक्यानां समुदायश्च य एकार्थप्रसिद्धये ।
साकाङ्क्षावयवस्तत्र वाक्यार्थो ऽपि न विद्यते ॥ ७८ ॥

एकस्य मुख्यार्थस्य प्रसिद्धये यः प्रतीतये ऽयमवान्तरवाक्यानां समुदायः साकाङ्क्षावयवः साकाङ्क्षा अवयवा यस्मिन्समुदाये स तथाभूतो ऽभिजानासि देवदत्त काश्मीरेषु वत्स्याम इत्याद्यात्मको ऽत्रावयवार्थो ऽवान्तरवाक्यार्थात्मको न विद्यते कश्चित् । ततश्च युगपत्सकलवाक्यस्य ग्रहणं प्रतिपादनं वा न संभवतीति (२) सकलव्यवहा-

(१) सर्वत्रेति पा० २ ।
(२) वाऽसंभवीति पा० ३ ।

रोच्छेदः ॥ ७८ ॥

किं चामी पदार्थोपनिबन्धना वाक्येषु न्यायाः सकलशास्त्रीयलौकिकव्यवहारनिबन्धनभूताः पदपदार्थानङ्गीकरणे न प्रकल्पन्ते इत्याह ॥

प्रासङ्गिकमिदं कार्यमिदं तन्त्रेण लभ्यते ।
इदमावृत्तिभेदाभ्यामत्र बाधासमुच्चयौ ॥ ७९ ॥
ऊहो ऽस्मिन्विषये न्याय्यः सम्बन्धो ऽस्य न बाध्यते ।
सामान्यस्यातिदेशो ऽयं विशेषो ऽत्रातिदिश्यते ॥८०॥
अर्थित्वमत्र सामर्थ्य-
मस्मिन्नर्थो न विद्यते ।
शास्त्रात् प्राप्ताधिकारो ऽयं
व्युदासो ऽस्य क्रियान्तरे॥ ८१ ॥
इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभिः ।
क्रमोऽयमत्र बलवानस्मिंस्तु न विवक्षितः ॥ ८२ ॥
इदं पराङ्गैः सम्बन्ध(१)मङ्गानामप्रयोजकम् ।
प्रयोजकमिदं तेषामत्रेदं नान्तरीयकम् ॥ ८३ ॥
इदं प्रधानं शेषो ऽयं विनियोग(२)क्रमस्त्वयम् ।
साक्षादस्योपकारीदमिदमाराद्विशेषकम् ॥ ८४ ॥
शक्तिव्यापारभेदो ऽस्मिन्फलमत्र तु विद्यते ।
संबन्धाज्ज्ञातभेदो ऽयं भेदस्तत्रा(३)विवक्षितः ॥८५॥

---

(१) संबद्धमिति पा० २ ।
(२) यमिति योगेति पा० ३ ।
(३) स्तत्रेति पा० ३ ।

एतैव निर्णीतैर्वाक्यगोचरो ऽर्थात्मा यथावत्प्रत्यते निश्चीयतइत्येतानि मीमांसकैर्लक्षणानीत्युच्यन्ते। तत्र षड् द्वादश चतुर्विंशतिर्वेतानि लक्षणानि तावदिह प्रदर्श्यन्ते। एतेषां च वितत्य सोपपत्तिकं सनिदर्शनं स्वरूपं पदकाण्डे लक्षणसमुद्देशे विनिर्दिष्टमिति ग्रन्थकृतैव स्ववृत्तौ प्रतिपादितम्। आगमभ्रंशात्लेखकप्रमादादिना वा लक्षणसमुद्देशश्च पदकाण्डमध्ये न प्रसिद्धः। तत्र तावद् द्वादशलक्षणानि द्वादशस्वध्यायेषु सप्रपञ्चं प्रासङ्गिकविचारसहितानि निर्णीतानि। तथा च तत्र 'ऽथातो धर्मजिज्ञासे' त्युपक्रमात् को धर्मः किंलक्षणश्चेत्याद्याशङ्का(१)निरासार्थं [चोदनालक्षण इत्युक्ता प्रथमेनाध्यायेन] (२) चोदनालक्षणो निर्णीतः चोदनैव प्रमाणमित्युक्तम्। मतभेदेनापि विधिनियोगेत्यादिका अप्यन्यास्याः संज्ञा उपवर्णिताः। तत्रैव च स्वतः प्रामाण्यं व्यवस्थापितम्। तदनुरोधेन च प्रत्यक्षादीनामपि स्वत एव प्रामाण्यमुपपादितम्। चोदना च शब्दादिवैचित्र्याद्भिन्नरूपेति भेदप्रतिपादनायास्या एव द्वितीयो ऽध्यायः। भिन्नस्य च शेषशेषिभावेन विनियोगप्रतिपादनाय तृतीयो ऽध्यायः। विनियुक्तस्य प्रयोजकाप्रयोजकभावप्रतिपादनाय चतुर्थः। श्रुत्युच्चारणादिभिः क्रमेण विनियोग इति तदर्थं पञ्चमः। एतत्समग्रं यदर्थमसावर्थी समर्थः शास्त्रेणापर्युदस्तो ऽधिकारीति तत्प्रतिपादनाय षष्ठ इति। एवं विधिभेदशेषशेषिभावप्रयुक्तिक्रमाधिकारिणां प्रतिपादनायाध्यायाः षडिति षड्लक्षणानि। तत्र प्रकृतिषट्कमुपदेशषट्कमिति चोच्यते। तदनन्तरमनुक्तेतिकर्तव्यताकमपि कर्मान्यतो विध्यन्तमाप्नोति सामान्यातिदेशादिति प्रतिपादनाय सप्तमः। स्व विशेषसामर्थ्याद्विशेषा एवातिदिश्यन्तइति निरूपणायाष्टमः। अति-

(१) शङ्कयेति पा० २।

(२) [ ] एतन्मध्यस्थं २ पुस्तके नास्ति।

शेषप्राप्ते मन्त्रे प्रकृतिदेवता विकृतियागदेवतात्वेन विपरिणमयित-व्येत्यादिसमर्थनाय नवमः । सामान्यस्य विशेषेण बाधाभिधानाय दशमः । येन सकृदनुष्ठानादुभयसिद्धिस्तत्तन्त्रं तदर्थमेकादशः । यद-न्यदर्थमारब्धमन्यदप्येकेनैव प्रयत्नेन संभवलाघवाभ्यां सिध्यद्भवति तत्प्रासङ्गिकम् । तदुक्तये द्वादशो ऽध्याय इत्यनेनातिदेशषट्केन सह द्वादशलक्षणानि । एतत्प्रतिपक्षभूतान्यन्यानि द्वादश यथायोगमेते-ष्वेवाध्यायेषु दर्शितानि । तत्र प्रमाणस्य प्रतिपक्षासंभवः । न ह्यप्र-माणं प्रमाणस्थाने नियुज्याभिमतसंपत्तिर्भवति । भेदस्य तु शाखा-दिभेदभिन्नस्य तदभेदादभेदः प्रतिपक्षः । तत्र भेदस्य स्वरूपं निर्दिष्टं "शक्तिव्यापारभेदो ऽस्मिन् फलमत्र तु भिद्यते । संबधाज्जातभेदो ऽय"मिति । भेदस्तत्राविवक्षित इति तत्प्रतिपक्षः । तथा शेषशेषि-भावस्य गुणप्रधानभावाविवक्षा प्रतिपक्षः । सा प्रतीयमानत्वाच्च नोक्ता । तत्र शेषशेषिभावस्येदं प्रधानं शेषो ऽयमिति स्वरूपकथनं "विनियोगक्रमस्त्वयम् । साक्षादस्योपकारीदमिदमाराद्विशेषक" मित्यस्यैवेतिकर्त्तव्यतायाः प्रभेदस्य च निर्देशः । प्रयुक्तेरप्रयोजकः प्र-तिपक्षः । तत्रेदं पराङ्गैः संबद्धमङ्गानामप्रयोजकमित्यनेनैकफलतया प्रयोजकाप्रयोजकप्रदर्शनं कृतम् । "प्रयोजकमिदं तेषामवेदं नान्त-रीयक"मित्यनेन फलभेदेन प्रयोजकाप्रयोजकोपन्यासः । तदेवं प्रयु-क्तेर्विभेदायाः सापवादायाः स्वरूपं (१) निर्दिष्टमनेन श्लोकेनेति वि-ज्ञेयम् । क्रमस्याविवक्षा प्रतिपक्षः । अस्येयं श्रुत्या क्रमप्राप्तिरियमर्था-दर्थ्यादिभिरिति स्वरूपम् । क्रमो(२)यमत्र बलवानिति [तस्यैव ब-लाबलचिन्ता] (३) अस्मिंस्तु न विवक्षित इति प्रतिपक्षः । अधिकारि-

(१) स्वरूपमिति पा० २ ।

(२) स्वरूपक्रमार्थमिति पा० २ ।

(३) [ ] एतन्मध्यस्थं २ पुस्तके नास्ति ।

षः स्वरूपापवादौ "शास्त्रात्प्रामाधिकारो ऽयं व्युदासोस्य क्रियान्त-र" इति कृतौ । सामान्यातिदेशविशेषातिदेशयोस्त्वपवादविरहितं स्वरूपं निर्दिष्टं "सामान्यस्यातिदेशोयं विशेषोनातिदिश्यते" इति । ऊहस्य संबन्धाबाधो ऽपवादः । अस्य "ऊहोस्मिन्विषये न्याय्य" इति स्वरूपम् । संबन्धोस्य न बाध्यतइत्यपवादः । तुल्यबलानामविरोधात्समुच्चयो बाधस्यापवादः । तुल्यबलानामचरितार्थानां विरोधाद्विकल्पोपि बाधस्यापवादत्वेन दर्शितः । अत्र बाध(१)समुच्चयाविति बाधस्य स्वरूपमपवादश्चोक्तः । तन्त्रस्याप्यावृत्तिः प्रतिपक्षः ॥

तस्य इदं तन्त्रेण लभ्यतइतिस्वरूपम् । "इदमावृत्तिभेदाभ्या"मित्यनेन तन्त्रस्यावृत्तिः प्रतिपक्ष उक्तः । एकप्रयत्ननिर्वर्त्यमपीच्छावशाद्भेदेनेच्छतीति प्रासङ्गिकस्यापवादो भेदः । तत्र "प्रासङ्गिकमिदं कार्य"मिति प्रासङ्गिकस्वरूपनिर्देशः ॥

आवृत्तिभेदाभ्यामित्यस्माद्भेदः प्रासङ्गिकस्यापवादो योजनीयः ॥

यद्यपि परेषां चोदनैव प्रमाणं प्रसिद्धं तथापीह टीकाकारो न्यायमात्रस्य प्रमाणत्वमङ्गीकरोति । अतः प्रकृतशास्त्रव्याख्योपयोगि तत्तत्स्थाने न्यायजातं प्रसज्य प्रतिषेधोयमित्यादिना प्रदर्शयति । अत एव चोदनायामेव प्रमाणत्वस्याभावात्प्रथममेव लक्षणनिदर्शनं न कृतम् । सामान्येन वाक्यधर्म्माणां प्रासङ्गिकादीनां सापवादानामत्र निर्देशः कृत इत्यभिप्रायः ॥

एतदुक्तं भवति । पदपदार्थव्यवस्थापनाप्रस्तावे यो यः कश्चित्तद्व्यवस्थापने न्यायः प्रभवति स संकीर्त्तनीयः । तदत्र चोदनायाः कीदृशं प्राथम्यं प्राधान्यं वा तन्त्रप्रसङ्गौ तु सूत्रे कृताविति तत्पुरःसरत्वेनैव पदपदार्थावधानमिति । समुच्चयो विकल्प आवृत्तिश्चेत्येवमादिभिः सह द्वाविंशतिर्लक्षणानि भवन्ति । द्वे लक्षणे समुद्देशादूह्ये । अ-

---

(१) बाधा इति पा० २ ।

न वा सामान्यातिदेशस्य तदभाव एवापवादः । विशेषातिदेशस्य सामान्यातिदेश एव विशेषान्तरातिदेशो वेत्यनयोः सम्प्रतिपन्नत्वमाश्रित्य चतुर्विंशतिः संपद्यन्तइत्येवमनेन क्रमेणैतानि लक्षणानि । एतदेव मनसिकृत्य षड् द्वादश चतुर्विंशतिर्वा लक्षणानीत्युक्तम् । अथैषां निदर्शनार्थं लेशतः स्वरूपसहितान्युदाहरणानि टीकाकारेण प्रदर्शितानि । तत्र द्वयोरर्थिनोः कार्येण संभविना प्रयोजकत्वेन निर्ज्ञातसामर्थ्ययोर्यत्रान्यतरप्रयुक्तेनार्थेनापरो ऽभिसंबध्यमानः कृतार्थत्वात्पृथक्प्रयोजकत्वं नोपैति स प्रसङ्गः । तत्प्रयोजनकं प्रासङ्गिकम् । तद्यथा संघाताध्ययनम् । तत्र हि कं चिदेव शिष्यमुद्दिश्य प्रवृत्ते ऽध्यापने ऽभेदेनाध्यायनान्तरस्य प्रयोजने समर्थतरा अध्येतारः सत्यप्यर्थित्वे पृथगध्यापनं संभवाल्लाघवाच्च न प्रवर्त्तयन्ति (१) ॥

अत्राग्नीषोमीयपश्वर्थः प्रयाजानुयाजविध्यन्तः प्रसङ्गादग्नीषोमीयं पशुपुरोडाशमप्युपकरोति । शब्दानुशासनेपि यथा ॥

सर्वादीनि सर्वनामानीत्यत्र णत्वाभावं प्रासङ्गिकमुदाहरन्ति । तत्र हि संज्ञासंज्ञिसंबन्धविधानपरे वाक्ये रूपविशेषमात्रादकृतणत्वादुभयसाधनत्वं विज्ञायते । शक्यो ह्यस्य स्वरूपनिर्देशात्पृथग् णत्वप्रतिषेधो वक्तुमित्येकेनैव प्रयत्नेनोभयमत्र वर्त्तत इति । अथ तन्त्रम् । यत्रार्थिनः सर्वे प्रयोजकाभेदेनावृत्त्या वा योर्थः प्रतिपन्नव्यस्तमर्थमेकमेव सम्भवाल्लाघवाच्च प्रयोजयन्ति तत्तन्त्रम् । तद्यथा । शालायामेकं प्रदीपं (२) व्याकरणाध्यायिनः प्रयोजयन्ति । वेदे यथा । प्रधानभूता ये षड् यागा आग्नेयादयस्तदर्थं ये प्रयाजादयः ते (३) पूर्वं प-

---

(१) अपि त्वेकेनैव यत्नेन तदनुतिष्ठन्ति । वेदेपि यथा ऽग्नीषोमीयस्य वपया प्रचर्या ऽग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपन्ति । इत्यधिकं पु० २ ।

(२) एकप्रदीपमिति पा० ३ ।

(३) तदिति पा० ३ ।

शाखा कृताः सर्वेषां तन्त्रेण साधारण्येनोपकारका भवन्तीत्युच्यते। भाष्ये यथा भिन्नार्थयोस्तपरशब्दयोस्तपरस्तत्कालस्येति तन्त्रित्वोः सूत्रपाठादानं क्रियतइति। एवं च तत्र तत्र लक्षणेष्वपि (१) तन्त्रः लक्षणं प्रभवत्येवेति विज्ञेयम्। तद्यथा। संख्यासंज्ञायां रूपविशेषानुरोधात्तत्प्रदेशेषु तन्त्रेणैव युगपदुभयप्रतिपत्तिरिति। अथावृत्तिभेदयोस्तन्त्रप्रसङ्गप्रतियोगिनोर्निदर्शनमुच्यते। आवृत्तो तावत्तन्त्र(२) प्रतिपक्षभूतायां निदर्शनम्। यथा एकं वस्त्रमाभरणं वा रणभूमिषु भटानामुपयोगाय कल्प्यतइति। वेदे यथा सप्तदश सामिधेन्यो भवन्तीति। अनेकशब्ददर्शने सामिधेनीषु सप्तदशत्वमावृत्तिसंख्यानात्प्रकल्प्यते। यदुच्यते। त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाहेति। व्याकरणे यथा। संप्रसारणसंज्ञायां ज्ञापकपक्षानाश्रयणेन वर्णवाक्यविषयया आवृत्त्या कृत्स्नस्य भिन्नप्रतीयमानोपस्कारा प्रवृत्तिराख्यायते। यथा चैकशब्ददर्शने एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानादिति परिहार उच्यते। भेदस्य तन्त्रप्रतियोगिनोर्निदर्शनम्। यथा। भिन्नानि पात्राण्यसहभुजां भुजिक्रियायां भेदेनाधिकरणभावं प्रतिपद्यन्ते। वैदिकेपि विषये यथा। ग्रहं संमार्ष्टीत्यत्र यः संमार्गो ग्रहविषये चोदितः स भेदेनैव व्यवतिष्ठतइति। शास्त्रे यथा। न वेति विभाषेत्येतस्मिन् योगे प्रत्याख्यातउभयत्रविभाषाणां क्व चिद्विधिमुखेन क्व चित् प्रतिषेधमुखेन विभक्तानां विभक्तावृत्तिराश्रीयतइति। अथ बाधानिदर्शनं क्रियते। अर्थित्वात्सामान्योपदेशाद्वा सति प्रवृत्तिसंभवे दृष्टादृष्टार्थमप्राप्त्यनुमानमात्रं (३) यत्र सा बाधा। यथार्थित्वात्प्रवृत्ते सामान्येन भक्षणे अभक्ष्यो ग्राम्यकुक्कुट इति ग्राम्यकुक्कु-

(१) तत्तल्लक्षणेष्वपीति पा० ३।

(२) प्रसङ्गेति पा० ३।

(३) प्राप्त्यनुमानमिति पा० २।

टमवयवं घृतप्रतिघातार्थमर्पितमपातमनेन बाध्यत इति वैदिकमुदाहरणम् । लौकिकं यथा । ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र दधिदानमौत्सर्गिकं तक्रदानेन विशिष्टे विषये बाध्यत इति । शास्त्रे यथा । कर्मण्यणित्यस्याऽऽतो ऽनुपसर्गे क इति कप्रत्ययेन बाधेति । एषा च टीकाकृता स्ववृत्तौ सा च तुल्यबलेष्वसंभवादित्यादिना बहुप्रकारा दर्शिता । न चैयत्ता प्रकाराणामस्यास्तेनापि (१) तत्र दर्शिता । यस्मादुक्तम् । सेयमपरिमाणविकल्पा बाधा विस्तरेण बाधासमुद्देशे समर्थयिष्यत इति । अथ समुच्चयः । तुल्यबलानामविरोधिनां समुच्चयः । तद्यथा । देवदत्तं भोजय लवणेन सर्पिषा शाकेन चेति । वेदेपि । ब्राह्मणेभ्यः पाद्यमाचमनं च दीयतामिति । शास्त्रे ऽप्यविरोधात्फलभेदाच्च । प्रत्ययतत्तद्धितसंज्ञाः । प्रत्ययतद्धिततद्राजसंज्ञाश्चैकत्र समुच्चीयन्त इति । विकल्पोपि बाधाप्रतियोगी । स च तुल्यप्रमाणविशिष्टानां विरुद्धानां भवति । वेदे यथा । व्रीहिभिर्यजेत यवैर्यजेतेति । लोके दधितक्रे कौण्डिन्याय दीयेतामित्येकफलदधितक्रदानचोदने । शास्त्रे ऽपि । खुरुष्टचावित्यादि । विधिप्रतिषेधयोरपि तुल्यबलत्वे विरोधाद्विकल्पो भवत्येव । यथा । वेदे षोडशिनं गृह्णाति न गृह्णातीति । लौकिके ऽपि किंचिदस्य दीयतां न दीयतामिति । शास्त्रे ऽपि वावचनानर्थक्यं विधिनिषेधसामर्थ्यादुभयोः सिद्धत्वादिति । यथाप्रदर्शितं स्ववृत्तौ टीकाकारेण । विधिप्रतिषेधयोः सत्स्वपि तुल्यबलत्वे विरोधाद्विप्रतिषेधमाह । नासिकादिभ्यो विभाषया सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन । अयं विधिः स प्रतिषेधः विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः । अयमपि विधिर्न मुद्गानामिव कार्पासानां कृतः प्रतिषेधविष-

(१) उपलब्धपुस्तकद्वयएवमेव पाठः । परं तु प्रकाराणामस्यास्तेनापि सा नेति युक्ता पाठकल्पना ।

य एवारभ्यते । स यथैव बहुज्लक्षणं संयोगोपधलक्षणं च बाधते एवं विद्यमानपूर्वलक्षणमपि । तत्र पुरस्तादपवादा इति बाधकत्वे प्रतिषिद्धे विप्रतिषेधाद्बाधा व्यवस्थाप्यत इति ॥ ७६ ॥

अतः खल्वपि प्रकृतौ समर्थानां विकारे सामर्थ्याभावात्प्रकृतिरूपलिङ्गवचनान्तरोपादानेन क्रियते । तद्यथा । प्रकृतावग्नय इत्यग्निशब्दः समर्थो ऽङ्गारार्थो (१) दृष्टः । तत्र विकारे सूर्यायेत्यूहः । इत्येवमादिना निमित्तभेदेन बहुभेदो भवत्यूह इति वैदिकमुदाहरणम् । लोके ऽपि यथा देवदत्तस्योष्ट्राणि गृहाणि । श्राद्धो वैधवेय इत्यत्र षष्ठ्यन्तमपोह्य निमित्तवशात्प्रथमान्त (२) उच्यते । व्याकरणे ऽपि ऊहविषयत्वमापन्नाः सर्वे विभक्तिविपरिणामाः । तेषु हि योगान्तरे यया विभक्त्या सम्बद्धो यः शब्द उपलब्धस्तत्सम्बन्धत्यागेनैव विभक्त्यन्तरयोगं स प्रतिपद्यते । तद्यथा । उपदेशे ऽजनुनासिक इत् । इतो लोपः । भूवादयो धातवः । धातोरनुदात्तेतो ङित आत्मनेपदमिति । अथोहप्रतिपन्नभूतं सम्बन्धाबाधनमपि निदर्श्यते । यथा देवदत्तस्योष्ट्राणि गृहाणि युक्तं तान्यभिजातस्येति । अत्र यद्विभक्त्यन्तस्यैव श्रुतिः तथा वाक्यान्तरे ऽप्यभिसम्बन्ध इति । तथा बदरीसूक्ष्मकण्टका मधुरा वृक्षः । पञ्चाला जनपद इत्येवमादिषु सम्बन्धाबाधनं भवतीत्याहुः । वेदेपि यथा यजमानं दण्डेन दीक्षयति, अग्निर्दीक्षयति, मेखलया दीक्षयती,त्यत्र यजमानमित्यबाधितमेव सम्बध्यते । शास्त्रेपि बहुगणवतुडतिसंख्येति योगे विधीयमानसम्बन्धस्य स्वरूपपदार्थकस्य संख्याशब्दस्य श्रुतस्य योगान्तरे संज्ञिविशेषणत्वं विज्ञायते । ष्णान्ता संख्या षट्संज्ञा भवतीति । अथातिदेशनिर्देशः क्रियते । अन्यत्रान्यधर्मपरिप्रापणमतिदेशः । तस्य च द्वौ प्रकारौ

---

(१) गीतार्थ इति पा० ३ ।
(२) प्रथमान्तमिति पा० २ ।

सामान्यातिदेशो विशेषातिदेशश्चेति । सामान्यातिदेशो यथा । अन्यत्र रूढसम्बन्धा धर्मा निर्ज्ञातभेदेष्वर्थेषु प्रसिद्धेरनुमेयभेदसम्भवैः सम्बन्धिभिर्व्यपदिश्यन्ते । तद्यथा । ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्यत्र यावानर्थो ब्राह्मणशब्दं न (१) व्यभिचरति तावत्यर्थे यानि सम्बन्धानि कार्याणि तान्यत्यन्तमलब्धब्राह्मणव्यपदेशे क्षत्रिये ऽतिदिश्यन्ते । तथा गुरुवद्गुरुपुत्रे वर्त्तितव्यमिति । वेदे यथा । दर्शपूर्णमासवदन्येष्वपि यागेषु प्रचरितव्यमिति । शास्त्रे ऽपि । स्थानिवदादेशो ऽनल्विधाविति । अथ विशेषातिदेशः । निर्ज्ञातसामान्यकार्येषु ब्राह्मणादिषु पुनरतिदेशसामर्थ्याद्विशिष्टप्रकृतिगतकार्यातिदेशः । यथा (२) ब्राह्मणवदस्मिन् ब्राह्मणे वर्त्तितव्यमिति । अत्र ये ब्राह्मणे ब्राह्मणवदेव वर्त्तन्ते तान् प्रत्ययमेवंभूतो ऽतिदेशो विज्ञायते । येषां तु वृत्तसंभेदात्प्रसङ्गाद्वा व्यतिकरः तेषु नियम एव क्रियते । उक्तं च "सामान्यमात्रं शब्दार्थो विशेषा व्यभिचारिणः । सामर्थ्यमन्तरेणातो विशेषो नातिदिश्यत" इति । तत्र वेदे यथा । आग्नेयवत्सौर्य इत्यनेकदेवताकस्यैकदेवताकसंबन्ध्येव विध्यन्त इति । विध्यन्तमितिकर्त्तव्यतोच्यते । शास्त्रे रूपातिदेशादिभिः षड्भिः प्रकारैर्विशेषातिदेशः परिदृश्यते । तत्र रूपातिदेशो यथा । द्विर्वचने ऽचीत्यत्र हि धातुरूपमेवादेशस्यातिदिश्यते । ततश्च या क्त इत्यादीनामेव द्विर्वचनं भवति । यथा । ययतुश्चक्रतुरिति । निमित्तातिदेशो यथा । पूर्ववत्सन इति । अत्र पूर्वस्य यन्निमित्तमात्मनेपदे ङकारादि तदेव सनन्तस्यातिदिश्यतइति । तादात्म्यातिदेशो यथा । सुबामन्त्रिते पराङ्गवत् स्वरइति । सुबन्तमामन्त्रितस्य कृत्पांसूदकवत् तादात्म्यमापद्य तत्स्वरं लभतइति । शास्त्रातिदेशः कार्यातिदेशो वा

(१) शब्देनेति पा० २ ।
(२) यथेति २ पु० नास्ति ।

यथा । कर्मवत्कर्मणा तुल्यक्रिय इति । अत्र हि शास्त्रातिदेशे यकः श्यपा बाधनं स्यादिति यग्विधौ कर्मकर्त्तर्युपसंख्यानमारभ्यते । विप्रतिषेधाद्धि श्यपो बलीयस्त्वमिति । कार्यातिदेशे तु कर्मवत्कर्मणेत्यनेनैव यग्विधीयतइति यक एव परत्वात्कार्यस्य श्यपा बाधेति नोपसंख्यानारम्भः । व्यपदेशातिदेशस्तु व्याकरणे नैव सम्भवति । संज्ञापक्षादविशेषाद्व्याकरणवैफल्यप्रसङ्गाच्चेति ॥ ८० ॥

अथाधिकारस्य निदर्शनम् । अर्थित्वं सामर्थ्यं शास्त्रापर्युदासश्चेत्यमधिकारः स विद्यते यस्यासावधिकारी । अर्थित्वमधिकारकारणम् । परं हि पुरुषार्थमपवर्गमासादयते । अस्मादप्यर्थी प्रमाद्यति कश्चिदिति सत्येवार्थित्वे सामर्थ्यमधिकारकारणम् । उत्पन्नायामपि ह्यभिनयन(१)दिदृक्षायामन्धो दर्शने नाधिक्रियते । अर्थिनः खल्वपि सामर्थ्याभावः केषु चित्कर्मसु शास्त्रेण पर्युदासात् । यथा शूद्रास्त्र्यां नाधिक्रियन्ते । अदृष्टार्थविशेषे हि सामर्थ्यासामर्थ्ये शास्त्रादेव समधिगम्येते । तस्मात् प्रधानमधिकारकारणं शास्त्रोपदेशमासादयते । तत्र लोके यथा । अद्यप्रभृति त्वमत्र ग्रामे नगरे वा ऽधिकृत इति राजा नियुङ्क्ते । वेदे यथा 'ऽग्निहोत्रं जुहुयात्स्वर्गकामो [ब्राह्मण' इत्यत्र] (२) ब्राह्मणस्यार्थित्वादिभिरधिकार इति । शास्त्रस्य तु शब्दार्थपुरुषधर्मेष्वधिकारः । तत्र षोढा शब्दः । साधुरसाधुश्च । साधुरपि शास्त्रीयः प्रायोगिकश्च । शास्त्रीयो ऽपि त्रेधा प्रतिपाद्यः प्रतिपादक उभयरूपश्च । तत्र प्रतिपाद्यो यथा । दाधत्यादिर्निपात्यमानः । प्रति पादको यथा । प्रकृतिप्रत्ययादिः । तेन हि कुम्भकारादिः प्रयोगस्थः प्रतिपाद्यते । उभयरूपो यथा । इतव्यशब्दः । स हि तव्यशब्देन प्रतिपाद्यते । प्रयोगस्थं च स इतव्यशब्दं प्रतिपादयति । प्रायोगिकश्च

(१) अभिनये इति पा० २ ।
(२) [ ] एतन्मध्यस्थं २ पुस्तके नास्ति ।

लौकिकवैदिकभेदेन द्विधेत्येवमसाधुना सह प्रोक्ता शब्दः । तेषु मध्ये प्रतिपाद्येषु व्याकरणशास्त्रस्याधिकारः । न प्रकृत्यादिषु । न हि ते व्याकरणेन व्युत्पद्यन्त इति । अर्थो ऽष्टादशधा । तत्र वस्तुमात्रमभिधेयञ्च । अभिधेयो ऽपि द्विधा । शास्त्रीयो लौकिकश्च, पुनरपि विशिष्टावग्रहसंप्रत्ययहेतुस्तद्विपरीतश्च, मुख्यः परिकल्पितरूपविपर्यासश्च, व्यपदेश्यो ऽव्यपदेश्यश्च, सत्त्वभावमापन्नो ऽसत्त्वभूतश्च, स्थिरलक्षणो विवक्षाप्रापितसंनिधानश्च, अभिधीयमानः प्रतिपाद्यमानश्च, अभिसंहितो नान्तरीयकश्चेति । तत्र वस्तुमात्रं बाह्यार्थो यो वक्तुं प्रतिपादयितुं न समीहितः । यस्तु समीहितो ऽसावभिधेयः । तत्रैव च शब्दस्याधिकारः । स च द्विधा शास्त्रीयलौकिकभेदेन । तत्र शास्त्रीय आवापोद्वारिकः । लौकिकस्त्वखण्डः । लौकिके चार्थे शब्दस्याधिकारो न शास्त्रीये । शास्त्रीयो हि पौरुषेयः परिकल्पितः । एवमतथाभूतोपि शब्दसाधुत्वस्य निमित्तभावेन प्रतिपादको विज्ञायते । अतश्च तस्य व्यभिचारे ऽप्यव्यभिचार एव स्मर्तृणाम् । स चा, नियतावधि बहुधा प्रविभज्यते व्याख्यातृभिः । विशिष्टावग्रहसंप्रत्ययहेतुर्यथा । कंसं घातयति । बलिं बन्धयतीति । अत्र ह्यर्थो न तथाभूतो ऽपि तु विशिष्टाकारेणैव सम्प्रत्ययेन गोचरीकृतो व्यवहारविषयतामनुपतति । तद्विपरीतो यो बहिरेव तथा व्यवस्थितः । यथा गौः शुक्ल इत्यादि । मुख्यो (१) यथा सास्नादिमान् गौरिति । परिकल्पितो निमित्तवशेन रूपविपर्यासो यस्यासौ परिकल्पितनिमित्तरूपविपर्यासो गौणो ऽर्थ उच्यते । यथा गौर्वाहीक इति । व्यपदेश्य आवापोद्वारिक एव जातिर्वा द्रव्यं वेत्येवमुक्त इति । अव्यपदेश्यस्त्वखण्ड एव वाक्यार्थलक्षण इति । सत्त्वभावमापन्नो व्यपदेश्य एवावापोद्वारिकसंज्ञकः । असत्त्वभूतो वाक्यार्थलक्षण एव । उक्तिभेदादे-

(१) मुख्ये इति पा० २ ।

अत्र प्रायशो भेदकथनम् । स्थिरलक्षणो यथा । राजपुरुष इत्यत्र राजसम्बन्धित्वं पुरुषस्य तद्धि न व्यभिचरति । विवक्षाप्रापितसन्निधानो यथा । राज्ञः पुरुषस्येति । अत्र हि सम्बन्धित्वं व्यभिचरति । विशेषणविशेष्ययोर्यथेष्टत्वात् । अभिधीयमानो यथा । राजसख इत्यत्र राज्ञः सखा ऽयमित्यर्थोऽभिधीयते । तस्मिंस्त्वभिधीयमाने राजा सखा ऽस्येत्ययमर्थः प्रतीयमान एव । अभिसंहितो यथा । गोशब्दे जातिर्द्रव्यं वेति । नान्तरीयको यथा तत्रैव वर्णसंस्थानादिः । इत्येवमभिधेयभेदा उपदर्शनीयाः । पुरुषधर्मा वक्तृत्वप्रतिपत्तृत्वप्रभृतयः । तत्र वक्तृधर्मा आबाधः । असूयासंमतिकोपकुत्सनभर्त्सनादयश्चेति । प्रतिपत्तृधर्मास्तु कुत्स्यमानत्वप्रभृतय एव । तत्र (१) शास्त्रस्य प्लुतद्विर्वचनादिविधायकत्वेनाधिकार इति । अत्र च य एव धर्माः शब्दानां शास्त्रस्य वा ऽनधिकारविषयत्वेनोक्तास्तानेवापेक्ष्योच्यते । व्युदासो ऽस्य क्रियान्तर इति ॥ ८१ ॥

अथ क्रमस्य निदर्शनम् । "इयं श्रुत्या क्रमप्राप्तिरियमुच्चारणादिभि" रिति । श्रुत्यादिभेदेनायं क्रमो नैकप्रकारः । तथा च । श्रुतिक्रमो ऽर्थक्रमः पाठक्रमः काण्डक्रमः प्रवृत्तिक्रमः प्रतिपत्तिक्रमः प्रयोगक्रमो बुद्धिक्रमश्चेति । तत्र श्रुतिक्रमो यथा । स्नात्वा व्रजतीति । अत्र क्त्वाप्रत्ययेनैव श्रुत्या क्रम उक्तः । वेदे यथा । हृदयस्याग्रे ऽवद्यत्यथ जिह्वाया इत्यत्र श्रुत्यैवाग्रेऽथशब्दाभ्यां क्रम उक्तः । शास्त्रे ऽपि च परस्मैपदानां णलतुसित्यादौ यथासंख्यमनुदेशः समानामिति श्रुत्यैव क्रमः । अर्थः सामर्थ्यं तन्निमित्तः क्रमो ऽर्थक्रमो यथा । भुक्त्वा स्नात्वा व्रजतीत्यत्र स्नानादीनामन्यथाशब्दोपात्तानामप्यर्थस्वरूपपर्यालोचनया स्नानादिक्रमो लक्ष्यते । वेदे यथा । अग्निहोत्रं जुहोति यवागूं श्रपयतीत्यत्र श्रपणं पश्चाद्विनिर्दिष्टमपि पूर्वमनु-

(१) तत्रेति २ पुस्तके नास्ति ।

हीयते ततो ऽग्निहोत्रमित्यर्थक्रमः । शास्त्रे ऽपि गुणकर्मणि लादिविधिरित्युक्तम् । तथा हि गां दोग्धि पय इत्यत्र गवा कर्मणा पूर्वं दुहेर्योगस्ततः पयसः । न ह्यनुपादाय गां कश्चित्पय आदातुमर्हति । तस्मादत्र गोपयसोर्दुहिना क्रमेण सम्बन्धः सोऽर्थसामर्थ्यादुपजायते । तस्मात्सत्यपि प्रधाने पयसि दुहेर्गवैव पूर्वं सम्बन्ध इति तत्रैव लादयोऽन्तरङ्गत्वादुत्पद्यन्ते गौर्दुग्धा सुदोहा गौरिति । उच्चारणक्रम एव पाठक्रमो यथा । "इन्दुस्वर्णेणमातङ्गपुंस्कोकिलकलापिनः । वक्त्रकान्तीक्षणगतिस्वरकेशैस्त्वया जिता" इत्यत्र यथापठितानां यथापठितैरेव सम्बन्ध इति । वेदे यथा । समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजती, त्येवमात्मकेषु प्रयाजेषु यथापाठमेव क्रमेणानुष्ठानम् । शास्त्रे यथा । विप्रतिषेधे परं कार्यं पूर्वत्रासिद्धमिति च । अत्र हि शास्त्रपाठमेवापेक्ष्येदं पूर्वमिदं परमिति व्यवस्थाप्यते । काण्डक्रमो यथा । येनैव क्रमेण ब्राह्मणक्षत्रियविशां वर्णसमाचारप्रतिपादकानि प्रकरणान्युद्दिष्टानि तेनैवाभिधीयन्तइति । वेदे तु कुत्र चिज्ज्ञाते कर्मणि येनैव कण्डिकाक्रमेण कर्माणि चोद्यन्ते तेनैव क्रमेण प्रवर्त्तन्ते । यथा याज्यानुवाक्यावामाग्नेयादीनां च । अत्र येनैव क्रमेण याज्यानुवाक्यानां सन्निवेशः तेनैव क्रमेणाग्नेयादीनां संनिवेशात्काण्डक्रमेण सम्बन्धः । शास्त्रे यथा । द्विर्वचनकाण्डात्सम्प्रसारणकाण्डमिति । तदेव विप्रतिषेधे सति पूर्वं भवतीति । प्रवृत्तिक्रमो यथा । येन (१) क्रमेण ब्राह्मणाः समानाः प्रविशन्ति तेनैव क्रमेण यथास्वं चोदितं कार्यं प्रतिलभन्तइति । वेदे यथा । सप्तदश प्राजापत्यान् पशूना(२)लभेतेत्यत्र सप्तदशानामजानां प्रोक्षणविशसनपर्यग्निकरणानि क्रमेण चोदि-

---

(१) येनैवेति पा० ३ ।

(२) तूपरानिति पा० २ ।

तानि। अनुष्ठातुः पुनरिच्छावशात्तेषु प्रवर्त्तमानस्य यत एवारभ्य पश्चोस्तेनानुष्ठाता तेषामाद्यस्यानुष्ठानमारब्धं तेनैव प्रवृत्तिक्रमेण पुनरपरयोरप्यनुष्ठानं विधत्त इति सो ऽयं प्रतिपत्तुरिच्छावशात् प्रवृत्तः क्रमः प्रवृत्तिक्रम इत्युच्यते। शास्त्रे यथा। भाष्यउक्तं यथैवानुपूर्व्या ऽर्थानां प्रादुर्भावः। तथैव (१) शब्दानामपि। यथा पट्व्या मृद्व्येत्यत्र प्रथमं लिङ्गसंबन्धात् प्रत्यय उत्पद्यते तदनु कर्मसंख्यादिसम्बन्धादेकवचनमुत्पद्यते। तथैव च यणादेशादि कार्यं तेनैव क्रमेण प्रवर्त्तत इति। प्रतिपत्तिक्रमो यथा। लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यत्र यद्यपि प्रयोगे पूर्वमडागम उच्चार्यते तथापि वयं विधिवाक्यार्थं प्रतिपद्यमाना लुङादीन् प्रतिपद्यामहे पश्चादडागममिति शास्त्रीयमुदाहरणम्। लोके यथा। पुरुषो राज्ञ इत्युक्ते ऽप्युच्चारणक्रममतिक्रम्य राजार्थव्यवच्छेदेनैव पुरुषस्य प्रतिपत्तिः। वेदे यथा। प्रधानयागाः पूर्वमुक्ता अप्यवान्तरयागनिर्वर्त्तनानुसारेणैव प्रतिपत्तिमुपारोहन्ति। यथा दीक्षणीयादीनां सोमस्य च। अत्र हि सोमयागस्य प्रधानस्य पूर्वं बुद्ध्युपारोहे ऽपि दीक्षणीयादियागनिर्वर्त्तनपूर्वकमेव सोमप्रतिपत्तिः। प्रयोगक्रमस्तु यथा। डुक्रञित्यादौ यया ऽऽनुपूर्व्या अनुबन्धाः प्रयुक्तास्तयैवेत्संज्ञां लभन्त इति शास्त्रीयमुदाहरणम्। वेदे यथा। दर्शपूर्णमासाभ्यामिष्ट्वा ऽन्येन यजेतेत्यत्र दर्शपूर्णमासयागपूर्वकमन्यानुष्ठानं विज्ञेयम्। बुद्धिक्रमो यथा। शास्त्रे वर्णानामिको यणचीत्यादौ बुद्ध्या पौर्वापर्यं कल्प्यते। तथा च पौर्वापर्यमकालव्यपेतं संहिता चेत् पूर्वपराभावादसंहितम्। एकवर्णवर्त्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानामित्याशङ्क्योक्तं भाष्यकारेण। बुद्धौ कृत्वा सर्वाश्चेष्टाः वक्ता धीरस्तन्वनीतिः। शब्दानर्थान्वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम् इति। शास्त्रे बुद्धिक्रमः। लोके ऽपि विद्युतः क्रमेण प्रवृत्ताः

(१) तथैवेति पा० २।

बुद्धौ संकलयति। वेदे प्रयाजादीनामुत्पन्नप्रध्वंसिनां बुद्धैव संकलन मिति बौद्ध: क्रम: । सर्व एव वा बौद्ध: क्रमो न वस्तुसमुत्थ इति । य दाहु: । प्रतिपत्तिक्रमो न वस्तुसमुत्थ इति। अथ एषां क्रमाणां बला बलचिन्तां करोति। "क्रमो ऽयमन्न बलवानि"ति । यथा वेदे । प्रथमं भोजयितव्यस्ततोभ्यञ्जनमिति । अथ क्रमप्रतियोगिनं दर्शयितुमा ह । "अस्मिंस्तु न विवक्षित" इति । क्रम इति प्रकृतम् । अविवक्षा क्रमस्य प्रतिपक्ष: । तद्यथा वेदे ऽनुष्ठातॄणां क्रमाविवक्षा निमित्तव शाद्दृश्यते । लोके प्रतिपत्तॄणामपि दृश्यते । शास्त्रे यथोक्तं वार्त्तिककृ ता । अतिप्रसङ्गे गुणवृद्धिप्रतिषेधे क्ङितीत्यादि ॥ ८२ ॥

अथ प्रयोजकाप्रयोजके निदर्श्येते । "इदं पराङ्गै: संबद्धमङ्गाना मप्रयोजकम् । प्रयोजकमिदं तेषामन्येदं नान्तरीयक"मिति । तत्र राजा छत्रच्छायाया: प्रयोजक: हस्त्यादयस्तदाधारा अप्रयोजका अपि छत्रच्छायया संबध्यमाना: प्रयोजका उच्यन्तइत्येकफलतया प्रयोजकभाव: फलभेदेप्यूह्यमुदाहरणमिति लोके वेदशास्त्रयोरप्यू ह्यम् ॥ ८३ ॥

अथ शेषिशेषौ दर्शयितुमाह । "इदं प्रधानं शेषोयमि"ति । वेदे यथा व्रीहीनवहन्तीति व्रीहय: शेषि, अवघात: शेषस्तदर्थत्वात् । लोकशास्त्रयोरूह्यमुदाहरणम् ॥

अस्यैव शेषिशेषभावस्येतिकर्त्तव्यतां प्रदर्शयितुमाह । "विनियोग क्रमस्त्वयमि"ति । तदेवं गुणप्रधानभावस्य परिकरबन्धसहितस्योप दर्शनं कृत्वा तत्रैवावान्तरभेदमाह । "साक्षादस्योपकारीदमिदमा राद्विशेषकमि"ति । तत्र लोके साक्षादुपकारकं यथा स्वात्मन्यलंका रादि । आराच्च(१)तदेव पुत्रदारादिषु । शास्त्रेपि साक्षादुपकारकं प्रत्ययस्य प्रकृत्यादि । यत्तु प्रकृत्यादेर्विशेषणं तदारादुपकारकम् ।

(१) आरात्तदेवेति पा० २ ।

यथा एरजित्यादाविवर्षामस्त्वादि धातोर्विशेषणम् । कर्तृविशेषणं च पञ्चादीति । वेदेप्यवघातादि दर्शपूर्णमासयोः साक्षादङ्गं प्रयाजादिकं त्वारा(१)दुपकारकम् ॥ ८४ ॥

इत्येवं सप्रभेदं सपरिकरग्रन्थं शेषशेषिभावमुपदर्श्येदानीं भेदं प्रदर्शयितुमाह । "शक्तिव्यापारभेदोस्मिन्नि"ति । शक्तिव्यापारभेदाश्रयणेन बहुविधो भेदो लक्ष्यते । तत्र लोके बलाहकाद्विद्योतते बलाहके विद्योतते बलाहको विद्योतत इत्यत्र बलाहकस्यापादानाधिकरणकर्तृशक्तीनां भेदः । शास्त्रे चात्रैव विवक्षावशात् व्यापारभेदश्चेत्येवं शक्तिव्यापारभेदः । शक्तिभेदमात्रं न तु व्यापारभेदः यथा । धनुषा विध्यतीति । अत्र हि गर्भीकृतापादानशक्तिः करणशक्तिर्विध्यत्यर्थाभेदेन व्याप्रियते । न ह्यन्यथाश्रितापादानशक्तिधनुषः (२) करणत्वं संभवति । अत एवात्र सञ्ज्ञयोर्विप्रतिषेधो वर्ण्यते । व्यापारभेदस्तु शुद्धो न संभवति । शक्तिभेदमन्तरेण व्यापारभेदस्यासंभवात् ॥

अथ फलभेदेन भेदमाह । "फलमत्र तु भिद्यत"इति । यथैकस्य दानस्यायुरारोग्यैश्वर्याणि भिन्नानि फलानि । अन्ये त्वायुष्यप्रभृतिषु सत्सु प्रीतिविशेषमेवैकं फलमाहुः । तथा बह्वीनां क्रियाणामेकं फलं यथा व्यवहारदर्शने प्रजानामेको निर्णयः । यथा वक्ष्यति "भिन्नव्यापाररूपाणां व्यवहारादिदर्शने । कर्तृणां दर्शनं भिन्नं संभूयार्थस्य साधक"मिति ॥

प्रकारान्तरेणापि भेदं दर्शयितुमाह । "संबन्धाज्ज्ञातभेदोयमि"ति । यथा ऽऽख्यातेषु धातूपात्तायाः क्रियायाः प्रत्ययवाच्यकर्तृभेदे सति सम्बन्धात् (३)क्रियाया अपि भेदः प्रतीयते । पचतः पचन्तीति ।

---

(१) चारादिति पा० ३ ।

(२) धनुषेति पा० २ ।

(३) संबन्धादिति २ पु० नास्ति ।

यथोक्तं साधनभेदात्तिक्त्तु फलाभावात्फलं भवत्येवात्रबोधचेत्साधने-भ्यः प्रसिद्धो ऽसाविति ॥

इदानीमस्यैव प्रतिपक्षभूतमभेदं दर्शयितुमाह । "भेदस्त्वत्राविवक्षित" इति । अत्र शक्तिभेदो यथा । समानकर्तृकयोरित्यत्र पक्त्वौदनं भुङ्क्त इति कर्तृकर्मणोः क्रियाभेदेन प्राप्तः शक्तिभेदो वक्त्रा न विवक्षितः । तथा च सत्यत्र समानकर्तृकत्वमुपपन्नं भवति । व्यापाराभेदः प्रागेव दर्शितो धनुषा विध्यतीत्यत्र फलाभेदोपि पूर्वमुक्त एव । यथा दानस्यैका प्रीतिः फलमिति के चिदिति । संबन्धाज्जातभेदत्वस्य प्रतिपक्षो यत्र न संबन्धभेदाज्जातभेदत्वम् । यथा ऽऽस्यते देवदत्तेनेत्यत्र भावे लकार उत्पन्नः साधनभेदानुपादानात् क्रियाभेदमपि गमयितुं न शक्नोति । देवदत्तेनेत्यस्मात्तत्प्रतीतिरिति चेदेकपदापेक्षयैतदुक्तमस्माभिरित्यदोषः । तदेवं शक्त्यादिभेदेन बहुविधो ऽयं भेद इति लक्ष्यैः स्वयमेवोत्प्रेक्ष्यः । तथा तत्प्रतिपक्षभूतस्तद्वदभेदोपि बहुविध एव विज्ञेयः । अनयोश्च भेदाभेदयोः क्व चिद्वास्तवत्वं क्व चिद्विवक्षामात्रशरणत्वम् । विवक्षापि क्व चिल्लौकिकी । क्व चिच्छास्त्रीयेत्येतदप्यत्रानुसर्त्तव्यमिति । वेदेपि भेदव्यवहारो दृश्यते । यजते (१) ददाति जुहोतीत्यादौ यागदानहोमरूपादनुबन्धभेदादपूर्वस्य भेदः । अभेदोपि यथा । षण्णामप्याग्नेयादियागानामेकस्मिन्नेवापूर्वे साध्ये ऐक्यमिष्यतइति । एवं षड् द्वादश चतुर्विंशतिश्च लक्षणानि प्राक्तनानि वैकृतानि च सप्रतिपक्षाणि दर्शितानि ॥ ८५ ॥

इदानीं षड्द्वादशचतुर्विंशतिव्यतिरिक्ता अप्यमी बहुप्रकारा न्यायाः पदार्थनिश्चयहेतवः सन्तीति प्रौढवादितया टीकाकारः प्रदर्शयितुमाह ॥

प्रसज्य प्रतिषेधोयं पर्युदासो ऽयमत्र तु ।

(१) यजतीति २ पु० पा० ।

इदं गौणमिदं मुख्यं व्यापीदं गुण लब्धिदम् ॥ ८६ ॥
भेदेनाङ्गाङ्गिभावोस्य वङ्गभेदं विकल्पते ।
इदं नियम्यते ऽस्यात्र योग्यत्वमुपजायते ॥ ८७ ॥
अस्य वाक्यान्तरे दृष्टाल्लिङ्गाद्भेदोनुमीयते ।
अयं शब्दादपोद्धृत्य पदार्थः प्रविभज्यते ॥ ८८ ॥
इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः ।
सर्वे ते न प्रकल्प्येरन्पदं चेत्स्यादवाचकम् ॥ ८९ ॥

तत्र "प्रसज्य प्रतिषेधोयमि"ति । यत्र क्रियापदेन नञः संबन्धो वाक्यभेदश्च । शास्त्रे यथा । अकर्त्तरि च कारकइति । वेदे यथा । ब्राह्मणो न हन्तव्यः । नानृतं वदेदित्यादि । लोके यथा । असूर्यंपश्या राजदारा इति । "पर्युदासोयमत्र लि"ति । पर्युदासः (१) खलु प्रसज्य प्रतिषेधविपरीतस्तत्र ख्यातेनैव नञः संबन्धः एकवाक्यता च । उक्तं च । "नामधात्वर्थयोगेन (२) नैव नञ् प्रतिषेधक" इति । तत्र शास्त्रे यथा । आतो ऽनुपसर्गे क इति । वेदे यथा । अब्राह्मणः सोमविक्रयीत्यत्र जातिमात्रानुगमेन ब्राह्मणसदृशस्य कस्य चिदेव प्रतिपत्तिः । यथा च नोद्यन्तमादित्यमीक्षेतेत्येवमादि स्मार्त्तमुदाहरणमदूरविप्रकर्षादित्र वैदिकमेव । लोके यथा । अब्राह्मणमानयेति । "इदं गौणमि"ति । शास्त्रे यथा । तत्पुरुषः समानाधिकरण इति । अत्रावयवानां समानाधिकरणत्वात्तत्पुरुषस्यापि समानाधिकरणत्वम् । वेदे यथा । आदित्यो यूपः यजमानः प्रस्तर इति । अत्र गुणावाकचक्यादेर्यूपादिरादित्यादिरित्युच्यते । लोके च सिंहो माणवकः गङ्गायां घोष इत्यादि । "इदं मुख्यमि"ति । अत्र शास्त्रे यथा । धा-

(१) पर्युदासश्चेति २ पु० पा० ।
(२) योगी तु इति २ पु० पा० ।

तोः प्रातिपदिकादित्यादावभिधेयस्य मुख्यत्वम् । वेदे यथा । यजमानोध्वर्युमन्वालभतइत्यत्राध्वर्युयजमानौ मुख्यावेव । लोके यथा शूरो माणवक इति । "व्यापीदम्भि"ति । शास्त्रे यथा । एकश्रुति दूरात्संबुद्धाविति तत्र हि लौकिक्याः संबुद्धेर्ग्रहणं व्यापित्वात् । तद्ग्रहणे हि शास्त्रीयापि संबुद्धिः परिगृहीता भवति । वक्ष्यति च "विषयं कृत्रिमस्यापि लौकिकः क्व चिदुच्चरन् । व्याप्नोति दूरात्संबुद्धौ तथा च ग्रहणं द्वयोरि"ति । यावत्तु चोभयानुग्रहस्तत्र सर्वमनुगन्तव्यं व्यापित्वेनेति । वेदेपि सर्वे प्रधानयागविषयाः ज्योतिष्टोमेनेत्याद्यधिकारविधयः । लोकेपि यथा । कया चिदितिकर्त्तव्यतया सन्निहत्याममरसिंधुस्नानम् । यदुच्यते । "उपोष्य रजनीमेकां सन्निहत्यां नरोत्तमः । सौर्ये तमसि गङ्गायां चान्द्रे चापि विमुच्यत"इति । अत्र सकृदेव स्नानात्त्रैलोक्याभ्यन्तरगतसर्वतीर्थस्नानमिति व्याप्युदाहरणं प्रसङ्गादुक्तम् । "गुरु लध्विदम्भि"ति । तत्र शास्त्रे यथा । पृषोदरादीनि यथोपदिष्टमिति शिष्टप्रसिद्धसाधुशब्दौघप्रतिपादने लघुरुपायः । स एव तु प्रातिपादिकादनभिहितकर्मादिगतैकत्वादौ स्वादय इत्यादिना गुरुरुपायः । (१) लोकेपि लोहितशालिमानयं ग्राम इत्यादिवचनव्यक्तिषु कर्मधारयमत्वर्थीययोरेकत्र क्रियमाणयोः गुरुक्रम उपजायते लघुत्वं तु प्रक्रमस्य बहुव्रीहि(२)स्तत्रेति । वेदे तु गुरुलाघवव्यवहारस्तन्त्रप्रसङ्गावृत्तिषु । तत्रावृत्तौ गुरुः प्रक्रमो (३) यथा । त्रिः प्रथमामन्वाह त्रिरुत्तमामिति । तन्त्रप्रसङ्गयोस्तु लाघवव्यवहारो यथा निदर्शितं प्रागिति । "भेदेनाङ्गाङ्गिभावोस्ये"ति । यथा शास्त्रे । संयुक्तविधानेषु तस्यापत्यं कर्त्तरि कृदित्यादि । वेदे यथा । एकस्यैवा-

(१) उपाय इति २ पु० नास्ति ।

(२) बहुव्रीहिरिति २ पु० पा० ।

(३) क्रम इति २ पु० पा० ।

यथव: संबध्यमानो व्यवहितैरपि वाक्यान्तरैः संबन्धमुपयाति । यथा। अच्छिद्रेणेत्यादिभिस्त्वत्यादिभिरिति। पूर्वमेकैकस्यैवाङ्गाङ्गिभाव इदानीं बहूनामङ्गिनां यथाप्रदर्शितमेकमङ्गमिति पुनरस्योपादानं लोकेपि ॥

मणिः शाणोल्लीढः शरदि सरितः श्यानपुलिनाः
कलाशेषश्चन्द्रः सुरतमृदिता बालललनाः ।
मदक्षीणो नागः समरविजयी हेतिनिहत-
स्तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः ॥

इत्यादिदीपकालंकारेष्वेकस्या एव क्रियाया बहुभिर्वाक्यैः संबन्ध इति । बहुभेदं विकल्प्यतइति । तत्र शास्त्रे । क्व चित्प्राप्तविकल्पः । क्व चिदप्राप्तविकल्पः । क्व चिदुभयविकल्पः । वेदे यथा । यत्किंचित् प्रागग्नीषोमीयात्तत्सर्वमुपांशु कर्त्तव्यमित्यत्रोपांशुस्वरे प्राप्ते दीक्षणीयायां यथेष्टमुच्चैः स्वरविधानमित्यादि । लोके यथा । किं तारुण्यतरोरियमित्यादौ महाकविभिरुत्प्रेक्षिता विकल्पाः । "इदं नियम्यत"-इति । शास्त्रे यथा । पतिः समासएव ते प्राग्धातोरित्यादि । वेदे यथा । नक्षत्रं दृष्ट्वा वाचं विसृजेदिति । अत्र नियतएव काले वाग्विसर्गो नियमितः । लोकेपि यथा । पार्थ एव धनुर्द्धर इत्यत्र धानुष्कत्वं पार्थे नियम्यते । "अस्यात्र योग्यत्वमुपजायत"इति । यथा शास्त्रे । उः स्थाने ऽणः प्रसज्यमानस्यैव रपरत्वं प्रति योग्यत्वमुपजायतइति । यथा वा पदएकस्मिन्नुदात्ते स्वरिते वा क्रियमाणे वर्ज्यमानशेषस्य निघाते योग्यत्वमुपजायते। वेदे यथा । ज्योतिष्टोमेन यजेतेत्यत्र त्रैवर्णिकस्यैव योग्यत्वम् । लोके यथोच्यते धुरि धुर्यो नियुज्यतइति । यो यः कश्चिदर्थी समर्थः शास्त्रेणापर्युदस्तः स योग्य इत्युच्यते ॥ ८७ ॥

"अस्य वाक्यान्तरे दृष्टाल्लिङ्गाद्भेदः प्रतीयत"इति । शास्त्रे यथा । ओः पुयण्ज्यपर इति वचनाल्लोपे कृते स्थानिवद्भवतीति। वेदे यथा ।

अक्ताः शर्करा उपदधाति इत्यत्र केनाक्ता इत्याकाङ्क्षायां तेजो वै घृतमिति घृतस्तुतेर्वाक्यान्तराल्लिङ्गात् घृतेनाक्ता इति विशेषः प्रतीयते । लोके यथा । रामो ऽसौ भुवनेष्वित्यादौ दाशरथिः परशुरामो वेति संशये वाक्यान्तरगादेकबाणाहतश्रेणीभूतविशालतालविवरोद्गीर्णैः स्वरैः सप्तभिरिति लिङ्गाद्दाशरथिप्रतिपत्तिरेवेति । "अयं शब्दादपोद्धृत्य पदार्थः प्रविभज्यत" इति । शास्त्रे यथा । वृषशसी वैयात्यइत्यस्माद्वैयात्यशब्दादपोद्धृत्य वियातभावो वैयात्यमिति विभज्यते । वेदे यथा । वायव्यं श्वेतमालभेतेत्यस्माद्वाक्याद्वायव्यपदार्थादपोद्धृत्य वायुर्वै क्षेपिष्ठा देवतेति प्रविभज्यते । लोकेऽपि राजपुरुष इत्युक्ते कस्य राज्ञः शूद्रकस्येति प्रश्नोत्तरयो राजपदार्थप्रविभागः ॥ ८८ ॥

इदानीं प्रकृते चोद्यमुपसंहर्तुमाह । "इति वाक्येषु ये धर्माः पदार्थोपनिबन्धनाः । सर्वे ते न प्रकल्पेरन्पदं चेत्स्यादवाचकम्" । अनंशे वाक्ये ऽभ्युपगम्यमाने वाक्येषु पदसमुदायरूपेषु सत्यपदार्थोपनिबन्धनेषु ये धर्मा वाक्यार्थानुग्राहिणः शब्दार्थविशेषसंप्रत्ययप्रतिबद्धास्ते सर्वेत्रा ऽविद्यमानोद्देशप्रविभागे न प्रतिष्ठां लभेरन् यदि सत्यं पदं वाचकं न स्यादिति पदवादी प्रत्यवतिष्ठते ॥ ८९ ॥

एवं पदवादिना ऽखण्डवाक्यवादिनो दूषणजाते (१) समापिते इदानीमेतत्समाधातुमखण्डवाक्यवाद्याह ॥

**अविभक्ते ऽपि वाक्यार्थे शक्तिभेदादपोद्धृते ।**
**वाक्यान्तरविभागेन यथोक्तं न विरुध्यते ॥ ९० ॥**

एतत्सर्वं यथोक्तमस्मत्पक्षे न विरुध्यते । तथा चास्मत्पक्षे अविभक्ते निर्विभागे वाक्यार्थे एकस्मिन्पानकरसादिवत्समाश्रीयमाणे शक्तिभेदसमाश्रयणेन चापोद्धृते कृतापोद्धारे सत्यवान्तरवाक्यार्थोपजननात्सर्वमेतत्सिध्यतीति तात्पर्यम् । यथा शाक्यदर्शने निर्विभागमेव स-

(१) शाते इति २ पु० पा० ।

कालत्रैलोक्यविलक्षणं सत्त्वं लक्षणमभ्युपगम्यते । तत्कल्पितपदार्थव्यावृत्तिसमाश्रयणेन च जात्यादिव्यवहारः कश्चिन्निर्वाह्यते तथैवाखण्डवाक्यवादिना शक्तिभेदाद्वाक्यार्थप्रविभागे कृते सर्वं युज्यतइति न कश्चिद्विशेषः । 'वाक्यान्तरविभागेन' 'विभक्तेपि वाक्यार्थे'इति च वाक्यवाक्यार्थयोरेकयोगक्षेमत्वादुक्तम् । पदार्थासंभवपूर्वके चोद्ये 'वाक्यान्तरविभागेने'त्युत्तरमसमीचीनमिव लक्ष्यतइति चेत् । बाध्यबाधकभावादिन्यायो वाक्येष्वपि दृश्यते । ततो महावाक्यापेक्षयावान्तरवाक्योपप्लवनेन(१) तदपि न विरुध्यतइत्युपदर्शितं तदुपदर्शनेन परिमितपरिमाणेपि वाक्ये पदार्थापोद्धारनिबन्धना श्रप्येते न्यायाः सम्भवन्तीत्युपदर्शितमेव भवति ॥ ६० ॥

एतदेव प्रसिद्धदृष्टान्तोपदर्शनेन द्रढयितुमाह ॥

यथैवैकस्य गन्धस्य भेदेन परिकल्पना ।
पुष्पादिषु तथा वाक्येष्वर्थभेदोऽभिधीयते ॥ ६१ ॥

स्रक्चन्दनादावेक उपसंनिविष्ट एव गन्धस्तस्य त्वपोद्धारसमाश्रयेण भेदः कल्प्यते ऽयं पुष्पगन्धो ऽयञ्चन्दनगन्ध इत्यादि। [तथा वाक्यएवार्थापोद्धारसमाश्रयणेन पदार्थभेद उपपद्यते अयं देवदत्तपदार्थो ऽयङ्गोपदार्थ इत्यादि] (२) ॥ ६१ ॥

दृष्टान्तान्तरमाह ॥

गवये नरसिंहे वाप्येकज्ञानावृते यथा ।
भागं जात्यन्तरस्यैव सदृशं प्रतिपद्यते ॥ ६२ ॥

एकज्ञानेनाभिन्नेनैवावृते विषयीकृते परिच्छिन्ने गवयादौ सति तदेकदेशं प्रसिद्धं जात्यन्तरस्यैव प्रतिपद्यते। एवमपोद्धारसमाश्रयणेन

(१) प्लावनेति १ पु० पा० ।
(२) [ ] एतन्मध्यस्थं २ पुस्तके नास्ति ।

सर्वन्यायसमर्थने कृते तत्समानयोगक्षेमतया प्रतिनिधिः श्रुतिवाक्यविरोधश्च समर्थित एव । अग्रे त्ववान्तरवाक्यानामर्थवत्त्वं समर्थयिष्यते ॥ ८२ ॥

अधुना तमेवापोद्धारमाश्रित्य पिकादिसंदेहे चोद्य(१)मुक्तं प्रसारवन्तां करोति ॥

अप्रसिद्धं तु यद्भागमदृष्टमनुपश्यति ।
तावत्स्वसंविदं मूढः सर्वत्र प्रतिपद्यते ॥ ८३ ॥

तत्र च गवयादौ भागमप्रसिद्धमदृष्टमनिश्चितमनुपश्यति मूढः । परमार्थतस्तु संवित्तस्य सर्वत्र निर्विभागे तस्मिन् कुतश्चित्कारणान्नोत्पन्ना । सर्वत्रायमसंविदं तावत्पुनः प्रतिपद्यतइति ॥ ८३ ॥

प्रकृते योजयितुमाह ॥

तथा पिकादियोगेन वाक्ये ऽत्यन्तविलक्षणे ।
सदृशस्येव संज्ञानमसतो ऽर्थस्य मन्यते ॥ ८४ ॥

वनात्पिक आनीयतामित्येतद्वनाद्धस्व आनीयतामित्येतस्माद्वाक्यान्तरादत्यन्तविलक्षणमेव । वनादानीयतामिति चात्रासन्नेवार्थो वनाद्धस्व आनीयतामित्यस्य क्रमवशात्सदृश इति मन्यते । परमार्थतस्तु पिकादियोगात्सकलमेवात्यन्तविलक्षणम् । एकपदार्थसंदेहे सकलमेवाज्ञातं वाक्यमित्युच्यते ॥ ८४ ॥

दृष्टान्तमाह ॥

एकस्य भागे सादृश्यं भागे भेदश्च लक्ष्यते ।
निर्भागस्य प्रकाशस्य निर्भागेनैव चेतसा ॥ ८५ ॥

यथैकमेव नीलपीतादिज्ञानं प्रकाशस्वभावात्(२) निरंशमेवोपजातं

(१) संदेहचोद्यमिति २ पु० पाठः ।
(२) स्वभावे इति २ पु० पाठः ।

तस्य श्यामलेन सादृश्यं मन्यते। नीलपीतादिना च भेदः। वस्तुतः पुनर्भिन्नमिव नीलज्ञानं पीतज्ञानादिति न तत्रानुगमः कश्चित्। अथ वा चित्रज्ञानयोरेव भागे सादृश्यं भागे भेदं प्रतिपद्यते। किंचिद्धि चित्रज्ञानं(१) नीलहरितोल्लेखि। किंचिद्धि नीलपीतोल्लेखीति नीलादिना तत्र सादृश्यं हरितादिना भेदं प्रतिपद्यतइति ॥ ८५ ॥

दार्ष्टान्तिके योजयितुमाह ॥

**तथैव भागे सादृश्यं भागे भेदोऽवसीयते।**
**भागाभावेपि वाक्यानामत्यन्तं भिन्नधर्मणाम्॥८६॥**

प्रतीतार्थः श्लोकः ॥ ८६ ॥

इदानीमखण्डवादी पदवादिनं दूषयितुमाह ॥

**रूपनाशे पदानां स्यात्कथं चावधिकल्पना।**
**अगृहीतावधौ शब्दे कथमर्थो विविच्यते ॥ ८७ ॥**

यदि पदान्येव सत्यानि तदा दध्यानयेत्यादिसंहितायां रूपविनाशात्पदस्य नियतत्वाभावे कमवधिं गृहीत्वा तदर्थो विविच्यते अतः प्रविभागशून्यं वाक्यमेवैकं सत्यमभ्युपगन्तव्यम् ॥ ८७ ॥

अथाखण्डपक्षे श्वेतो धावतीत्येतच्छ्रद्धयाऽपाकरणाय कथमेकं वाक्यं श्व इह इतो इत्येतद्रूपं संहितावशाद्दिनष्टमित्येतत्पदार्थासंभवात्कथं तदवगतिः तत्राह ॥

**संसर्ग इव रूपाणां शब्दे ऽन्यत्र व्यवस्थितः।**
**नानारूपेषु तद्रूपं तत्त्वेनापरमिष्यते ॥ ८८ ॥**

श्वेत इत्यादौ शब्दे अन्यत्राखण्डपक्षे रूपाणां संसर्ग इव व्यवस्थितः अतश्च तद्रूपमपरं तत्त्वेनावस्थितं तेषु नानारूपेषु प्रत्यायकमिष्यत इत्यदोषः ॥ ८८ ॥

---

(१) किंचिद्धिचित्रेति २ पु॰ पाठः ।

तदेव व्याचिख्यासुराह ॥

तस्मिन्नभेदे भेदानां संसर्ग इव वर्त्तते ।
रूपं रूपान्तरात्तस्मादनन्यत्प्रविभज्यते ॥ ९९ ॥

तस्मिन्नभेदे एकस्मिन्नेव श्वेत इत्येव रूपे भेदानां श्वा इतः श्वेतश्च इत्येतेषां संसर्ग इव स्थितः । तस्मात्तद्रूपं रूपान्तरादनन्यदपि तन्त्रन्यायसमाश्रयणेनोभयार्थप्रत्यायकतया प्रविभज्यतइत्यस्मिन् पक्षे श्वेत इत्येतदखण्डमेव प्रत्यायकम् ॥ ९९ ॥

यथाचैव प्रसङ्गात्प्रत्याय्यप्रत्याययकयोर्विषयभेदेन भेदाभेदौ स्मृतावित्याह ॥

शास्त्रे प्रत्यायकस्यापि क्व चिदेकत्वमाश्रितम् ।
प्रत्याय्ये तु क्व चिद्भेदो ग्राह्यग्रहणयोः स्मृतः ॥१००॥

तत्राभेदं प्रत्याय्यप्रत्यायकयोः प्रदर्शयति ॥

ऊइत्यभेदमाश्रित्य यथासंख्यं प्रकल्पितम् ॥१००ऽऽ॥

ऊकालो ऽज्झ्रस्वदीर्घप्लुत इत्यत्रोक्तम् । ह्रस्वादिषु समसंख्या ऽप्रसिद्धे(१)रुद्देशनिर्देशवैषम्यात् । सिद्धं तु समसंख्यत्वाश्रयाणां हि विकारनिर्देशः । ततश्च ऊकाल इत्यत्र मात्रिकद्विमात्रत्रिमात्राणां संसृज्य निर्देशात्प्रत्याय्यप्रत्यायकयोरभेदे समसंख्यत्वान्निर्देशसाम्ये संख्यातानुदेशे सिद्धे ह्रस्वदीर्घप्लुतसंज्ञाः पृथगवतिष्ठन्तइति न कश्चिद्दोषः ॥१००ऽऽ॥

प्रत्याय्यप्रत्यायकयोर्भेदं निदर्शयितुमाह ॥

लङ्लटोर्ग्रहणे भेदो ग्राह्याभ्यां परिकल्पितः ॥१०१॥

स्यतासी ललुटोरित्यत्र लशब्देन लङ्लटौ प्रत्याय्येते इति निमित्तनिमित्तिनोर्वैषम्यात्संख्यातानुदेशाभावः प्राप्नोति । यथासंख्यमनुदेशः समानामित्यत्रोक्तम् । "संख्यासाम्यं शब्दतश्चेत् पक्षादयः

(१) अप्रसिद्धिरिति २ पु० पाठः ।

परस्मैपदानाम् । डारौरसः प्रथमस्य एवोयथासंख्य इत्यनिर्देशः । अर्थ-तश्चेत् ल्लुटोर्नन्द्यरीहणसिंधुतक्षशिलादिषु" इति चोद्यमेवं पञ्चदय-उपस्थितं तत्रोच्यते ल्लुटोरित्यत्र लरूपमुत्सृष्टानुबन्धसामान्यमात्रं प्र-त्यायकमभिन्नमेव न पुनः प्रत्याय्यभेदाद्भिन्नमत्राभ्युपगम्यते । ततश्च निमित्तिनिमित्तिनोः साम्यात्संख्यातानुदेशः सङ्गच्छत इति न कि-श्चिदनिष्टम् ॥ १०१ ॥

अथ प्रत्याय्यप्रत्यायकयोरन्यत्राप्यभेदं दर्शयितुमाह ॥

यस्येत्येतदणो रूपं संश्लिनामभिधायकम् ।

न हि प्रतीयमानेन ग्रहणस्यास्ति सम्भवः ॥ १०२ ॥

इह अत्र तर्ह्य तस्य यस्य यदेतत्संसृष्टेकाराकारयोरूपमणोः प्र-त्यायकम् तत्संश्लिनामिवर्णावर्णानामभेदात्प्रत्यायकं भवति तेन ई-काराकारयोरपि सौपर्णेयो वैनतेय इत्यत्र लोपः प्रवर्त्तते । यदि चात्र प्रत्याय्यप्रत्यायकयोरभेदो नाश्रीयते तदा प्रतीयमानेन प्रत्याय्यमाने-नान्येषां ग्रहणस्य प्रत्यायनस्य संभव इति नात्रेष्टं सिध्येत् । तस्मात्त-न्त्रेणोच्चारितमेकमेवोभयोः प्रत्यायकं संसृष्टरूपत्वादित्यस्येव श्वेतो धावतीत्येतस्मादुभयार्थप्रतीतिः ॥ १०२ ॥

अवान्तरवाक्योपप्लावनेनैतद्वोभयार्थप्रत्यायकं भविष्यतीति दृष्टा-न्तेन प्रदर्शयितुमाह ॥

उदित्येतदभिन्नं च भिन्नवाक्यनिबन्धनम् ।

भेदेन ग्रहणं चास्य पररूपमिव द्वयोः ॥ १०३ ॥

उकाल इत्येतदुपात्तम् । तद्ध्रस्वदीर्घप्लुतानां त्रयाणां सामान्येना-भिन्नं रूपं बोद्धव्यम् । ततश्चैतदेकं महावाक्यस्थानीयं, अवान्तरवा-क्यनिबन्धनं भवतीत्याह । 'भिन्नवाक्यनिबन्धनमि'ति । उकालो ऽज्झ्र-स्वसंज्ञः । ऊकालो दीर्घसंज्ञः । ऊ३कालः प्लुतसंज्ञो बोद्धव्य इति ।

भतश्च यदा संसृष्टत्वादस्याभेदेनैव ग्रहणं प्रत्यायकी स्थितं तदा अह-त्येतद्रूपं भिन्नवाक्यनिबन्धनमेव भवति । यथा पररूपं संसृष्टत्वादेक-मपि द्वयोः प्रत्यायकं दृश्यते । तथैतद्बोद्धव्यम् । ततश्च श्वेतो धावतीत्या-दावर्थान्तरवाक्योपप्लावनेनोभयार्थता भविष्यतीति योजनीयम् ॥१०३॥

शब्दानां भेदपक्ष एव वार्तिककारस्याभिरुचित इति दर्शयितुमाह ॥

प्लुतस्याङ्गविवृद्धिं च समाहारमचोस्तथा ।

व्युदस्यता पुनर्भेदः शब्देष्वत्यन्तमाश्रितः ॥ १०४ ॥

प्लुतावैच इदुतावित्यत्रोक्तम् । "अङ्गविवृद्धिर्नोपपद्यते । न ह्यैचोवयवो ऽकार इकार उकारो वे"त्येवमङ्गविवृद्धिं व्युदस्यता तावेव शब्दावेकत्र संमिलिताविति उपदर्शितः प्रागभेदः स पराकृतः । तथा ऽचोः समा-हारं व्युदस्यता भेद एवेष्यत इति । यदाह "समाहारो ऽचोर्वेत्राभा-वादि"ति । तस्मात् श्वेतो धावतीत्यादौ सदृशयोर्मेलनमनुपदमर्थान्त-रवाक्योपप्लावनेन तन्त्रन्यायसमाश्रयणेन वा समर्थनं तज्ज्याय इति ॥ १०४ ॥

अथ तन्त्रमुपसंहर्तुमुपक्रमते ॥

अर्द्धर्चादिषु शब्देषु रूपभेदः क्रमाद्यथा ।

तन्त्रात्तथैकशब्दत्वे भिन्नानां श्रुतिरन्यथा ॥ १०५ ॥

यथा क्रमवशेन ऋचो ऽर्द्धं अर्द्धर्च इति एकस्यैव शब्दस्य रूपभेदस्तथा तन्त्रन्यायाश्रयणेनैकशब्दत्वे भिन्नानां रूपाणामन्यथा श्रुतिरभिन्ना श्रुतिर्बोद्धव्येति तन्त्रमुपसंहृतम् ॥ १०५ ॥

एतदेव स्फुटीकर्तुमाह ॥

संहिताविषये वर्णाः स्वरूपेणाविकारिणः ॥

शब्दान्तरत्वं यान्तीव शक्त्यन्तरपरिग्रहात् ॥ १०६ ॥

स एव शब्दो ऽनेकशक्तिवर्णतया संहिताविषये प्रतिभासतइत्ये-

कस्यैव श्वेतशब्दस्य संहितयोच्चारणाच्छब्दान्तरपरिग्रहेणोभयार्थप्रत्यायकत्वं मन्यते ॥ १०६ ॥

एकस्यापि निमित्तभेदाद्भेद उपजायत इति दृष्टान्तप्रदर्शनेनाह ॥

इन्द्रियादिविकारेण दृष्टं ग्राह्येषु वस्तुषु।
आत्मत्यागादृते भिन्नं ग्रहणं स क्रमः श्रुतौ ॥ १०७ ॥

यथा काचाद्युपहतचक्षुषामेकाकारमपि वस्तु नानारूपतयावभासते। तथा संहितावशादेकोपि शब्दो रूपान्तरेणावभासते ॥ १०७ ॥

एतदेवोपसंहर्त्तुमाह ॥

अभिधानक्रियाभेदाच्छब्देष्वविकृतेष्वपि।
रूपमत्यन्तभेदेन तदेवैकं (१) प्रकाशते ॥ १०८ ॥

अभिधानक्रिया संहितयोच्चारणमेव तया योगात्तत्सम्बन्धादविकृतेष्वपि शब्देष्वेकमेव शब्दान्तरपरिग्रहादत्यन्तभेदेन प्रकाशते ॥ १०८ ॥

अथैतदेवागमविषये दृश्यते तेन संवादयितुमाह ॥

ऋचो वा गीतिमात्रं वा साम द्रव्यान्तरं न तु।
गीतिभेदाद्विशिष्यन्ते ता एव विकृता ऋचः ॥ १०९ ॥

ऋच एव तथोदीरिताः सामाख्यां यथा प्रतिलभन्ते। विशेषेणोदीरणमात्रं वा साम। यथोच्यते "गीतिषु सामाख्ये"ति। ऋचो वा सामेत्येतत् ज्ञापयितुमाह। 'गीतिभेदादि'त्यादि। तदेवं भेदाभेदविवक्षाभिन्नेन प्रत्याय्यप्रत्यायकभावेन अत्यन्तभेदरूपेण वा 'संहिताविषये वर्णा' इत्यत्रोक्तप्रकारेण(२)तत्प्रतिपत्त्येण वा ऽवान्तरवाक्योपप्लावनरूपेण श्वेतो धावतीत्यत्रैकत्वेपि वाक्यस्यार्थभेदो भविष्यतीति मा-

(१) तदेवैकमिति २ पु० पाठः।
(२) उक्तप्रकारेणेति २ पु० पाठः।

अत्यन्ते पदानामनभ्युपगमेपि क्वा चित् क्षतिः ॥ १०९ ॥

अथ पुनरपि तन्त्रन्यायेनैतत् समर्थयितुमाह ॥

उपायाच्छ्रुतिसंहारे भिन्नानामेकशेषिणाम् ।
तन्त्रेणोच्चारणे तेषां शास्त्रे साधुत्वमिष्यते ॥ ११० ॥

उपायात्तन्त्रलक्षणाद्भिन्नानामपि शब्दानामेकस्यां श्रुतौ संहारः संक्षेपो गीर्णत्वं । कीदृशानां भिन्नानामित्याह । एकशेषिणामिति । एकशेषसाधर्म्यात्तन्त्रेणोच्चारिता अप्येकशेषिण उच्यन्ते । यथोक्तं वार्त्तिककृता । "हलन्त्यमेकशेषनिर्देशादि"ति तेनैकशेषिणां तन्त्रन्यायवतामिति यावत् । उपायादित्यादिः पूर्वस्य श्लोकस्य स्फुटीकरणायोक्तं तन्त्रेणोच्चारणइत्यादि ॥ ११० ॥

तस्मादेवंविधे विषये भिन्नानामपि शब्दानां किंचित्सादृश्यमुपादाय तन्त्रेणैव प्रतिपादनं कार्यमित्याह ॥

परिलभ्य श्रुतिं चैकं रूपं भेदवतामपि ।
तन्त्रेणोच्चारणं कार्यमन्यथा ते न साधवः ॥ १११ ॥

यद्यपि च सरूपाणा वाक्यानां शास्त्रेण साक्षात्तन्त्रेण प्रतिपादनं न कृतम् । नाप्येकशेषस्य प्रतिपादनम् । तथापि समानन्यायत्वात्सर्वमपि शब्दानुशासनोपयोगीति प्रतिपादितमुक्तमेवेत्यूह्यतइति प्रतिपादयितुमाह ॥

सरूपाणां च वाक्यानां शास्त्रेण प्रतिपादितम् ।
तन्त्रेणोच्चारणादेकं रूपं साधूपलभ्यते ॥ ११२ ॥

एतदेव दृष्टान्तप्रदर्शनपूर्वकमुपसंहर्त्तुमाह ॥

एकस्यानेकरूपत्वं नालिकादिपरिग्रहात् ।
यथा तथैव तत्र स्यात् बहूनामेकरूपता ॥ ११३ ॥

यथैकोपि ध्वनिर्नालिकादिपरिग्रहोपधानवशान्नानाविधषड्ज-ऋषभादिरूपभेदवानुपजायते। तथा तत्समाश्रयणेन स्वा इतः श्वेत इत्येवमात्मकानां भिन्नानामपि शब्दानामेकरूपता श्वेत इत्येवंरूपतेति न कश्चित्तत्र दोषः॥ ११३॥

इदानीं यदुक्तमवान्तरवाक्यानामर्थवत्त्वं न स्यादिति तत्प्रतिविधातुमाह॥

**तथा पदस्वरूपाणां वाक्यानां सम्भवः पृथक्।**
**तथा वाक्यान्तराभावे स्यादेषां पृथगर्थता॥ ११४॥**

यथाऽखण्डपक्षे वाक्यानां पदस्वरूपाणामवान्तरवाक्यानामपोद्धारबुद्ध्या सम्भवमुपकल्प्यार्थस्तेषां महावाक्योपयोगी व्यवस्थाप्यते। यदि तथा न प्रकल्पेत (१) न तदा महावाक्यार्थसम्प्रत्ययः स्यात्। तथा वाक्यान्तराभावएषां पृथगर्थता स्यात्। यावताऽपोद्धारसमाश्रयणेन वाक्यान्तराण्युपकल्प्य पृथगर्थत्वमसत्यमप्येषामभ्युपगम्यतइति नास्त्यवान्तरवाक्यानुपपत्तिचोद्यम्॥ ११४॥

इदानीं प्रयोजनं वाक्यार्थ इति पक्षे दूषयितुमाह॥

**अभिधेयः पदस्यार्थो वाक्यस्यार्थः प्रयोजनम्।**
**यस्य तस्य न सम्बन्धो वाक्यानामुपपद्यते॥ ११५॥**

वाक्यस्यार्थो वाक्यप्रयोजनमुच्यते। न त्वभिधेयः। कस्यायमर्थः स्यादित्याह 'अभिधेयः पदस्यार्थ' इति। पदानामर्थोऽभिधेय उच्यते। एतन्निराकरोति। 'यस्य तस्ये'त्यादि। एवंवादिनः परस्परं वाक्यानां सम्बन्धो न स्यात्। कीलायःशलाकाकल्पानां वाक्यानां किंकृतः सम्बन्धो भवति। अभिधेयद्वारकः परस्परं सम्बन्धः स्यात्। अभिधेयं च वाक्यानां नास्तीत्यसम्बन्धानि वाक्यानि प्राप्नुवन्तीति यत्किं

(१) प्रकल्प्येतेति २ पु॰ पाठः।

चित् ॥ ११५ ॥

अथान्विताभिधानसमाश्रयणेनैतत्समर्थयितुमाह ॥

तत्र क्रियापदान्येव व्यपेक्षन्ते परस्परम् ।
क्रियापदानुषक्तश्च सम्बन्धो ऽतः प्रतीयते ॥ ११६ ॥

क्रियापदमाक्षिप्तसमस्तसाधनव्रातं निराकाङ्क्षं संपद्यते क्रियापदानुषक्तः परस्परसम्बन्धो निराकाङ्क्षस्तस्मादुपपन्न इति न काचित् क्षतिः ॥ ११६ ॥

ननु चान्विताभिधानं न युक्तमिव प्रतिभाति । तथा हि । यदि प्रथममेव सकलविशेषयुक्तो वाक्यार्थोऽवगतः स्यात् । तदुत्तरकालभाविनां गवादीनामभिधाने न किं चित्प्रयोजनमुत्पश्याम: । अवगतार्थानां हि पदानां पुनर्वचने वैयर्थ्यमापद्यतइत्याशङ्क्य समर्थयितुमाह ॥

आवृत्तिरनुवादो वा पदार्थव्यक्तिकल्पने ।
प्रत्येकं तु समाप्तो ऽर्थः सङ्घभूतेषु वर्त्तते ॥ ११७ ॥

अवगतार्थानामप्यावृत्तिर्नियमाय भविष्यति । उक्तस्य वार्थस्य स्फुटीकरणायानुवादस्तेषामसाविति नास्त्यानर्थक्यम् । एवमपि पूर्वस्य तिरोहितत्वात्सहत्वासम्भवादन्वयस्यासम्भवादर्थानवगम एव । एकस्मादेव च पदात्समस्तविशेषान्वितस्य वाक्यार्थस्याप्रतीतेरुत्तरेषां चानवगतार्थानां नियमानुवादपरिकल्पनायोगादसमञ्जस एवान्विताभिधानपक्षः । यदा पुनः सङ्घभूतेष्वेवासौ प्रत्येकं समाप्तोऽर्थ इत्युच्यते । यथोक्तम् “व्यक्तोपव्यञ्जना (१) सिद्धिरर्थस्य प्रतिपत्तृषु” इति । तदा नास्त्येव सङ्घभूतानामुपादाने वैफल्यमिति न कश्चिद्दोषः ॥ ११७ ॥

तदेवं सङ्घातादीन्युद्दिष्टानि वाक्यलक्षणानि प्रासङ्गिकविचारस-

(१) व्यक्तोपरञ्जनाद् इति २ पु० पाठः ।

हितानि व्याख्यातानि। आख्यातं वाक्यमिति दर्शयिष्यते। वाक्यव्याख्याप्रसङ्गेन च वाक्यार्था अपि संसर्गसंसृष्टिनिराकाङ्क्षपदार्थप्रयोजनलक्षणाश्चत्वार उपदर्शिताः। प्रतिभां क्रियां च दर्शयिष्यति। नन्वेकस्यैव वाक्यार्थस्य कथं विकल्पप्रपञ्च इत्याशङ्क्य निरूपयितुमाह॥

अविकल्पेऽपि वाक्यार्थे
विकल्पा भावनाश्रयाः॥ ११७ऽऽ॥

वाक्यार्थोऽविकल्प एव निर्विभाग एवाभ्युपगन्तुं युक्तः तस्मिंश्च तथाभूतेपि येमी विकल्पास्ते पुरुषाणामनेकशास्त्रभावनासमाश्रया बोद्धव्याः। न वस्त्वनुपातिन इति तद्वाक्यार्थ एक एव युक्तः। एतदेव प्रतिपादयितुमाह॥

अत्राधिकरणे वादाः पूर्वेषां बहुधा गताः॥ ११८॥

अस्मिन्नधिकरणे विचारस्थाने पूर्वेषामाचार्याणां प्रवादा बहुधा गताः शास्त्रसंस्कारवासितचेतसां तेषामिति कस्य पर्यनुयोगः क्रियते॥ ११८॥

परमार्थतस्तु वाक्यार्थ एक एव सर्वोऽपि शब्दः प्रतिभाया एव हेतुरिति तत्स्वरूपमिदानीं प्रस्तावयितुमाह॥

अभ्यासात्प्रतिभाहेतुः शब्दः सर्वोऽपरैः स्मृतः।
बालानां च तिरश्चां च यथार्थप्रतिपादने॥ ११९॥

अपरैराचार्यैः। सर्वः यः कश्चिच्छब्दः स प्रतिभाहेतुः। जडानामपि प्रतिभाहेतुरित्याह। बालानामित्यादि। आस्तां विदितसमयस्य किं न भविष्यत्यसौ प्रतिभाहेतुः। येप्यविदितसंकेता अमी बाला जडप्राया वा तिर्यञ्चः तेषामप्यनादिवासनावशात्तदर्थः प्रतीयमानो दृश्यते शब्दः। तथा च जडानामपि प्राणिनां नियतपदः

शब्दः सम्बोधनायोदीर्यते । तेन प्रतिनियतजात्यनुसारेणैव नियतैव का चित्प्रतिभा प्रबोध्यतइति तन्मूल एव सर्वः कश्चित्तेषां व्यवहारः । अमेनैतदुच्यते । यदियं प्रतिभा सर्वप्राणिसंवेद्या शब्दनिमित्ता सकलव्यवहारमूलभूता ऽनपह्नवनीया तदपह्नवे स्वात्मैव विप्रलभ्यते । तत्प्रतिभाभ्युपगमोवश्याश्रयणीयः ॥ ११९ ॥

अभ्यासात्प्रतिभाहेतुरित्युक्तं तत्राभ्यासः किमिदानींतनः उत जन्मान्तरभावी तस्य च किं स्वरूपं इत्याशङ्क्य स चाभ्यासो ऽनागम इदानींतनो न भवति । नहि बालस्य तदेवोपदिष्टं केन चिदिति जन्मान्तरभाव्येव । स च समय इष्यते । संकेतस्वरूपोसाविष्यतइति स्वरूपमेवास्य स्फुटयितुमाह ॥

**अनागमश्च सो ऽभ्यासः समयः कैश्चिदिष्यते ।**
**अनन्तरमिदं कार्यमस्मादित्युपदर्शनम् ॥ १२० ॥**

स चानन्तरमिदं कार्यमित्युपदर्शनस्वभावः । यथा कशाभिघातमात्रसमनन्तरमेव वाजिनो ऽभियान्ति अशाभिघट्टातेन च गजा एवमन्येपि यथास्वं प्राणिनो ऽनादिवासनाभ्यासवशेन प्रतिभातः समुचितव्यवहारं कुर्वन्तो लोकयात्रां निर्वाहयन्तीति स्थितम् । एवमखण्डमेव वाक्यं प्रतिभा च वाक्यार्थ इति समाश्रयणीयं पदपदार्थापोद्धारमाश्रित्य प्रतिनिध्यादिकल्पनं प्रासङ्गिकादिन्यायनिर्वाहश्च भविष्यतीति व्यवस्थापितम् ॥ १२० ॥

अथ पदार्थप्रविभागश्चेत्समाश्रितस्तदुच्यतां पदस्यार्थ इति प्रविभागप्रसङ्गात्पदार्थविवेचनं मतभेदेन कर्तुमाह ॥

**अस्त्यर्थः सर्वशब्दानामिति प्रत्याय्यलक्षणम् ।**
**अपूर्वदेवतास्वर्गैः सममाहुर्गवादिषु ॥ १२१ ॥**

सर्वशब्दानामपरामृष्टाकारविशेषमर्थमात्रं वाच्यमिति केचिदा-

हुः। एतत्सर्वशब्दानां प्रत्याय्यलक्षणं प्रत्याय्यस्य वाच्यस्य लक्षणं बोद्धव्यम्। केन तुल्यमेतत्स्यादित्याह। अपूर्वदेवतेत्यादि। अपूर्वदेवतादि। अपूर्वदेवतादिषु हि नाकारप्रथनम्। यत्तु गवादिपदेषु आकारप्रथनं तन्नान्तरीयकतया बोद्धव्यम्। अन्यथा ऽपूर्वशब्दाद्देवताशब्दात् स्वर्गशब्दाद्वगवादिशब्दवदाकारादिप्रथनं स्यात्। यतश्च तेभ्यो नास्त्याकारादिप्रथनं अतोर्थमात्रमेव तैः प्रत्याय्यतइति युक्तम्॥ १२१॥

अथ गवादिशब्देभ्य आकारादिप्रथनं दृष्टं ततश्च तदक्तुं शक्यं यद्विशिष्टपदार्थप्रत्ययो युक्त इत्याशङ्क्याह॥

प्रयोगदर्शनाभ्यासादाकारावग्रहस्तु यः।
न स शब्दस्य विषयः स हि यत्नान्तराश्रयः॥१२२॥

सास्नादिमत्स्वेव यदा गोशब्दप्रयोगं पश्यति तद्दर्शनाभ्यासाच्च यत्राकारपरिग्रहो यः स शब्दस्य प्रत्ययो न भवति। कस्मादित्याह। 'स ही'त्यादि। तस्मात्प्रयोगाभ्यासेन यत्नान्तरेण शब्दावगम्यातिरिक्तेन स प्रथते ततश्च शब्दाव्यापारो ऽसौ न भवतीति शब्दस्यार्थमात्रमेवापरामृष्टाकारविशेषं वाच्यं युक्तमित्येकः पक्षः॥ १२२॥

इदानीं कश्चिच्छब्दवाच्यः कश्चित्तत्राकारोनुनिष्पादीति पक्षान्तरमाह॥

केचिद्भेदाः प्रकाश्यन्ते
शब्दैस्तदभिधायिभिः।
अनुनिष्पादिनः कांश्चि-
च्छब्दार्थ इति मन्यते॥ १२३॥

केचिद्भेदा जात्यादयः शब्दवाच्याः केचित्तत्रार्थप्रयोजकाः अनुनिष्पादिन एव तथा तांश्च शब्दार्थ इत्यपरे मन्यन्ते॥ १२३॥

एतदेव प्रत्याख्यातुमाह॥

जातिप्रत्यायके शब्दे
या व्यक्तिरनुषङ्गिणी ।
न तान् व्यक्तिगतान् भेदान्
जातिशब्दो ऽवलम्बते ॥ १२४ ॥

जातिशब्दा जातिमात्रं प्रत्याययन्ति । व्यक्तिस्तु तथानुषङ्गिणी । निरधिकरणाया जातेरसम्भवादिति कृत्वा तद्व्यक्तिगतानाकारविशेषान् जातिपदार्थपक्षे जातिशब्दो नावलम्बते ॥ १२४ ॥

एतदेव व्यक्तीकर्त्तुमाह ॥

घटादीनां न चाकारान् प्रत्याययति वाचकः ।
वस्तुमात्रनिवेशित्वात्तद्गतिर्नान्तरीयकी ॥ १२५ ॥

घटादीनां प्रसिद्धानामाकारान्वाचकः शब्दो घटादिर्न प्रत्याययति । पृथुबुध्नोदराकारमात्रनिवेशित्वात् । न हि सकलविशेषसहितमर्थं शब्दः प्रत्याययितुमलमिति तत्राकारविशेषावगतिर्नान्तरीयकत्वेवानुनिष्पादिन्येव बोद्धव्या ॥ १२५ ॥

नान्तरीयकत्वमेव प्रदर्शयितुमाह ॥

क्रिया विना प्रयोगेण न दृष्टा शब्दचोदिता ।
प्रयोगस्त्वनुनिष्पादी शब्दार्थ इति मन्यते ॥ १२६ ॥

यजेतेति शब्दचोदिता क्रिया कर्तृकर्मसाधनसामग्रीं विना न दृश्यते । ततश्चासौ साधनयोगो यथा तत्रानुनिष्पादी तथा शब्दार्थो ऽवगन्तव्य इत्युपसंहृतम् ॥ १२६ ॥

अथ सर्वएवाकारा गुणप्रधाने भावेन (१) पदस्यार्थ इति तृतीयं पक्षं दर्शयितुमाह ॥

---

(१) गुणप्रधानभावेनेति २ पु० पाठः ।

नियतास्तु प्रयोगा ये नियतं यच्च साधनम्।
तेषां शब्दाभिधेयत्वमपरैरनुगम्यते ॥ १२७ ॥

येन केन चिह्निना शब्दस्याभिधेयं न निर्वहति तत्सर्वं साध्यसाधनात्मकं शब्दाभिधेयं वक्तुं युक्तम्। किं चित्प्रत्याय्यते अन्यत्तत्र नान्तरीयकतयावगम्यतइत्यपि न शोभनं किं तु सर्वाकारमेवाभिधेयं गुणप्रधानभावेन यस्मात्प्रतीतमित्ययं पक्षः शोभनः ॥ १२७ ॥

समुदाय एव तुल्यकक्ष्यतया शब्दस्यार्थ इति चतुर्थं पक्षं दर्शयितुमाह ॥

समुदायोऽभिधेयः स्या-
दविकल्पसमुच्चयः ॥ १२७ऽऽ ॥

ननु यथाकारसमुदायं समुच्चितमेव प्रत्याययति तर्हि बहुवचनमेव तत्र स्यात्। अथ विकल्पितं प्रत्याययति तदा वचनविकल्पः स्यादित्याशङ्क्याह। 'अविकल्पसमुच्चय' इति। अविद्यमानौ विकल्पसमुच्चयौ यस्यासौ तथाभूतस्तस्मात्प्रतीयतइति सम्भाव्यते। एतच्चोपमासमुद्देशेऽप्यर्थविचारणावसरे सविस्तरं प्रदर्शयिष्यति ॥ १२७ऽऽ ॥

अथ जातिगुणक्रियात्मकस्यार्थस्यासत्यभूतः संसर्ग एव शब्दार्थ इति पञ्चमं पक्षं दर्शयितुमाह ॥

असत्यो वाऽपि संसर्गः
शब्दार्थः कैश्चिदिष्यते ॥ १२८ ॥

घटादिभिः शब्दैर्घटादीनां जात्यादिसंसर्ग उच्यते। स चात्र तद्व्यतिरेकेणानुपलम्भादसत्यभूत एवोच्यते। तस्मात्संसृष्टः पदार्थ एव सत्यभूत इति ॥ १२८ ॥

अथ सत्यमेवासत्योपाधिविचित्रितं शब्दवाच्यमिति षष्ठं पक्षमाह ॥

असत्योपाधि यत्सत्यं
तद्वा शब्दनिबन्धनम् ॥ १२८ऽऽ ॥

शब्दस्य वा स्वरूपमेवाभिधेयमिति सप्तमं पक्षं दर्शयितुमाह ॥

शब्दो वाप्यभिजल्पत्व-
मागतो याति वाच्यताम् ॥ १२९ ॥

अभिजल्पत्वमध्यासरूपत्वमागतः शब्द एव स्वरूपलक्षणः शब्दस्य वाच्यः ॥ १२९ ॥

अभिजल्पस्वरूपमाह ॥

सो ऽयमित्यभिसम्बन्धाद्रूपमेकीकृतं यदा ।
शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥ १३० ॥

सो ऽयमित्यभिसम्बन्धो ऽध्यासाख्य उच्यते । तेन पदार्थस्वरूपमाच्छादितमेकीकृतमिव प्रत्याय्यते तदा ऽभिजल्पः शब्द उच्यते । अध्यासवशाच्छब्दार्थयोरेकात्मत्वेप्यर्थांशस्यैव प्राधान्यमुपयोगवशात्॥१३०॥

क्व चित्तु विषयभेदेन द्वयोरपि दृश्यतइति प्रसङ्गादभिधातुमाह ॥

तयोरपृथगर्थत्वे रूढेरव्यभिचारिणि ।
किं चिदेव क्व चिद्रूपं प्राधान्येनावतिष्ठते ॥ १३१ ॥

तयोः शब्दार्थयोरध्यासवशाद्रूढेर्नियमादेवाव्यभिचारिण्यपृथगर्थत्वे एकरूपत्वे सति किं चिदेव रूपं योगवशात् क्व चिदेव लोके शास्त्रे वा प्राधान्येनोद्रिक्ततया ऽवतिष्ठते ॥ १३१ ॥

तत्र लोकेर्थांशस्यैव प्राधान्यमित्यपि दर्शयितुमाह ॥

लोकेर्थरूपतां शब्दः प्रतिपन्नः प्रवर्त्तते ॥ १३१ऽऽ ॥

अर्थरूपतां प्रतिपन्नोर्थेन सहैकत्वमिव प्राप्तः शब्दः प्रवर्त्तते । अयं गौरित्यादि । तत्रार्थ एव वाच्यतया प्रधानमवसीयते ॥ १३१ऽऽ ॥

शास्त्रे तु शब्दस्योभयरूपतापि विभागेन परिदृश्यतइत्याह ॥

**शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया ॥ १३२ ॥**

शास्त्रे हि स्वरूपप्रधानो निर्देशः क्व चित् क्व चिदर्थप्रधानोपी-त्युभयरूपता शब्दस्य दृश्यते ॥ १३२ ॥

इदानीमर्थेषु न शक्तिः पृथगस्ति किं तु शब्दाधीनेति यथा ते शब्दैर्विधीयन्ते तथैवावगम्यन्तइति स्वमाहात्म्योपस्थापित एव शब्दार्थ इत्यष्टमं पक्षं दर्शयितुमाह ॥

**अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता ।**

**एकस्यार्थस्य नियता क्रियादिपरिकल्पना ॥ १३३ ॥**

अथ चासर्वशक्तिरर्थो व्यवस्थितः । तस्य प्रतिनियतशक्त्यभिधानं शब्देनेति नवमं पक्षं दर्शयितुमत्रैवोक्तं 'सर्वशक्तेर्वे'ति । शक्त्यर्थः कदा चित् क्रियारूपतयाभिधीयते । कदा चित्सिद्धरूपतयेति नियता क्रियादिरूपता शब्दार्थतया प्रतिपाद्यते ॥ १३३ ॥

अथ बुद्ध्युपारूढ एव शब्दस्यार्थो न बाह्य इति दशमं पक्षमुपदर्शयितुमाह ॥

**यो वार्थो बुद्धिविषयो**

**बाह्यवस्तुनिबन्धनः ।**

**स बाह्यवस्त्विति ज्ञातः**

**शब्दार्थः कैश्चिदिष्यते ॥ १३४ ॥**

शब्दस्य बुद्ध्युपारूढस्य वैकल्पिकस्य यो बुद्ध्युपारूढो बाह्यवस्तुनिबन्धनः बाह्यवस्तु विकल्पजननद्वारेण निबन्धनं यस्य स तथाभूतः । स च वैकल्पिको ऽर्थो भ्रमवशात् दृश्यविकल्पैकाकारेणाबहीरूपोपि बहीरूपतया ऽध्यस्तो ऽध्यस्तमेव वस्त्ववगच्छामि शब्दादिति शब्दनिमित्तमिति शब्दार्थ इष्यते ॥ १३४ ॥

इदानीं शब्दानामाकारविशेषवानर्थोऽपूर्वप्रभृतीनां संविन्मात्र-मपरान्पष्टाकारविशेषमर्थं इत्येकादशं पद्यमाह ॥

आकारवन्तः संवेद्या व्यक्तस्मृतिनिबन्धनाः ।
ये ते प्रत्यवभासन्ते संविन्मात्रं त्वतोन्यथा ॥ १३५ ॥

कैश्चिच्छब्दैः संवेद्याः प्रत्याय्या आकारविशेषवन्तो व्यक्तस्मृतिनि-बन्धनाः प्रत्यवभासन्ते । कैश्चिन्निराकाराः संविद्रूपाः प्रत्याय्यन्ते । ते-षां तथैवार्थो व्यवस्थाप्यते ॥ १३५ ॥

इदानीं प्रतिनियतवासनावशेनैव प्रतिनियताकारोर्थस्तत्त्वतस्तु कश्चिदपि नियतो नाभिधीयतइति द्वादशं पद्यमाह ॥

यथेन्द्रियं सन्निपतद्वैचित्र्येणोपदर्शकम् ।
तथैव शब्दादर्थस्य प्रतिपत्तिरनेकधा ॥ १३६ ॥

अविपरीतमप्यर्थमिन्द्रियं दोषवशान्नानारूपमवभासयति यथा तथैव नियतवासनावासितचेतसां शब्दार्थप्रतीतिरिति नास्ति क-श्चिन्नियत एकः शब्दस्यार्थः ॥ १३६ ॥

एतदेव व्याख्यातुमाह ॥

वक्त्रान्यथैव प्रक्रान्तो भिन्नेषु प्रतिपत्तृषु ।
स्वप्रत्ययानुकारेण शब्दार्थः प्रविभज्यते ॥ १३७ ॥

तथा हि । सांख्यजैनसौगतप्रभृतयः प्रतिपत्त्रनुसारेणान्यथैव श-ब्दार्थं प्रतिपद्यन्ते वक्त्रा तु वैशेषिकादिना स्वप्रत्ययानुसारेण वक्तुं प्र-क्रान्तः तथा च वैशेषिकेणावयविनं प्रतिपादयितुं घटशब्दः प्रयुक्तः सांख्यैर्गुणसमाहारमात्रमभिमन्यते जैनसौगतैः परमाणुसंचयमात्र-मिति तथैव तस्मात्तेषामर्थप्रतिपत्तिः ॥ १३७ ॥

एतदेव व्यक्तयितुमाह ॥

एकस्मिन्नपि दृश्येऽर्थे दर्शनं भिद्यते पृथक् ।

कालान्तरेण वैकोपि तं पश्यत्यन्यथा पुनः ॥ १३८ ॥

वस्तुत एकस्मिन्नेकरूपे दृश्येऽर्थे शास्त्रवासनाभेदाद्दर्शनं नानमस्मिन् भिद्यते एकोपि च पुरुषः सुगतदर्शनसंस्कृतमतिरन्यथाध्यवस्यत्यर्थं, कालान्तरेण वैशेषिकशास्त्रश्रवणादन्यथेति ॥ १३८ ॥

अतः किमित्याह ॥

एकस्यापि च शब्दस्य निमित्तैरव्यवस्थितैः ।
एकेन बहुभिश्चार्थो बहुधा परिकल्प्यते ॥ १३८ ॥

एकस्य घटशब्दस्य निमित्तैः शास्त्रसंस्कारैरव्यवस्थितैरेकेन पुरुषेणानियतशास्त्रवासनावशात् क्रमेण बहुधार्थः प्रकल्प्यते बहुभिश्च नानाशास्त्रसंस्कृतबुद्धिभिर्युगपत् स्वप्रत्ययानुसारेण बहुधापि परिकल्प्यतइति किमत्र कुर्मः ॥ १३८ ॥

अतः किमित्याह ॥

तस्माददृष्टतत्त्वानां सापराधं बहुच्छलम् ।
दर्शनं वचनं चापि नित्यमेवानवस्थितम् ॥ १४० ॥

यत एवं तस्माददृष्टतत्त्वानां पुरुषाणां दर्शनमनवस्थितम् । अदृष्टतत्त्वतया च सापराधं अत एव बहुच्छलं बहुविधबाधकाघ्रातं तथा सति वचनमपि तेषां तथैवेति तत्त्वकथनं सुदूरमवस्थितम् ॥ १४० ॥

ननु सन्त्येव परावरज्ञा मुनयः तदनुसारेण सर्वं व्यवस्थापयिष्याम इति तदर्थमाह ॥

ऋषीणां दर्शनं यच्च तत्त्वे किं चिदवस्थितम् ।
न तेन व्यवहारोस्ति न तच्छब्दनिबन्धनम् ॥ १४१ ॥

परमर्षीणां भगवतां दर्शनं तात्त्विकं भवति किं तु परमार्थेन व्यवहारासंभवः व्यवहारसाधनानां शब्दानां निबन्धनं न भवतीति न तेन व्यवस्था । व्यवहारवेलायां वा तेऽप्यदृष्टतत्त्वसदृशा इति पुन-

रव्यवस्थैव । यदुच्यते "रूपशव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ, ज्ञाने प्रत्यभिलापे च सदृशौ बालपण्डितौ" इति । ननु पुरुषबुद्धयो विचित्रा भवन्तु प्रत्यक्षेण खलु वयं यथावदर्थौ दृष्टः तथैव च व्यवहरिष्याम इत्याशङ्क्य प्रत्यक्षस्याव्यवस्थितिमाह ॥

तलवद्दृश्यते व्योम
खद्योतो हव्यवाडिव ।
न चेन्नास्ति तलं व्योम्नि
न खद्योते हुताशनः ॥ १४२ ॥

अतिनिर्मलं गगनतलमित्यविप्लुतदृशामप्युक्तिर्दृश्यते तदत्र किं कुर्मः ॥ १४२ ॥

यत्पुनरुपपत्त्या निश्चीयते तद् दृष्टमित्येव तथैवोपगस्येतेत्युपसंहरन्नाह ॥

तस्मात्प्रत्यक्षमप्यर्थं
विद्वानीक्षेत युक्तितः ।
न दर्शनस्य प्रामाण्यात्
दृश्यमर्थं प्रकल्पयेत् ॥ १४३ ॥

तस्माद्व्यवहारवेलायामसमाख्येयतत्त्वानामर्थानां यथा लौकिकैरन्वाख्यानं क्रियते तथैव तदनुसारेण शब्दार्थमाश्रित्य व्यवहारं निर्वाहयेन्न पिष्टपेषणमाचरणीयमिति ॥ १४३ ॥

यस्य यथैव स्वदर्शनानुसारेण प्रतिभाति तथैव तस्य स शब्दार्थ इत्येवाश्रयणीयमित्यलं निर्वस्तुबहुविकल्पप्रदर्शनेनेत्याह ॥

असमाख्येयतत्त्वाना-
मर्थानां लौकिकैर्यथा ।

व्यवहारे समाख्यानं
तत्प्राज्ञो न विकल्पयेत् ॥ १४४ ॥

एवं मतभेदेन प्रदर्शितस्य द्वादशधा पदार्थस्य पदकाण्डे जात्यादिप्रपञ्चैः प्रविभज्य स्वरूपं निर्णेष्यति एतदत्र वैयाकरणस्याखण्ड एव स्फोटलक्षणो वाक्यार्थो ऽध्यासः सम्बन्धः पदार्थस्त्वसत्य एवेति निर्णयः ॥ १४४ ॥

अथ प्रतिभास्वरूपमेव पूर्वोपक्रान्तमनुबध्नन्नाह ॥

विच्छेदग्रहणे ऽर्थानां प्रतिभा ऽन्यैव जायते ।
वाक्यार्थ इति तामाहुः पदार्थैरुपपादिताम् ॥ १४५ ॥

देवदत्तादिपदेभ्यो विच्छिन्नेभ्यस्तदर्थानां विच्छेदेनैव ग्रहणे प्रत्ययवेलायामेका प्रतिभा पदार्थमतिव्यतिरिक्तैव जायते तां च वाक्यार्थं वैयाकरणा आहुः । कस्तस्या उपाय इत्याह । "पदार्थैरुपपादिताम्"ति पदार्थैरसत्यैरेवोपाधिभूतैरुपपादितामभिव्यक्तामिति ॥ १४५ ॥

कीदृशीं तामित्याह ॥

इदं तदिति सान्येषामनाख्येया कथं चन ।
प्रत्यात्मवृत्तिसिद्धा सा कर्त्रापि न निरूप्यते ॥ १४६ ॥

सा चोपजायमाना आख्यातुमन्यस्य न शक्यते केवलं स्वसंवेदनसिद्धैवासौ प्रतिपन्नापि स्वसंवेदनसमये नियतेन रूपेण निरूपयितुमशक्यैव सा ॥ १४६ ॥

किंस्वभावासावित्याह ॥

उपश्लेषमिवार्थानां सा करोत्यविचारिता ।
सार्वरूप्यमिवापन्ना विषयत्वेन वर्त्तते ॥ १४७ ॥

असंसृष्टानां पदार्थानामसावुपश्लेषं मेलनं करोति सर्वरूपे च

वाक्ये पदार्थानां वासौ विषयत्वेन वर्त्तते तन्निष्ठास्ते सामर्थ्यं भजन्त इति ॥ १४७ ॥

तां च न किं चिद्व्याप्तिमात्रमतिवर्त्तते अतिक्रम्य तिष्ठतीत्याह ॥

साक्षाच्छब्देन जनितां भावनानुगमेन वा ।
इतिकर्त्तव्यतायां तां न कश्चिदतिवर्त्तते ॥ १४८ ॥

सा साक्षाच्छब्देन कदा चिद्व्यवहारकाले जन्यते जन्मान्तरभावनावशेन वा गजवाजिप्रभृतीनां तन्मूल एवेतिकर्त्तव्यतारूपः सर्वस्य व्यवहारः ॥ १४८ ॥

एतदेव स्फुटयति ॥

प्रमाणत्वेन तां लोकः सर्वः समनुपश्यति ।
समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात् ॥१४९॥

सर्वः कश्चित्तामेव भगवतीं स्वप्रतिभां प्रमाणत्वेन पश्यति तथा चोच्यते 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय' इति । तिरश्चां च जातमात्राणां तन्मूल एव व्यवहार इति न तदपह्नवेन आत्मा वञ्चनीयः ॥ १४९ ॥

सिद्धैव चेयं सर्वस्य प्रतिभेत्युपपादयितुमाह ॥

यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः ।
मन्दादिशक्तयो दृष्टाः प्रतिभास्तद्वतां तथा ॥१५०॥

यथा द्रव्यविशेषाणां परिपाकव्यतिरिक्तयत्नान्तरनिरपेक्षा मन्दादिशक्तयो दृश्यन्ते तथैवेयं प्रतिनियतसंस्कारजन्या प्रतिभावतां स्फुटमुपलभ्यतएव जन्मान्तराभ्यासहेतुकेयमिति ॥ १५० ॥

सनिदर्शनमुपपादयितुमाह ॥

स्वरवृत्तिं विकुरुते

मधौ पुंस्कोकिलस्य कः ।
जन्त्वादयः कुलायादि-
करणे केन शिक्षिताः ॥ १५१ ॥

पञ्चमस्वरविरावी मधुमासे पुंस्कोकिल इत्ययत्नजमेतत्सिद्धं लूतातन्तूनां कुलायरचना च प्रतिभामाहात्म्यादेव दृश्यते ॥ १५१ ॥

एतदेव स्फुटयितुमाह ॥

आहारप्रीत्यभिद्वेषप्लवनादिक्रियासु कः ।
जात्यन्वयप्रसिद्धासु प्रयोक्ता मृगपक्षिणाम् ॥१५२॥

प्रतिप्राण्याहारादिक्रिया नियता ऽनादिप्रतिभावशादेवेति प्रसिद्धम् ॥ १५२ ॥

प्रतिभायाश्च शब्द एव मूलमित्याह ॥

भावनानुगतादेतदागमादेव जायते ।
आसत्तिविप्रकर्षाभ्यामागमस्तु विशिष्यते ॥१५३॥

स चागमः कदा चिदासन्नोऽस्मिन्नेव जन्मन्यवगतः कदा चिज्जन्मान्तरइत्यासत्तिविप्रकर्षाभ्यां शब्द एव प्रतिभाहेतुः ॥ १५३ ॥

तस्याश्च निमित्तभेदेन षाड्विध्यं दर्शयितुमाह ॥

स्वभावचरणाभ्यासयोगादृष्टोपपादिता ।
विशिष्टोपहिता चेति प्रतिभां षड्विधां विदुः ॥१५४॥

स्वभावेन यथा कपिः । चरणादिषूदाहरणान्यूह्यानि । एवमखण्डेपि वाक्येभ्युपगते पदपदार्थप्रविभागमन्तरेण व्यवहारो न निर्वहतीति पदार्थः सामान्येन मतभेदप्रदर्शनपूर्वकं निर्णीतः ॥ १५४ ॥

इदानीं मुख्यनान्तरीयकविभागेन पदार्थविचारोपक्रममाह ॥

यथा संयोगिनि द्रव्यैर्लक्षिते ऽर्थे प्रयुज्यते ।

गोशब्दो न त्वसौ तेषां विशेषाणां प्रकाशकः॥१५५॥

इह शब्दस्य सामान्यं वाजप्यायनमतेनार्थः व्यक्तिर्वा व्याडिमतेनार्थः। तत्रेह सामान्यमात्रं वा व्यक्तिमात्रं वा तस्य प्रयोजकमर्थत्वेनावबुध्यते विशेषास्तु नान्तरीयकतया ततोवगम्यन्ते ततः शब्दस्यादृष्टव्यभिचारं सामान्यमात्रमेवार्थः। यथा संयोगिनो द्रव्यविशेषाः सूक्ष्मा मण्यादय उपलक्षणमात्रभावेन गवादीनामर्थानां स्थिताः न गवादिशब्दवाच्या भवन्ति तथान्तरङ्गा अप्याकारावर्त्तसंस्थानादय इति न तेषामसौ प्रकाशक उच्यते ॥ १५५ ॥

एतदेव स्फुटीकर्तुमाह ॥

आकारवर्णावयवैः संसृष्टेषु गवादिषु ।
शब्दः प्रवर्त्तमानोऽपि न तानङ्गीकरोत्यसौ॥१५६॥

आकारादयो व्यभिचारित्वाच्छब्दवाच्या न भवन्तीत्यर्थः ॥ १५६ ॥

नन्वाकारवाचकानां स्थूलकृशकर्बुरशबलादीनां शब्दानां किमाकारादिवाचकत्वं नाङ्गीकार्यमेवेत्याशङ्क्याह ॥

संस्थानवर्णावयवैर्विशिष्टे यः प्रयुज्यते ।
शब्दो न तस्यावयवे प्रवृत्तिरुपलभ्यते ॥ १५७ ॥

स्वशब्दैराकारादय उच्यन्त एवेति न सर्वत्र वयं तदप्रतीतिं ब्रूमः यद्धि प्रयोजकं शब्दस्य तदेव तस्य वाच्यं अन्यन्नान्तरीयकमिति ब्रूमः अत आकारादिवाचकानां नावयवमात्रे एकदेशमात्रे प्रवृत्तिरङ्गीकार्या अतः शब्दैरर्थस्य क्वचिद्विशेष उच्यते क्वचित्सामान्यमात्रम् ॥ १५७ ॥

एवं च न शब्दस्यैवंरूपं प्रत्यक्षमप्यर्थसाक्षात्कारोपनायकमेवमेवार्थस्वरूपपरिच्छेदकं दृष्टमित्याह ॥

दुर्लभं कस्य चिल्लोके सर्वावयवदर्शनम् ।

केश्चिदवयवैर्दृष्टैरर्थः कृत्स्नोऽनुमीयते ॥ १५८ ॥

युगपत्सर्वावयवदर्शनस्यासंभवात्कतिपयावयवदर्शनेन सकलार्थपरिच्छेदस्त्वानुमानिक एवेति प्रत्यक्षमपि नैव सकलमर्थस्वरूपं परिच्छिनत्ति ॥१५८॥

तथैव शब्दादेकदेशावसायेन नित्यसहचारिधर्मान्तरावगमो जायतइत्याह ॥

यथा जात्युत्पलादीनां गन्धेन सहचारिणाम्।
नित्यसंबन्धिनां दृष्टं गुणानामवधारणम् ॥ १५९ ॥

जातिगन्ध उत्पलगन्ध इति शब्दाद्विशिष्टस्य गन्धमात्रस्यावगतिः तत्सहचारिरूपस्पर्शाद्यवधारणं तत्र नान्तरीयकं न मुख्यमिति बोद्धव्यम् ॥ १५९ ॥

ततश्च शब्दोऽपरामृष्टविशेषे वस्तुमात्रे एव प्रवर्त्ततइत्याह ॥

संख्याप्रमाणसंस्थाननिरपेक्षः प्रवर्तते।
बिन्दौ च समुदाये च वाचकः सलिलादिषु ॥१६०॥

एकापि जलकणिकाऽऽपो बहुलमपि सरित्स्रोतस्तथैवोच्यतएकापि शिला शुक्ला हिमवानपि शुक्ल इति ॥ १६० ॥

शब्दः प्रयोजकमात्रमेव जात्यादिकं स्वार्थीकृत्य प्रवर्तते आकारादिविशेषावभासस्तु नान्तरीयक इति स्थितम्। ननु समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते यथा तैलं भुक्तं घृतं भुक्तं शुक्लो नीलः कपिल इत्युक्तं तदेतत्कथम्। उक्तं च ॥

"न जातिगुणशब्देषु मूर्त्तिभेदो विवक्षितः।
ते जातिगुणसंबन्धभेदमात्रनिबन्धनाः" ॥

तथा "नेक्षिता जातिशब्दानां समुदायानुपातिनाम्। जातिमापद्यते ते हि व्यक्तीर्वा जातिसंगताः" ॥

इति । इह च "संख्याप्रमाणसंस्थाननिरपेक्षः प्रवर्त्तते । बिन्दौ च समुदाये च वाचकः सलिलादिषु" इति तदेतदाशङ्क्याह ॥

संस्कारादिपरिच्छिन्ने तैलादौ यो व्यवस्थितः ।
आहैकदेशं तत्त्वेन तस्यावयववर्त्तिता ॥ १६१ ॥

संस्कारोपघातादिपरिच्छिन्ने तैलादौ तैलघृतादिः शब्दो व्यवस्थितो ऽसावेकदेशं समुदायाध्यारोपेणाह । एतदुक्तं भवति । न ते जातिशब्दाः अपि तु तत्सदृशा एव ते नियतपरिमाणाभिधायिनस्तदध्यारोपेण तदेकदेशवाचिन उच्यन्त इति अतस्तेषामवयववर्त्तिता भाष्यउक्तेति न कश्चिद् दोषः उक्तं च "संस्कारादुपघाताद्वा वृत्तोऽसपरिमाणके । तैलादौ जातिशब्दो ऽत्र समत्वादवगम्यत" इति ॥ १६१ ॥

एतदर्थं परमार्थत इदं बोद्धव्यमित्याह ॥

येनार्थेनाभिसंबद्धमभिधानं प्रयुज्यते ।
तदर्थापगमे तस्य प्रयोगो विनिवर्त्तते ॥ १६२ ॥

येनार्थेन जात्यादिना प्रयोजकेन ॥ १६२ ॥

वक्तुरिच्छया धर्मान्तर्भावेन तु प्रयुज्यमानोपि शब्दो न तेषां सर्वेषां (१) नियमेन प्रत्यायनं करोतीत्याह ॥

यांस्तु संभविनो धर्मा-
नन्तर्नीय(२) प्रयुज्यते ।
शब्दस्तेषां न सान्निध्यं
नियमेन व्यपेक्षते ॥ १६३ ॥

एतदेवान्वयव्यतिरेकाभ्यां स्फुटीकुर्वन्नाह ॥

---

(१) सर्वेषामिति २ पु० नास्ति ।

(२) अन्तर्णीयेति २ पु० पाठः स एव च युक्तः ।

यथा रोमशफादीनां व्यभिचारे ऽपि दृश्यते ।
गोशब्दो न तथा जातेर्विप्रयोगे प्रवर्त्तते ॥ १६४ ॥

उपसंहर्तुमिदानीमाह ॥

तस्मात्संभविनो ऽर्थस्य शब्दात्संप्रत्यये सति ।
अदृष्टविप्रयोगो ऽर्थः सम्बन्धित्वेन वर्त्तते ॥ १६५ ॥

नैयत्येनादृष्टविप्रयोगी जात्यादिरेव शब्दस्य सम्बन्धित्वेन वाच्यत्वेन गम्यतइति बोद्धव्यम् ॥ १६५ ॥

एवं नामपदस्यार्थविचारं कृत्वेदानीं तस्यैव भागार्थविचारं प्रस्तौति । तत्र प्रत्ययभागस्यार्थविचारं तावदाह ॥

वाचिका द्योतिका वा स्यु-
र्द्वित्वादीनां विभक्तयः ॥ १६५ऽऽ ॥

तेन प्रत्ययभागस्य संख्याकर्मादयो वाच्यत्वेन द्योत्यत्वेन वार्था इति ज्ञेयम् ॥

इदानीं प्रकृतिभागस्यार्थमभिधातुं प्रकृतिप्रत्ययसमुदाय एव संख्यादिविशिष्टस्यार्थस्याभिधायक इत्याह ॥

स्याद्वा संख्यावतो ऽर्थस्य
समुदायो ऽभिधायकः ॥ १६६ ॥

अथ वा संख्याद्युपलक्षितमेवार्थं प्रकृतिप्रत्ययसमुदायो ऽभिधत्तइत्यभिधातुमाह ॥

विना संख्याभिधानाद्वा संख्याभेदसमन्वितान् ।
अर्थान् स्वरूपभेदेन कांश्चिदाहुर्गवादयः ॥ १६७ ॥

स्वरूपभेदेन द्वित्वादिभेदेनेत्यर्थः ॥ १६७ ॥

ननु यदा शब्दा नित्यसम्बन्धा विवेकेन ज्ञातशक्तयः स्वार्थस्य प्र-

तीतौ तदा कथमेतदवगतमयं प्रकृत्यर्थो ऽयं प्रत्ययार्थ इत्याशङ्का-पोद्दारस्यान्वयव्यतिरेकौ निमित्तमिति प्रतिपादयितुमाह ॥

ये शब्दा नित्यसम्बन्धा विवेके ज्ञातशक्तयः ।
अन्वयव्यतिरेकाभ्यां तेषामर्थो विभज्यते ॥ १६८ ॥

विवेके सति शब्दार्थविभागे कृते सति च प्रातिपदिके प्रत्यये चासत्येकत्वादिविरहितं द्रव्यमात्रमवगम्यत इत्येवमन्वयव्यतिरेका-भ्यां प्रकृतिप्रत्ययार्थप्रविभागो व्यवस्थाप्यते ॥ १६८ ॥

तत्रापि शक्यत्वाशक्यत्वाभ्यामन्वयव्यतिरेकावाश्रित्य तत्प्रतिपादनं कर्त्तव्यमित्याह ॥

यत्र चाव्यभिचारेण
तयोः शक्यं प्रकल्पनम् ।
नियमस्तत्र

यत्रान्वयव्यतिरेकावुपलभ्येते तत्रैव नियतः न त्वशक्ये विषयइ-त्याह ॥

नत्वेवं
नियमो नुट्शबादिषु ॥ १६९ ॥

भवतामस्तीत्यादावसति नुडादावर्थदर्शनाच्छवादीनां पचतीत्यादौ तस्य साहाय्यमात्रं स्थापितं न पृथगर्थतेति उक्तं च "भावकर्मकर्त्ता-रः सार्वधातुकार्था इति चेदेकद्विबहुषु नियमानुपपत्तिरतदर्थत्वात्, शब्विकरणार्था(१) इति चेत् कृताभिहितेषु विकरणाभाव" इति ॥ १६९ ॥

यत्र तु पृथगेव तयोः प्रकृतिप्रत्यययोरर्थवत्त्वं दृश्यते तत्र पृथग-

(१) विकरणार्था इत्येव २ पु॰ पाठः ।

र्थाभिधानमेवाङ्गीकार्यं न तूपलक्षणार्थत्वं कल्पनीयमित्याह ॥

सम्भवे वाभिधानस्य लक्षणं तु न कल्प्यते(१) ।
आपेक्षिक्यो हि संसर्गे नियताः शब्दशक्तयः ॥१७०॥

प्रकृतिप्रत्यययोः पृथगर्थाभिधानसम्भवे प्रकृत्यर्थ एव पदवाच्यः प्रत्ययार्थस्तूपलक्ष्यमाणः प्रत्ययार्थ एव पदवाच्यः प्रकृत्यर्थस्तूपलक्ष्यमाण इति न युक्ता कल्पना। ननु यदि प्रकृतिप्रत्यययोः पृथक् पृथगर्थमभिधातुं शक्तिरस्ति तत्किमिति परस्परापेक्षितया स्वार्थाभिधानमित्याह। 'आपेक्षिक्य' इत्यादि । यस्मात्संसर्गे प्रकृतिप्रत्ययार्थयोः शब्दशक्तयो ऽन्वयव्यतिरेकापेक्षिता नियता एव प्रातिस्विक्य इव(२) प्रतीयन्तइति ॥ १७१ ॥

यत्र त्वपेक्षायामपि न पृथगर्थतोपलभ्यते तत्रापोद्धारो नाश्रयणीय इत्याह ॥

न कूपसूपयूपानामन्वयो ऽर्थस्य दृश्यते ।
अतो ऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥ १७१ ॥

न हि एकापगमे क्व चिद्या का चिदर्थानां वेदनोपजायते ॥ १७१ ॥

तदेवं शक्याशक्यावन्वयव्यतिरेकावाश्रित्यापोद्धारेणान्वाख्यातं पदभागयोः कार्यमित्युक्तं ततश्च किं सनिमित्तं अथ निर्निमित्तमेवेत्याशङ्क्य सनिमित्तमेव पदभागयोः पदस्य चान्वाख्यानं कार्यमितीदानीमुपपादयितुमाह ॥

अन्वाख्यानानि भिद्यन्ते
शब्दव्युत्पत्तिकर्मसु ।

(१) कल्पतइति २ पु० पाठः ।
(२) एवेति २ पु० पाठः ।

बहूनां सम्भवे ऽर्थानां
निमित्तं किं चिदुच्यते ॥ १७२ ॥

यत्र खलु बहूनि निमित्तानि सम्भवन्ति तत्र किं चिदेव नैयत्ये-
ना(१)श्रित्यान्वाख्यानं क्रियतइत्युच्यते ॥ १७२ ॥

एतदेव दर्शयितुमाह ॥

वैरवासिष्ठगिरिशा-
स्तथैकागारिकादयः ।
कैश्चित्कथं चिदाख्याता
निमित्तावधिसंकरैः ॥ १७३ ॥

वीरस्येदं वैरं वीराया वा, तथा वसिष्ठस्येदं वसिष्ठेन कृतं प्रोक्तं वा
वासिष्ठं, गिरौ शेतइति 'गिरौ डश्छन्दसी'ति डप्रत्यये ऽथ वा गिरिं
श्यतीति 'आतोनुपसर्गे क' इति के गिरिश, इत्येवं निमित्तावधिसां
कर्येणान्वाख्यानं कृतम् ॥ १७३ ॥

ननु नियतमेव निमित्तमत्र किं चिदुच्यतामित्याशङ्क्योपायाना-
मनियतत्वादनियतमिति प्रतिपादयितुमाह ॥

यथा पथः समाख्यानं वृक्षवल्मीकपर्वतैः ।
अविरुद्धं गवादीनां भिन्नैश्च सहचारिभिः ॥१७४॥

यथा वृक्षादिभिर्भिन्नैरुपायभूतैरेव कस्य चित्पथः समाख्यानम-
विरुद्धं तथा गवादीनां शब्दानां भिन्नैरेव सहचारिभिरन्वाख्यानमि-
ति बोद्धव्यम् ॥ १७४ ॥

अर्थस्य चावस्थाभेदा बहवः सन्ति येन च योवस्थाभेदः परिदृष्ट-
स्तेनैवासौ तत्समाख्यातं करोतीत्याह ॥

---

(१) अनैयत्येनेति २ पु० पाठः ।

अन्यथा च समाख्यान-
मवस्थाभेददर्शिभिः ।
क्रियते किंशुकादीना-
मेकदेशे ऽवधारणात्(१) ॥ १७५ ॥

किंशुको नेति किंशुकशब्दं प्रयुञ्जते इति भिन्नमेव निमित्तम् ॥ १७५ ॥

एतदेव व्यक्तीकर्तुमाह ॥

कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः ।
गुवतेर्गदतेर्वापि गौरित्यत्रानुदर्शितम् ॥ १७६ ॥

गोलक्षणस्यार्थस्य नानाविधा अवस्था दृष्टाः तदनुगमेनैवार्थमाहुराचार्याः ॥ १७६ ॥

एवं शब्दस्य प्रकृतिवाच्यमेव निमित्तं ततश्च बहुविधनिमित्तप्रदर्शनम् । इदानीं स्वरूपमेव शब्दानां प्रवृत्तिनिमित्तमन्वाख्यानायोपादीयतइति पक्षं प्रदर्शयितुमाह ॥

गौरित्येव स्वरूपाद्वा
गोशब्दो गोषु वर्त्तते ।
व्युत्पाद्यते न वा सर्वं ॥ १७६ऽऽऽ ॥

अथ कस्माद्गौरित्युच्यते गौरित्येव हि गौर्गवि वर्त्ततइत्यौविथःक्याः । अतश्च स्वरूपमात्रप्रयुक्ताः सर्वे शब्दा इत्यव्युत्पत्तिपक्ष एवेत्याह 'व्युत्पाद्यते न वा सर्वमि'ति ॥ १७६ऽऽऽ ॥

कैश्चित्स्वरूपं वाच्यं च निमित्तमुच्यतइत्याह ॥

कैश्चिच्चोभयमिष्यते ॥ १७७ ॥

---

(१) एकदेशावधारणाद् इति पु० पाठः ।

एवं सनिमित्तमन्वाख्यानं निमित्तं च वाच्यं बहुधा कैश्चित्कथं चित् किं चिदुक्तं स्वरूपं वा निमित्तं उभयमेव वेति दर्शितम् ॥ १७७ ।

इदानीं किं भिन्नमेव रूपं शब्दस्य आहो स्विदभिन्नमिति विचार्यते यदि भिन्नमेव तदा गमनं गरलं गज इत्यादिषु गादीनां भिन्नत्वाद्भेदेनैवोपादानं प्राप्नोति ततश्चानन्त्यादशक्यत्वमन्वाख्यानस्येत्याह ॥

सामान्येनोपदेशश्च शास्त्रे लघ्वर्थमाश्रितः ।
जात्यन्तरवदस्यापि विशेषाः प्रतिपादकाः ॥ १७८ ॥

शब्दभेददर्शने भिन्नानां सामान्यसमाश्रयेण लाघवादुपदेशः शास्त्रे क्रियते विशेषा ये ते ऽस्यैव जात्यन्तरवत्प्रतिपादका उच्यन्ते ॥ १७८ ॥

एतदेवाह ॥

अर्थान्तरे च यद्वृत्तं तत्प्रकृत्यन्तरं विदुः ।
तुल्यरूपं न तद्रूढावन्यस्मिन्ननुषज्यते ॥ १७९ ॥

रूढौ च तुल्यरूपं स्वरूपेणान्यस्मिन्नानुषज्यते तत्त्वतस्तद्भिन्नमेव सादृश्यात्तत्रैकत्वं मन्यते परमार्थतस्तु भिन्नाः शब्दा गवादयः ॥ १७९ ॥

स्वतश्च यजिर्भिन्न एवेत्याह ॥

भिन्नाविजियजी धातू
नियतौ विषयान्तरे ।
कैश्चित्कथं चिदुद्दिष्टौ
चित्रं हि प्रतिपादनम् ॥ १८० ॥

अन्यो यजिरन्य इजिरिति नियतौ बोद्धव्यौ । इजिः क्वित्येव यजिस्तु तदितरस्मिन्निति । आचार्यैः पुनः स चिह्नेदाश्रयेण निर्दिष्टौ

क्व चिदभेदेनेति प्रतिपादयितुमाह । 'केश्चिदि'त्यादि । कश्चिद्यजेः किति संप्रसारणं शास्ति इष्टः इष्टेति, तृजादौ तस्य तन्नेच्छति यष्टा यष्टुं यष्टव्यमिति, कश्चिदिजिमेवोपदिशति तस्य तृजादौ यादेशं विदधाति, इति प्रतिपादनवैचित्र्यम् ॥ १८० ॥

अवस्थाभेदाश्रयेणापि प्रतिपादनं दृश्यतइत्याह ॥

**एवं च बालवायादिजित्वरीवदुपाचरेत् ।**

**भेदाभेदाभ्युपगमे न विरोधो ऽस्ति कश्चन ॥ १८१ ॥**

इह विदूरात्प्रभवति वैदूर्य इति वैदूर्यशब्दं व्युत्पादयन्ति । न च विदूरादसौ प्रभवति । बालवायादुत्पन्नो विदूरे केवलं संस्क्रियते तत्रोक्तं "बालवायो विदूरं च प्रकृत्यन्तरमेव सा । न वै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरे"दिति । बालवायो वृत्तिविषये विदूरमापद्यते ततश्च बालवायात्प्रभवति वैदूर्यो मणिरिति सिद्धम् । अतो बालवायविदूरयोरभेदो ऽभ्युपगतः । अथ वान्यो वृत्तिविषये विदूरशब्द उच्यते । यथा वणिग्भिर्वाराणसी जित्वरीति । आदिशब्दाद्विश्रवणरवणशब्दाविति भेदो ऽवगन्तव्यः । अतो ऽभेदाभ्युपगमे भेदाश्रयणे वा न कश्चिद्दोषः । भेदपक्षाश्रयणे च सामान्यमाश्रित्य लाघवेनोपदेशः क्रियते । अभेदपक्षे त्वभिन्नरूपसमाश्रयणेनेवेति न किं चिदवद्यम् ॥ १८१ ॥

ततो यदि शब्दभेदपक्षः तदा धातूपसर्गयोः यथोक्तकल्पनमित्याह ॥

**अडादीनां व्यवस्थार्थं पृथक्त्वेन विकल्पनम् ।**

**धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥ १८२ ॥**

अड्द्विर्वचनव्यवस्थार्थं केवलं धातवः पृथगुपदिष्टा वस्तुतः पुनर्विशिष्टक्रियावचना एव तद्वति सोपसर्गाणामेव धातुत्वम् ॥ १८२ ॥

एतदेव प्रतिपादयितुमाह ॥

तथा हि सङ्ग्रामयतेः
सोपसर्गाद्विधिः स्मृतः ।
क्रियाविशेषाः संघातैः
प्रक्रम्यन्ते तथाविधाः ॥ १८३ ॥

असङ्ग्रामयत्, सिसङ्ग्रामयिषते, सोपसर्गस्यैवाड्द्विर्वचनदर्शनात्सोपसर्गस्यैवास्य धातुत्वं अत उपक्रमएवाख्याते विशिष्टैव धातुवाच्या क्रिया निर्वर्त्तयितुमुपक्रम्यतइत्याख्यातानां स्वरूपप्रदर्शनार्थमाह 'क्रियाविशेषा' इत्यादि । संघातैर्धातूपसर्गसमुदायैरित्यर्थः । तथाविधा अभिन्ना भिन्ना वा ॥ १८३ ॥

अतः किं भवतीत्याह ॥

कार्याणामन्तरङ्गत्व-
मेव(१)धातूपसर्गयोः ॥ १८३ऽऽ ॥

एवं धातूपसर्गाश्रयाणि यानि कार्याण्यन्तरङ्गाणीत्युच्यन्ते इति पूर्वं तान्येव प्रवर्तन्ते यथा सुडादयः ॥ १८३ऽऽ ॥

तथाभूतैव च सा क्रिया साधनसंबन्धं गच्छतीत्याह ॥

साधनैर्याति संबन्धं तथाभूतैव सा क्रिया ॥ १८४ ॥

तथाभूतैव उपसर्गविशिष्टैव कारकसंबन्धमुपगच्छति । एवं चानुभूयतइति कर्मणि लकारः सिध्यति तथा 'षत्वतुकोरसिद्ध' इत्यारभणीयम् । 'अड्भ्यासव्यवायेपी'त्यनारभणीयमेवेति स्थितम्, उक्तं च "कारकाणां प्रवृत्तिर्विशिष्टक्रियायामन्यथा(२) कृत्वा मांसौदने प्रवर्त्तन्ते अन्यथा च शुष्कौदन इति वृत्तोपसर्गसम्बन्धायाश्च त-

(१) एवमिति २ पु० पाठः ।
(२) क्रियाया अन्यथेति २ पु० पाठः ।

स्या वैशिष्ट्यमिति क्रमाश्रयणेन पूर्वमेवोपसर्गेण सम्बन्धः ॥ १८४ ॥

इदानीं पूर्वं धातुः साधनेन युज्यतइति क्रमसमाश्रयणेनाख्यातस्वरूपं प्रतिपादयितुमाह ॥

प्रयोगार्हेषु सिद्धः स-
न्भेत्तव्यो ऽर्थो विशिष्यते ।
प्राक् च साधनसम्बन्धा-
त्क्रियां नैवोपजायते ॥ १८५ ॥

लब्धात्मनस्तस्या विशेष्यत्वोपपत्तेः प्रयोगार्हेषु धातुषु सिद्धः सन्नर्थो भेत्तव्यो विशेष्यो भवत्युपसर्गादिभिः, न तु (१) पूर्वकालआख्याते विशेषणयोगः । यदि प्राक्साधनसम्बन्धात् क्रियाविशेष इत्युच्यते तदा ऽव्युत्पन्नायास्तस्याः स्वरूपाभावेन कथं चित्(२) शेषसम्बन्धः स्यादित्याह 'प्राक् चे'त्यादि । उक्तं च 'साधनं क्रियां निर्वर्त्तयति तामुपसर्गो विशिनष्टी'ति । पूर्वं साधनसम्बन्धः तत उपसर्गैस्तद्विशेषणमुपपन्नम् । अस्मिंश्च पक्षे 'ऽभ्यासव्यवायेपी'त्यारम्भणीयं 'षत्वतुकोरसिद्ध' इति तुकि कर्त्तव्ये एकादेशासिद्धत्वं न वक्तव्यं, प्रत्यय इत्यन्तरङ्गत्वात्साधनाभिधायकार्द्धधातुकाश्रयो गुणः प्रवर्त्ततइति सिद्धम् ॥ १८५ ॥

अथ पूर्वं धातुरुपसर्गेण युज्यतइत्यमुं पक्षं समाधातुमाह ॥

धातोः साधनयोगस्य भाविनः प्रक्रमाद्यथा ।
धातुत्वं कर्मभावश्च तथान्यदपि दृश्यताम् ॥ १८६ ॥

क्रियावचनो धातुरित्युक्तं साधनसम्बन्धाच्च प्राक् क्रियानिर्वृत्तेरसम्भवाद्यथा भाविसाधनसम्बन्धसमाश्रयणेनोपक्रमएव धातुत्वं धातु-

(१) नन्विति २ पु० पाठः ।
(२) चिदिति २ पु० नास्ति ।

संज्ञोच्यते, यथा च धातोः कर्मण इत्युच्यते कर्म यो धातुरितीषिक-र्मत्वस्य भावित्वादुपक्रमएवेषिकर्मत्वमुक्तं तथान्यदपि इष्यतां भावि-सम्बन्धादुपक्रमएव विशिष्टक्रियावचनत्वं इष्यतां को दोषः । एवं च भिन्नपक्षाश्रयणेन तथाविधविशेषनिर्वर्त्तनं शोभतइत्युच्यते । 'क्रिया-विशेषाः सङ्घातैः प्रक्रम्यन्ते तथाविधा' इति ॥ १८६ ॥

उपक्रम एव चासौ क्रिया विशिष्टैवाभ्युपगन्तुं युक्तेति दृष्टान्तप्र-दर्शनपूर्वकमाह ॥

बीजकालेषु सम्बद्धा यथा लाक्षारसादयः ।
वर्णादिपरिणामेन फलानामुपकुर्वते ॥ १८७ ॥

बीजवापकालएव यथा लाक्षारसादयो बीजसम्बन्धादुत्तरकालं वर्णरसादिपरिणामेन फलोपकारं कुर्वन्ति ॥ १८७ ॥

तथा दार्ष्टान्तिके योजयितुमाह ॥

बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः ।
अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥ १८८ ॥

धातूपसर्गयोः सम्बन्धबुद्ध्या समुल्लिखितो यो ऽन्तर्णीतः केवलं तस्मात्सम्बन्धात्तयोर्धातूपसर्गयोः सम्बन्धे(१) पदकाले पदनिष्पत्तौ सत्यामसौ भेदः प्रकाशते न तु स्वत इति वृत्तोपसर्गसम्बन्धाया एव साधनयोग उपपन्नः ॥ १८८ ॥

एवमपोद्धारप्रस्तावे वाक्ये पदस्य पदभागयोः प्रकृतिप्रत्यययोः श-क्याशक्यान्वयव्यतिरेकसमाश्रयणेन सनिमित्तमन्वाख्यानं कर्तुमने-कधार्थः क्व चिन्निमित्तं स्वरूपं वेत्याख्यातं, ततश्च पदमेकमनेकं वेति नामपदं लेशतो निर्णीतम्, आख्यातमपि 'क्रियाविशेषाः सङ्घातैः प्रक्रम्यन्ते तथाविधा' इत्यादिना भेदाभेदविचारपूर्वकमपि निदर्शि-

(१) संबन्धः इति २ पु० पाठः ।

तमायम्, इदानीं 'नामाख्यातोपसर्गनिपाताश्चेति चत्वारि पदजातानी'ति निरुक्तकारः तत्र नामाख्यातस्वरूपे प्रदर्शिते, उपसर्गाणां प्रदर्शनीयमिति तत्स्वरूपं प्रदर्शयितुमाह ॥

क्व चित्संभविनो भेदाः केवलैरभिदर्शिताः(१) ।
उपसर्गेण सम्बन्धे व्यज्यन्ते प्रपरादिना ॥ १८९ ॥

क्व चित्पचत्यादौ प्रकर्षादीनां सम्भवात् केवलैस्तेषामप्रतीतेरुपसर्गसम्बन्धात्तदवगम इति तेषूपसर्गाणां विशेषद्योतकत्वमुच्यते अत एव चोक्तं 'तमेव विशिनष्ट्यन्य' इति ॥ १८९ ॥

तर्हि द्योतकत्वमेव किं तेषामाहो स्वित्पक्षान्तरमपीत्याह ॥

स वाचको विशेषाणां सम्भवाद्द्योतको ऽपि वा ।
शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते ॥१९०॥

केवलं न द्योतकाः यावद्वाचका अपि दृश्यन्ते । यथा प्रतिष्ठत इत्यादौ धातोर्गतिनिवृत्तिवाचकत्वं प्रेण तु गतिवाचकत्वं व्यवस्थाप्यते । तथा चोक्तं 'धात्वर्थं बाधते कश्चि'दिति 'सम्भवाद् द्योतकोपि वे'त्येतदादावेव कारिकायां व्याख्यातम् । अथ तृतीयमपि पक्षं दर्शयितुमुक्तं 'शक्त्याधानाये'त्यादि । सम्भूय धातूपसर्गावर्थमाहतुरिति शक्तिमात्रमुपसर्गः कुरुत इत्यर्थाभिधाने सहकारिण उपसर्गाः । अत्राप्युक्तं 'कश्चित्तमनुवर्त्तत'इति ॥ १९० ॥

प्रतिष्ठत इत्यादौ प्रसिद्ध्या धातोर्गतिनिवृत्तिवाचकत्वे उपसर्गस्य गतिवाचकत्वं स्थापितम्, इदानीमनुमानेन द्योतकत्वमेव सर्वत्रास्य व्यवस्थापयितुमाह ॥

स्थादिभिः केवलैर्यच्च गमनादि तु गम्यते ।
तत्रानुमानाद्द्विविधात्तद्धर्मा प्रादिरुच्यते ॥ १९१ ॥

(१) अनिदर्शिता इति २ पाठः ।

तिष्ठतिर्गतिनिवृत्तिं प्रसिद्ध्याभिदधाति अतः केवलेन तेन गमनं न प्रतिपाद्यते इत्यनेकार्था धातव इति कृत्वानुमानाद्गतिवाचकत्वमपि तस्य व्यवस्थाप्यते उपसर्गस्तु तद्द्योतक एव । गतिनिवृत्तौ तु प्रसिद्धत्वात्तिष्ठतेः प्रशब्दस्य गतिवाचकत्वमुच्यते, वस्तुस्थित्या त्वनुमानेन प्रादेर्द्योतकत्वमेव सामान्यतो दृष्टेन विशेषतो दृष्टेन चेत्याह 'तत्रे'त्यादि । धातुरनेकार्थः उपसर्गश्च द्योतक इत्यनुमानेन व्यवस्थाप्यते । द्विविधमनुमानं भवति विशेषतो दृष्टं सामान्यतो दृष्टं चेति । तत्राविशेषेणोपसर्गाणां द्योतकत्वं तथा च प्रशब्दो धर्मी आदिकर्मद्योतक इति साध्यो धर्मः प्रशब्दत्वात् पूर्वोदितपच्यादिदृष्टप्रशब्दवदिति । विशेषतो दृष्टेनानुमानेन तद्धर्मप्रशब्दस्य समानधर्मा सर्वोऽपि प्रादिरुपसर्गो द्योतकत्वधर्मयुक्त उच्यत इति । धातुश्च सामान्यतो दृष्टेनानुमानेनानेकार्थः । यथा तिष्ठतिर्धर्मी अनेकार्थ इति साध्यो धर्मः धातुत्वाद् उभयवादिसम्मतानेकार्थ(१)यजत्यादिधातुवदिति । एवं सामान्यतो दृष्टानुमानात्तद्धर्मान्यो धातुरप्यनेकार्थ उच्यत इति योजना ॥ २८१ ॥

इदानीं संभूयार्थाभिधायकत्वमपि दर्शयितुमाह ॥

**अप्रयोगेऽधिपर्योश्च यावद् दृष्टं क्रियान्तरम् ।**
**तस्याभिधायको धातुः सह ताभ्यामनर्थकः ॥१८१॥**

अध्यागच्छति पर्यागच्छतीत्यत्राधिपरी अनर्थकावागच्छतीत्यस्मादेवोपरिभावविशिष्टस्य वा सर्वतोभावविशिष्टस्य वाप्यागमनस्य प्रकरणादिनावगतत्वात् लौकिकशब्दव्यवहारे लाघवं प्रत्यनादरादिति स्पष्टार्थमेवाधिपर्योः प्रयोगः । समुदाय एव विशिष्टार्थाभिधायक इत्यधिपर्योः केवलयोर्धातोश्चाऽऽनर्थकत्वमनर्थान्तरवाचकत्व-

(१) अनेकार्थेति २ पु० नास्ति ।

मित्यर्थः । अतो धातूपसर्गौ सम्भूयैवार्थविशेषं ब्रूत इति धातोरर्थाभिधाने सहकारिण उपसर्गाः । उपसर्गाणां रूढितो ऽर्थवत्त्वएव तावधिपरी अनर्थकाविति केवलानर्थकतया । न हि तयोरुपसर्गयोः केवलयोस्तत्रार्थोऽस्ति अत एवोक्तं 'कश्चित्तमनुवर्तत'इति ॥ १९२ ॥

प्रसङ्गात्स्वार्थिकप्रत्ययानां स्वरूपमाह ॥

**तथैव स्वार्थिकाः केचित्संघातान्तरवृत्तयः ।**
**अनर्थकेन संसृष्टाः प्रकृत्यर्थानुवादिनः ॥ १९३ ॥**

यावक इत्यादौ कनादयः सम्भूयैवार्थबोधका बोद्धव्याः । यावशब्दात्केवलात्पृथगेव कप्रकृतिर्यावशब्दो ऽध्यवसित इति सङ्घातान्तरवृत्तयस्ते बोद्धव्याः । अत एवाह 'अनर्थकेन संसृष्टा' इति । यावशब्दः कप्रकृतिरनर्थक एव समुदायस्तु परस्परशक्त्याहितविशेषस्तत्रार्थवान् नासंभूय स्वार्थमाहेत्याह 'प्रकृत्यर्थानुवादिन' इति । ननु प्रकृतिभागस्येदानीमेवानर्थकत्वमुक्तमतः कथं प्रकृत्यर्थानुवादिन इत्युच्यते, सादृश्यमात्रादित्यभिप्रायः । कप्रकृतिः केवला यावशब्देन सदृशमभिमन्यतइति तदभिप्रायेण प्रकृत्यर्थानुवादिन इत्युक्तं वस्तुतस्तु सङ्घातान्तरवृत्तय इत्येव बोद्धव्यम् ॥ १९३ ॥

अथ निपातानामनैयत्येन स्वरूपं प्रदर्शयितुमाह ॥

**निपाता द्योतकाः केचि-**
**त्पृथगर्थाभिधायिनः ।**
**आगमा इव केऽपि स्युः**
**संभूयार्थस्य वाचकाः ॥ १९४ ॥**

तेषामुपसर्गवद् द्योतकत्वं क्व चित् यथा वृक्षश्च प्लक्षश्चेत्यादौ । चादीनां केवलानां च केषां चित् पृथगर्थाभिधायित्वं वाचकत्वमेव

सिद्धमित्याह 'के चिदि'त्यादि । के चिन्निपाता आगमवत्संभूय वाचकाः यथा येषां पृथगर्थं प्रकल्पतइति पाठः तेषां मते निपातानां द्वैविध्यं के चिदर्थवन्तः के चिदनर्थका इति । तत्र के चिन्निपाताः पृथगर्थप्रकल्पने सत्यर्थाभिधायिनः ततो द्योतका इत्यर्थवतां स्वरूपकथनं ये त्वनर्थकास्तेषां स्वरूपमाह 'आगमा' इत्यादि ॥ १८४ ॥

तथा च लौकिके प्रयोगे ऽनियम इत्याह ॥

उपरिष्टात्पुरस्ताद्वा द्योतकत्वं न भिद्यते ।
तेषु प्रयुज्यमानेषु भिन्नार्थेष्वपि सर्वथा ॥ १८५ ॥

पूर्वं पश्चाद्वा प्रयुक्तास्तदर्थद्योतनं कुर्वन्तीति तेषु विकल्पसमुच्चयाद्यर्थेषु द्योतकत्वमेव प्रयुज्यमानेषु स्थितम् ॥ १८५ ॥

अथ वाचका एव कस्मान्नोच्यन्ते किं द्योतकत्वेनेत्यर्थद्योतकत्वं दृढीकर्तुमाह ॥

चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः ।
प्रत्ययो वाचकत्वे ऽपि केवलो न प्रयुज्यते ॥ १८६ ॥

एते हि चादयः केवला न प्रयुज्यन्ते ततो वाचका न भवन्तीति बोद्धव्यम् । चादयो धर्मी वाचका न भवन्तीति साध्यो धर्मः केवलानामप्रयोगात् । यदि हि वाचकाः स्युस्तदा गवादिवत् केवलानामपि तेषां प्रयोगः स्याद् इत्यनुमानम् । नन्वत्र प्रत्यनुमानमस्ति चादयो धर्मी द्योतका न भवन्तीति साध्यो धर्मः केवलानामप्रयोगात् । प्रत्ययवत्तत्राह 'पदत्वे सती'ति । एतदुक्तं भवति । न निर्विशेषणोयं हेतुरपि तु पदत्वे सति केवलानामप्रयोगात् द्योतका एतइति पदत्वे सतीत्यनेन प्रत्ययव्यावृत्तिः । एतदेव दर्शयितुमाह 'प्रत्ययो वाचकत्वेपी'त्यादि । प्रत्ययस्य कस्य चिद्वाचकत्वेपि पदत्वाभावात्केवलस्याप्रयोगः ॥ १८६ ॥

अथ शब्दशक्तिस्वाभाव्याच्चादिपदस्यासत्त्वभूतो यः पृथगर्थः तद्वाचकत्वाद्वाचकत्वं व्यवस्थाप्यते तदनुपपन्नं, शक्यनुग्रहाद्यथा तदर्थवाचकानां समुच्चयादीनां प्रयोगे षष्ठी श्रूयते, प्लक्षस्य समुच्चयः न्यग्रोधस्य समुच्चय इति तद्वन्निपातप्रयोगे षष्ठी श्रूयेत प्लक्षस्य च न्यग्रोधस्य चेति। स्यादेवं यदि समुच्चयाभिधायकाः स्युः, न चैवं, किं तर्हि, समुच्चिताभिधायिन एत इत्युच्यते तदभिधाने च व्यतिरेको नास्तीत्याह॥

**समुच्चिताभिधानेऽपि**

**व्यतिरेको न विद्यते॥ १८६ऽऽ॥**

यद्येवं समुच्चितस्य सत्त्वभूतस्याभिधाने ऽसत्त्वइति प्रतिषेधान्निपातसंज्ञाया अभावे तत्पूर्विकाया अव्ययसंज्ञाया अभावाच्चादेरपि विभक्तेः श्रवणं प्राप्नोतीत्याह॥

**असत्त्वभूतो भावश्च**

एतदुक्तं भवति। इह शब्देरर्थाभिधानं स्वाभाविकमिति स्थितम्। अत्र निपाताः शब्दशक्तिस्वभावादेवासत्त्वभूतार्थाभिधायिनः प्रतीयन्तइति सनिदर्शनमाह॥

**क्रिया ऽन्येनाभिधीयते॥ १८७॥**

अत्र यथेत्यनुषङ्गः। यथा पाक एवोभयत्र नामपदस्याख्यातस्य च वाच्यः शब्दशक्तिस्वाभाव्यात्तथा पचतीत्याख्यातेनासत्त्वभूतो ऽसावभिधीयते, पाक इत्यत्र नामपदेन परिनिष्ठितस्वभावः सिद्ध इति, तद्वन्निपातैः समुच्चितादेरसत्त्वभूतस्याभिधानमिति न विभक्त्युत्पत्तिः। उक्तं च। 'नेदं वाचनिकं लिङ्गसंख्यादि स्वाभाविकमेव। तद्यथा समानमधीयानानां केचिदर्थैर्युज्यन्ते अपरे ने'ति। एवं वाचकत्वात्समुच्चिताभिधाने ऽप्याख्यातपदवदसत्त्वभूतार्थाभिधायित्वा-

द्विभक्तिरभावः ॥ १६७ ॥

अस्त्वेवमपि समुच्चिताभिधायित्वाद्यथा स्वतन्त्राणां तदभिधायकानां विशेषणेन योगस्तथा निपातानामपि स्यात्, अथ च गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्यसत्त्ववाचकत्वाद्विभक्त्यभावात् शोभनं च वृत्त इति प्राप्नोति । तथा चान्यत्रोक्तम्, प्रतिप्रयोगं(१) जात्यङ्गे सम्बन्धमुपगच्छति । विशेषणं ततो धर्मान् जातिस्था(२)न्प्रतिपद्यते, ततश्च पञ्चाला जनपदो बहुधनो रमणीय इति भवति । अथ लुबन्तस्य विशेषणं न जातेः ततः पञ्चाला रमणीया बहुधना जनपद इति भवति । एतदाशङ्क्य समर्थयितुमाह ॥

समुच्चिताभिधानेऽपि विशिष्टार्थाभिधायिनाम् ।
गुणैः पदानां सम्बन्धः परतन्त्रास्तु चादयः ॥ १९८ ॥

गुणैर्विशेषणैः पदानां विशिष्टार्थाभिधायिनां सम्बन्ध उपपद्यते । निपातानां तु शक्तिस्वाभाव्यादसत्त्ववाचित्वेपि नियतपरतन्त्रत्वाद्विशेषणयोगो नास्तीति न कश्चिद्दोषः । एतदुक्तं भवति । एतदपि शक्तिस्वाभाव्यमेव यत्तेषां नित्यपरतन्त्रत्वं नामेति । अतः समुच्चिताभिधानेपि न केवलः प्रयोगो नापि विशेषणसम्बन्ध इति स्थितम् ॥ १९८ ॥

एवं च नामाख्यातोपसर्गनिपातलक्षणं पदचतुष्टयं व्याख्यातं, अथ कर्मप्रवचनीयाः पञ्चमं पदमभ्युपगतमिति तद्विचारयितुमाह ॥

जनयित्वा क्रियां कां चि-
त्सम्बन्धो वि(३)निवर्त्तते ।

(१) प्रतिप्रयोगइति २ पु० पाठः ।
(२) जातिस्तानिति २ पु० पाठः ।
(३) क्रिया का चित्सबन्धित्वे इति २ पु० पाठः ।

**श्रूयमाणे क्रियाशब्दे**
**सम्बन्धो जायते क्व चित् ॥ १९९ ॥**

सम्बन्धावच्छेदहेतवः कर्मप्रवचनीया इष्यन्ते । यद्वक्ष्यति 'सम्बन्धस्य भेदका' इति । सम्बन्धश्च सर्वः क्रियाकारकपूर्वको भवति । तत्र क्व चित्सम्बन्धं जनयित्वा क्रिया विनिवर्त्तते यथा राजपुरुष इति । अत्र हि राज्ञः पुरुषो ऽयं यस्मात्स राजा पुरुषं बिभर्त्ति, अतो भरणलक्षणा क्रिया ऽऽश्रयाश्रयिभावलक्षणं सम्बन्धं जनयित्वा निवृत्ता । क्व चित् क्रियापदं श्रूयमाणसम्बन्धमुपजनयति, यथा मातुः स्मरतीति । अत्र हि मातुरिति कर्मपदमतो मातृसम्बन्धिस्मरणमिति निमित्तनिमित्तिभावलक्षणं सम्बन्धं स्मरतिक्रिया श्रूयमाणैव जनयति । एतदेवान्यत्रोक्तं "सम्बन्धः कारकेभ्यो ऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां वा क्रियायां सो ऽभिधीयते" इति ॥ १९९ ॥

सम्बन्धसामान्ये षष्ठीति किमर्थमधीगर्थदयेशां कर्मणीत्यादिप्रकरणारम्भ इति प्रसङ्गाद्विचारयितुमाह ॥

**तत्र षष्ठी प्रतिपदं समासस्य निवृत्तये ।**
**विहिता दर्शनार्थं तु कारकं प्रत्युदाहृतम् ॥ २०० ॥**

मातुः स्मरणमित्यादौ कर्मणि शेषत्वेन विवक्षिते सिद्धैव षष्ठीति पुनः प्रातिपद्येनाधीगर्थेत्यादिना या षष्ठी विहिता सा निसमाय भवति । कर्मादौ शेषत्वेन विवक्षिते षष्ठ्येव भवति यदन्यत्प्राप्नोति तन्निषिध्यते । किं चान्यत्प्राप्नोति, लुगादि, तत्र निदानोच्छेदनं विना न लुगादिनिवृत्तिः कर्त्तुं शक्येति समासनिवृत्तिरेव क्रियते ततश्च षष्ठ्येव भवति, यदन्यतः पृष्ट्वा ऽऽयाति समासलुगादि प्राप्नोति, तन्निवार्यतइत्यतः प्रतिपदं पुनः षष्ठी समासस्य निवृत्तये विहितेति बोद्धव्यम् । अतश्च 'प्रतिपदविधाना च षष्ठी न समस्यत'इति नार-

भणीयमेव । यद्येवं 'कर्मणीति किं मातुर्गुणैः स्मरण'मिति कथं प्रत्युदाहृतं, यथा गुणानां स्मर्त्तव्यत्वस्यासम्भवः, तथा शेषत्वस्यापि । यदि शेषत्वस्यापि(१) यदि शेषत्वेनास्य(२) विवक्षिताः स्युस्तदा तेषां षष्ठी स्यात्, तृतीया न भवेत् । ततश्च द्व्यङ्गवैकल्यमेतस्येत्येतदाशङ्क्याह 'दर्शनार्थं त्वि'त्यादि । मातुर्गुणानां स्मरणमित्युक्ते संदिह्येत, गुणाः कर्म करणं वेति । तत्रोक्तं गुणैः स्मरणमिति, गुणैरिति करणं यदा शेषत्वेन विवक्ष्यते तदा प्रतिपदविधाना षष्ठी मा भूदित्येवमर्थं कर्मणीत्युक्तमिति द्व्यङ्गवैकल्याभावः । पुनः षष्ठीविधानं समासादिनिवृत्त्यर्थएवेति स्थितम् । उक्तं च । "साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः । प्रासा (३) प्रतिपदं षष्ठी समासस्य निवृत्तय"इति । साधनैर्व्यपदिष्टे शेषसम्बन्धे इत्यर्थः । एवं कर्मण्येव शेषत्वेन विवक्षिते षष्ठी, कारकान्तरे त्वकैवेति वृत्तिकाराः । तेषां मते गुणैः स्मरणं न तु गुणानां स्मरणमिति का चिदपि षष्ठी । टीकाकारमते तु करणस्य शेषत्वविवक्षायां गुणानां स्मरणं गुणस्मरणमित्यपि भवतीति मतभेदः ॥ २०० ॥

एवं क्रियया सम्बन्धो जन्यतइति स्थितं, ततः किमित्याह ॥

**स चोपजातः सम्बन्धो विनिवृत्ते क्रियापदे ।**
**कर्मप्रवचनीयेन तत्र तत्र नियम्यते ॥ २०१ ॥**

स च क्रिययोपजनितः सम्बन्धः तस्मिंश्चोपजाते यदा क्रियापदं क चिन्न श्रूयते, तदा क्रियाजनितो ऽयं स्यादिति संदेहे कर्मप्रवचनीयेन तत्र तस्यां क्रियायां नियम्यतइति सम्बन्धविशेषः कर्मप्रवचनीयैः प्रत्याय्यते । अत एव कर्म प्रोक्तवन्तः, क्रियाकृतं विशेषसम्बन्धं

(१) यदि शेषत्वस्यापीत्यधिकमिति भाति । परं तु दृष्टपुस्तके सत्त्वान्निवेशितम् ।
(२) अस्य स्मरणस्येत्यर्थः ।
(३) प्रोक्ते इति पाठान्तरम् ।

द्योतयन्तीति कर्मप्रवचनीया उच्यन्ते ॥ २०१ ॥

अथा ऽश्रूयमाणायाः क्रियाया आक्षेपकाः कर्मप्रवचनीयाः कस्मान्नाश्रीयन्तइत्याह ॥

**येन क्रियापदाक्षेपः स कारकविभक्तिभिः।**
**युज्यते विर्यथा तस्य लिखावनुपसर्गता ॥ २०२ ॥**

इह येन शब्देन क्रियापदस्याक्षेपः क्रियते स कारकविभक्त्या युज्यतइति दृश्यते(१)। यथा प्रादेशं विपरिलिखतीति। अत्र विशब्दो मानक्रियाया आक्षेपकः। प्रादेशं विमाय परिलिखतीत्यर्थावगतेः। ततो विमानक्रिययात्र प्रादेशलक्षणं कर्माक्षिप्तमिति तस्य कारकविभक्त्यैव द्वितीयया योगः। यदा च क्रियान्तराक्षेपको विशब्दस्तदास्य लिखत्यसम्बन्धात्तं प्रत्यनुपसर्गत्वमेव। ततश्च गतिर्गताविति निघाताभावः। तद्वत्कर्मप्रवचनीयैर्यदि क्रियापदमाक्षिप्येत, तदा तद्योगे कारकविभक्तिरेव स्यात्, ततश्च 'कर्मप्रवचनीययुक्ते द्वितीये'ति नारम्भणीयमेव स्यात्। किं तु सम्बन्धसामान्ये षष्ठी प्राप्नोति तद्बाधनाय द्वितीया ऽऽरभ्येत तदारम्भः शोभेत ॥ २०२ ॥

क्रियापदाक्षेपकत्वमन्यत्रापि दृष्टमिति तदेव दृढीकुर्वन्नाह ॥

**तिष्ठतेरुपयोगश्च दृष्टो ऽप्रत्यजयन्निति ॥ २०२ऽऽ ॥**

अप्रत्यजयन्नित्यत्र प्रतिशब्दः स्थितिक्रियाया आक्षेपकः परिदृष्टः। देवा असुरानप्रतितिष्ठतः प्रतिष्ठामलभमानानजयन्निति तिष्ठतेरुपयोगः आक्षेपः(२) परिदृष्टः ॥ २०२ऽऽ ॥

तथा धातुना सम्बन्धेपि सुन्वन्तीत्यत्राभिशब्दस्य केवलस्य चाभिमुख्ये वृत्तिः परिदृष्टेति प्रसङ्गादाह ॥

---

(१) दृश्यतामिति २ पु० पाठः।
(२) व्याक्षेपइति २ पु० पाठः।

सुन्वतीत्याभिमुख्ये ऽभिः
केवलो ऽपि प्रयुज्यते ॥ २०३ ॥

तदेवं कर्मप्रवचनीयानां सम्बन्धनियामकत्वमन्वर्थसंज्ञाश्रयेणैव स्थापितम् ॥ २०३ ॥

अथ ख्यात्यादीनां तद्रूपत्वासम्भवे कथं कर्मप्रवचनीयसंज्ञा स्यादित्याह ॥

कर्मप्रवचनीयत्वं
क्रियायोगे विधीयते ।
षत्वादिविनिवृत्त्यर्थं
स्वत्यादीनां विधर्मणाम् ॥ २०४ ॥

अत्र स्वत्यादीनां कर्मप्रवचनीयत्वं विधीयते संज्ञान्तरव्युदासायैवेत्यतश्चैकसंज्ञाधिकाराद्गत्युपसर्गसंज्ञाभावे तदाश्रयं षत्वादिक "सुपसर्गा"दित्यादिना न भवति ॥ २०४ ॥

अन्यदपि प्रसङ्गादाह ॥

हेतुहेतुमतोर्योग-
परिच्छेदे ऽनुना कृते ।
आरम्भाद्बाध्यते प्राप्ता
तृतीया हेतुलक्षणा ॥ २०५ ॥

लक्षणेत्थंभूतेत्यादिना सिद्धा ऽनोः कर्मप्रवचनीयसंज्ञा । लक्षणं हि ज्ञापकं यथा तथा हेतुरप्युच्यते, ततश्च यथा ज्ञाप्यज्ञापकभावे वृक्षमनुविद्योतते विद्युदित्यत्रानोः कर्मप्रवचनीयसंज्ञा, तथा शाकल्यस्य संहितामनुप्रावर्षदित्यत्रापि । तत्र हेतुहेतुमद्भावलक्षणव्यतिरेकव्यवच्छेदे ऽनुना कृते हेतुतृतीयैव परत्वात्प्राप्नोति तथा च तृतीयाया अ-

वकाशः धनेन कुलमित्यादि, लक्षणेत्थंभूतेत्यस्यावकाशो ऽमुष्मीप्यस्मा-पक्षभावलक्षणस्य सम्बन्धस्यावच्छेदकः, यथा वृक्षमनुविद्योतते विद्यु-दिति, इहोभयं प्राप्नोति शाकल्यस्य संहितामनुप्रावर्षदिति, अत्र हे-तुर्हेतुमद्भावसम्भवात् तृतीया प्राप्नोति, परत्वात् 'अनुर्लक्षण'इति पु-नर्विधानान्न भवति ॥ २०५ ॥

एवं कर्मप्रवचनीयानां प्रासङ्गिकं विचारं कृत्वा वाचकत्वादिप्र-कारत्रितयनिराकरणेन सम्बन्धविशेषकत्वमेव व्यवस्थापयन्नाह ॥

**क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।**
**नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥२०६॥**

प्रपचतीत्यादावुपसर्गवद् नैवायं(१) क्रियाद्योतकः । षष्ठ्यपवादभू-तया च द्वितीययैवोक्तः सम्बन्ध इति न तस्य कर्मप्रवचनीयो वाच-कः । नापि प्रादेशं विपरिलिखतीत्यादौ विशब्दवत् क्रियापदस्याक्षे-पकः । किं तर्हि विशिष्टक्रियाजनितो ऽयं सम्बन्ध इति सम्बन्धस्य भेदको विशेषकः कर्मप्रवचनीयः ॥ २०६ ॥

इत्येवमपोद्धारप्रसङ्गेन पञ्चधा पदविभागः प्रदर्शितः । एवं दर्शितं पदप्रविभागमग्रे ऽनूद्य सप्रपञ्च(२)पदार्थभेदमुपपादयिष्यति । यथा "द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधापि च । अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् । पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव चे"(३) त्यादि । एवमखण्डवाच्य(४)वादिना ऽपोद्धारसमाश्रयेण प्रासङ्गिका-दिकार्यसमर्थने विहिते तत्प्रसङ्गात्पदपदार्थपदभागपदभागार्थवि-

---

(१) नायमिति २ पु० पाठः ।
(२) सप्रपञ्चमित्यसमस्तम् २ पु० ।
(३) वेति २ पु० पाठः ।
(४) वाक्येति २ पु० पाठः स चाञ्जसः ।

चारः क्षतः निरुक्तकारमतानुसारेण(१) च नामाख्यातोपसर्गनिपातलक्षणप्रदर्शनं कृतं, कर्मप्रवचनीयाः पञ्चमपदजातमिति के चित्प्रतिजानतइति तदपि प्रदर्शितं, एवं च दूषितेषु परपक्षेषु स्वपक्षे च दूषणनिराकरणपूर्वकं स्थापिते पुनरप्यखण्डपक्षमेव समर्थयितुकामो वार्त्तिकविरोधमाशङ्क्याह ॥

अनर्थकानां सङ्घातः सार्थको ऽनर्थकस्तथा ।
वर्णानां पदमर्थेन युक्तं नावयवाः पदे ॥ २०७ ॥

किं च ॥

पदानामर्थयुक्तानां सङ्घातो भिद्यते पुनः ।
अर्थान्तरावरोधेन सम्बन्धविगमेन च ॥ २०८ ॥

अर्थान्तरस्य संसर्गलक्षणस्यावरोधेन परिग्रहणेन कश्चिदेव देवदत्त गामभ्याजेत्यादिकः पदसङ्घातोर्थवान्, कश्चित्तु दश दाडिमादिः परस्परसम्बन्धविगमेनानर्थक इति सम्बन्धाद्यपेतः ॥ २०८ ॥

तदेव दर्शयितुमाह ॥

सार्थकानर्थकौ भेदे सम्बन्धं नाधिगच्छतः ।
अधिगच्छत इत्येके कुटीरादिनिदर्शनात् ॥ २०९ ॥

भेदे क्रियमाणे सति यौ वर्णसमुदायौ सार्थकानर्थकौ यथा कुटीशब्दो रशब्दश्च तौ सम्बन्धमनर्थकत्वान्नाधिगच्छत इति के चित् । द्योत्येनार्थेनार्थवत्त्वादपरे सम्बन्धमधिगच्छत इत्याहुः ॥ २०९ ॥

सङ्घातार्थवत्त्वादवयवार्थवत्त्वमपि दर्शयितुमाह ॥

अर्थवद्भ्यो विशिष्टार्थः सङ्घात उपजायते ।
नोपजायतइत्येके समासस्वार्थिकादिषु ॥ २१० ॥

---

(१) वचनानुसारेणेति ३ पु० पाठः ।

राजपुरुष इत्यादावर्थवदभ्यः सङ्घातो ऽर्थवानुपजायते । स्वार्थिकादिषु त्ववयवार्थप्रकृतिकमर्थान्तरं नाविर्भूतमिति नास्त्यवयवार्थवदभ्यो व्यतिरिक्तः सङ्घातार्थस्य(१) सम्भवः ॥ २१० ॥

द्विविधरूपतया ऽवस्थितास्त इत्याह ॥

केचित्तु युतसिद्धार्था
भेदे निर्ज्ञातशक्तयः ।
अन्वयव्यतिरेकाभ्यां
केचित्कल्पितशक्तयः ॥ २११ ॥

युतः सिद्धो ऽर्थो येषां ते तथाविधाः यथा शमीवृक्षो दाडिमीवृक्ष इत्यादयः । कस्मादेवमित्याह । भेदइत्यादि । भेदे, वाक्ये सति रूपस्याऽविनष्टत्वात्पृथगेव निर्ज्ञातशक्तयः के चित्संज्ञुप्रज्ञ्वादयोन्वयव्यतिरेकाभ्यां कल्पितशक्तय इति । अत्र हि प्रगते जानुनी यस्य सङ्गते जानुनी यस्य 'प्रसंभ्यां जानुनोर्ज्ञुरि'ति लक्षणानुगमेनार्थः कल्प्यः, न तु पृथगेव, वाक्ये दृष्टस्य जानुशब्दस्य नष्टत्वात् । तस्मात्संघातार्थवत्त्वादिति भागासिद्धमनैकान्तिकं च बोद्धव्यम् ॥ २११ ॥

यदप्युक्तं "अर्थवन्तो वर्णाः धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शना"दिति तत्राह ॥

शास्त्रार्थ एव वर्णाना-
मर्थवत्त्वे प्रदर्शितः ।
धात्वादीनां विशुद्धानां
लौकिको ऽर्थो न विद्यते ॥ २१२ ॥

कृत्तद्धितानामर्थश्च केवलानामलौकिकः ।

---

(१) अवयवार्थव्यतिरिक्तसंघातार्थेति २ पु० पाठः ।

प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते ॥ २१३ ॥

अभिव्यक्ततरो यो ऽर्थः प्रत्ययान्तेषु लक्ष्यते ।

अर्थवत्ताप्रकरणादाश्रितः स तथाविधः ॥ २१४ ॥

वर्णानामर्थवत्त्वाभ्युपगमे पदवाक्ययोरभिधायकता भज्येतेत्याह ॥

आत्मभेदो न चेत्कश्चि-

द्वर्णेभ्यः पदवाक्ययोः ।

अन्योन्यापेक्षया शक्त्या

वर्णः स्यादभिधायकः ॥ २१५ ॥

सुबोधम् ॥ २१५ ॥

इदानीं मतभेदं प्रदर्शयितुमाह ॥

वर्णेन केन चिन्न्यूनः सङ्घातो यो ऽभिधायकः ।

न चेच्छब्दान्तरमसावन्यूनस्तेन गम्यते ॥ २१६ ॥

यदि केन चिद्वर्णेन न्यूनः सङ्घात इष्कर्त्तारमित्यादावभिधायक स्तदा द्वयी गतिः । शब्दान्तरत्वमेकशब्दत्वं वा । यदि न शब्दान्तरत्वमिष्कर्त्तारमित्यस्य तदा न्यूनवर्णोपि पूर्णवर्णो निष्कर्त्तारमिति शब्द एव गम्यते तस्मात्स्वार्थप्रतीतिरिति बोद्धव्यम् ॥ २१६ ॥

एतदेव प्रतिपादयितुमाह ॥

स तस्मिन् वाचके शब्दे

निमित्तात् स्मृतिमादधत् ।

साक्षादिव व्यवहितं

शब्देनार्थमुपोहते ॥ २१७ ॥

यदि केन चिद्वर्णेन न्यूनः स न्यूनवर्णः परिपूर्णशब्दवाचकरूप निमित्ताच्छास्त्राभ्यासात् स्मृतिमुपजनयन् साक्षादिव व्यवहितमप्यर्थ

शब्देन स्मृत्युपस्थापितेनोपोद्दते समर्पयतीति । अथ शब्दान्तरत्वं तदा यथा परिपूर्णवर्णो वाचकस्तथा तत्सम्बन्धाद् न्यूनवर्णोऽपीति न कश्चिद्विशेषः ॥ २१७ ॥

तस्मादवयवानां तदर्थप्रतिपादनमनुपपन्नमेवेति प्रतिपादयितुमाह ॥

**पदवाच्यो यथा नार्थः कश्चिद्गौरखरादिषु ।**
**सत्यपि प्रत्यये ऽत्यन्तं समुदाये न गम्यते ॥ २१८ ॥**
**समन्वित इवार्थात्मा पदार्थैर्यः प्रतीयते ।**
**पदार्थदर्शनं तत्र तथैवानुपकारकम् ॥ २१९ ॥**

गौरखरः कृष्णसर्प इत्यादौ यथा नैव पदानां वाच्यः(१) कश्चिदर्थो ऽस्ति, सत्यपि वा तच्छ्रवणकाले तदर्थप्रत्यये गौरखर इत्यस्मिन् समुदाये ऽत्यन्तं सर्वथा नैवायमर्थो गम्यते, जात्यन्तरमेव हि पदार्थसंस्पर्शमात्रविरहितं समुदायात्तत्रावगतं, तथैव देवदत्त गामभ्याजेत्यादिभिः पदार्थैर्यः प्रतिभालक्षणो ऽर्थः समन्वित इव परमार्थतस्तु निर्विभागः पानकरसादिवत्प्रतीयते, तत्र पदार्थदर्शनमवयवार्थप्रतिभासो ऽनुपकारक एव मन्तव्यः ॥ २१९ ॥

यदि चैतन्नाभ्युपगम्यते तदा समुदायावयवयोर्भिन्नार्थत्वे सति वृत्तौ समकालमेव विरुद्धधर्मसंसर्गः प्राप्नोतीति पदवादिमतं दूषयितुमाह ॥

**समुदायावयवयोर्भिन्नार्थत्वे च वृत्तिषु ।**
**युगपद्भेदसंसर्गौ विरुद्धावनुषङ्गिणौ ॥ २२० ॥**

वृत्तिषु समासादिकासु । तुल्यकालं समुदायेन पांसूदकवदविभागापन्नस्यार्थस्य प्रतिपादनात्संसर्गः समासार्थः पदेभ्यश्च भिन्नस्या-

---

(१) वाच्य इति २ पु० पाठः ।

र्थस्य प्रतीतेर्भेदसंसर्गौ विरुद्धौ युगपत्प्राप्नुतः । न चैतद् युक्तं प्रतीत्य-भावादिति ॥ २२० ॥

पदपदार्थानां च सत्यत्वे ऽध्यादीनां वाक्ये साधनाभिधायित्वं प्राप्नोति । न चैतद् दृष्टं साधनाभिधायकत्वेन स्वतन्त्राणां तेषां प्रयोगादर्शनादित्याह ॥

कश्च साधनमात्रार्थानध्यादीन्परिकल्पयेत् ।
अप्रयुक्तपदस्यार्थो बहुव्रीहौ कथं भवेत् ॥ २२१ ॥

अधिस्त्रीत्यादौ समुदायस्याधिकरणवृत्तित्वं परिदृष्टं न कदा चिदप्यवयवस्येति । यदा(१) च पदानि सत्यार्थानि विद्यन्ते तदा बहुव्रीह्यर्थो नावकल्प्यतेत्याह । अप्रयुक्तेत्यादि । चित्रगुरित्यादाववयवानां सत्यर्थत्वे(२) चित्रशब्दस्य गुणः कश्चिदभिधेयो गोशब्दस्य गोजातयः काश्चिदित्यप्रयुक्तं वाचकं पदं यस्यासावप्रयुक्तपदो देवदत्तार्थः कस्याभिधेयः स्यात् ॥ २२१ ॥

यदि चावयवानामर्थवत्त्वं स्यात्तदा प्रभुः संभुरित्यत्रापि भुशब्दस्यार्थः पृथगुपलभ्येत न चोपलभ्यतइति प्रतिपादयितुमाह ॥

प्रभुसंभ्वाद्यवयवैर्न चास्त्यर्थावधारणम् ॥ २२१ऽऽ ॥

उपसंहर्त्तुमाह ॥

तस्मात्संघात एवैको विशिष्टार्थनिबन्धनम् ॥ २२२ ॥

तस्मात्समासेषु विरुद्धार्थोपस्थापनादध्यादीनां साधनमात्रार्थवृत्तित्वासम्भवाद्बहुव्रीह्यर्थस्यासङ्गतेः प्रभुसंभ्वित्यादाववयवार्थानुपलम्भादित्युपपत्तिचतुष्टयेन सत्यार्थानां पदानामनुपपत्तेः सङ्घात एवैको ऽखण्डः प्रविभागशून्यः स्फोटात्मा विशिष्टस्यैव प्रतिभात्मकस्यार्थस्य

(१) यदि चेति २ पु० पाठः ।
(२) सत्यार्थत्वइति २ पु० पाठः ।

नियमश्चनमभ्युपगन्तुं युक्त इति सिद्धम् । सङ्घातसाधर्म्याच्च स्फोट एवात्र सङ्घातशब्देनोक्तः सङ्घातो ह्यवयवैराच्छुरितो भवति, स्फोटश्चापि ध्वनिभिराच्छुरित इति सङ्घातसाधर्म्यम् ॥ २२२ ॥

इदानीमखण्डवाक्यात्मीयपक्षे परकीयचोद्यसप्तकमाशङ्क्य क्रमेण समर्थयितुमुपक्रमते । तथा च यदि पदार्थो नैव विद्यते तदा देवदत्तविष्णुमित्रा भोज्यन्तामित्यत्र द्वन्द्वेनैक एवाखण्डः समुदायो वाक्यार्थो(१)भिधीयते, ततश्च पदार्थभेदस्यानभ्युपगमादेकत्वे च सति बहुवचनं नोपपद्येतेत्याशङ्क्य समर्थयितुमाह ॥

गर्गा इत्येक एवायं
बह्वर्थेषु वर्त्तते ।
द्वन्द्वसंज्ञोऽपि सङ्घातो
बहूनामभिधायकः ॥ २२३ ॥

यथा गर्गस्यापत्यानि बहूनि गर्गा इत्यत्रैकशेषे कृते गर्गशब्द एक एव निरस्तावयवविभागो बह्वर्थवृत्तित्वाद्बहुवचनान्तस्तथैव द्वन्द्वसंज्ञः सङ्घातो निरस्तावयवभेदोपि शब्दशक्तिमाहात्म्याद्बहुत्वमभिधत्त इति सत्यपि बहुवचने नास्ति तावता वाक्यार्थव्यतिरेकेण पदार्थसद्भावः ॥ २२३ ॥

अथ धवखदिरपलाशाः सिच्यन्तामित्यत्र वाक्यार्थव्यतिरेकेण पदार्थासम्भवात्प्रत्येकं वाक्यपरिसमाप्त्ययोगात्समुदायस्य च युगपत्सेचनक्रियाऽसम्भवाद्वाक्यार्थस्यानुपपत्तिरित्याशङ्क्य समर्थनार्थमाह ॥

यथैकदेशे भुज्यादिः प्रत्येकमवतिष्ठते ।
क्रियैवं द्वन्द्ववाच्येऽर्थे प्रत्येकं प्रविभज्यते ॥ २२४ ॥

ब्राह्मणा भोज्यन्तामित्यत्र यथा विनापि वाक्यार्थव्यतिरेकेण प-

(१) वाक्यार्थे इति २ पु० पाठः ।

दार्थसद्भावं पदार्थानां भुजिक्रिया प्रत्येकमवतिष्ठते, तथा द्वन्द्ववाक्ये समुदायलक्षणे ऽर्थे प्रत्येकं प्रविभज्यतइति न कश्चिद्दोषः । एतदुक्तं भवति । ब्राह्मणा भोज्यन्तामित्यत्र यथा सत्यामपि समुदायप्रतिपत्तावपोद्धारबुद्ध्या प्रकल्प्यावयवान् प्रत्येकं भुजिक्रिया समाप्यते, तथैव द्वन्द्वात्समुदाये प्रतिपन्ने बुद्धिपरिकल्पितप्रविभागसमाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिर्बोद्धव्या ॥ २२४ ॥

पुनरप्याशङ्क्य परिहर्तुमाह ॥

यच्च द्वन्द्वपदार्थस्य
तच्छब्देन व्यपेक्षणा ।
सा ऽपि व्यावृत्तरूपे ऽर्थे
सर्वनामसरूपता ॥ २२५ ॥

द्वन्द्वान्तर्वर्तिनः पदार्थस्य वाच्यार्थ(१)व्यतिरेकेणासम्भवात्सर्वनाम्ना परामर्शो नोपपद्यते । यथा जनपदतदवध्योरिति । अत्र हि जनपदास्तच्छब्देन परामृष्टास्तस्मादेवावधिभूतात्प्रत्यय इष्यते । वाक्यार्थव्यतिरेकेणासति च पदार्थे कथमसतः सर्वनाम्नाऽपेक्षणमिति पराभिप्रायमनूद्य समाधत्ते । सापीत्यादिना । नात्र किं चित्सर्वनाम विद्यते तत्कृत एव तत्र द्वन्द्वपदार्थपरामर्शः स्यात्केवल(२)व्यावृत्तरूपे विशिष्टएवात्र वाक्यार्थे प्रतिभासमाने ऽन्वयात्सर्वनामसारूप्यमात्रमाभाति न तु वास्तवो ऽत्र तत्पदार्थप्रत्ययः कश्चित्प्रतिपन्नः । यद्वक्ष्यति "यदन्तराले ज्ञानं तु पदार्थेषूपजायते । प्रतिपत्तेरुपायोसौ प्रक्रमानवधारणादि"ति ॥ २२५ ॥

नन्वसति पदार्थे धवखदिरपलाशाश्छिद्यन्तामित्यत्राक्रमिकनि-

---

(१) वाक्यार्थेति २ पु० पाठः ।

(२) केवलम् इति २ पु० पाठः ।

विभागो वाक्यार्थ इष्टस्ततश्च यथैव शब्दादवगतो ऽर्थस्तथैवानुष्ठानमिति युगपदेव च्छिदिक्रिया प्राप्नोति न चैवमनुष्ठातुं पार्यतइत्याह ॥

**यथा च खदिरच्छेदे भागेषु क्रमवांश्छिदिः ।**
**तथा द्वन्द्वपदार्थस्य भागेषु क्रमदर्शनम् ॥ २२६ ॥**

यत्रापि भवतः पदार्थवाक्यार्थयोर्भेदः खदिरश्छिद्यतामित्यादौ, तत्रापि युगपदेवानुष्ठातुं न याति। यावता खदिरस्य प्रथमं त्वग्भागं छिन्दन्ति ततोऽप्यस्थिभागं तदनन्तरं सारभागमिति क्रमवर्त्तिन्येव छिदिक्रिया पर्यवस्यति। तथैव द्वन्द्वे यः पदार्थो ऽपोद्धारबुद्धिपरिकल्पितस्तस्य क्रमेण दर्शनं व्यवस्थितिरनुष्ठानमिति यावत् ॥ २२६ ॥

अथास्मिन्पर्वते धवखदिरपलाशाश्छिद्यन्तामिति धवखदिरपलाशच्छेदनं निरूपितं वाक्यार्थः । तत्रैकदेशमात्रेपि च्छिन्ने यदादिष्टं तत् कृतमिति ब्रुवन्ति, तदेतदनंशे वाक्यार्थे कथमुपपत्तिमदित्याशङ्क्याह ॥

**सङ्घैकदेशे प्रक्रान्तान्यथासङ्घानुपातिनः ।**
**क्रियाविशेषान्मन्यन्ते स द्वन्द्वावयवे क्रमः ॥ २२७ ॥**

यथा ब्राह्मणा भोज्यन्तामित्यत्र सङ्घातानुपातिन्यपि भुजिक्रिया तदेकदेशे प्रक्रान्ता प्रवर्त्तिता अतो भुक्तं ब्राह्मणैरित्युच्यते, तथा द्वन्द्ववाच्यसमुदायान्तर्गतावयवप्रवर्त्तितापि शब्दार्थपरित्यागकारणतां न प्रतिपद्यतइति विज्ञेयम् ॥ २२७ ॥

यदि च पद(१)पदार्थासम्भवस्तदा पूर्वपदार्थप्रधानो ऽव्ययीभाव, उत्तरपदार्थप्रधानस्तत्पुरुष, इत्यादिकं समासेष्वर्थाभिधानमनुपपन्नमित्याशङ्क्य परिहर्तुमाह ॥

---

(१) पदेति २ पु० नास्ति ।

प्रतिपादयता वृत्तिमबुधान्वाख्यपूर्विकाम् ।
वृत्तौ पदार्थभेदेन प्राधान्यमुपदर्शितम् ॥ २२८ ॥

वाक्यपूर्विकां वृत्तिं समासलक्षणामबुधान्प्रतिपादयता तद्भेदेन समासेषु पदार्थप्राधान्यमाचार्येणोपदर्शितम् । वाक्यपूर्विकामिति । यथा वाक्यमेव वृत्ती भवति कार्यवशादन्वाख्यानपक्षे तदेवमुक्तमित्यर्थः । एतदुक्तं भवति । अबुधबोधनाय तथा शास्त्रे प्रक्रियामात्रप्रदर्शनं कृतं न पुनस्तावता पदपदार्थसत्ता ऽभ्युपगता ॥ २२८ ॥

अब्राह्मण इत्यादौ नञ्समासे ऽपि यत् पदार्थप्राधान्यं बहुधा भाष्ये विकल्पितं तदप्यबुधबोधनाय शास्त्रप्रक्रियामात्रप्रदर्शनमेव बोद्धव्यमित्याह ॥

अभेदादभिधेयस्य
नञ्समासे विकल्पितम् ।
प्राधान्यं बहुधा भाष्ये
दोषास्तु प्रक्रियागताः ॥ २२९ ॥

परमार्थस्त्वेकमेव तत्राभिधेयरूपं सकलजनप्रसिद्धं स्थितमिति न तत्र कश्चित्पूर्वोत्तरपदार्थव्यवहार उपपद्यतइति बोद्धव्यम् । प्रतिपादयिष्यते(१) "शास्त्रवृत्तिप्रभेदेन लौकिकोर्थो न भिद्यते । नञ्समासे यतस्तत्र त्रयः पक्षा विचारिता" इति ॥ २२९ ॥

अथ पदार्थासम्भवे वृत्तिषु जहत्स्वार्थविकल्पो नोपपद्यते किल पदार्थासम्भवे कुतैतदुच्यतइत्याशङ्क्य समर्थयितुमाह ॥

जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता ।
बहुव्रीहिपदार्थस्य त्यागः सर्वस्य दर्शितः ॥ २३० ॥

---

(१) प्रतिपादयिष्यति चेति २ पु० पाठः ।

यत एवमत एव तथादर्शनायाचार्येण क्वचित्तु अजहत्स्वार्थपक्षे सर्वार्थत्यागमिच्छता बहुव्रीहौ समासे सर्वस्य पदार्थस्य त्याग उपदर्शितः। तत्र हि पदार्थव्यतिरेकेणान्य एव समुदायार्थो विशिष्ट एव प्रतिभातीत्यतः सर्वथा न वास्तवः कश्चित्पदार्थव्यवहारो ऽङ्गीकार्य इति। तदेवं द्वन्द्वे बहुवचनं प्रत्येकं वाक्यपरिसमाप्तिः सर्वनामप्रत्यवमर्शः क्रमेणानुष्ठानमेकदेशानुष्ठाने समुदायार्थानुष्ठानाभिमानश्चेति पञ्च चोद्यान्यपोद्धारसमाश्रयेणाखण्डवादिना परिहृतानि। बहुव्रीहौ च जहत्स्वार्थपक्षे सर्वार्थत्यागोपदर्शनादखण्डमेव वाक्यमभिप्रेतमिति लक्ष्यते॥ २३०॥

इदानीं सर्वो ऽयं पदपदार्थव्यवहारः काल्पनिको ऽसत्यभूत एव नानाविधशास्त्रप्रक्रियामात्रशरणो ऽवगन्तव्य इत्युपपादयितुमाह॥

शास्त्रे क्व चित्प्रकृत्यर्थः प्रत्ययेनाभिधीयते।

प्रकृतौ विनिवृत्तायां प्रत्ययार्थश्च धातुभिः॥ २३१॥

तथा च पदस्य प्रकृतिभागाश्रितमभिधेयं प्रकृत्यसद्भावेपि प्रत्यय एवाभिदधाति, यथा इयानित्यादौ। तथा प्रत्ययार्थस्य विनिवृत्तेपि प्रकृत्यैवाभिधीयते यथा ऽहन्निति॥ २३१॥

पुनरप्यव्यवस्थां प्रदर्शयितुमाह॥

यमर्थमाहतुर्भिन्नौ

प्रत्ययावेक एव तम्।

क्व चिदाह पचन्तीति

धातुस्ताभ्यां विना क्वचित्॥ २३२॥

तत्र पचन्तीत्यादौ भिन्नौ प्रत्ययौ शप्तिङौ यमर्थं कर्तृलक्षणमाहतुस्तमेवैकोप्याह श्नन्ति जुहोतीत्यादौ। क्व चिद्धातुरेव तमर्थं ताभ्यां विनैवाह अहन्वृत्रमिन्द्र इत्यादाविति। किमेतत्पदार्थानां वास्तवत्वे

प्रमाणधुरामवगाहतइति यत्किं चिदेतत् ॥ २३२ ॥

शास्त्रप्रक्रियाणामप्यवास्तवत्वमुपपादयितुमाह ॥

अन्वाख्यानस्मृतौ ये च

प्रत्ययार्थौ निबन्धनम् ।

निर्दिष्टार्थप्रकृत्यर्थाः(१)

स्मृत्यन्तरउदाहृताः ॥ २३३ ॥

कस्यां चिच्छब्दानुशासनस्मृतौ ये प्रत्ययविधाने प्रत्ययार्था निबन्धनं निर्दिष्टास्तएव स्मृत्यन्तरे प्रकृत्यर्था निबन्धनमुदाहृता इति नास्त्येव नैयत्यं पदपदार्थानाम् ॥ २३३ ॥

प्रसिद्धत्वाच्च शास्त्राभ्यासाधिवासितमानसाः शास्त्रव्यवहारेषु पदविभागमपि प्रयुञ्जतएव । यथा उद्गमतीत्येवं प्रयोक्तव्ये उद्गमीति लाघवार्थं प्रयुञ्जते । करोषि करोमीति प्रयोक्तव्ये करीत्येतदेकदेशमात्रं प्रयुञ्जतएवेत्यभिधातुमाह ॥

प्रसिद्धेरुद्गमिकरी-

त्येव शास्त्रे ऽभिधीयते ॥ २३३ऽऽ ॥

ननु वस्तुभूताः शास्त्रप्रक्रियाः किमिति नाश्रिता इत्याह ॥

व्यवहाराय मन्यन्ते

शास्त्रार्थप्रक्रिया यतः ॥ २३४ ॥

शास्त्रार्थप्रक्रियाः केवलमबुधानां व्युत्पादनाय । अतो न शास्त्राणि तत्त्वं वक्तुं पारयन्ति ॥ २३४ ॥

अथाविद्यैवासत्या प्रक्रियाभेदेनोपवर्ण्यतइत्याह ॥

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ॥ २३४ऽऽ ॥

---

(१) निर्दिष्टास्ते प्रकृत्यर्था इति ३ पु० पाठः ।

यद्येवं किमविद्योपदर्शकशास्त्रप्रक्रियासमाश्रयेण प्रेक्षापूर्वकारित्वामित्याह ॥

अनागमविकल्पा तु स्वयं विद्योपवर्त्तते ॥ २३५ ॥

अविद्योपमर्देन ह्युत्तरकालमागमविकल्परहिता शास्त्रप्रक्रिया प्रपञ्चशून्या विद्योपावर्त्तते प्रकटीभवति । एतदुक्तं भवत्यविद्यैव विद्योपाय इति ॥ २३५ ॥

ननु कथमविद्या विद्यास्वरूपविलक्षणा विद्याया उपायः स्यादित्याह ॥

अनिबद्धं निमित्तेषु
निरुपाख्यं फलं यथा ।
तथा विद्या ऽप्यनाख्येया
शास्त्रोपायेव लक्ष्यते ॥ २३६ ॥

न हि कारणेषु कार्यं केन चिद्व्यपदेश्येन रूपेण सम्बद्धं वक्तुं पार्यते । यत्र यथा कार्यलक्षणं फलं निमित्तेषु कारणेषूपाख्याविरहितं कारणसमन्वयविरहितमप्यद्भुतेन रूपेणोपजायते । तथैवाविद्याविलये स्वयं विद्योपावर्त्तमाना शास्त्रादुपजातेति नाख्यातुं शक्यते, केवलमदूरविप्रकर्षेण शास्त्राभ्यासाद्यदसावनुशील्यते ततो विद्यायां शास्त्रोपाया(१) इव लक्ष्यन्ते वस्तुस्थित्या तु प्रविवेकादसौ प्रकाशत इति बोद्धव्यम् ॥ २३६ ॥

'शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते' इत्युक्तं ततश्च शास्त्राभ्यासानतिक्रमेणैव लोकस्य वाक्शब्दोर्थप्रतिपत्तिं समीहत इत्याह ॥

यथाभ्यासं(२) हि वागर्थे

---

(१) शास्त्राण्युपाया इति २ पु० पाठः ।

(२) यथाऽभ्यासमिति ३ पु० पाठः ।

प्रतिपत्तिं समीहते ॥ २३६ऽऽ ॥

स चानादिरभ्यासो मिथ्याभूत एव स्वाभाविक इव प्रतिभातीत्याह ॥

स्वभाव इव चानादि-

र्मिथ्याभ्यासो व्यवस्थितः ॥ २३७ ॥

मिथ्यात्वमेव प्रतिपादयितुमाह ॥

उत्प्रेक्षते सावयवं परमाणुमपण्डितः ।

तथावयविनं युक्तमन्यैरवयवैः पुनः ॥ २३८ ॥

तारतम्ययोगादपकर्षप्राप्तिं परिमाणस्यानुमाय परमाणुः स्थापितस्तस्याप्यन्यः सावयवत्वमुत्प्रेक्षत इति नास्त्येव पुरुषबुद्धीनां वास्तवत्वम् । अवयविनमप्यवयवान्तरयोगिनमुत्प्रेक्षते ॥ २३८ ॥

तथा परिमितपरिमाणं घटादिकं दृष्ट्वा लोच्यते इति लोको ऽयं विश्वप्रपञ्चरूपः परिच्छिन्नतयावस्थितो ऽध्यवसीयत इत्याह ॥

घटादिदर्शनाल्लोकः

परिच्छिन्नो ऽवसीयते ।

समारम्भाच्च भावाना-

मादिमद्ब्रह्म शाश्वतम् ॥ २३९ ॥

उपायाः शिक्षमाणानां बालानामपलापनाः ।

असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ २४० ॥

समारम्भादुत्पादाच्च भावानामिदं शाश्वतमपि ब्रह्मादिमदिति लोके व्यपदिश्यते(१) । तस्मादुपायाः शास्त्राणि जिज्ञासूनामबुधानामपलापनाः प्रतारणा एव बोद्धव्याः । यस्मात्तथासत्यरूपे शास्त्रप्र-

(१) लोकैर्व्यपदिश्यत इति २ पु० पाठः ।

क्रियामात्रेष्वेव स्थित्वा अविद्यामुत्सृज्य सत्यं विद्यास्वरूपं ब्रह्म समीहते प्राप्नोतीति यावत् ॥ २४० ॥

इदानीं पुनरपि पदपदार्थनिराकरणं प्रतिपादयितुमाह ॥

**अन्यथा प्रतिपद्यार्थं पदग्रहणपूर्वकम् ।**
**पुनर्वाक्ये तमेवार्थमन्यथा प्रतिपद्यते ॥ २४१ ॥**

यदि च सत्यभूताः (१) पदार्थाः स्युस्तदा पदार्थप्रतिपत्त्यवसरे सर्वमन्यथा प्रतिपद्यते (२) वाक्यार्थावसरे तत्परित्यागेनान्यथैव प्रतिपत्तिर्दृश्यमाना नोपपद्यते । एतच्चाग्रे स्तुतिनिन्देत्यादिना व्यक्तीकरिष्यति ॥ २४१ ॥

यथा च पदग्रहणपूर्वकमादौ पदार्थः प्रतिपन्नः पश्चाद्वाक्यार्थप्रतिपत्त्यवसरे तदर्थपरित्यागेनान्य एवार्थ उपजायतइति प्रतिपादयितुमाह ॥

**उपात्ता बहवो ऽप्यर्था**
**येष्वन्ते प्रतिषेधनम् ।**
**क्रियते ते निवर्त्तन्ते**
**तस्मात्तांस्तत्र(३) नाश्रयेत् ॥ २४२ ॥**

इहाद्य धवखदिरपलाशाश्छेदनीया नेत्यत्र पदार्थप्रतिभास(४)-समये ऽन्य एव धवादिच्छेदनलक्षणोर्थ उपादीयते, पश्चान्निषेधेन तन्निवर्त्तनं क्रियते, न चैतद्युक्तं, उपात्तस्य त्यागे शब्दार्थसंबन्धस्यानित्यत्वप्राप्तेरिति तेषां तत्रानाश्रयणमेव युक्तमित्याह 'तस्मात्तांस्तत्र नाश्रयेदि'ति ॥ २४२ ॥

---

(१) सत्यंभूता इति २ पु० पाठः ।
(२) प्रतिपद्येति २ पु० पाठः ।
(३) तस्मात्तांस्तत्रेति २ पु० पाठः ।
(४) प्रतिभासमयइति २ पु० पाठः ।

अतो वाक्यवाक्यार्थयोरेव सत्यत्वमत्र(१) युक्तमभ्युपगन्तुमित्याह ॥

वृक्षो नास्तीति वाक्यं च विशिष्टाभावलक्षणम् ।
नार्थेन बुद्धौ सम्बन्धो निवृत्तेरवतिष्ठते ॥ २४३ ॥

एतद्वाक्यमेवाखण्डं विशिष्टाभावलक्षणमिति वृक्षाभावावगतिरूपस्य वाक्यार्थस्य लक्षणं प्रत्यायकमिष्यते । यदि पुनः पदार्थो ऽत्र व्यतिरिक्तो ऽभ्युपगम्यते, तदा वृक्षलक्षणे पदार्थे(२) व्यवस्थिते नसम्बन्धस्तस्य नोपपद्यते, तस्य हि स्वकारणाल्लब्धात्मलाभस्य न जातनिवृत्तिः कर्त्तुं शक्यते । अथासत एव नञा सम्बन्धस्तदा ऽसत्त्वादेव निवृत्तासाविति(३) नञो वैयर्थ्यं, यदुच्यते "सतां च न निषेधोस्ति सो ऽसत्सु च न विद्यते । जगत्यनेन न्यायेन नञर्थः प्रलयं गत" इति । तस्मादर्थस्य स्वत एव निवृत्तेस्तेन सह निवृत्तिवाचकस्य सम्बन्धो न विद्यते ॥ २४३ ॥

अथोच्यते विच्छेदेन पदार्थविषयास्तिबुद्धिरवधृता सा नञा निवार्यतइत्याह ॥

विच्छेदप्रतिपत्तौ च
यद्यस्तीत्यवधार्यते ॥ २४३ऽऽ ॥

एवं च बुद्धावपि नञ्सम्बन्धो नोपपद्यते इत्याह ॥

अशब्दवाच्या सा बुद्धि-
र्निवर्त्तेत स्थिता कथम् ॥ २४४ ॥

नञा शब्दवाच्योर्थः प्रतिषिध्यते, न च बुद्धिः शब्दवाच्या, शब्देन हि बाह्योर्थो ऽभिधीयते बुद्धिस्त्वर्थालम्बनात् शब्दाभिधेयत्वमर्हती-

---

(१) सत्यत्वमात्रमिति २ पु० पाठः ।

(२) वाक्येऽति २ पु० पाठः ।

(३) निवृत्तोसाविति २ पु० पाठः ।

त्यत: कथं नञा सा प्रतिषिध्यते ॥ २४४ ॥

अथ बुद्धिर्न निवर्त्तते ऽपि तु तस्या नञा मिथ्यात्वमावेद्यतइ-त्याह ॥

अथ यज्ज्ञातमुत्पन्नं

तन्मिथ्येति नञा कृतम् ॥ २४४ऽऽ ॥

एतदपि निराकर्त्तुमाह ॥

नञो व्यापारभेदे ऽस्मि-

न्नभावावगति: कथम् ॥ २४५ ॥

नञ एवमात्मके व्यापारविशेषे बुद्धिनिषेधात्मके ऽङ्गीक्रियमाणे सति वृक्षस्याभावावगतिर्न स्यात् किल, पर्युदासे सदृशप्रतिपत्तिवि-धायिनि नञ्वाच्यएतदुपपद्यते। प्रसज्यप्रतिषेधे तु नैतदुपपद्यते वृ-क्षाभावो हि तत्र वाक्यार्थ इति ॥ २४५ ॥

अथ निवर्त्यमान एवास्याधारो ऽभिधेय: कल्प्यते तत्राप्याह ॥

निराधारप्रवृत्तौ च

प्राक्प्रवृत्तिर्नञो भवेत् ॥ २४५ऽऽ ॥

आधारमनपेक्ष्यैव नञ् प्रवर्त्ततइति यद्युच्येत तदा नञ: प्रागेव प्रवृत्ति: प्रयोग: स्यात्। प्रतिषेद्धुमिष्ट सर्वत्र नेत्येवाभिदध्युरि-ति ॥ २४५ऽऽ ॥

अथ विषयनियमार्थमाधारप्रयोगो न वृक्ष इति वृक्षस्य निषेधो न घटादेरिति प्रतिपादयितुमाह ॥

अथाधार: स एवास्य

अत्रापि दूषणमभिधातुमाह ॥

नियमार्था श्रुतिर्भवेत् ॥ २४६ ॥

नञेव तदर्थनिषेधे जाते पुनरसौ तच्छ्रुतिर्नियमाय वा स्यात् ॥ २४६ ॥

निपाता द्योतकाः के चिदित्यभिप्रायेणाह ॥

नियमद्योतनार्थो वा

अथ वा ऽनुक्रम्य विस्पष्टार्थं पुनर्वचनमनुवादः स्यादित्याह ॥

अनुवादो ऽथ वा भवेत् ॥ २४६ऽऽ ॥

सर्वथैवमानर्थक्यमेव पदार्थानां स्यादित्याह ॥

कश्चिदेवार्थवांस्तत्र

शब्दः शेषास्त्वनर्थकाः ॥ २४७ ॥

न ब्राह्मण इत्यादौ नञ एवार्थवत्त्वमित्यन्येषामानर्थक्यं स्याच्चैतदुपपन्नं, तस्मादृचो नास्तीत्यस्मादखण्डादखण्ड एव विशिष्टाभावरूपो वाक्यार्थः न पुनस्तत्त्वतः पृथगेव पदार्थः सत्यभूतः कश्चिदुपपन्नः ॥ २४७ ॥

अथान्यथा प्रतिपद्यार्थमित्येतद्व्याख्यातुमाह ॥

विरुद्धं चाभिसम्बन्धमुद्धार्यादिभिः कृतम् ।

वाक्ये समाप्ते वाक्यार्थमन्यथा प्रतिपद्यते ॥ २४८ ॥

उद्धार्यादिभिः पदैर्विरुद्धपदार्थप्रतिभासावसरे ऽभिसम्बन्धमवगच्छति । यथा उद्धारि भगिनि या त्वं शिरसानड्वाहं वहसि सा त्वं प्राचीनं कुम्भमभिधावन्तमद्राक्षीरित्यत्रोत्तरकालं वाक्यार्थप्रतिपत्त्यवसरे ऽन्यथैवार्थप्रतिपत्तिरिति न पदार्थः कश्चिदुपपन्नः ॥ १४८ ॥

एतदेवान्यथा प्रतिपादयितुमाह ॥

स्तुतिनिन्दाप्रधानेषु वाच्येष्वर्थो(१) न तादृशः ।

पदानां प्रविभागेन यादृशः परिकल्प्यते ॥ २४९ ॥

(१) वाक्येष्वर्थ इति २ पु॰ पाठः ।

स्तुतिप्रधानं वाक्यं किं चिद्भवति यत्र पदार्थो निन्दा "इन्दोर्लक्ष्म स्मरविजयिनः कण्ठमूलं मुरारिर्दिङ्नागानां मदमलमषीभाञ्जि गण्डस्थलानि । अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्तान्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः" । अत्र पदार्थप्रतिभासवेलायां निन्दावगम्यते, यस्मात्ते राजन्नलीकमेवोद्धतां कन्धरां वहसि तथा हि न सर्वव्यापि त्वदीयं यशः यदि हि तथा स्यात्तदा किमित्यद्यापि प्रसिद्धा एव शशलक्ष्मादयः पदार्थाः श्यामलतया भासन्ते, यशसो ह्यवदाततया तदीयस्य व्यापितायां तद्व्याप्तास्ते श्वेता भवेयुरेवेति पदार्थो ऽत्र निन्दा, स्तुतिस्तु वाक्यार्थः । तथा च राजन् सर्वमेव जगद्यशसा त्वदीयेन धवलितं केवलं स्वभावस्य दुस्त्यजत्वाद्यदि परं चत्वार्येव वस्तूनि त्रिजगति श्यामगुणयुक्तान्यन्यत्सर्वमेव त्वदीयेन यशसा व्याप्तमिति सर्वत्र त्रिलोक्यामपि प्रथितप्रतापस्त्वमिति वाक्यार्थः निन्दाप्रधाने स्तुतिः पदार्थे यथा "हे हेलाजितबोधिसत्त्ववचसां किं विस्तरैस्तोयधे नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः । तृष्यत्पान्यजनोपकारघटनावैमुख्यलब्धाऽयशोभारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः" । अत्र बोधिसत्त्वचरितस्यापि त्वदीयेनानेन तोयनिधे परार्थसम्पादनषाड्गुण्येन पराजय इति पदेभ्यः स्तुतिरवगम्यते, वाक्यार्थस्तु निरतिशयगर्हापात्रत्वमुदधेरवेक्ष्यत इति । ततश्च पदपदार्थानां वास्तवत्वे कथमेतत्सङ्गच्छत इति ॥ २४८ ॥

अथात्र पदवादिमतमाशङ्कितुमाह ॥

**अथासंसृष्ट एवार्थः पदेषु समवस्थितः ।**

**वाक्यार्थस्याभ्युपायो ऽसावेकस्य प्रतिपादने ॥ २५० ॥**

पदेष्वर्थो ऽसंसृष्ट एव वाक्यार्थस्यैकस्य संसर्गलक्षणस्य प्रतिपादने ऽभ्युपायः स्थितः । पदार्थपूर्वको हि वाक्यार्थावसायो व्यवस्थित इति ॥ २५० ॥

एतन्निराकर्तुमाह ॥

पूर्वं पदेष्वसंसृष्टो यः क्रमादुपचीयते ।
छिन्नग्रथितकल्पत्वान्न विशिष्टतरं विदुः ॥ २५१ ॥

आदौ पदेष्वसंसृष्ट एव स्थितः क्रमाच्च संसृज्योपचीयते यो वाक्यार्थः स विशिष्टतरः सुदृढं विशिष्ट एव, कस्मात्, छिन्नग्रथितकल्पत्वादिति पूर्वं छिन्नः पश्चाद्ग्रथितो यस्तत्तुल्योसावित्यसंसृष्टपदार्थपूर्वको वाक्यार्थावसायो न युज्यतइति ॥ २५१ ॥

तदेवं प्रकृतिप्रत्यययोः परस्परमेकापायेनाप्यर्थावगतेः, उभयतोऽर्थस्य सम्प्रत्यये सत्येकस्मादेव प्रत्ययात् क्वचिदर्थप्रतिपत्तेः, प्रकृतिप्रत्ययार्थयोश्च साङ्कर्येण शास्त्रेष्वभिधानात्, वाक्यार्थस्य च पदार्थप्रतिपत्तिविलक्षणत्वात्, नञर्थानुपपत्तेः, सर्वत्रोपात्तत्यागप्रसक्ते,रित्युपपत्तिषट्केन वृत्तिषु विरुद्धार्थोपपादनादिना च पूर्वोक्तोपपत्तिचतुष्टयेन सत्यभूतानां पदार्थानामनुपपत्तेः, अखण्डपक्षे च प्रतिनिध्यादिचोद्यपञ्चकस्य तथा द्वन्द्वाश्रयेण चोद्यसप्तकस्य परिहरणान्निरवद्यमखण्डमेव स्फोटात्मकं वाक्यं प्रतिभैव च वाक्यार्थ इति स्थितम् ॥ २५१ ॥

इदानीमपोद्धारसमाश्रयेणापि पदार्थस्याभ्युपगतत्वान्मुख्यगौणविचारमप्यासूत्रयितुमाह ॥

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः ।
निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते ॥ २५२ ॥

अनेकशब्ददर्शनमनेकशब्ददर्शनं चेति द्वौ पक्षौ । तत्रापि पदपदार्थयोः सत्यत्वं पदवादिमतेन, असत्यत्वं च वैयाकरणमतेनेति चत्वारः पक्षाः । प्रतिक्षिप्तमपि पक्षं व्यवहारार्थमङ्गीकरोत्येव टीकाकारः । यतः सर्वपार्षदमिदं हि व्याकरणं शास्त्रं, तत्र चायं स्थित

इत्यत्र पुनः पदपदार्थावङ्गीकरोति । तत्रैकशब्ददर्शने शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः । तत्रैव चार्थोपचारो द्विधा स्वरूपार्थत्वेन बाह्यार्थत्वेन चेति त्रयः पक्षाः । एवमन्यत्र । तदेवमेतैस्त्रिभिः पक्षैश्चत्वारोपि पक्षाभिहिता(१) द्वादश सम्पद्यन्तइति बोद्धव्यम् । तत्रैकशब्ददर्शनसमाश्रयणेन तावद्गौणमुख्यविचारमेकमाहुरित्यादिना करोति सर्वेष्वप्यर्थेष्वेक एव गोशब्दो वाचकः । यद्येवं युगपदेव सर्वार्थप्रकाशनं कस्मान्न करोतीत्याह "निमित्तभेदादि"त्यादि । निमित्तभेदो वक्ष्यमाणस्तस्मात्सार्वार्थ्यं भिद्यतइति ॥ २५२ ॥

ततश्च किमित्यत आह(२) ॥

**यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठते ॥ २५२ऽऽ ॥**

निमित्तवशात् युगपत् सर्वार्थप्रकाशनं न करोतीत्यर्थः ॥ २५२ऽऽ ॥

निमित्तभेदमाह ॥

**अर्थप्रकरणाभ्यां वा**
**योगाच्छब्दान्तरेण वा ॥ २५३ ॥**

यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठतइत्यस्योदाहरणमाह ॥

**यथा सास्नादिमान् पिण्डो**
**गोशब्देनाभिधीयते ।**
**तथा स एव गोशब्दो**
**वाहीकेऽपि व्यवस्थितः ॥ २५४ ॥**

यद्येवं गौणमुख्यविभागः कुत इत्याह ॥

**सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः ।**
**प्रसिद्धिभेदाद्गौणत्वं मुख्यत्वं चोपवर्ण्यते ॥ २५५ ॥**

---

(१) भेदिता इति २ पु० पाठः ।
(२) किमित्याहेति २ पु० पाठः ।

सर्वशक्तिमत्त्वं चानेकधर्मत्व इत्यनेन व्याख्यातम् । प्रसिद्धिभेदात्प्र-सिद्धिविशेषाद्गोजातीये सातिशया गोशब्दस्य प्रसिद्धिः । वाहीके त्वीषदिति । तस्मात्प्रसिद्ध्यप्रसिद्धिकृतो गौणमुख्यभावः ॥ २५५ ॥

तथैकदर्शनएव प्रक्रियां दर्शयति ॥

एको मन्त्रस्तथाध्यात्म-

मधिदैवमधिक्रतु ।

असङ्करेण सर्वार्थो

भिन्नशक्तिर्व्यवस्थितः ॥ २५६ ॥

तथा चैक एव मन्त्र आत्मन्यपि जपावसरे दैवेष्वपि क्रतौ यजन-समये ऽपि विनियुज्यते, भिन्नशक्तित्वादसांकर्येण प्रतिनियतार्थतया व्यवस्थितिं लभतइत्यर्थः ॥ २५६ ॥

एवं शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः प्रदर्शितः । एतस्मिं-श्च शब्दोपचारे शब्दार्थसम्बन्धस्यानित्यत्वं स्यादित्याशङ्कार्थोपचार-माश्रित्याह ॥

गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।

अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ॥ २५७॥

अर्थः शब्दस्य द्विविधः स्वरूपं वाह्यश्च(१) । तत्र निमित्ताज्जाड्या-देर्गोत्वं वाहीकेप्यनुषज्यते, शब्दस्तु गोत्वमेवाभिधत्तइति वाह्यार्थोप-चारः । इयांस्तु विशेषः । गौरित्यत्र मुख्यमेव गोत्वं गौर्वाहीक इत्यत्र तूपचरितं तदेव वाच्यमिति ॥ २५७ ॥

अथ स्वरूपोपचारमाह ॥

तथा स्वरूपं शब्दानां

(१) वाह्यं चेति २ पु॰ पाठः ।

सर्वार्थेष्वनुषज्यते ।
अर्थमात्रं विपर्यस्तं
स्वरूपे तु स्थितिः स्थिरा ॥ २५८ ॥

शब्दानां स्वरूपमेव सर्वत्र वाच्यं तत्तु गोजातीये कदा चिदनुषज्यते कदाचिद्वाहीक इत्यनित्यत्वं नास्ति शब्दार्थसम्बन्धस्य प्रसिद्ध्यप्रसिद्धिकृतस्तु गौणमुख्यविभागो बोद्धव्यः ॥ २५८ ॥

अथानेकशब्ददर्शनमाश्रित्याह ॥

एकत्वं तु स्वरूपत्वाच्छब्दयोर्गौणमुख्ययोः ।
प्राहुरत्यन्तभेदे ऽपि भेदमार्गानुदर्शिनः ॥२५९ ॥

भेदमार्गानुसारिणः शब्दभेदवादिनः । गौणमुख्यार्थाभिधायिनोर्गोशब्दयोर्भेदमेवाहुः । ते ह्यर्थभेदाच्छब्दभेदं मन्यते, यतः शब्दार्थयोरिहाध्यासलक्षणः सम्बन्धो व्यवस्थितः । एकत्र चेदध्यस्तस्तस्मिंस्तेनैवाभेदमापन्नः कथमन्येन सहाध्यासमुपेयादित्यर्थः । तदेवं शब्दभेद एवोपपन्नः । एतच्च भेदाभेदस्वभावं दर्शनद्वयं शब्दानां भाष्यकारेण वार्त्तिकव्याख्यानावसरे दर्शितं तत्र ह्युक्तं 'तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्' अत्रोत्तरम् 'एकत्वादकारस्य सिद्ध'मिति । यद्येवं अनुबन्धसङ्करस्तु, एकाजनेकाज्ग्रहणेषु चानुपपत्तिरि,त्यादीनि चोद्यानि प्राप्नुवन्ति तत्रैवैतानि परिहृतानि, विषयेण तु नानालिङ्गकरणात्सिद्धम्, एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानादि,त्येवमेकशब्ददर्शनं स्थापितम्, अथानेकदर्शनमाश्रित्य तत्रैवोक्तम्, आन्यभाव्यं तु कालशब्दव्यवायात्, युगपच्च देशपृथक्त्वदर्शना,दित्येव भेदाभेदौ शब्देषु व्यवस्थापितौ तद्व्याख्यानायैव च टीकाकारः स्वतन्त्रपक्षद्वयदर्शनं करोतीति बोद्धव्यम् ॥ २५९ ॥

अथैतदेव शब्दभेददर्शनं प्रसङ्गाद्वैदिकेष्वपि शब्देषु योजयितु-

माह ॥

साभिधेन्यन्तरं चैवमावृत्तावनुषज्यते ॥ २५९ऽऽ ॥

अयोदशैकादश वा समिन्धनार्था ऋचः सामिधेन्यः । तत्र त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह एवं चावृत्त्या सप्तदश पञ्चदश वा सामिधेन्यो भवन्तीति स्थितं, तत्रावृत्तं सामिधेन्यन्तरमेव विभिन्नस्वरूपमनुषक्तं बोद्धव्यं, न तत्त्वेकैवासौ पुनरावृत्तेति शब्दभेदवादिनः ॥ २५९ऽऽ ॥

एवं च मन्त्राणामपि भेदमाहुरिति प्रदर्शयितुमाह ॥

मन्त्राश्च विनियोगेन लभन्ते भेदमूहवत् ॥ २६० ॥

विनियोगेनाभ्युपयोगादिनोपलक्षिता अपि मन्त्रा भिन्ना एव बोद्धव्याः । यथा आह देवीरापः शुद्धा इत्यस्मादन्य एव स्तुत्यर्थवादोभ्यूह्यते देव आज्यं शुद्धमित्यादि । एवमूहमन्त्राणामन्यत्वं तथैव विनियुक्तानां मन्त्राणामन्यत्वमेव ॥ २६० ॥

अन्यत्वे च तेषां किं वेदत्वं स्यान्न वेत्याशङ्क्य वेदत्वमेव तेषां बोद्धव्यमित्याह ॥

तान्याम्नायान्तराण्येव पठ्यते कश्चिदेव तु ॥२६०ऽऽ॥

मन्त्राणां सर्वेषां वेदत्वमेव वेदे तु कश्चिदेव मन्त्रः पठ्यते न चैतावता तेषामेव वेदत्वं अन्यथा वेदेऽनर्थका एव सर्वे पठिता इत्याह ॥

अनर्थकानां पाठो वा शेषस्त्वन्यः प्रतीयते ॥ २६१ ॥

उपलक्षणभूता अनधिकारा एव वेदे मन्त्राः (१) पठिता, स्तैस्तु विनियोगावसरे प्रतीयमानानामन्येषामेव वेदत्वं बोद्धव्यम् ॥ २६१ ॥

तदेवमर्थभेदाच्छब्दस्य भेदे मन्त्राणां भेद एव, पठितानां (२) चोपलक्षणार्थतेति प्रदर्शितम् । अथ स्वरूपार्थमेव पाठः सर्वेषां वेदि-

---

(१) वेदमन्त्रा इति २ पु० पाठः ।

(२) अपाठितानामिति २ पु० पाठः ।

कानां केचिदुच्यतइत्याह ॥

शब्दस्वरूपमर्थस्तु

पाठो ऽन्यै(१)रुपवर्ण्यते ॥ २६१ऽऽ ॥

ततश्च सर्वेषां स्वरूपवतां भेद एवेत्याह ॥

अत्यन्तभेदः सर्वेषां

ननु पठ्यमानानामेव स्वरूपार्थत्वात्स्वरूपवत्ता युज्यते, इतरेषां तु यागादौ विनियुक्तानां कथं स्वरूपवत्त्वमेव स्यादित्याह ॥

तत्सम्बन्धात्तु तद्वताम् ॥ १६२ ॥

तत्रापि प्रवृत्तिनिमित्तस्य स्वरूपस्यैव विद्यमानत्वात्तद्वत्त्वमेव बोद्धव्यम् ॥ २६२ ॥

तस्मात्मन्त्रेषु संस्कारादिविनियोगभेदात्पाठोपलक्षितानां चाभिन्नानामेव प्रतीतिः स्वरूपार्थत्वाद्वा, भिन्नानामेषां भेद एव मन्तव्य इत्युपसंहर्त्तुमाह ॥

अन्या संस्कारसावित्री कर्मण्यन्या प्रयुज्यते ।

अन्या जपप्रबन्धेषु सा त्वेकैव प्रतीयते ॥ २६३ ॥

सारूप्यात्त्वेकत्वव्यवहार(२)स्तत्र बोद्धव्यः ॥ २६३ ॥

तदेवमनेकशब्ददर्शने ऽर्थभेदाच्छब्दभेदे गौणो ऽर्थो ऽन्यः मुख्योर्थश्चान्य एव, किं तु सारूप्यादभेदे मुख्यार्थस्य प्रसिद्धत्वात्तद्वाचकउपचर्यतएवेति शब्दोपचार एव तत्र कल्पयितुं शक्यः । न त्वेकशब्ददर्शनइव शब्दसम्बन्धस्यानित्यत्वादुपचारो ऽर्थस्याश्रीयते । अत एवाभिप्रायवता टीकाकृता तत्र तत्र शब्दोपचारार्थोपचारौ व्याख्यातौ ॥ २६३ ॥

(१) पाठेऽन्यैरिति २ पु० पाठः ।
(२) एकत्वं व्यवहारइति २ पु० पाठः स चायुक्तः ।

तत्सम्बन्धात्तु तद्वतामित्यत्र स्वरूपेण प्रवृत्तिनिमित्तेन सम्बन्धः प्रतिपादितः । तदेव च सर्वेषां शब्दानां प्रवृत्तिनिमित्तं बोद्धव्यमिति विस्पष्टयितुमाह ॥

अर्थस्वरूपे शब्दानां
स्वरूपाद्वृत्तिरिष्यते ॥ २६३ऽऽ ॥

अर्थस्वरूपे ऽर्थवस्तुनीति यावत् । तत्र सर्वेषां स्वरूपादेव निमित्तात्प्रवृत्तिर्बोद्धव्या ॥ २६३ऽऽ ॥

न केवलं पदानां सर्वत्र स्वरूपमेव प्रवृत्तिनिमित्तं, यावद्वाक्यरूपस्यापि शब्दस्य वाक्यार्थे वर्त्तमानस्य वृत्तिरन्यानपेक्षया स्वरूपेणैव बोद्धव्येति प्रसङ्गेन प्रतिपादयितुमाह ॥

वाक्यरूपस्य वाक्यार्थे
वृत्तिरन्यानपेक्षया ॥ २६४ ॥

इदानीमेकशब्ददर्शने गौणमुख्यविभाग इत्युपसंहर(१)माह ॥

अनेकार्थत्वमेकस्य यैः शब्दस्यानुगम्यते ।
सिद्ध्यसिद्धिकृता तेषां गौणमुख्यप्रकल्पना ॥ २६५ ॥

सिद्ध्यसिद्धिभ्यां प्रसिद्ध्यप्रसिद्धिभ्यां तत्र गौणमुख्यविभागो बोद्धव्यः । अनेनैकशब्ददर्शनेपि (२) सादृश्यादभेदे पुनरपि प्रसिद्ध्यप्रसिद्धिभ्यामेव गौणमुख्यविभाग इत्युक्तमेव ॥ २६५ ॥

अथोभयत्रापि गौणमुख्यविभागे निमित्तान्तरं दर्शयितु(३)माह ॥

अर्थप्रकरणापेक्षो यो वा शब्दान्तरैः सह ।
युक्तः प्रत्याययत्यर्थं तं गौणमपरे विदुः ॥ २६६ ॥

---

(१) उपसंहरन्नित्येवेतिपदराहितः २ पु॰ पाठः ।
(२) अनेकशब्ददर्शनेपीति २ पु॰ पाठः ।
(३) निमित्तान्तरमुपदर्शयितुमिति २ पु॰ पाठः ।

अथ प्रकरणशब्दान्तरसंनिधानानि गौणमुख्यभावमुभयथापि प्रयोजयन्तीत्युच्यते ॥ २६६ ॥

एतदेव संग्रहकारोक्तश्लोकप्रदर्शनेन संवादयितुमाह ॥

शुद्धस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते ।
स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः ॥ २६७ ॥

एतन्मुख्यार्थशब्दलक्षणम् ॥ २६७ ॥

गौणार्थशब्दस्वरूपमप्याह ॥

यस्त्वन्यस्य प्रयोगेण
यत्नादिव नियुज्यते ।
तमप्रसिद्धं मन्यन्ते
गौणार्थाभिनिवेशिनम् ॥ २६८ ॥

यत्नादिवेति । अर्थप्रकरणादेरित्यर्थः ॥ २६८ ॥

अथ प्रकारान्तरेण गौणमुख्यविभागमाह ॥

स्वार्थे प्रवर्त्तमानस्य
यस्यार्थं योऽवलम्बते ।
निमित्तं तत्र मुख्यं स्याद्
निमित्ती गौण इष्यते ॥ २६९ ॥

यो वाहीके प्रवर्त्तमानः स्वार्थे सास्नादिमति वर्त्तमानस्य गोशब्दस्य सम्बन्धिनमर्थं निमित्तत्वेनावलम्बते तत्र विषये मुख्योऽर्थो निमित्तं स्यात् । गौणस्तु निमित्तीत्युच्यते । एतदुक्तं भवति । यत्रा ऽस्खलद्गतिः शब्दस्तत्र मुख्यो ऽर्थः स्खलद्गतित्वे तु गौणार्थतेति बोद्धव्यम् । नन्वेतेनार्थोपचार उक्तः स चैकशब्ददर्शने स्थितः, तत्र यस्यार्थं योवल-

ख्यतइति शब्दभेद उक्तः स्यात् (१)। असदेतत्। अत्रापि शक्तिभेदाश्रयणे (२) कल्पितस्य भेदस्योपपत्तेर्युज्यतएतदिति न कश्चिद्दोषः ॥ २६९ ॥

अथार्थप्रकरणादेः शब्दस्य गौणमुख्यविभागहेतुत्वे ऽतिप्रसङ्गमाह ॥

पुराराादिति भिन्ने ऽर्थे यौ वर्त्तेते विरोधिनि ।
अर्थप्रकरणापेक्षं तयोरप्यवधारणम् ॥ २७० ॥

पुराराच्छब्दौ भाविभूतदूरान्तिकलक्षणेषु यथायोगं परस्परविरुद्धेष्वर्थेषु वर्तेते। तत्रैतयोरर्थ[प्रकरणादिनार्थनिर्णयः । ततश्चात्रापि गौणमुख्यभागः स्या,न्न चैतदिष्टम्, अनयोरुभयत्रापि मुख्यार्थ] (३) त्वमिष्यतइत्यतो ऽर्थप्रकरणादीन् केवलान् गौणमुख्यभावो न प्रयोजयतीति बोद्धव्यम् ॥ २७० ॥

इदानीमखण्डपक्षमाश्रित्य गौणमुख्यतामाह ॥

वाक्यस्यार्थात्पदार्थानामपोद्धारे प्रकल्पिते ।
शब्दान्तरेण सम्बन्धः कस्यैकस्योपपद्यते ॥ २७१ ॥

पूर्वमेकशब्ददर्शने ऽनेकशब्ददर्शने वा पदपदार्थयोः सत्यत्वमभ्युपगम्योक्तं, तत्र त्वसत्यौ पदपदार्थौ बोद्धव्या,वतश्चाखण्डमेव वाक्यं वाक्यार्थस्य प्रत्यायकमिति पदपदार्थासद्भावे (४) कीदृशो गौणमुख्यभावः किल, गौर्वाहीक इत्यत्र पदपदार्थाभ्युपगमे विरुद्धसामानाधिकरण्यान्यथानुपपत्त्या गोपदस्योपचरितार्थत्वमुच्यते। यदा तु गौर्वाहीक इत्यनेनाखण्डेनैव गोगतधर्मावच्छिन्नो वाहीकलक्षणोर्थो ऽख-

---

(१) असदेतत्त्वमिति २ पु० पाठः ।

(२) शक्तिभेदाश्रयेणेति २ पु० पाठः ।

(३) [ ] एतन्मध्यस्थं २ पु० नास्ति ।

(४) पदपदार्थसद्भावइति २ पु० पाठः ।

ण्ड एव प्रतिपाद्यते तदा पदपदार्थानामसत्यत्वात् कस्यैकस्याविद्यमानस्यैव तथाभूतेनैवेतरेण सम्बन्ध इति कुतस्त्यो गौणविभागः । यद्येवमेतस्मिन्पक्षे कथं गौणमुख्यविभागः स्यात् । उच्यते । अपोद्धारसमाश्रयणेन पदपदार्थविभाग(१)मुपकल्प्य प्रसिद्ध्यप्रसिद्धिनिमित्तको गौणमुख्यविभागो ऽभ्युपगन्तव्य इत्यभिप्रायः ॥ २७१ ॥

ननु स्वतन्त्रं पदं पदान्तरमन्तरेण प्रयुज्यतएवातस्तत्र वास्तवः पदपदार्थप्रविभाग इत्याह ॥

यच्चाप्येकं पदं दृष्टं चरितास्तिक्रियं क्व चित् ।
तद्वाक्यान्तरमेवाहुर्न तदन्येन युज्यते ॥ २७२ ॥

एकं पदं चरित(२)क्रियत्वाद्वाक्यमेवाखण्डमिति प्रतिपादयिष्यति । अतस्तदन्येन नैव युज्यतइति बोद्धव्यम् ॥ २७२ ॥

एतदेव स्फुटीकृत्य प्रतिपादयितुमाह ॥

यत्र को ऽयमिति प्रश्ने गौरश्व इति चोच्यते(३) ।
प्रश्न एव क्रिया तत्र प्रक्रान्ता दर्शनादिका ॥ २७३ ॥

को ऽयमिति प्रश्ने दृश्यते भवतीति वा कापि क्रिया गर्भीकृता सैवोत्तरेपि गर्भीकृतेति तदपि चरितक्रियमेकं वाक्यमेवेति मन्तव्यम् ॥ २७३ ॥

इदानीं न्यूनाधिकभाव एव गौणमुख्यविभागकारणं कैश्चिदभ्युपगतमित्याशङ्क्य निराकर्त्तुमाह ॥

नैवाधिकत्वं धर्माणां
न्यूनता वा प्रयोजिका ॥ २७३ऽऽ ॥

---

(१) पदपदार्थभागमिति २ पु० पाठः ।

(२) चरतीत्ययुक्तो २ पु० पाठः ।

(३) वोच्यतइति २ पु० पाठः ।

कस्मादित्याह ॥

आधिक्यमपि मन्यन्ते

प्रसिद्धेर्न्यूनतां क्व चित् ॥ २७४ ॥

आपेक्षिकत्वादस्याव्यवस्थितत्वमेवेति न तेन गौणमुख्यव्यवहारः कल्पयितुं शक्यः ॥ २७४ ॥

सादृश्यमिदानीं निमित्तत्वेनाह ॥

जातिशब्दोऽन्तरेणापि जातिं यत्र प्रयुज्यते ।

सम्बन्धिसदृशाद्धर्मात्तं गौणमपरे विदुः ॥ २७५ ॥

गोशब्दो गोत्वजातिं विनापि स्वव्यक्तिगतगुणसादृश्याद्वाहीके प्रयुज्यत इति सादृश्यं गौणमुख्यभावे निमित्तम् ॥ २७५ ॥

अथ विपर्यासमेव निमित्तत्वेनाह ॥

विपर्यासादिवार्थस्य

यत्रार्थान्तरतामिव ।

मन्यन्ते स गवादिस्तु

गौण इत्युच्यते क्व चित् ॥ २७६ ॥

अर्थस्य वाहीकलक्षणस्यार्थान्तरतां गोरूपतां विपर्यासादिव यत्र मन्यन्ते तत्र तस्मिंस्तद्वाचको गोशब्दः प्रवृत्तो गौण इति क्व चिन्मतं, विपर्यासत्वाध्यवसायेन भवत्वाध्यारोपेण च । रजतमिदमित्यत्र विपर्ययाध्यवसाय एव । इह त्वध्यारोप्यगोगतान् गुणान् वाहीकेऽध्यवस्यतीत्यध्यारोपिततद्भावोऽयं विपर्यासः(१) । अत एव विपर्यासादिवेत्युक्तं, तस्मादध्यवसिततद्भावनिमित्तप्रयुक्तो नास्ति गौणमुख्यव्यवहार इति ॥ २७६ ॥

---

(१) विपर्यय इति २ पु० पाठः ।

अथ रूपशक्तिनिमित्तको गौणमुख्यव्यवहार इति पक्षान्तरं दृष्टान्तप्रदर्शनपूर्वकं दर्शयितुमाह ॥

**नियताः साधनत्वेन रूपशक्तिसमन्विताः ।**
**यथा कर्मसु गम्यन्ते सीरासिमुसलादयः ॥ २७७ ॥**

खड्गमानयेत्युक्ते संनद्धानां संग्रामकथा वर्त्ततइति रूपशक्तिमाहात्म्यादभिधीयते । एवं सीरादिषु ॥ २७७ ॥

क्रियान्तरे लताच्छेदादौ नैतेषां शक्तयो भवन्तीति वक्तुं पार्यते । ततश्च रूपेण नियतएव कर्मणि सामर्थ्यमेषां व्यवसीयतइत्याह ॥

**क्रियान्तरेण चैतेषां**
**भवन्ति न हि शक्तयः ।**
**रूपादेव तु तादर्थ्यं**
**निधनेन (१) प्रतीयते ॥ २७८ ॥**

प्रकृते योजयितुमाह ॥

**तथैव रूपशक्तिभ्या-**
**मुत्पत्त्या समवस्थितः ।**
**शब्दो नियततादर्थ्यः**
**शक्त्या ऽन्यत्र प्रयुज्यते ॥ २७९ ॥**

उत्पत्त्या स्वभावेनैव । यथोच्यते "औत्पत्तिकः शब्दस्यार्थेन सम्बन्धः" सहज एवेति गम्यते । अनेकशक्तिसद्भावाच्चान्यत्रापि प्रयुज्यते ॥ २७९ ॥

ततश्च गौणमुख्यभावः कथमत्र शायेतेत्याह ॥

**श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते ।**

---

(१) नियमेनेति २ पु० पाठः ।

**मुख्यं तमर्थं मन्यन्ते गौणं यत्नोपपादितम् ॥ २८० ॥**

"गौणं यत्नोपापादितमि"ति तदभिधानशक्तिसद्भावेऽप्यप्रसिद्धत्वा-यत्नेन प्रकरणादिना गौणत्वाध्यवसाय इत्यर्थः । तदेवमर्थप्रकरणश-ब्दान्तरसन्निधानमात्रं प्रसिद्ध्यप्रसिद्धिसहितं चार्थप्रकरणादिकम-मानादिसमुच्चयेन अङ्गाङ्गिभावेन चेति द्वौ पक्षौ । न्यूनाधिकभावः साद्दश्यं विपर्यासः रूपशक्तिः इति सप्त पक्षाः । अत्रार्थप्रकरणमात्रं पुराराद्दित्यादिभिरतिप्रसङ्गादनिमित्तमेव । न्यूनाधिकभावस्याव्यव-स्थितेरनिमित्तत्वमेव । साद्दश्यस्यापि काश्यपप्रतिकृतिः काश्यप इ-त्यादौ निमित्तयुक्तेपि गौणत्वासद्भावादनिमित्ततैव । पारिशेष्यात्प्र-सिद्ध्यप्रसिद्धिसहिताः प्रकरणादयः प्रकरणादिसहिते वा प्रसिद्ध्य-प्रसिद्धी विपर्यासो ऽध्यारोपलक्षणो रूपशक्तिरिति चत्वारः प्रकाराः गौणमुख्ययोर्निमित्तत्वेन परिगृहीताः । इत्येतैर्निमितैः शब्दोपचारो ऽर्थोपचारो वा । स च द्विविधः वाक्यार्थोपचारः स्वरूपोपचारो वे-त्येवं गौणमुख्यविभागो मन्तव्यः ॥ २८० ॥

इदानीमेतदेव लक्ष्ये योजयितुमाह ॥

**गोयुष्मन्महतां च्व्यर्थे स्वार्थादर्थान्तरे स्थितौ ।**
**अर्थान्तरस्य तद्भावस्तत्र मुख्ये ऽपि दृश्यते ॥ २८१ ॥**

गवादीनां शब्दानां स्वार्थादर्थान्तरे ऽगवाद्यलक्षणे आश्रितपूर्वाव-स्थोपचरितोत्तरावस्थात्मके स्थितौ प्रवृत्तौ सत्यामर्थान्तरस्य वाही-कादेस्तद्भावो गवादिरूपतापत्तिलक्षणो यदा तदा गौणोर्थस्तेषां दृ-श्यतइति बोद्धव्यम् । न केवलं गौणोर्थस्तथा, यावन्मुख्योपि दृश्यतइति बोद्धव्यम्, तत्रागौर्गौः समपद्यत, गो ऽभव,दत्वं त्वं सम्पद्यते, त्वद्भव-तीत्यत्रागवि अयुष्मदि च गोरूपता युष्मद्रूपता चोत्तरावस्थाविद्यमा-नैवोपचर्यतइति गौणार्थता । अमहान्महा,नशक्तः शक्तः सम्पद्यते,

महद्भूतश्चन्द्रमाः, शुक्लो भवति पट, इत्यत्र तूत्तरावस्था वस्तुसत्त्वैवेति मुख्य एवार्थे महच्छुक्लशब्दौ स्थिताविति नास्ति गौणत्वम्। अतश्च गोभवदित्यत्र गौणार्थत्वादोदन्तस्य निपातत्वे ऽप्योदिति प्रगृह्यसंज्ञाया नास्त्येव प्राप्तिः। तथा त्वद्भवतीत्यत्रोपचरितस्य युष्मदर्थस्य प्रतीतेर्गौणार्थत्वादेव मध्यमपुरुषस्याप्यभावः। यतो गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति भाष्ये स्थापितम्। वार्त्तिककारस्तु गो ऽभवदित्यत्र च्व्यर्थवृत्तित्वान्निपातस्य गोशब्दस्य च्व्यर्थलक्षणं मुख्यमेव सर्वमर्थमवगच्छन् गौणमुख्यभावासम्भवमेवाभिमन्यमानः प्रगृह्यसंज्ञानिवृत्तये 'ओतश्च्विप्रतिषेध' इति यत्नमारब्धवान्। भाष्यकारस्त्वभिप्रायानभिज्ञ एवान्तरङ्गत्वाद्गौणमुख्ययोर्मुख्ये सम्प्रत्यय इत्येवमत्र प्रगृह्यसंज्ञा अतो ऽन्तरङ्गस्य कार्यस्य प्राप्तिरिति स्थितम्। ननु गौणार्थत्वे शब्दानां कार्याप्रवृत्तौ गौर्वाहीकस्तिष्ठति गां वाहीकमानयेत्यत्र वृद्ध्यात्वे प्राप्नुतः। अत्र ह्युपचरितार्थो गोशब्द इति। उच्यते। द्विविधं हि शब्दानां कार्यमस्ति प्रातिपदिककार्यं पदकार्यं च। तत्र पदकार्येषु गौणमुख्यन्यायः न प्रातिपदिककार्येषु। पदस्य विरुद्धपदसामानाधिकरण्यान्यथानुपपत्त्या गौणार्थताप्रतिपादकस्य प्रयोगानर्हस्य पदान्तरेण सामानाधिकरण्यासम्भवाद्गौणार्थता नैव निश्चेतुं शक्यते प्रातिपदिककार्यं च वृद्ध्यात्वे इति तत्प्रवर्त्तत एव। तदुक्तम्। 'अर्थाश्रयएतदेवं भवति तद्धि शब्दाश्रये च वृद्ध्यात्वे' इति॥ २८१॥

तदेवं गो ऽभवत् त्वद्भवतीति चात्र गौणार्थत्वे सिद्ध्यतीष्टं महद्भूतश्चन्द्रमा इत्यत्र तु चन्द्रमसः पौर्णमास्यां महत्त्वस्य सद्भावादनुपचरितत्वमिति महच्छब्दस्याम्महात इत्यादि न प्राप्नोत्येवात्वमित्याशङ्क्यात्रापि गौणार्थतां प्रतिपादयितुमाह॥

**महत्त्वं शुक्लभावं च**

प्रकृतिः प्रतिपद्यते ।
भेदेनापेक्षिता सा तु
गौणत्वस्य प्रयोजिका ॥ २८२ ॥

महद्भूतश्चन्द्रमाः शुक्ली भवति पट इत्यत्रापि प्रकृतिर्महत्त्वं शुक्लभवनं च भेदेनाश्रितपूर्वावस्थोपचारितोत्तरावस्थतयैव प्रतिपद्यते, ततश्च यद्यपि वस्तुवृत्त्या एक एवार्थः, तथापि वक्त्रापेक्षिता आश्रिता सती गौणत्वं प्रयोजयति । एतदुक्तं भवति । यद्यप्यत्र महत्त्वं शुक्लभावश्च तथैव विद्यते तथाप्यत्र शब्दवृत्त्योन्मज्जद्रूपा प्रकृत्यवस्थैवोच्यत इति तदाश्रयेणोपचरितत्वान्महत्त्वस्य न भवत्यत्र महच्छब्दस्यार्थत्वं शुक्ली भवति पट इत्यस्य कार्यं न किं चिदस्ति अर्थप्रदर्शनाय केवलमत्र प्रदर्श्यते ॥ २८२ ॥

अथाग्निसोमौ माणवकावित्यत्र संज्ञाशब्दत्वान्मुख्यार्थत्वे "ऽग्नेः स्तुत्स्तोमसोमाः" इति षत्वं कस्मान्न क्रियतइत्याह ॥

अग्निसोमादयः शब्दा ये स्वरूपनिबन्धनाः ।
संज्ञिभिः संप्रयुज्यन्ते प्रसिद्धेस्तेषु गौणता ॥ २८३ ॥

इहाग्निसोमादयः शब्दा देवतावाचकाः स्वरूपनिमित्तकाश्च संज्ञाभूतार्थवृत्तयश्चेति त्रिविधाः सम्भवन्ति । तत्र देवतायां स्वरूपनिमित्तेषु संज्ञासु चैते मुख्यार्था एव तत्र संज्ञाया गौणतेति देवतायामग्निसोमादयः प्ररूढिमुपगता माणवके चाप्रसिद्धा इत्येवमप्रसिद्ध्या तेषां गौणार्थत्वमुच्यते न त्वध्यारोपेणेति बोद्धव्यम् । अतश्च षत्वाप्रवृत्तिरेव ॥ २८३ ॥

यत्र त्वतस्मिंस्तदध्यारोपेणाग्निसोमादयः प्रवर्त्यन्ते तत्र स्फुटैव गौणार्थता तेषामित्याह ॥

अग्निदत्तस्तु यो ऽग्निः स्यात्तत्र स्वार्थोपसर्जनः ।

**शब्दो दृष्टार्थदृष्टित्वाद्गौणत्वं प्रतिपद्यते ॥ २८४ ॥**

स्वार्थं देवतालक्षणमुपसर्जनीकृत्यार्थान्तरमेव तदध्यारोपेण यत्राभिदधति तत्र गौणार्थत्वं स्फुटमेवैते शब्दाः प्रतिपद्यन्तइति बोद्धव्यम् ॥ २८४ ॥

अथ हरिश्चन्द्रो माणवक इत्यत्र सुट्समर्थनार्थं प्रस्तौतुमाह ॥

**निमित्तभेदात्प्रक्रान्ते**
**शब्दव्युत्पत्तिकर्मणि ।**
**हरिश्चन्द्रादिषु सुटो**
**भावाभावौ व्यवस्थितौ ॥ २८५ ॥**

हरिश्चन्द्रादिषु सुटोभावाभावौ नियतावेव, यस्माच्छब्दव्युत्पत्तिक्रियायां तत्र निमित्तभेदः समाश्रीयते ऋषावनादिभूते प्रसिद्धो हरिश्चन्द्रः साधुः हरिश्चन्द्रो यस्येत्येतस्मिंस्तु व्युत्पत्तिकर्मण्यभाव एव स्फुट इत्यसांकर्यमेव ॥ २८५ ॥

अथ यदा पुरातनहरिश्चन्द्रगतगुणसंदर्शनेन साक्षाद्धरिश्चन्द्रोऽयं माणवक इत्युच्यते तदा किं गौणार्थत्वान्न भवितव्यमेव सुटेत्यसाङ्कर्यं दर्शयितुमाह ॥

**ऋष्यादौ प्राप्तसंस्कारो यः शब्दोऽन्येन युज्यते ।**
**तत्रान्तरङ्गः संस्कारो बाह्येऽर्थे न निवर्त्तते ॥ २८६ ॥**

हरिश्चन्द्रशब्दस्तावदृषावेव संस्कृतः उत्तरकालं प्राप्तसंस्कारः (१) सन्नसौ यदा हरिश्चन्द्रगुणसधर्मण्यन्यत्र प्रयुज्यते तदान्तरङ्गः संस्कारो वाक्यार्थवेलायामर्थान्तरसंबन्धावसरे न निवर्त्ततइति वैयाकरणसमयः । यथा करिष्यति श्वः, वर्षेण गमिष्यती,त्यत्र श्वःशब्दसंन्निधानाद्भविष्यदनद्यतनलक्षणकालप्रादुर्भावे भविष्यत्सामान्यसमाश्रयणेन वि-

(१) उत्तरकालमप्राप्तसंस्कार इति २ पु० पाठः ।

स्थितस्य लटो न निवृत्तिः शक्या कर्त्तुमेवमत्रापि हरिश्चन्द्रो माणवक इति गौणार्थत्वेपि लुट्सिद्धिरेवेति ॥ २८६ ॥

इदानीं न्यायदर्शनच्छायया बौद्ध एव शब्दार्थो नास्ति कश्चिच्छब्देषु गौणमुख्यविभाग इत्याशङ्क्याह ॥

अत्यन्तविपरीतो ऽपि यदा योऽर्थो ऽवधार्यते ।
यथासंप्रत्ययं शब्दस्तत्र मुख्यः प्रवर्त्तते ॥ २८७ ॥

इह वक्तुरिच्छया विषयीकृते ऽर्थे कश्चिद्यावच्छब्दः प्रवर्त्तते तावद्यदा यथा विपर्ययेण चार्थावधारणं क्रियते तदा (१) यथासंप्रत्ययं प्रत्ययानुसारेणैव शब्दः प्रवर्तमानः सर्वत्र मुख्यतयैव प्रवृत्त इति वाक्ये न शब्देषु गौणमुख्यविभागः कश्चित् ॥ २८७ ॥

इदानीमत्रापि गौणमुख्यविभागं समर्थयितुं सत्यासत्यविभागं तावदुपक्रमितुमाह ॥

यद्यपि प्रत्ययाधीनमर्थतत्त्वावधारणम् ।
न सर्वः प्रत्ययस्तस्मिन्नसिद्ध इव जायते ॥ २८८ ॥
दर्शनं सलिले तुल्यं मृगतृष्णादिदर्शनैः ।
तुल्यत्वे दर्शनादीनां न जलं मृगतृष्णिका ॥ २८९ ॥
यदसाधारणं कार्यं प्रसिद्धं रज्जुसर्पयोः ।
तेन भेदः परिच्छेद्यस्तयोस्तुल्येपि दर्शने ॥ २९० ॥

अथ दर्शनस्य विषयासत्यत्वेनाप्यसत्यत्वमुपदर्शयितुमाह ॥

प्रसिद्धार्थविपर्यासनिमित्तं यत्र दृश्यते ।
यस्तस्माल्लभ्यते भेदस्तमसत्यं प्रचक्षते ॥ २९१ ॥

---

(१) तथेति २ पु० पाठः ।

यच्च नैमित्तिकदर्शनं (१) प्रसिद्धार्थविपर्यासनिमित्तमिति प्रसिद्धः सत्यरूपोऽर्थः । तस्य विपरीतो यो मिथ्यात्वलक्षणस्तस्य निमित्तं कारणमिन्द्रियविषयगतो दोष इति, यच्च तस्माद्भेदो विशेषो लक्ष्यते द्विचन्द्रादिः तं तथाभूतं दर्शनविषयं प्रचक्षते ॥ २८१ ॥

पुनरपि दर्शनभेदमाह ॥

यच्च निम्नोन्नते चित्रे सरूपं पर्वतादिभिः ।
न तत्र प्रतिघातादि कार्यं तद्वत्प्रवर्त्तते ॥ २८२ ॥

पर्वतादिभिः सरूपं (२) निम्नोन्नतचित्रभित्तौ दृश्यते न च तावता तत्र प्रतिघातादिकार्यभेदः ज्ञानान्तरेण तत्र भेदावगतिरित्यर्थः ॥ २८२ ॥

एतदेव दृष्टान्तान्तरैः प्रतिपादयितुमाह ॥

स्पर्शप्रबन्धो हस्तेन
यथा चक्रस्य संततः ।
न तथाऽलातचक्रस्य
विच्छिन्नं स्पृश्यते हि तत् ॥ २८३ ॥

वप्रप्राकारतल्पैश्च स्पर्शनावरणे यथा ।
नगरेषु न ते तद्वद्गन्धर्वनगरेष्वपि ॥ २८४ ॥

मृगपश्वादिभिर्य्यावा-
न्मुख्यैरर्थः प्रसाध्यते ।
तावान्न मन्मये ऽप्यस्ति
तस्मात्ते विषयः कनः ॥ २८५ ॥

---

(१) दर्शनेति समस्तः २ पु० पाठः ।

(२) सरूपेति समस्तः २ पु० पाठः ।

मज्ञानाध्रियते देशः प्रसिद्धैः पर्वतादिभिः ।
अल्पदेशान्तरावस्थं प्रतिबिम्बं तु दृश्यते ॥ २९६ ॥
मरणादिनिमित्तं च यथा मुख्या विषादयः ।
न ते स्वप्नादिषु स्वस्य तद्वदर्थस्य साधकाः ॥ २९७ ॥

अत्र हस्तिकान्विक्रीणीते, अश्वकान् विक्रीणीते, इत्यादौ कार्यभेदादेव भेदमवसाय कन्प्रत्ययान्तान् प्रतिकृतिवाचकानीरितवानिति मृगपश्वादिभिरित्यस्य श्लोकस्यार्थः । अन्यत् स्पष्टम् ॥ २९७ ॥

इदानीमुपसंहर्त्तुमाह ॥

देशकालेन्द्रियगतैर्भेदैर्यद्दृश्यते ऽन्यथा ।
यथा प्रसिद्धिर्लोकस्य तथा तदवसीयते ॥ २९८ ॥

देशभेदेनासत्तिविप्रकर्षरूपेण, कालभेदेन यथा ग्रीष्मे मरीचयो भौमैनोष्मणा स्पन्दमाना दूरस्थस्य जलज्ञानमुपजनयन्ति, इन्द्रियभेदेन यथा तैमिरकस्य द्विचन्द्रज्ञानमुपजनयन्ति तैर्देशकालेन्द्रियगतैर्भेदैरन्यथा दृश्यमानं वस्तु लोकप्रसिद्धिवशाद्दार्व्यादार्व्यप्रत्ययभेदेनार्थक्रियाभेदेन च यथावदवैपरीत्येनाध्यवसीयते ॥ २९८ ॥

ततश्चेदमत्रार्थतत्त्वं बोद्धव्यमित्याह ॥

यच्चोपघातजं ज्ञानं
यच्च ज्ञानमलौकिकम् ।
न ताभ्यां व्यवहारो ऽस्ति
शब्दा लोकनिबन्धनाः ॥ २९९ ॥

उपघातजं सत्यत्वविपरीतं (१) शैषतिमिरिकादिज्ञानं अलौकिकं च यदपि परमर्षीणां सम्बन्धिज्ञानं ताभ्यामुभाभ्यामपि व्यव-

(१) विपरीतेति समस्तः २ पु० पाठः ।

हारनिर्वहणमशक्यमित्यतो यथैवा ऽविसम्बाधं लोकप्रसिद्ध्या सकलव्यवहारनिर्वहणनिपुणं ज्ञानं यथावदर्थतत्त्वावधारणाय समाश्रीयते । यथोक्तं (२) "असमाख्येयतत्त्वानामर्थानां लौकिकैर्यथा । व्यवहारे समाख्यानां (३) तत्प्राज्ञो न विकल्पयेदि"ति तथैवार्थस्वरूपप्रत्यायनाय शब्दा लोकनिबन्धना लोकव्यवहारनिमित्तभूताः प्रवर्त्तमानाः प्रसिद्ध्यप्रसिद्धिभ्यामेव स्खलद्गतित्वास्खलद्गतित्वाभ्यां गौणमुख्य(४)विभागमापादयन्तीति बौद्धेपि शब्दार्थे व्यवस्थित एव गौणमुख्यविभाग इति सिद्धम् ॥ २९९ ॥

एवं गौणमुख्यविभागमुक्त्वा तत्प्रसङ्गेन च सत्यासत्यविभागं विधाय पुनरपि शब्दानां मुख्यनान्तरीयकविचारं वैतत्येन कर्त्तुमाह ॥

घटादिषु यथा दीपो
येनार्थेन प्रयुज्यते ।
ततो ऽन्यस्यापि साचिव्या-
त्स करोति प्रकाशनम् ॥ ३०० ॥

इह यत्प्रतिपादनाय शब्दाः प्रयुज्यन्ते तत्तस्य प्रयोजकमुख्यं, तत्प्रतिपादनावसरे च संनिधानाद्यदन्यत्प्रत्याययति तत्तस्य नान्तरीयकमुच्यते । एतत् दृष्टान्तद्वयेन प्रदर्शयति घटादिष्वित्यादिना । तत्र यथा दीप इति ज्ञापकदृष्टान्तोपदर्शनं घटादिषु ज्ञातेषु विषयेषु यथा ज्ञापको दीपो येनार्थेन घटादिज्ञापनलक्षणेन ततः प्रयोजकादन्यत्प्रकाशं नान्तरीयकं यथा करोति ॥ ३०० ॥

एवं दार्ष्टान्तिके योजयितुमाह ॥

---

(१) तथोक्तमिति २ पु० पाठः ।
(२) समाख्यातमिति २ पु० पाठः ।
(३) मुख्यार्थेति २ पु० पाठः ।

संसर्गिषु तथा ऽर्थेषु
शब्दो येन प्रयुज्यते ।
तस्मात्प्रयोजकादन्या-
नपि प्रत्याययत्यसौ ॥ ३०१ ॥

यथा भाव इत्यादावर्थेषु बहुषु संसर्गिषु मध्याद्येनार्थेन सिद्धता-दिना ऽसौ भावशब्दः प्रयुज्यते यस्मादन्यानपि लिङ्गसंख्यादीन् ना-न्तरीयकतया स्थितात् संनिधानात्प्रत्याययत्येवेति बोद्धव्यम् ॥ ३०१ ॥

कारकहेतुदृष्टान्तोपदर्शनार्थमाह ॥

निर्मन्थनं यथा ऽरण्योरग्न्यर्थमुपपादितम् ।
धूममप्यनभिप्रेतं जनयत्येकसाधनम् ॥ ३०२ ॥

अरण्योः सम्बन्धि यन्निर्मन्थनं तदग्न्यर्थं अग्निनिष्पत्तये, ऽग्निस्तस्य प्रयोजक इत्यर्थः । यस्मान्नान्तरीयकतया धूममप्यनुपयोगिनं जन-यत्येव । कीदृशमेकसाधनमेकहेतुक इत्यर्थः । अरण्योरित्यनेनोत्तरा-रणिरधरारणिश्च तत्रोच्यतइति दर्शितम् ॥ ३०२ ॥

पुनरपि दार्ष्टान्तिके योजयितुमाह ॥

यथा (१) शब्दो ऽपि कस्मिंश्चि-
त्प्रत्याप्यार्थो (२) विवक्षिते ।
अविवक्षितमप्यर्थं
प्रकाशयति सन्निधेः ॥ ३०३ ॥

कस्मिंश्चित्प्रत्याप्ये ऽर्थे सिद्धताख्ये धर्मे ऽविवक्षितमप्यर्थं पुंस्त्वैकत्व-लक्षणं प्रकाशयति प्रत्याययति संनिधानादिति ॥ ३०३ ॥

(१) तथेति २ पु० पाठः ।
(२) प्रत्याप्ये ऽर्थे इति २ पु० पाठः ।

नन्वस्तु (१) वस्तुगतिरीदृश्येव यथा दीपादिना नान्तरीयकप्रत्यायनेन प्रयोजकं प्रकाश्यते तत्सन्निधानान्नान्तरीयकतया ऽन्यदपि घटकुड्यादीति तत्र युक्तं, शब्दस्तु यत्प्रतिपादनाय वक्ता प्रतिपादयितुमिष्टस्तथैव भूत्वा तत्प्रतिपादनं करोतु किं तस्य नान्तरीयकप्रत्यायनेनेत्याशङ्क्याह ॥

यथैवात्यन्तसंसृष्टस्त्यक्तुमर्थो न शक्यते ।
तथा शब्दो ऽपि सम्बन्धी प्रविवेक्तुं न शक्यते ॥३०४॥

यथा मत्स्यमांसार्थिना मत्स्यमांससंसृष्टस्तोकलकण्टकादिरनुपयोग्यपि त्यक्तुं न शक्यते, तथा शब्दो ऽप्यत्यन्तसम्बन्धाल्लिङ्गसंख्याप्रतिपादक,स्तत्र न केवला प्रकृतिः प्रयोक्तव्या, न च केवलः प्रत्यय इति प्रविवेक्तुं परिहर्त्तुं न शक्यते ॥ ३०४ ॥

अतश्च तत्रार्थेषु बहुषु सन्निहितेषु कः शब्दस्यार्थो वाच्यः स्यादित्याह ॥

व्यर्थानां सन्निधाने ऽपि सति चैषां प्रकाशते ।
प्रयोजको ऽर्थः शब्दस्य रूपाभेदे ऽपि शस्यते ॥३०५॥

बहूनां संसर्गिणामर्थानाम् । तत्र सन्निधानादेतेषां च सत्यपि शब्दाद्दीपादिवाविशेषेण प्रकाशने यस्तस्य प्रयोजकः स एव वाच्यो ऽर्थो ऽन्यो नान्तरीयको न तस्य प्रयोजकत्वं तत्रापि रूपस्याभेदे समानरूपत्वे इति ॥ ३०५ ॥

एतदेव वैतत्येन प्रकारभेददर्शनपूर्वकमाह ॥

क्व चिद्गुणप्रधानत्व-
मर्थानामविवक्षितम् ।

---

(१) अत्रेति २ पु० पाठः ।

क्व चित्सान्निध्यमप्येषां (१)
प्रतिपत्तावकारणम् ॥ ३०६ ॥
यत्रानुपात्तं शब्देन
तत्कस्मिंश्चित्प्रतीयते ।
क्व चित्प्रधानमेवार्थो
भवत्यन्यस्य लक्षणम् ॥ ३०७ ॥

अत्र च गुणप्रधानताविपर्ययः पदार्थैकदेशाविवक्षा, सकलपदार्थाविवक्षा, उपात्तपदार्थापरित्यागेनैवान्यार्थोपलक्षण,मित्येवमनेन श्लोकद्वयेन प्रकारचतुष्टयस्योद्देशः कृतः ॥ ३०७ ॥

अथाद्यप्रकारप्रदर्शनार्थमाह ॥

आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥ ३०८ ॥

तेन दीव्यतीत्याख्यातं तद्धितार्थस्य निमित्तत्वेनोक्तम् । अतश्च तत्र क्रियाप्रधानमाख्यातमिति तदर्थस्यैव तद्धितान्तादवगतिः स्यात् । यतश्च तत्र क्रियाप्रधानत्वेपि नाख्यातस्य (२) तद्धितः स्वभावात्साधनप्रधान इति साधनार्थस्यैव प्राधान्येनावगतिरिति । तेन दीव्यत्यादौ निर्देशे गुणप्रधानभावो न विवक्षितो ऽक्षकरणकदेवनादिक्रियाकर्तृमात्रमेव तत्र प्रयोजकमिति स एव मुख्योर्थः । वक्ष्यति च "गुणप्रधानताभेदः पुरुषादिविपर्ययः । निर्दिष्टस्यान्यथा शास्त्रे नित्यत्वान्न विरुध्यते । यथानिर्देशमर्थाः स्युर्येषां शास्त्रं विधायकम् । किं चित्सामान्यमाश्रित्य स्थिते तु प्रतिपादनम् । यो ऽश्वो यः पीठ इत्यत्र भूतयोरश्वपीठयोः यथोपलक्षणार्थत्वं तथार्थेष्वनुशासनमि"ति ॥३०८॥

(१) सान्निध्यमेतेषामिति २ पु० पाठः ।
(२) चाख्यातस्येति २ पु० पाठः ।

अथ क्व चित्सांनिध्यमित्येतस्य प्रतिपादनायाह ॥

निर्देशे (१) लिङ्गसङ्ख्यानां

सन्निधानमकारणम् ॥ ३०८ऽऽ ॥

सिद्धलक्षणो भावो घञादीनां निमित्तत्वेनाभीष्ट इति तत्प्रतिपादनाय भाव इत्यस्मिन्निर्देशे लिङ्गसंख्ययोर्नान्तरीयकतया प्रतिपत्तावपि सन्निधानमकारणं न यत्र तयोः प्रयोजकत्वमिति यावत् । ननु नान्तरीयकतया प्रतिपत्तौ कथं, क्व चित्सान्निध्यमप्येषां प्रतिपत्तावकारणमित्युक्तम् । प्रयोजकार्थवत्तद्व्यवहारपर्यन्तायां प्रतिपत्तावकारणमित्यभिप्रायः ॥ ३०८ऽऽ ॥

इदानीं यत्रानुपात्तमित्येतस्य प्रतिपादनायाह ॥

प्रमाणमेव (२) ह्रस्वादावनुपात्तं प्रतीयते ॥ ३०९ ॥

इह उदात्तानुदात्तस्वरसमाहारः स्वरित इत्युक्तं ह्रस्वदीर्घप्लुताश्च मात्रिकद्विमात्रि(३)कत्रिमात्रलक्षणा उदात्तानुदात्तस्वरसमाहाररूपा भवन्ति तत्र ह्रस्वस्वरितादीनां कियदुदात्तं कियदनुदात्तम् आदौ किमुदात्तमथानुदात्तं मध्ये ऽन्ते वेति सन्देहापाकरणायोक्तं "तस्यादित उदात्तमर्धह्रस्वमि"ति । अत्र चार्धह्रस्वग्रहणमर्धमात्रालक्षणस्य प्रमाणस्योपलक्षणमिति तदेव तस्मात्प्रतीयते इत्यर्धह्रस्वग्रहणप्रतिपाद्यस्याप्रधानस्याविवक्षैवोक्ता ॥ ३०९ ॥

एतदेव प्रदर्शयितुमाह ॥

ह्रस्वस्यार्धं च यद्दृष्टं तत्तस्या ऽसन्निधावपि ।

ह्रस्वस्य लक्षणार्थत्वात्तद्वदेवाभिधीयते ॥ ३१० ॥

अतश्च ह्रस्वस्यार्धं च दृष्टमर्धमात्रात्मकं तत्तस्य ह्रस्वस्यासन्निधाव-

---

(१) निर्देशेति २ पु० पाठः ।

(२) प्रमाणमर्धेति २ पु० पाठः ।

(३) द्विमात्रेति २ पु० पाठः ।

पि दीर्घप्लुतयोरप्यादिभूतार्द्धमात्रोदात्तेत्युच्यते । कस्मादित्याह । ह्र-स्वस्य लक्षणार्थत्वादिति । अर्द्धह्रस्वमित्यत्र ह्रस्वग्रहणं मात्राया उपलक्षणार्थम् । अतो दीर्घप्लुतयोरप्यादिभूतार्द्धमात्रोदात्तेति बोद्धव्य-म् । एतदेवान्यैरुक्तम् अर्द्धह्रस्वमित्यनेनार्द्धमात्रा लक्ष्यते ह्रस्वग्रहण-मतन्त्रमिति । तस्माद्ध्रस्वस्यात्र लक्षणार्थत्वाद् दीर्घप्लुतयोरप्यर्द्धमात्रो-दात्ता भवतीत्यभिधीयते । किंवदित्याह तद्वदेवेति । यथा तस्य ह्र-स्वस्यार्द्धमात्रोच्यते तथा तत्संनिधौ दीर्घप्लुतयोरपीत्यर्थः ॥ ३१० ॥

अथ वा प्रकारत्रयमत्र प्रतिपाद्यते तत्राद्य(१)प्रकारमाह ॥

दीर्घप्लुताभ्यां तस्य स्यात्

ह्रस्वग्रहणेन "ऊकालो ऽज्झ्रस्वदीर्घप्लुत" इत्यत्रैकयोगनिर्दिष्टत्वा-द्दीर्घप्लुतावपि लक्ष्येते ततश्च दीर्घप्लुताभ्यां तस्यार्द्धस्यावच्छेदः स्यात् । विषमविभागेप्यर्द्धशब्दो दृष्टो ग्रामार्द्धं नगरार्धम् इति तथा ऽत्रेति दीर्घप्लुतयोरप्यर्द्धमात्रोदात्ता भवति ॥

द्वितीयं प्रकारमाह ॥

मात्रया वा विशेषणम् ॥ ३१०ऽऽ ॥

मात्रया अथ वार्द्धस्यावच्छेदः ह्रस्वसंज्ञकत्वस्याविवक्षितत्वात् । ए-तच्च निदर्शितं (२) ह्रस्वस्यार्द्धमित्यनेन । अथ वा निरस्तावयवविभा-गो ऽर्द्धह्रस्वशब्दो ऽखण्ड एवार्द्धमात्रजातेः सप्तपर्णादिवदुपलक्षक इति ॥ ३११ऽऽ ॥

तृतीयमत्र प्रकारमाह ॥

जातेर्वा लक्षणा यस्मा-
त्सर्वथा सप्तपर्णवत् ॥३११॥

---

(१) तत्राद्यमिति २ पु० पाठः ।

(२) निदर्शनमिति २ पु० पाठः ।

इदानीं क्व चित्प्रधानमेवार्थो भवत्यन्यस्य लक्षणमिति व्याख्यातुमाह ॥

गन्तव्यं दृश्यतां सूर्य इति कालस्य लक्षणे ।
क्षायतां काम इत्येतत्सोपायमभिधीयते ॥ ३१२ ॥

पथिकैः क्व चिदित्थमभिधीयते त्वर्यतामद्यापरो ऽध्वा गन्तव्यः सूर्यश्च दृश्यतामिति,त्वत्र सूर्यदर्शनप्राधान्येन शब्दः श्रूयमाणो क्षायतामल्पीयान् भागो ऽह्नः परिशिष्यतइत्यर्थस्य सोपायस्य सनिश्चयस्योपलक्षकः सम्पद्यतइति प्रधानेनार्थेनान्यार्थोपलक्षणमिति लक्षितपदार्थमुख्यशब्दार्थो ऽपि न त्यक्त इति ॥ ३१२ ॥

एतदेव श्लोकत्रयेण शास्त्रलोकयोरुदाहरणेषु वितत्य प्रदर्शयितुमाह ॥

विध्यत्यधनुषेत्यत्र विशेषेण निदर्श्यते ।
सामान्यमाश्रयः शक्तेर्यः कश्चित्प्रतिपादकः ॥ ३१३ ॥

अधनुषेत्यनेन विशेषेण करणसामान्यमात्रं निदर्श्यते । तत्कीदृशमित्याह शक्तेः करणशक्तेराश्रयो ऽधिकरणमात्रं, ततश्च तस्या यः कश्चित्प्रतिपादक उपादीयते । एतदुक्तं भवति । करणनिषेधपरायां चोदनायां धनुर्लक्षणस्य विशेषस्यापरित्यागेनैव करणमात्रस्य मुख्यत्वमिति शास्त्रीयमुदाहरणम् । उक्तं च । "विध्यत्यकरणेनेतीतरथा ह्यतिप्रसङ्ग" इति ॥ ३१३ ॥

विशेषाभिधायकेपि वाक्ये सामान्यमात्रमेव प्रयोजकं लोकेपि दृश्यतइत्याह ॥

काकेभ्यो रक्ष्यतां सर्पिरिति बालोपि चोदितः ।
उपघातपरे वाक्ये न श्वादिभ्यो न रक्षति ॥ ३१४ ॥

सर्पिषः काकेभ्यो रक्षणमत्र विशिष्टमेव विहितमप्युपघातमात्र-

निवारणफलं पर्यवस्यतीति तदेव तत्र प्रयोजकं बोद्धव्यम् ॥ ३१४ ॥

क्व चित्साचादनुक्तमपि मुख्यार्थनान्तरीयकतया प्रतिपद्यतएवेति दर्शयितुमाह ॥

प्रक्षालनं शरावाणां स्थालीनां(१) मार्जनं तथा ।

अनुक्तमपि रूपेण भुज्यङ्गत्वात्प्रतीयते ॥ ३१५ ॥

भोजनमस्योपपाद्यतामित्यत्र भोजनोपपादनं शब्दः प्रत्याययंस्तदङ्गानामासनदानपात्रप्रक्षालनादीनां नान्तरीयकतया प्रत्यायनङ्करोत्येवं प्रक्षालनइति वा पाठः । शरावाणाम्प्रक्षालने शब्देनोपात्तस्थालीनिर्माजनाद्यनुक्तमपि सम्भवाद्भुज्यङ्गत्वात्प्रतीयतएवेति । तदेवं "प्रयोजकमिदन्त्वेषामत्रेदं नान्तरीयकमि"त्येतदेव वितत्य प्रसङ्गाद्वैचित्र्येणोपदर्शितम् । एवं "प्रमाणमर्दङ्कखादावि"त्यादिना "प्रक्षालनं शरावाणामि"(२)त्यनेन ग्रन्थेन यत्रानुपात्तमित्यादिश्लोको व्याख्यातः । एतेन श्लोकेन प्रकारद्वयेन लक्षणा प्रदर्शिता । कदा चिन्मुख्यार्थत्यागेनैवान्यस्योपलक्षणमेतदेवाविवक्षितवाच्य(३)मुच्यते । कदा चिन्मुख्यार्थाविरामोपायपूर्वकमन्यार्थोपलक्षणमेतदेव विवक्षितान्यपरवाच्यमुक्तं विज्ञेयम् । इत्येवं मुख्यनान्तरीयकविभाग उपदर्शितः ॥ ३१५ ॥

अथात्रेदं गौणमिदं मुख्यमिदं नान्तरीयकमित्येवं शब्दार्थनिर्णयप्रस्तावे तत्तन्निश्चयोपायानुपदर्शयितुकाम आह ॥

वाक्यात्प्रकरणादर्थादौचित्याद्देशकालतः ।

शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात् ॥ ३१६ ॥

तत्र वाक्याच्छब्दार्थनिर्णयो यथा कटं करोति भीष्ममुदारं दर्श-

---

(१) स्थलानामिति २ पु० पाठः ।

(२) इत्यन्तेनेति २ पु० पाठः ।

(३) अविवक्षितं वाच्यमिति क्वाचित्को ऽपपाठः ।

नीयमिति तुल्यायामपि श्रुतौ यदा कटस्यैव करोतिक्रियया सम्बन्धः तदा द्रव्यस्य च निर्गुणस्यानुपपत्तेर्गुणानां च निरधिकरणानामसम्भवादाकाङ्क्षादिना तत्सामानाधिकरण्यं वाक्यीयात्समन्वयादिति भीष्मगुणान्वितस्यैव कटस्य करणं वाक्यार्थः। वक्ष्यति च "आश्रयाश्रयिणोर्वाक्यान्निर्णयस्त्ववतिष्ठत"इति तथा च शास्त्रे "कर्मणि द्वितीये"त्यादीनि पृथगेव प्रकरणानि विरचितानि। तत्र प्रातिपदिकादनभिहिते कर्मादौ यदेकत्वादि तत्र द्वितीयाद्या विभक्तयो भवन्तीत्येवमर्थस्य सङ्गतेराकाङ्क्षादिवशाद्भिन्नेष्वपि प्रकरणेषु तात्पर्यालोचनके श्रोतरि वाक्यीयः सम्बन्धो ऽर्थनिश्चयाय पर्यवस्यतीति वाक्याच्छब्दार्थनिर्णयः। तथात्र प्रकरणमप्यशब्दं शब्दार्थनिर्णयनिमित्तं यथा ग्रामप्रस्तावे सैन्धवानां चोदनमश्वानयनपर्यवसायि भवति भोजनप्रस्तावे तु तदेव लवणप्रतीतिमुपजनयतीति। शास्त्रे यथा धातुप्रकरणात् धातुरित्युक्तम्। तथा चोभयावगतौ सत्यां "कर्त्तृकरणयोस्तृतीये"त्यत्र कारकाणां प्रक्रान्तत्वात्करणशब्देन क्रियाग्रहणं न विज्ञायते, शब्दवैरेत्यादौ सूत्रे च धात्वधिकारे करणशब्दात् क्रिया प्रतीयतइति। अर्थस्तु शाब्दत्वाच्छब्दार्थनिर्णयं प्रकल्पयति यथाञ्जलिना जुहोत्यञ्जलिना सूर्यमुपतिष्ठते ऽञ्जलिना पूर्णपात्रमाहरतीत्यत्र जुहोतीत्याद्यर्थवशाद्विभिन्नार्थवाचको ऽञ्जलिशब्दः। शास्त्रेपि पूरणगुणसहितार्थेत्यत्र गुणेन सह षष्ठी न समस्यतइत्यर्थसामर्थ्याद्देङासमप्रत्ययः। तथा "न शसददवादिगुणानामि"त्यत्र नाश्रयिणो ग्रहणं भवत्यर्थादिति। औचित्यादपि शब्दार्थव्यवस्थानं दृश्यते यथा सीरासिमुसलैः केवलैरनिर्दिष्टक्रियापरैरप्यौचित्याद्विलेखनयुद्धावहननलक्षणसमुचितक्रियापदाक्षेपे शब्दार्थनिर्णयः पर्यवस्यति। यथा वा प्रष्ठादयः शब्दा अग्रगामित्वादिनिमित्तसमाश्रयणेन प्रवर्त्तमानास्तस्य च निमित्तस्यौचित्यात्पुंस्येव सम्भवात्पुंशब्दास्तउच्यते तद्योगात्

स्त्रियां वर्त्तन्ते न साक्षादिति प्रष्ठसम्बन्ध एव षष्ठ्यादीनां "पुंयोगादाख्यायामित्य"नेन निमित्तत्वेनोपदर्शितः । यथा च "यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याभ्यां सर्वस्य कटुरेव सः" इत्यत्रानुक्तक्रियापदानि साधनान्येवौचित्यवशात्स्वसमुचितक्रियापदावगत्या अवान्तरवाक्योपप्लावनप्रत्यायनपूर्वकाप्रस्तुत(१)प्रशंसालक्षणस्य वाक्यार्थस्य प्रतीतिमुपजनयन्ति । तथा च यो निम्बं परशुना छिनत्ति यश्चैनं गन्धेनानुलिम्पति सर्वस्य तस्य दुस्त्यजा प्रकृतिरिति कृत्वा कटुरेव दौर्मनस्यदाननिपुण एवेति कस्य चित् खलत्वप्रतिपादनमत्र तात्पर्यार्थः । शास्त्रे यथा "पुंयोगादाख्यायामि"त्यत्रोक्तं पुंसि शब्दप्रवृत्तिनिमित्तस्य सम्भवात्पुंशब्दा एतइति । देशाच्छब्दार्थनिर्णयो यथा मथुरायाः प्राचीनादुदीचीनाद्वा नगरादागच्छामीत्युक्ते नगरविशेषात्पाटलिपुत्रादागच्छामीति गम्यते पाटलिपुत्रस्य मथुरासम्बन्धिनोश्च प्राचीनोदीचीनभागयोर्विद्यते प्रत्यासत्तिरिति कृत्वा देशवशादत्र निर्णयः । कालात् खलु व्यवस्था दृश्यते यथा शिशिरे द्वारमित्युक्ते पिधेहीति ग्रीष्मसमये त्वेवमभिधाने समुद्घाटयेति गम्यते । एतच्च शब्दार्थनिर्णयोपायानां दिङ्मात्रप्रदर्शनं बोद्धव्यम् । अन्ये ऽपि तन्निश्चयाय प्रकारा अनुसन्धातव्याः । श्लोकवशाच्चोदाहरणमात्रमेव दर्शितमिति मन्तव्यं सर्व्वथा न रूपमात्राच्छब्दार्थप्रविभागनिर्णयः कर्त्तुं शक्य इति प्रतिपादयितुमुक्तं "न रूपादेव केवलादि"ति ॥ ३१६ ॥

तथा चापरैः संसर्गादयः शब्दार्थावच्छेदहेतवः प्रदर्शिता इत्याह ॥

**संसर्गो विप्रयोगश्च साहचर्यं विरोधिता ।**
**अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ ३१७ ॥**

इह कैश्चिदर्थभेदाच्छब्दभेदो ऽभ्युपगतः तदपरैरेकशब्दतेति द्वौ प-

(१) पूर्वकमशक्तेति २ पु० पाठः ।

बौ । तत्र नानात्वपक्षे स्वभावभिन्नेषु तुल्यश्रुतिषु रूपाभेदादनवच्छिन्नेषु निमित्तान्तरैः संसर्गादिभिरवच्छेदः क्रियते । एकत्वपक्षे त्वर्थाभिधाने भिन्नासु शक्तिषु श्रुतिसारूप्यमात्रादलब्धविभागासु यथैव संसर्गादिभिरर्थनिर्णयः क्रियतइत्युभयत्रापि प्रकरणादयः शब्दार्थनिर्णयनिपुणा इति तदुपन्यासः कथ्यते । तदत्र के चित्सामर्थ्यमेवैकं शब्दार्थनिर्णयनिमित्तमिति मन्यन्ते । योप्यर्थप्रकरणादिना तत्र भेदः समधिगम्यते सोपि सामर्थ्यादेवात्र प्रतीयतइति कथयन्ति । सामर्थ्यमेव हि संसर्गादिभिर्व्यज्यतइति तत्र संसर्गाद्यथा सकिशोरा धेनुरानीयतामित्यत्र नियतेन संसर्गिणा किशोरलक्षणेन विशेषावसायनिमित्तेन वडवाया एव सम्प्रत्ययः, यथा च सवत्सा धेनुरित्यत्र वत्ससंसर्गाद्गोधेनोरेव सम्प्रत्यय इति संसर्गादर्थनिर्णयः । रूढ्या गौरेव धेनुरुच्यते इति तु येषां दर्शनं तेषामत्र संसर्गो विशेषसम्प्रत्यये नोपयुज्यतइति बोद्धव्यम् । शास्त्रे यथा "अवाद्ग्र" इत्यत्र यस्यावेनोपसर्गेण सम्बन्धः सम्भवति स एव गृह्यते गिरतिः । गृणातेस्तु स्वभावादर्थविरोधादेव संबन्धो नोपपद्यतएव । तथा संसर्गवद्विप्रयोगो ऽप्यवच्छेदहेतुः । यथा निर्ज्ञातसंबन्धस्योच्यते अकिशोरा धेनुः अवत्सा अकरभा वा आनीयतामिति किशोरादिविप्रयोगेन विशिष्टजातीयाया एव धेनोरवगतिरुपजायतइति । शास्त्रे ऽपि "भुजोनवन"इति यस्य भुजेरवनमनवनं चार्थः तस्य ग्रहणं विज्ञायते न तु कौटिल्यार्थस्य । निर्भुजति पाणिमिति । साहचर्याद्यथा रामलक्ष्मणावित्युक्ते लक्ष्मणसाहचर्याद्दाशरथेरेव प्रतीतिः । अत्र यद्यप्येको दृष्टव्यभिचारसाहचर्यात्तत्तुल्यधर्मा ज्ञायतइति बोद्धव्यम् । शास्त्रे यथा विपराभ्यां जेरित्यत्र पराशब्दो ऽदृष्टव्यभिचारेण विना साहचर्यादुपसर्ग एव गृह्यते । यद्यपि बहुविवनमित्यादौ विशब्दोनुपसर्गोस्ति तथापि समुदायो ऽर्थवान् । जहत्स्वार्थावृत्तिपक्षे ऽवयवा अनर्थका एव । अजह-

त्स्वार्थावृत्तिपक्षे कथमुपसर्जनभावमापन्नो विरप्राधान्यात् ग्रहीतुमशक्य एवेति नास्ति विरनुपसर्गः । वीजयते इत्यत्र तु वीशब्दो न विशब्द इति । भाष्येप्युक्तमस्य गोर्द्वितीयेनार्थइति गौरेव प्रतीयते नाश्वो न गर्दभ इति । यथा चा"न्तरान्तरेणयुक्ते"इत्यत्र द्वावपि टाप्तृतीयान्तयोः संभवात् दृष्टापचारौ । अतः परस्परसाहचर्यान्निपातयोरेव ग्रहणमित्येवं साहचर्यमर्थनिर्णयहेतुः शब्दानाम् । विरोधादप्यर्थो ऽवधार्यते । यथा रामार्जुनावित्यत्रार्ज्जुनसन्निधाने निसर्गवैरिणो जामदग्न्यस्यैव प्रतीतिः । अर्थप्रकरणदेशकालौचित्यैर्विशेषे ऽवस्थापनं वाक्यदर्शितम् । लिङ्गाच्च वाक्यान्तरे दृष्टान्निर्दः प्रसिद्धः प्रतीयते । यथा अक्ताः शर्करा उपदधातीत्यत्रानेकस्याञ्जनद्रव्यस्य संभवे तेजो घृतस्य स्तुतिरुक्ता । एतस्माल्लिङ्गात् घृतसाधनत्वमञ्जिक्रियायाः शर्कराकर्मिकाया निर्द्धार्यते । तथा पशुमालभेतेत्यत्र पशुत्वसंबन्धिषु प्राणिषु सत्सु छागस्य हविषो वपाया मेदस इति लिङ्गाच्छागैकार्थसमवायि पशुत्वं प्रतीयते । शास्त्रेप्यूह्यम् । शब्दान्तरसंनिधानादपि विशेषावगतिः । यथा अर्ज्जुनः कार्त्तवीर्यः रामो जामदग्न्य इति । सामर्थ्याद्विशेषप्रतिपत्तिर्यथा । अनुदरा कन्येति सामर्थ्यादुदरविशेषप्रतिषेधप्रतीतिः । तथा अभिरूपाय कन्या देयेति । अभिरूपवरायेति सामर्थ्यात्प्रतीयते । शास्त्रेपि "प्रथमा नर्दिष्टं समासउपसर्ज्जनमि"ति समासार्थे शास्त्रे समासशब्दस्य प्रवृत्तिः । "एकविभक्ति चापूर्वनिपात" इत्यत्र यः समासशब्दोनुमीयते तस्य प्राथमकल्पिक एव वृत्तिः । व्यक्तिर्लिङ्गम् । तस्मान्निर्णयो यथा तद्ग्रामस्यार्द्धं लभेतेत्यत्र समप्रविभागे ऽर्द्धशब्दो नपुंसकेन परामर्शात् [ ग्रामस्यार्द्धं स्वयमेव प्रतीयते । (१) ] शास्त्रेप्य-

(१) [ ] एतन्मध्यस्थाने तस्माद् ग्रामस्यार्धं सममेव प्रतीयते । तं ग्रामस्यार्धमित्यत्र तु तमिति पुंलिङ्गेन परामर्शाद् ग्रामैकदेशमात्रं प्रतीयतइति २ पु० पाठः ।

स्वराद्यथा स्थूलपृषतीमालभेतेत्यत्रान्तोदात्तस्य श्रवणात् स्थूला चासौ पृषती चेत्येवंविधार्थप्रतीतिः । पूर्वपदप्रकृतिस्वरत्वदर्शने स्थूलानि पृषन्ति यस्यामित्यन्यपदार्थप्रतीतिः । तथा वैपाशः कूप इत्यत्राद्युदात्तस्य श्रवणाद्विपाशि उत्तरस्य विशिष्टस्यैव प्रतीतिः । अन्तोदात्तश्रवणे तद्विपरीतस्येति । सत्वाद्यथा । सुसिक्तमतिस्तुतमित्यादौ पूजातिक्रमणयोः कर्मप्रवचनीयसंज्ञायामुपसर्गत्वाभावे तयोरेव प्रतिपत्तिः । उपसर्गसंज्ञायां तु सत्यां सुषिक्तं सुष्टुतमित्यादौ षत्वप्रवृत्तेरर्थान्तरस्य प्रतिपत्तिः । षत्वनत्वाभ्यां यथा प्रणायक इत्यत्रोपसर्गाश्रयणत्वसद्भावे प्रणयनक्रियाकर्त्तुः प्रतीतिः, णत्वाभावे तु प्रगता नायका अस्माद्देशादसौ प्रनायको देश इत्यन्यपदार्थप्रतीतिरिति । तदेवमेते शब्दार्थस्य सन्देहनिराकरणद्वारेण नियतार्थावसायहेतुत्वाद्विशेषस्मृतिहेतवो निर्णयहेतवः संसर्गादय इति बोद्धव्यम् ॥ ३१७॥

नन्वेकत्वदर्शने भेदाभावाच्छब्दानामर्थस्य सन्देहे तन्निर्णयाय प्रकरणादय उच्यन्तइति शोभनं, भेदपक्षे तु विभिन्नत्वादेव शब्दस्तदर्थप्रत्यायनं करिष्यतीत्याशङ्क्य तत्रापि रूपसादृश्योत्पादितसंशीतीनां व्यवहर्त्तृणां प्रकरणादिभिरेव शब्दार्थनिर्णय इति प्रतिपादयितुमाह ॥

भेदपक्षेऽपि सारूप्या-
द्भिन्नार्थाः प्रतिपत्तिषु ।
नियता यान्त्यभिव्यक्तिं
शब्दाः प्रकरणादिभिः ॥ ३१८ ॥

भेदपक्षेपि प्रतिपत्तिषु भिन्नार्था अपि शब्दाः सारूप्यादभिन्ना इवेति प्रकरणादिभिरेवोक्तस्वरूपैर्नियता अवच्छिन्ना अर्थाभिव्यक्तावुपयोगं यान्तीति न कुत्र चित्प्रकरणादिमन्तरेण शब्दार्थनिर्णय इति

बोद्धव्यम् ॥ ३१८ ॥

युक्तं चैतत्, कस्मादित्याह ॥

नामाख्यातसरूपा ये कार्यान्तरनिबन्धनाः ।
शब्दा वाच्याश्च तेष्वर्थो न रूपादधिगम्यते ॥ ३१९ ॥

इह वाक्ये नामरूपा आख्यातशब्दा अपि सम्भवन्ति । यथा अश्व इति टुओश्वि गतिवृद्ध्योरित्यस्माल्लुङि मध्यमपुरुषैकवचने सिपि "नित्यं ङितः" "इतश्चे"तीकारलोपे च्लिप्रत्ययस्य जॄस्तम्भुम्रुचुम्लुचुग्लुचुग्लुञ्चुश्विभ्यश्चेत्या- दिना चङादेशे श्वयतेरस्त्यातो गुणरूपत्वे(१) सकारस्य रुत्वविस- र्जनीययोः कृतयोर्लुङ्लङ्लृङ्क्ष्वित्यादिना ऽटि कृते अश्व इत्याख्यात- पदं श्वयतिक्रियायाः कर्त्रवच्छिन्नाया अतीतकालायाः प्रतिपादक- म्, अश्व इति च नामपदमश्वजातीयस्यार्थस्य सत्त्वभूतस्याभिधाय- कमिति । सारूप्यात्सन्देहे प्रकरणादिभिरर्थव्यवस्था यथा ऽजापय इ- त्येतत् जिजय इत्यस्माद्धातोः कश्चिदजेयं जितवान् तमन्यो ऽनुप्रयुक्त- वानित्यर्थविवक्षायां हेत्वर्थे णिचि "क्रीङ्जीनां णावि"त्यात्वे अर्त्ति- ह्रीव्लीत्यादिना पुकि जापीत्येवं स्थिते लङि शपि गुणायादेशयोः कृतयोः सकारस्य रुत्वविसर्जनीययोश्च लुङ्लङित्यादिना ऽडागमे च कृते ऽजापय इत्याख्यात,मथ वा ऽजायाः पयो ऽजापय इत्यपि ना- मपदं तत्सदृशमित्यर्थादिना तन्निश्चयः । आख्यातसरूपाश्च नामश- ब्दास्तेन यस्य तस्येत्यादयः । तथा च तनुविस्तारे इत्यस्माल्लिटि म- ध्यमपुरुषबहुवचने द्विर्वचने कृते ऽत एकहल्मध्य इत्यादिना एत्वा- भ्यासलोपयोः कृतयोस्तेनेत्याख्यातं, तच्छब्दस्य तृतीयान्तस्य सदृ- शमिति । तसु उपक्षये यसु प्रयत्ने इत्याभ्यां विध्यादौ लोटि तस्य च सिपि "सेर्ह्यपिच्चे"ति ह्यादेशे दिवादित्वाच्छ्यनो ऽनुबन्धलोपे "ऽतो हेरि"ति हेर्लुकि तस्य यस्येत्याख्यातपदं यत्तदोः षष्ठ्येकवचनान्त-

(१) अतो गुण इति पररूपत्व इति २ पु० पाठः ।

योः सदृशमिति सारूप्यात्सन्देहे प्रकरणादिभिस्तद्विनीयते । कीदृशाः कार्यान्तरनिबन्धनाः कार्यान्तरं विशिष्टप्रत्ययलक्षणं प्रकरणादिना तन्निबन्धनं निमित्तं येषां ते तथाभूताः तेषु रूपमात्रार्थो ऽवगम्यते। तस्मात् त्वमश्वो ऽजापयः शम्भुभवनानीत्यादिवाक्यार्थपर्यालोचनयैवार्थनिर्णयः। आह च "न हि किञ्चित्पदं नामरूपेण नियतं क्वचित्। पदानामर्थरूपं च वाक्यार्थादेव जायत" इति ॥ ३१९ ॥

अथ शब्दार्थनिर्णयप्रस्तावे पदपदार्थानामसत्यत्वमखण्डस्यैव च वाक्यार्थस्य सत्यत्वमभ्युपगन्तव्यमिति प्रदर्शयितुमाह ॥

या प्रवृत्तिनिवृत्त्यर्था स्तुतिनिन्दाप्रकल्पना ।
कुशलः प्रतिपत्ता तामयथार्थां प्रतीयते ॥ ३२० ॥

या प्रवृत्तये स्तुतिप्रकल्पना निवृत्तये च निन्दाप्रकल्पना तां प्रेक्षावानयथार्थामभिमन्यते। परमार्थतस्तु तथाविधस्य वाक्यस्य प्रवृत्तिश्च निवृत्तिश्चेति वा सत्यभूतं वाक्यार्थं तत्रावगच्छतीति पदपदार्थप्रत्ययः सर्वत्रासत्यएवेति सैवैषा तात्पर्यशक्तिरिति कैश्चिद्व्यवस्थापितम् ॥ ३२० ॥

एतदेव प्रकटीकर्त्तुमाह ॥

विधीयमानं यत्कर्म दृष्टादृष्टप्रयोजनम् ।
स्तूयते सा स्तुतिस्तस्य कर्त्तुरेव प्रयोजिका ॥ ३२१ ॥

दृष्टप्रयोजनं किञ्चित्कर्म स्तूयते यथा यो राजानं भजते स सारं भुङ्क्ते, अदृष्टप्रयोजनमपि यो ऽग्निष्टोमेन यजते स स्वर्गं गच्छतीति विलक्षणः प्रवृत्तिनिवृत्तिप्रयोजनो ऽन्य एवाविभागो वाक्यार्थस्तथाविधवाक्यनिबन्धन एवाभ्युपगन्तव्य इति स्थितम् ॥ ३२१ ॥

ननु कथं न तत्र स्पष्टमेव कृत्वा प्रवृत्तिनिवृत्ती विधीयेते किमनुपयोगिनिन्दाद्यर्थप्रतिपादनासंभारेणेत्याशङ्क्याह ॥

व्याघ्रादिव्यपदेशेन
यथा बालो निवर्त्त्यते ।
असत्यो ऽपि तथा कश्चि-
त्प्रत्यवायो विधीयते ॥ ३२२ ॥

यथा रुदन्तं व्याघ्रो भक्षयतीति बालस्योच्यते, न तत्र व्याघ्रभक्षणं वस्तुस्थित्या संभवि,(१) केवलं मा कदा चित् त्वं रोदीरिति रोदननिषेध एव तस्य क्रियते, तथा तत्र प्रतिषिद्धाचरणान्नरकपाती भवतीत्येतावन्मात्रं प्रतिपाद्यत(२)इति तत्तदर्थसमाश्रयणेन सत्यरूपपदपदार्थाभ्युपगमो न युक्तः ॥ ३२२ ॥

तथा प्रत्यवायोपदेशेन च यच्छास्त्रेण प्रतिषिद्धं न तत्राशीपुरुषिकया प्रत्यवायसंविधानमारचय्य प्रेक्षापूर्वकारिणः प्रवृत्तिरुचिते(३)त्याह ॥

न संविधानं कृत्वापि प्रत्यवाये तथाविधे ।
शास्त्रेण प्रतिषिद्धे ऽर्थे विद्वान्कश्चित्प्रवर्त्तते ॥ ३२३ ॥

दृष्टप्रयोजनप्रत्यवायप्रतिविधाननिदर्शनपूर्वकमेतदेव व्याख्यातुमाह ॥

सर्पेषु संविधायापि सिद्धैर्मन्त्रौषधादिभिः ।
नान्यथा प्रतिपत्तव्यं न दतो गमयेदिति ॥ ३२४ ॥

न दतो गमयेत् यद्दतो गमयेत्सर्पा एनं घातुका भवन्तीत्यनेन पुरोडाशस्य दन्तोपदंशनपूर्वकभोजनं निषिध्यते तत्र कश्चित्सर्पाणां प्रतिविधानं मन्त्रौषधादिभिः कृत्वा यदि तथा प्रवृत्तस्तदानेन शा-

(१) भवतीति २ पु० पाठः ।
(२) प्रतिपाद्यतइति २ पु० पाठः ।
(३) उच्यतइति २ पु० पाठः ।

स्वानुष्ठानं परित्यक्तमिति न शोभनमाचरितम् ॥ ३२४ ॥

अस्त्वेवं विधिनिषेधपरेषु स्तुत्यर्थादीनामसत्यत्वं यत्र तु स्तुतिनिन्दे एव मुख्ये प्रयोजिके तत्र तदर्थानां सत्यत्वमेवोचितमित्याशङ्क्याह ॥

क्व चित्तत्त्वसमाख्यानं
क्रियते स्तुतिनिन्दयोः।
तत्रापि च प्रवृत्तिश्च
निवृत्तिश्चोपदिश्यते ॥ ३२५ ॥

यत्रापि क्व चित् स्तुतिनिन्दयोर्विषये तयोः संबन्धि वा तत्त्वाख्यानं क्रियते तत्रापि सर्वथा स्तुतिनिन्दयोः केवलयोर्न किंचित्प्रयोजनमुत्पश्याम इति प्रवृत्तिनिवृत्ती एवोपदिश्येते इति बोद्धव्यम् ॥ ३२५ ॥

एवं पदपदार्थानामसत्यत्वे वाक्यवाक्यार्थयोरखण्डयोरेव सत्यत्वे प्रतिष्ठापिते पदार्थानां स्वरूपस्य वाक्यार्थ एव निबन्धनमिति दर्शयितुमाह ॥

रूपं सर्वपदार्थानां
वाक्यार्थोपनिबन्धनम् ॥ ३२५ऽऽ ॥

एकस्मिन् वाक्यार्थे रूपनिबद्धास्ते साफल्यं भजन्ते अन्यथा विशरारव एवेति वाक्यार्थ एव तेषां परस्परसमन्वये निबन्धनम्। वक्ष्यति च "पृथग् विशिष्ट(१)तत्त्वानां पृथगर्थानुपातिनाम्। इन्द्रियाणां यथा कार्यमृते देहान्न कल्पते। तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम्। वाक्येभ्यः प्रविभक्तानामर्थवत्ता न विद्यते"। इति। यथोच्यते न हि के चिदित्यादि ॥ ३२५ऽऽ ॥

ननु वाक्यार्थस्यापि कस्य चिदपरिपूर्णत्वे किं तस्याप्यपरवाक्यार्थनिबन्धनत्वमङ्गीकार्यमित्याशङ्क्याह ॥

---

(१) निविष्टेति २ पु० पाठः।

सापेक्षा ये तु वाक्यार्थाः
पदार्थैरेव ते समाः ॥ ३२६ ॥

एतदुक्तं भवति । अवान्तरवाक्यार्थाः साकाङ्क्षत्वात्पदार्थतुल्या एवेति न तत्र वाक्यार्थव्यपदेशः कार्यः ॥ ३२६ ॥

अथ यत्रैकस्मात्पदान्निराकाङ्क्षोऽर्थः प्रतीयते तत्रापि किं तस्याऽसत्यार्थत्वं युक्तमभिधातुमित्याशङ्क्याह ॥

वाक्यं तदपि मन्यन्ते
यत्पदं चरितक्रियम् ॥ ३२६ऽऽ ॥

एतदुक्तं भवति । सन्ति वाक्येषु वाक्यैकदेशाः प्रसिद्धयादिना वाक्यार्थप्रत्यायका इति तदप्येकपदं वाक्यमेव । यस्मात्तच्चरितक्रियमिति चरिता गर्भीकृता आख्यातक्रिया यस्य तद्गर्भीकृतक्रियापदं नामपदं वाक्यं प्रयुञ्जते चरितक्रियापदादस्मादर्थावगतिर्निराकाङ्क्षोपजायमाना दृश्यतइति पदमात्रस्यैवात्र वाक्यत्वम् ॥ ३२६ऽऽ ॥

एवं यथा नामपदं केवलमपि गर्भीकृताख्यातं निराकाङ्क्षार्थप्रत्यायनाद्वाक्यमेवेति तत्प्रत्यायितादर्थात्प्रवृत्तिपर्यन्तव्यवहारसिद्धौ सत्यतैव तदर्थस्य तथैवाख्यातं केवलमर्थौचित्या(१)द्विशादिशिष्टाभिधायकं वाक्यमेवोच्यतइत्याह ॥

आख्यातशब्दे नियतं
साधनं यत्र गम्यते ॥ ३२७ ॥
तदप्येकं समासार्थं(२)
वाक्यमित्यभिधीयते ॥ ३२७ऽऽ ॥

यथा वर्षतीत्युक्ते देवो जलमिति कर्तृकर्माक्षेपात्परिपूर्णार्थत्वे व-

(१) औचित्येति २ पु० पाठः ।
(२) समासार्थमिति २ पु० पाठः ।

र्षति देवो जलमिति यथा वाक्यमेवं तदप्येकं पदं समासार्थं(१) परिपूर्णार्थं वाक्यमेवाभिधीयते । तदुक्तमादावेव आख्यातशब्द इति वाक्यमित्यर्थः ॥ ३२७ऽऽ ॥

अत्र मीमांसकः प्राह ॥

शब्दव्यवहिता बुद्धि-
रप्रयुक्तपदाश्रया ॥ ३२८ ॥
अनुमानात्तदर्थस्य
प्रत्यये हेतुरुच्यते ॥ ३२८ऽऽ ॥

केवलात्पदाद्या साधुवद्भावना बुद्धिः सा साधुवदर्थस्य तस्याप्रयुक्तस्य पदान्तरस्य यो ऽर्थस्तस्य हेतुरुच्यते। कीदृशी शब्दव्यवहिता। यथा धूमेन स्वार्थानुमाने शब्दमन्तरेण वह्नेराचेपः नैवमत्रापि श्रुतार्थापत्त्या परिकल्पितो यो ऽसौ तिष्ठत्यादिशब्दः तेन व्यवहिता । अथ तस्याऽश्रवणात्कथं तद्व्यवहितेत्याशङ्क्याह । अप्रयुक्तपदाश्रयेति । अप्रयुक्तमनुच्चारितं वाचकं श्रुतार्थापत्त्याचिप्तमाश्रयो द्वारमुपायस्तिष्ठत्याद्यर्थप्रत्यये यस्याः सा तथेति कस्मात्तदर्थस्य प्रत्यये हेतुरित्याह । अनुमानादिति । तिष्ठत्यादिकं शब्दं श्रुतार्थापत्त्योपस्थापितमनुमायाचिप्यासौ बुद्धिस्तदर्थप्रत्ययमुपजनयतीति यावत् । अतो न केवलमेव नामपदं सक्रियस्यार्थस्य वाचकम् । आख्यातं च ससाधनस्येति कथमुच्यते सन्ति वाक्येषु वाक्यैकदेशा वाक्यार्थप्रतिपादका इति ॥ ३२८ऽऽ ॥

श्रुतार्थापत्त्या शब्दाभिसंबन्धस्य किं प्रयोजनमेकपदादेव तस्माद् वृक्षस्तिष्ठतीत्यादिवन्निराकाङ्क्षार्थप्रत्यायनमुक्तं कथं वाक्यैकदेशस्य सकलवाक्यार्थप्रतिपादकत्वमन्तरेण शब्दान्तरपरिकल्पनं युज्यत इति

(१) समासार्थमिति ३ पु० पाठः ।

परमतमाश्रयन्नाह ॥

यस्मिंस्तूच्चरिते शब्दे
यदा योऽर्थः प्रतीयते ॥ ३२८ ॥
तमाहुरर्थं तस्यैव
नान्यदर्थस्य लक्षणम् ॥ ३२८ऽऽ ॥

इह यस्मादुच्चरितादर्थप्रत्ययो दृश्यते तं तस्यार्थमाहुः । वृक्ष इत्यस्मादेव चार्थप्रकरणादिना वृक्षस्तिष्ठतीत्यर्थप्रतीतेः एतदेवार्थवाचकत्वाद्वाक्यमित्युक्तमेव ॥ ३२८ऽऽ ॥

एवं कृत्वा क्रियार्थोपपदस्येत्यनेन नारम्भणीयैव चतुर्थी तादर्थ्येन सिद्धत्वादित्याह ॥

क्रियार्थोपपदेष्वेवं
स्थानिनां गम्यते क्रिया ॥ ३३० ॥

क्रियार्थोपपदेषु विषये क्रियार्थोपपदानां चेति षष्ठीप्रयोगे सप्तमी । स्थानिनामप्रयुक्तानां धातूनां संबन्धिनी क्रियाहरणलक्षणा एधेभ्यो व्रजतीत्यत्रैधशब्द एव हरणमभिदधातीत्येधाहरणार्थं व्रजतीति प्रतीतिः । अतस्तादर्थ्यं स्फुटमेवेति सिद्धा चतुर्थी । एवं च कृत्वा वृत्तौ निरादयः क्रान्ताद्यर्थप्रतिपादका इत्याह ॥

वृत्तौ निरादिभिश्चैव
क्रान्ताद्यर्थोऽवगम्यते ॥ ३३०ऽऽ ॥

निष्कौशाम्बिरित्यादौ निरादय एव सामर्थ्यात् क्रान्तार्थप्रतिपादका इति गतार्थत्वात् क्रान्तादीनां शब्दानां वृत्तावप्रयोग एव । उक्तं च "उपसर्गा ह्येवमात्मका यत्र क्रियावाची शब्दः श्रूयते तत्र क्रियां विशिंषन्ति अन्यत्र क्रियाविशिष्टं साधनमाहु"रिति ॥ ३३०ऽऽ ॥

यद्येवं वृक्षस्तिष्ठति निष्क्रान्तः कौशाम्ब्या इत्यादौ तिष्ठत्यादीनां किं प्रयोगेण केवलं वृक्ष इत्यादिकं सर्वत्र नामपदमाख्यातं वा प्रयुज्यतां केवलैरेव सर्वत्र वाक्यार्थप्रतिपादनमित्याह ॥

**तानि शब्दान्तराण्येव ॥ ३३४ऽ ॥ (१)**

केवलो वृक्षशब्दो वाक्यार्थप्रतिपादको ऽन्य एव वृक्षस्तिष्ठतीति चान्यदेव वाक्यं सादृश्याद् वृक्षस्तिष्ठतीत्यत्र वृक्षशब्दं वृक्ष इत्येकपदे वाक्ये ऽभिमन्यतइति भवत्वेवं सर्वदा वृक्षशब्द एव केवलः किं न प्रयुज्यते तत एव हि सामर्थ्यादिना वृक्षस्तिष्ठतीत्यर्थप्रतीतेः किमनेन विततेन वृक्षस्तिष्ठतीत्यादिकेन प्रयुक्तेनेत्याह ॥

**पर्याया इव लौकिकाः ॥ ३३४ऽऽ ॥**

एतदुक्तं भवति । लौकिके शब्दव्यवहारे लाघवं प्रत्यनादरात् क्व चिद् वृक्षः क्व चिद् वृक्षस्तिष्ठतीति प्रयुज्यते । यथा तरुशब्देनैव लाघवाद् वृक्षार्थप्रतीतौ पादपशब्दं प्रयुञ्जतएव लौकिका इति न कश्चिद्दोषः । अथ वृक्ष इति केवलं नामपदं क्व चिद् वृक्षो दृश्यतां क्व चिद् वृक्षो ऽस्तीत्येवंविधस्य नियतस्यार्थस्य विशेषभेदेन कथं प्रतिपादकं स्यादित्याह ॥

**अर्थप्रकरणाभ्यां तु**
**तेषां स्वार्थो नियम्यते ॥ ३३५ ॥**

एषामेकपदार्थानां वाक्यानां प्रतिनियतो ऽर्थो ऽर्थप्रकरणाभ्यां व्यवस्थाप्यते ॥ ३३५ ॥

एवमखण्डवाक्ये वाक्यार्थे सत्यरूपे स्थिते किं पदपदार्थानां वाक्यानां पदविभागपदभागार्थकल्पनयेत्याह ॥

---

(१) २८७ श्लोकमारभ्यैतत्पर्यन्तं प्रमादात् श्लोकाङ्कव्यत्यासो जातः, स शुद्धिपत्रे स्फुटीकृत्य शोधयिष्यते ।

प्रतिबोधाभ्युपायास्तु
ये तं तं पुरुषं प्रति ॥ ३३५ऽऽ ॥

एतदुक्तं भवति । ये वाक्यार्थप्रतिबोधनोपायास्ते प्रतिनियतपुरुषसमाश्रयाः । ते चासत्यरूपा एव च पदपदार्था इत्याह ॥

नावश्यं ते ऽभिसंबद्धाः
शब्दा ज्ञेयेन वस्तुना ॥ ३३६ ॥

ज्ञेयेन वाच्येन वस्तुना सत्यरूपेण लौकिकेन नैवं ते ऽवश्यं संबद्धा इत्यसत्यभूता इत्युच्यन्त इति ॥ ३३६ ॥

अथ यस्मिन्नुच्चरितइत्यादिकं यदि शब्दार्थलक्षणमाश्रीयते तदा शब्दादुच्चरितात्प्रतिपत्तुरन्याचिप्तचित्तत्वादकृतसङ्केतत्वाद्वा ऽसत्यामर्थप्रतिपत्तौ कुतश्चिद्भ्रमाद्वा ऽन्यथा प्रतिपत्तौ तदर्थानवगतेरनित्यत्वमेवशब्दार्थसम्बन्धस्य स्यात्, न चैतद्युक्तमिति श्रुतार्थापत्तिवादी प्रतिपादयितुमाह ॥

असत्यां प्रतिपत्तौ च मिथ्या वा प्रतिपादने ।
स्वैरर्थैर्नित्यसम्बद्धास्ते ते शब्दा व्यवस्थिताः ॥ ३३७ ॥

ते ते शब्दा नित्यत्वाच्छब्दसम्बन्धस्य नियतार्थप्रतिपादका एव व्यवस्थिताः ॥ ३३७ ॥

कुतश्चिन्निमित्तादर्थानवगतौ शब्दार्थसम्बन्धहानिः प्राप्नोति तस्मादेकपदेषु पदान्तराध्याहारेण वाक्यार्थावगतिरुपपन्नेति प्रतिपादयितुमाह ॥

यथाप्रकरणं द्वारमित्यस्यां कर्मणः श्रुतौ ।
बधान देहि वेत्येतदुपायादधिगम्यते ॥ ३३८ ॥

प्रकरणानतिक्रमेण साधनं क्रियाया अविनाभावितया आक्षेपकं भवतीति द्वारंद्वारमित्यत्र कर्मश्रुतिर्बधान देहि वेति एतमर्थं

प्रकरणादेरुपायात्तद्वाचकद्वारेणाक्षिपतीत्येतदेव युक्तम् ॥ ३३८ ॥

एवं यस्मिन्नुच्चरितइत्यादिके(१) शब्दार्थलक्षणे शब्दार्थसम्बन्धस्यानित्यत्वमभिधाय दूषणान्तरमभिधातुमाह ॥

यत्र साधनवृत्तिर्यः शब्दः सत्त्वनिबन्धनः ।
न सप्रधानभूतस्य साध्यस्यार्थस्य वाचकः ॥ ३३९ ॥

यस्मात्साधनवृत्ताभिधायी सत्त्वप्रधानः शब्दो न स एव प्रधानभूतस्या[र्थस्य प्रतिपाद्यस्यासत्त्वभूतस्या](२)भिधायक उपपद्यते विरोधात् ॥ ३३९ ॥

तस्मादिदमत्र वक्तुं युक्तमित्याह ॥

स्वार्थमात्रं प्रकाश्यासौ
साकाङ्क्षो विनिवर्त्तते ।
अर्थस्तु तस्य सम्बन्धी
प्रकाशयति संनिधिम् ॥ ३४० ॥

असावाख्यातशब्दो नामशब्दो वा स्वार्थमेव केवलं प्रतिपाद्य सापेक्षः साकाङ्क्ष एव विनिवर्त्तते तस्य विनिवृत्तस्य सम्बन्धी त्वर्थः अर्थान्तरस्य तद्वाचकशब्दप्रकल्पनद्वारेण संनिधिमुपकल्पयति ततश्च वाक्यार्थप्रत्ययः परिपूर्ण उपजायतइत्येव युक्तमिति ॥ ३४० ॥

इदानीमखण्डवादी श्रुतार्थापत्तिवादिनं निराकर्त्तुमाह ॥

पारार्थ्यस्याविशिष्टत्वा-
न्न शब्दाच्छब्दसन्निधिः ।
नार्थाच्छब्दस्य सांनिध्यं
न शब्दादर्थसंनिधिः ॥ ३४१ ॥

(१) इत्यादिकमिति २ पु० पाठः ।
(२) [ ] एतन्मध्यस्थं २ पु० नास्ति ।

इह पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र भोजनं विना पीनत्वं देवदत्तस्यानुपपद्यमानं रात्रिभोजनं तद्वाचकशब्दपरिकल्पनद्वारेण गमयतीत्युच्यते तदत्र किं शब्देन शब्द आक्षिप्यते उतार्थेन शब्दः आहो स्विच्छब्देनार्थः उतार्थेनार्थ इति चतुष्टयी गतिः तत्र शब्देन शब्दस्याक्षेपो न युज्यते स्वार्थप्रतिपादनएव शब्दाक्षेपात् तत्राह "न शब्दाच्छब्दसंनिधिरि"ति अथार्थेन शब्दाक्षेप इत्युच्यते तत्राह "नार्थाच्छब्दस्य सान्निध्यमि"ति नापि(१)शब्दाक्षेपो युज्यते वाच्ये तु वाचकमाक्षिपतीति युक्तम्। अतो ऽन्यशब्दार्थस्य शब्दान्तरस्य च वाच्यवाचकता(२)विरहात्कथमर्थेन शब्दस्याक्षेपः । अथ शब्देनोच्चारितेन श्रुतार्थापत्तिपरिकल्पितशब्दवाच्यो ऽर्थ आक्षिप्यते इत्युच्यते तदप्यनुपपन्नमित्याह "न शब्दादर्थसंनिधिरि"ति न शब्दाच्छब्दान्तरवाच्यस्यार्थस्य सन्निधिरुपपद्यते वाच्यवाचकभावाभावादेवेति कथं शब्देनार्थस्याक्षेपः अथार्थेनार्थो गम्यत इत्युच्यते अनुमानमेवैतत्स्पष्टं भवति न शब्दार्थस्यासावर्थ इति शब्दैकत्वमेव परित्यक्तं स्यात् । अत एवात्र चतुर्थपक्षप्रदर्शनमौचित्यं न जहातीति तन्निरासो न कृत एव। तस्मादेकपदेषु श्रुतार्थापत्त्या शब्दान्तराक्षेपे वाक्यार्थावगतिरिति यत्किञ्चिदेतत् । एकपदमेव शब्दान्तराभिसम्बन्धमन्तरेण प्रकरणादिवशात्तत्तदर्थप्रत्यायननिपुणमित्येव मन्तव्यम् ॥ ३४१ ॥

पुनः श्रुतार्थापत्तिवाद्याह ॥

**नष्टरूपमिवाख्यातमाक्षिप्तं कर्मवादिना ।**
**यदि प्राप्तं प्रधानत्वं(३)युगपद्भावसत्त्वयोः॥ ३४२ ॥**

द्वारं द्वारं कर्म इत्यत्र कर्मपदेनैवाख्यातमसत्कल्पमाक्षिप्तं यद्यत्रो

(१) नार्थेनापीति २ पु० पाठः ।

(२) वाचकभावेति २ पाठः ।

(३) प्रधानं चेति २ पु० पाठः ।

ष्यते तदा युगपत्परस्परविरुद्धयोः सिद्धासिद्धयोरर्थयोरेकस्मिन् शब्दे प्रधानत्वेन वाच्यत्वमापतितं न चैतत्परिदृष्टं पूर्वं यत्र साधनवृत्तिरित्यनेन यः सत्त्वप्रधानो नासावाख्यातार्थवाचक उपपन्न इत्युक्तम् इदानीं पुनः प्रत्ययस्य च विरुद्धार्थवाचकत्वमुच्यत इति विशेषः॥ ३४२॥

सिद्धान्तवाद्याह॥

**तैस्तु नामसरूपत्वमाख्यातस्योपवर्ण्यते॥ ३४२ऽऽ॥**

द्वारं द्वारमित्येतदाख्यातमेव नामपदसरूपं तु वर्ण्यते अतश्चान्याख्यातवत्प्राधान्येन क्रियाया एतदपि नामपदसरूपं प्रतिपादकमेव यद्येवं कथमस्माद्द्वितीया श्रूयतइत्याह॥

**अन्वयव्यतिरेकाभ्यां व्यवहारो विभज्यते॥ ३४३॥**

भाण्डभाण्डं पिधेहि द्वारं द्वारं पिधेहीत्यादावाख्यातस्य क्रियाभिधायकत्वं परिदृष्टं नाम्नो द्रव्यवाचकत्वमित्यन्वयव्यतिरेकाभ्यामन्यत्राप्येकपदे द्वारमित्यादौ सादृश्यात्साधनाभिधायित्वमिवेति भवत्येव द्वितीया॥ ३४३॥

अथ द्वारं द्वारमित्यस्यानेकार्थवाचकत्वात्सन्देहे कथमस्य वाचकत्वं भवेदित्याह॥

**न चापि रूपात्सन्देहे वाचकत्वं निवर्त्तते॥ ३४३ऽऽ॥**

रूपसादृश्येपि सामर्थ्यादिना ऽर्थनिर्णयो व्यवस्थाप्यतइत्याह॥

**अर्द्धं पश्वोरिव यथा सामर्थ्यात्तद्विकल्प्यते॥ ३४४॥**

अत्र पश्ववयवोर्द्धं देवदत्तावयवो वार्द्धं पशुस्वामिकमिति सन्देहः तत्र किं संदेहे वाक्यमवाचकमेव अर्थप्रकरणादिनार्थस्तत्र कल्प्यतएव॥ ३४४॥

चोदयति॥

**सर्व्वं सत्त्वपदं शुद्धं यदि भावनिबन्धनम्।**

संसर्गे च विभक्तो ऽस्य तस्यार्थो न पृथग्यदि ॥ ३४५ ॥

क्रियाप्रधानमाख्यातं नाम्नां सत्त्वप्रधानता ।
चत्वारि पदजातानि सर्वमेतद्विरुध्यते ॥ ३४६ ॥

स्पष्टोऽर्थः ॥ ३४६ ॥

एतच्चोद्यं निराकर्त्तुमाह ॥

वाक्यस्य बुद्धौ नित्यत्वमर्थयोगं च लौकिकम् ।
दृष्ट्वा चतुष्ट्वं नास्तीति वार्त्ताक्ष्यौदुम्बरायणौ ॥ ३४७ ॥

वाक्यस्याखण्डस्य बुद्धौ प्रतिपत्तबुद्धौ नित्यत्वं दृष्ट्वा तथा तस्यैवार्थेन प्रतिभालक्षणेन योगं सम्बन्धं दृष्ट्वा पदे तत्पदपरिकल्पनं पदार्थपरिकल्पनं च तत्रास्त्येव नैवोपपद्यतइत्याचार्यावाहतुः । अतोऽस्माकमेषा विभीषिका यत्पदानां चतुष्ट्वं नोपपद्यतइति ॥ ३४७ ॥

यद्येवं किं शास्त्रेणेत्याह ॥

व्याप्तिमांश्च लघुश्चैव-
व्यवहारः पदाश्रयः ।
लोके शास्त्रे च कार्यार्थं
विभागेनैव कल्पितः ॥ ३४८ ॥

पदाश्रयो वाक्यव्यवहारः शास्त्रेणोपदिष्टः सन् व्याप्तिमान्सकलसाधुशब्दपरिज्ञानहेतुर्विभागेन परिकल्पित इति किमत्रानुपपन्नम् ॥ ३४८ ॥

अथ यदि पदपदार्थविभागः सर्वथैवासत्यभूतः तत्कथं लौकिकानां तदाश्रयेण प्रवृत्त्यादय इत्याशङ्क्याह ॥

न लोके प्रतिपत्तृणा-
मर्थयोगात्प्रसिद्धयः ।

तस्मादलौकिको वाक्या-
दन्यः कश्चिन्न विद्यते ॥ ३४९ ॥

लोके प्रतिपत्तॄणां सर्वथा न सत्यार्थयोगादेव प्रसिद्धयो व्यवहारनिष्पत्तयो सत्येनाप्युपायेन मरीचिकास्वपि जलप्रसिद्धिस्तेषां दृश्यते। अथ वा रेखागवयवदसत्येनाप्यनेनोपायेन सत्यभूतवाक्यपरिज्ञानं भवत्येव सर्वथा न लोकस्यार्थं विना प्रवृत्त्यादयो न सन्तीति वक्तव्यं कदा चित्सत्यगवयेन गवयार्थप्रतीतिरस्य जन्यते कदाचिद्रेखागवयेनेति बोद्धव्यम्। यत एवं तस्माद्वाक्यात्सत्यभूतादखण्डाद्वाक्यार्थप्रत्ययो जन्यत इति न कश्चिदलौकिकः सत्यभूतः पदार्थः पदं वा विद्यते उपपत्तिविरहादिति ॥ ३४९ ॥

ज्ञापकगम्यस्वार्थः सर्वत्र वाक्यादेवावगम्यत इत्याह ॥

अन्यत्र श्रूयमाणैश्च लिङ्गैर्वाक्येषु सूचिताः।
स्वार्था एव प्रतीयन्ते रूपाभेदादलक्षिताः ॥ ३५० ॥

अक्ताः शर्करा उपदधातीत्यत्र तैलेन घृतेन वेति संदेहे ऽन्यत्र तेजो वै घृतमिति घृतस्य स्तुतिरुपक्रान्ता तयैतत्सूच्यते ऽभ्यञ्जनं घृतेनैवोपदिष्टमिति। अतो ऽत्राक्ता इत्यादौ वाक्ये घृताक्ता उपदधातीति वाक्यार्थो ज्ञायतइति विज्ञेयं यद्यक्ता इत्यस्यैव घृताक्ता उपदधातीत्यर्थो ऽवगतः किं ज्ञापकानुसारेणेत्याह "रूपाभेदादलक्षिताः" अक्ताः शर्करा उपदधातीति वाक्ये रूपमविशिष्टं पश्यन्तो विशेषमवगन्तुमक्षमा इति लिङ्गानुसरणेनात्रार्थनिर्णयो व्यवस्थाप्यतइति वाक्येषु वाक्यैकदेशाः सन्तीत्येतदप्रमाणमेव ॥ ३५० ॥

अथ बाध्यबाधकभावं निर्णेतुमाह ॥

उत्सर्गवाक्ये यच्छक्तमशब्दमिव शब्दवत्।
तद्बाधकेषु वाक्येषु श्रुतमन्यत्र गम्यते ॥ ३५१ ॥

उत्सर्गवाक्ये सामान्यलक्षणे उपक्रमएव यत्याक्रान्तमपवादाक्रान्तं किं तत्र शब्देन परित्यक्तं नेत्याह "अशब्दमिवे"ति बोधकविरहेणेव कथं त्यक्तं "शब्दवत्" बोधकवदेव त्यक्तं धातोः कर्मण्युपपदे ऽण्प्रत्ययस्तावदेव बाधकानाक्रान्तधातुविषयमेवाण्प्रत्ययविधानमिति गम्यतएव अन्यथा त्वविशेषेणप्रवृत्तावुत्तरकालमाकारान्तेभ्यः कथं निवार्यते। अतस्तात्पर्यपर्यालोचनवशाद्बाधकानाक्रान्तधातुविषये (१) भवतीति वाक्यार्थो ज्ञायतएव तद्दर्शिना एतत्तत्कालएव नावधारितमुत्तरकालं तु बाधकेषु वाक्येषु तच्छ्रुतं सदन्यत्र सामान्यलक्षणे वर्जितमिति गम्यते ॥ ३५१ ॥

लौकिकेन दृष्टान्तेनैतदेव व्याख्यातुमाह ॥

**ब्राह्मणानां श्रुतिर्दध्नि प्रक्रान्ता माठरं विना ।**
**माठरस्तक्रसम्बन्धात्तत्राचष्टे यथार्थताम् ॥ ३५२ ॥**

दधि ब्राह्मणेभ्यो दीयतामित्यत्र श्रुत्या माठरवर्जमेवात्र ब्राह्मणानां दधिदानमुपक्रान्तमिति बोद्धव्यमुत्तरकालं तक्रं माठरायेत्येतत्तत्र यथार्थबाधकविषयपरिहारेणैवार्थवत्तां गमयतीत्येव भिन्नवाक्यतासमाश्रयणेन तावदप्राप्त्यनुमानं बाध इति बोद्धव्यम् ॥ ३५२ ॥

इदानीमेकवाक्यतामेवाश्रित्योत्सर्गापवादयोर्बाध्यबाधकभावं दर्शयितुमाह ॥

**अनेकाख्यातयोगे ऽपि वाक्यं न्याय्यापवादयोः ।**
**एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम् ॥ ३५३ ॥**

कैश्चित्प्राप्यापवादयोरुत्सर्गापवादयोराख्यातभेदेपि एकवाक्यतैवेष्यते भिन्नवाक्यतैव तत्कालं प्रतिभाति । वस्तुतस्त्वाकाङ्क्षायोग्यतासंनिधिवशादेकवाक्यतां गतं वाक्यं बोद्धव्यम् ॥ ३५३ ॥

---

(१) अण् प्रत्यय इत्यधिकं २ पु० पाठः ।

एवं सतीदं तत्र बोद्धव्यमित्याह ॥

**नियमः प्रतिषेधश्च विधिशेषस्तथा सति ॥ ३५३ ॥**

इको गुणवृद्धी इत्यादिको नियमः सार्वधातुकार्द्धधातुकयोरित्यस्य गुणविधेः शेषः तेन सहास्यैकवाक्यतायां सार्वधातुकार्धधातुकयोः परतो ऽङ्गस्येको गुणो भवतीत्येवं वाक्यार्थो ज्ञायते अन्यथाङ्गस्येगनिकोः स्थाने गुणवृद्ध्योः प्रवृत्तयोरुत्तरकालं नियमेन किमत्र कृत्यम् । उक्तं च यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यादिति । तथा प्रतिषेधोपि विधिना सहैकवाक्यतां गत्वा साफल्यं भजतीत्याह "प्रतिषेधश्चे"ति प्रतिषेधश्च विधिशेष एव तथा सति बोद्धव्य इत्यर्थः । अलुगुत्तरपद इत्यनेनोत्तरपदे परतो लुक्प्रतिषेध उच्यमानः सुपो धातुप्रातिपदिकयोरित्यस्य लुग्विधेरङ्गभावमुपगच्छन्नाक्यैकवाक्यतयार्थप्रत्यायनं करोतीति बोद्धव्यम् । एतदेव दर्शयितुमाह ॥

**द्वितीये यो लुगाख्यातस्तच्छेषमलुकं विदुः ॥ ३५४ ॥**

द्वितीये अध्याये य आख्यातो लुग्विधिः तस्य षाष्ठिकं लुक्प्रतिषेधं शेषमङ्गं विदुर्व्याख्यातार इति ॥ ३५४ ॥

अथ वाक्यभेदवाद्याह ॥

**निराकाङ्क्षाणि निर्वृत्तौ प्रधानानि परस्परम् ।**
**तेषामनुपकारित्वात्कथं स्यादेकवाक्यता ॥ ३५५ ॥**

निर्वृत्तौ विशेषपरिपूर्णतायां वाक्यानि निराकाङ्क्षाण्येव । अतः परस्परं प्रधानानि तान्यभिधीयन्ते न तेषामङ्गाङ्गिभाव इति अतः परस्परमुपकार्योपकारकभावाभावात्कथं तेषां निष्प्रयोजनापेक्षा परिकल्प्यते नैकवाक्यतेति पूर्वः पक्षः ॥ ३५५ ॥

अथैकवाक्यवाद्याह ॥

**विशेषविधिना ऽर्थित्वाद्वाक्यशेषो ऽनुमीयते ।**
**विशेषवन्निवर्त्त्ये ऽर्थे तस्मात्तुल्यं व्यपेक्षणम् ॥ ३५६ ॥**

उत्सर्गवाक्यशेषः सर्व्वत्रानुमीयते कस्मादित्याह "विशेषविधिने"-त्यादि । अन्यथा वाक्यान्तरवदविशेषेण तस्य प्रवृत्तिः स्यात् न चैतद्युक्तं ततश्च निवर्त्त्ये प्रतिषेध्येर्थे ऽपेक्षणमुपयुज्यतएव तस्मात् तयोः परस्परापेक्षणं तुल्यमेवेति कृत्वा ऽर्थपर्य्यालोचनावशेनाकाङ्क्षादिना परस्परसम्बन्धेनाङ्गाङ्गिभावापत्तावेकवाक्यतैव ज्यायसीत्युक्तम् ॥ ३५६ ॥

उद्धारेण वाक्येषु वाक्यैकदेशाः सन्तीति चतुर्भिः प्रकारैर्निरूपितम् । अर्थप्रकरणाभ्यां यथा वृक्ष इत्यादौ । प्रसिद्धेर्यथा वर्षतीत्यादौ । लिङ्गाद्यथा अक्ताः शर्करा इत्यादौ । आकाङ्क्षादिना वाक्यान्तरस्य सन्निधानाद्यथा दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेत्यादौ । यथा च कर्मण्यण् आतोनुपसर्गे क इत्यादौ ॥

इदानीमपोद्धारसमाश्रयणे प्रसङ्गात्पदेषु पदैकदेशाः सन्तीति विचारयितुं स्तौति ॥

**संज्ञाशब्दैकदेशो यस्तस्य लोपो न विद्यते ।**
**विशिष्टरूपा सा संज्ञा कृता च न निवर्त्तते ॥ ३५७ ॥**

इह देवदत्तादयः संज्ञाशब्दाः स्थिताः तत्र कदा चिद्देवः कदा चिद्दत्त इति प्रयुञ्जाना दृश्यन्ते तदेतत्कथमुपपद्यते यस्मात्तेषु संज्ञाशब्देषु एकदेशास्तेषां लोपस्तावच्छास्त्रे न कुत्र चिदुपदिश्यते उपदेशोपि तेन कर्त्तुं न पार्यतइत्याह "विशिष्टरूपे"त्यादि । यदा लोके नियतवर्णानुपूर्व्वीकः पदसमुदायः संज्ञात्वेन विनियुज्यते तदा तदन्तर्गता अवयवा विनियुक्ता एव, यथा वृक्षः प्रचलन् सहावयवैः प्रचलतीत्याचारानुरोधेन किमसौ न्यूनवर्णा वाचिका भवति सा

हि नियतानुपूर्वीका परिपूर्णैव कृता न निवर्त्तते ॥ ३५७ ॥

अथोच्यते दत्तशब्दादसौ सकला प्रतीता स्वसंज्ञिनं प्रत्याययती-त्याशङ्क्याह ॥

**संज्ञान्तराच्च दत्तादेर्नान्या संज्ञा प्रतीयते ॥३५७ऽऽ॥**

दत्तशब्दः स्वतन्त्रो ऽन्य एव कस्य चित्संज्ञान्तरं तस्मात्कथमन्या देवदत्तेति संज्ञा प्रतीयते शब्दान्तरत्वादकृतसङ्केतत्वाच्चेत्यभिप्रायः । नापि तद्वाच्यं संज्ञिनमवगमयितुमलं दत्तशब्द इत्याह ॥

**संज्ञिनं देवदत्ताख्यं दत्तशब्दः कथं वदेत् ॥ ३५८ ॥**

दत्तशब्दस्यान्य एव संज्ञी प्रत्याप्यस्तत्कथं शब्दान्तराभिधेयमसौ प्रत्यापयेत् तदेवं नियतवर्णानुपूर्वीकायास्तस्या लोपस्तावदेकदेशस्य नोपपद्यते नापि दत्तशब्दाद्देवशब्दाद्वा तदेकदेशभूतदेवदत्तशब्दप्र-तीतिरुपपद्यते तत्रापि (१) तद्वाच्यप्रतिपत्तिरिति यत्किञ्चिदेत-त् ॥ ३५८ ॥

अत्र मतान्तरं दर्शयितुमाह ॥

**सर्व्वैरवयवैस्तुल्यं सम्बन्धं समुदायवत् ।**

**के चिच्छब्दस्वरूपाणां मन्यन्ते सर्व्वसंज्ञिभिः ॥३५९॥**

सर्व्वैरवयवैस्तुल्यमेव समकालमेव संज्ञिनः सम्बन्धः कथं समुदा-यवत्, यथा समुदायस्तस्य वाचकत्वेन नियुक्तः तथा तत्कालएव तदवयवा अपीत्यतस्तदेकदेशस्तस्य प्रत्यायनं करोतीति को दो-षः ॥ ३५९ ॥

अत्र दूषणद्वयं दर्शयितुमाह ॥

**वर्णानामर्थवत्त्वं तु**

**संज्ञानां संज्ञिभिर्भवेत् ॥ ३५९ऽऽ ॥**

---

(१) न चापि इति २ पु० पाठः ।

संज्ञानां ये वर्णास्तेषां संज्ञिमार्थवत्त्वं प्राप्नोति ततः स्वाभिमतैकदेशवदेकोपि वर्णो वाचकः स्यात् न चैतत्परिदृष्टम् । अपि च तदवयवः पृथग्वाचको नोपपद्यतइत्याह ॥

सम्बन्धोऽ(१)वयवः
संज्ञाप्रविवेकेन कल्प्यते(२) ॥ ३६० ॥

योऽसौ भवता वाचकोऽवयव एकदेशः परिकल्प्यते स सम्बद्ध एव वाचकत्वेन विनियुक्तः समुदायाच्च तस्य प्रविवेके पृथग्भावे वाचकत्वं न कल्प्यते विलक्षणत्वात् ॥ ३६० ॥

एतदेवापरेण श्लोकेन प्रतिपादयितुमाह ॥

सर्वस्वरूपैर्युगपत् सम्बन्धे सति संज्ञिनः ।
नैकदेशसरूपेभ्यस्तत्प्रत्यायनसम्भवः ॥ ३६१ ॥

युगपत्सर्वावयवस्वरूपैः सम्बन्धेनैकदेशास्तद्वाचका उपपन्नाः अथ वा तदेकदेशास्ते न भवन्तीति प्रतिपादयितुमाह "नैकदेशसरूपेभ्य" इत्यादि । एकदेशसरूपेभ्य इत्युक्तम् । एकदेशसदृशास्ते दत्तादयः न पुनस्तदेकदेशा इति ॥ ३६१ ॥

मतान्तरमाह ॥

एकदेशात्तु सङ्घाते केषां चिज्जायते स्मृतिः ।
स्मृतेस्तु विषयाच्छब्दात्सङ्घातार्थः प्रतीयते ॥ ३६२ ॥

स्पष्टोऽर्थः ॥ ३६२ ॥

एतन्निराकर्त्तुमाह ॥

एकदेशात्स्मृतिर्भिन्ने
सङ्घाते जायते कथम् ।

(१) संबद्ध इति २ पु० पाठः ।
(२) कल्पतइति २ पु० पाठः ।

कथं प्रतीयमानः स्या-
च्छब्दो ऽर्थस्याभिधायकः॥ ३६३॥

सदृशवस्तुसन्दर्शनात् स्मृतिरुपजायतइति प्रसिद्धं तत्र सङ्घाते भिन्नस्वरूपे कथं तस्मात्स्मृतिः कथं च तस्मात्प्रतीयमानो देवदत्तस्य संज्ञिनो ऽभिधायक उपपद्यते प्रतीयमानस्य वाचकत्वे ऽतिप्रसङ्गः स्यात् श्रुतिपथमवतीर्णाः शब्दा वाचका इति प्रसिद्धम्॥ ३६३॥

(१)सिद्धान्तमाह॥

एकदेशस्वरूपास्तु
तैस्तैर्लिङ्गैः समन्विताः।
अनुनिष्पादिनः शब्दाः
संज्ञासु समवस्थिताः॥ ३६४॥

यदा तु समुदायः संज्ञात्वेन विनियुज्यते तदैव तदन्तर्गतावयवस्वरूपा अपि संज्ञात्वेन विनियुज्यन्तइति तेष्वनुनिष्पादिन्यायेन सिद्धाः संज्ञात्वेन बोद्धव्या इति॥ ३६४॥

तदन्तर्गतावयवस्वरूपा अनुनिष्पादिन्यायेन विनियुक्ता अपि साधारणत्वात्संज्ञिनमभिधातुमसमर्थाः। तथा हि। देवशब्दो देवानां वाचकः कस्य चित्संज्ञिनोपि तथा, दत्तशब्दः क्रियाशब्दो ऽपि संज्ञाशब्दोपि, तत्र कथं नियतस्य संज्ञिनस्तेभ्यः प्रतिपत्तिः स्यादित्याशङ्क्य नियतार्थतामेषां समर्थयितुमाह॥

साधारणत्वात्संदिग्धाः
सामर्थ्यान्नियताश्रयाः।
तेषां ये साधवस्तेषु

---

(१) इदानीमित्यधिकं २ पु॰ पाठः।

शास्त्रे लोपादि शिष्यते ॥ ३६५ ॥

सामर्थ्यादिभिर्नियताश्रयाः संज्ञाभिधायका व्यवस्थाप्यन्ते तेषामनुनिष्पादिनामेव शास्त्रे लोपादिविधिप्रणालिकया साधुत्वमुच्यतइत्याह । तेषामित्यादि । तेन देवदत्ते स्वतन्त्रः क्रियावाचकदत्तशब्दसाधारणो दत्तसंज्ञाशब्दः देवोपि संज्ञाशब्दो ऽनुनिष्पादित्वान्न तदन्तर्गता अपीति बोद्धव्यम् । एतदेव शास्त्रे लोपादिद्वारेणान्वाख्यायते यथोक्तं "चतुर्थादनजादौ च लोपः पूर्वपदस्य चे" त्यादि ॥ ३६५ ॥

एतत्स्फुटीकरणायाह ॥

तुल्यायामनुनिष्पत्तौ
ज्ये द्रा घा इत्यसाधवः ।
न ह्यन्वाख्यायके शास्त्रे
तेषु दत्तादिवत्स्मृतिः ॥ ३६६ ॥

समुदाये यथा पदान्यनुनिष्पादिन्यायेन तत्र विनियुज्यन्ते नैवमत्र समानायामप्यनुनिष्पत्तौ वर्णानां वर्णा विनियुज्यन्ते अतश्च ज्येष्टादिषु न ज्यादयो वर्णमात्रा इहव्यवहारे साधवो ऽभ्यनुज्ञायन्तइति शास्त्रेप्यन्वाख्यायकेन तथाभूतानामनुगमः क्रियतइति बोद्धव्यम् । अतो नैते घादयो वर्णा मघादिवाच्येष्वर्थेषु वाचका इति ॥ ३६६ ॥

अथ पदेषु पदैकदेशाः सन्तीति विचारप्रस्तावे संज्ञाशब्दानां शब्दार्थसम्बन्धस्यानित्यत्वमाशङ्क्य समर्थयितुमाह ॥

कृतणत्वाश्रये शब्दा नित्यं खरणसादयः ।
एकद्रव्योपदेशित्वात्तान् साधून् संप्रचक्षते ॥ ३६७॥

इह संज्ञाशब्दानां संज्ञिसम्बन्धात्प्राग्लक्षणयोग उत तदुत्तरकालं यदा प्राक् तदासौ न कस्य चित्संज्ञेति तन्निबन्धनं कार्यं कथं स्यात्।

ऽत्रोच्यते । अत्र संज्ञासंज्ञिसम्बन्धात्संज्ञात्वं तत्र लक्षणमिति । अथो-त्तरकालं संज्ञात्वं तदा चाकृतणत्वोऽसौ शब्दः संप्रति णत्वं भजत इत्यनित्यत्वं शब्दानां स्यादित्याशङ्क्याह "कृतणत्वा" इत्यादि । इह द्वौ राशी कृतणत्वानामेको राशिर्नित्य एव अकृतणत्वानामपर इति तत्र ये कृतणत्वास्ते साधवो नित्या एव एकद्रव्योपदेशित्वात्स्वभावेनैव ते संज्ञाशब्दा इत्यर्थः । शास्त्रे 'पूर्वपदात्संज्ञायामग' इत्यनेन कृतणत्वानामेव तेषां साधुत्वमन्वाख्यायतइति कृतणत्वता शास्त्रे प्रक्रियासमाश्रयणेनैषामुक्तेति न कश्चिद्विरोधः ॥ ३६७ ॥

एतदेव प्रतिपादयितुमाह ॥

**गोत्राण्येव तु तान्याहुः संज्ञाशक्तिसमन्वयात् ।**
**निमित्तापेक्षणं तेषु स्वार्थेनावश्यमिष्यते ॥ ३६८ ॥**

संज्ञाशब्दकुलानि व्यवस्थितानि न तेषु स्वार्थे संज्ञिनि निमित्तान्वेषणमिष्यते नित्यत्वाच्छब्दार्थसम्बन्धस्य,तद्वाचकास्ते स्ववाच्ये नियता इति स्वरूपव्यतिरेकेण निमित्तान्तरान्वेषणमव्यापकमेव॥ ३६८ ॥

ननु च नित्यत्वं संज्ञाशब्दानामनुपपन्नं सम्प्रति क्रियमाणत्वात् यस्मात्पुरुषेच्छया यथा कथञ्चिन्नियुज्य संज्ञाः क्रियन्ते उक्तं च "कृतकत्वादनित्यत्वं सम्बन्धस्योपजायते । संज्ञायाः सा हि पुरुषैर्यथाकामं नियुज्यते" यथा हि पांसुरेखाणां बालकैर्मधुरादयः । संज्ञाः क्रियन्ते संज्ञासु सर्वास्वेवैव कल्पनेत्याशङ्क्य समर्थयितुमाह ॥

**व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।**
**नित्य एव तु सम्बन्धो डित्थादिषु गवादिवत् ॥३६९॥**

संज्ञाशब्दानां क्वचित्संज्ञिनि, यदि परं व्यवहारार्थं पुरुषैर्नियममात्रं क्रियते । यथा ऽस्मिन् गृहे ऽद्यप्रभृति डित्थशब्दवाच्यो ऽयमिति बोद्धव्यं, शब्दार्थसम्बन्धस्तु डित्थादिष्वनादिर्योग्यतालक्षणो नित्य एव

वक्ष्यति "इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा । अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथे"ति । तदेवं यथा गवादिष्वनादियोग्यतासम्बन्धाद्वाचकत्वं गोशब्दादीनां तथैव डित्थादीनां बोद्धव्यम् ॥ ३६९ ॥

शास्त्रेऽपि तथैव व्यवहारनियमः संज्ञाशब्दानामवसातव्य इत्याह ॥

वृद्ध्यादीनां च शास्त्रेऽस्मिञ्छक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥३७०॥

शास्त्रे वृद्ध्यादीनां संज्ञाशब्दानां(१)सर्वार्थप्रकाशनशक्तियोगः संज्ञिनामादैजादीनां च सर्वशब्दवाच्यता योग्यता, अतः केवलं शास्त्रे संज्ञान्तरादवच्छिद्यादैजादिप्रत्यायनएव शक्तिर्वृद्ध्यादीनां नियम्यते आदैजादीनां वृद्ध्यादिशब्दवाच्यत्वमेव व्यवस्थाप्यते इति सहजशक्तिप्रतिनियम एव वाच्यवाचकयोरुच्यते, न पुनः कृत्रिमसम्बन्धाधानं विज्ञेयं, यथा विशेषणविशेष्ययोरनादिः शब्दवाच्यतात्मक एव सम्बन्धो न पुनस्तत्र पुरुषेणानीलादियोगः क्रियतइति ॥ ३७० ॥

अथ संज्ञाप्रवृत्तिनिमित्तं विचारयितुमाह ॥

संज्ञास्वरूपमाश्रित्य निमित्ते सति लौकिकी ।
का चित्प्रवर्त्तते का चिन्निमित्तासंनिधावपि॥३७१॥

सर्वसंज्ञाशब्दानां स्वरूपमेव प्रवृत्तिनिमित्तं बोद्धव्यम् । तस्मिन् सति कुत्र चिदर्थानुपात्तं(२) निमित्तं विद्यते कुत्र चित्तस्याभाव एव डित्थादाविति कैश्चित्तत्राप्युच्यतएव ॥ ३७१ ॥

न केवलं तत्रैकाक्षराणां स्वरूपमेव प्रवृत्तिनिमित्तं विद्यते यावन्महतीनामपि स्वरूपमेवोपनिबन्धनं प्रवृत्तिनिमित्तं बोद्धव्यमित्याह ॥

---

(१) संज्ञाशब्दानामिति २ पु० नास्ति ।
(२) अर्थानुगतमिति २ पु० पाठः ।

शास्त्रे तु महती संज्ञा स्वरूपोपनिबन्धना ।
अनुमानं निमित्तस्य संनिधाने प्रतीयते ॥ ३७४ ॥

केवलं तत्र निमित्तस्यावयवार्थस्य संनिधाने सत्यनुमानं तत्सद्भावे प्रतीयते अनुमानेनावयवार्थोऽपि तत्र निमित्तमिति प्रतीयतइत्यर्थः ॥ ३७४ ॥

कथं तदनुमानमित्याह ॥

आवृत्तेरनुमानं वा सारूप्यात्तत्र गम्यते ।
शब्दभेदानुमानं वा शक्तिभेदस्य वा गतिः ॥३७५॥

स एक एव द्विरावर्त्तते तत एकेन स्वरूपनिरूपितसंज्ञिनः प्रतिपत्तिरपरेणावयवार्थनिबन्धनता व्यवस्थाप्यते। नन्वावृत्तिरनुमीयते किं यदिह तत्र तवाभीष्टं स्यात् द्विधोच्चारणादित्याह "सारूप्यादिति" सारूप्यादेक एवोच्चारितः शब्द इति गम्यते । अथ वा तन्त्रेण द्वावेव शब्दावुच्चारितावित्यनुमीयत इत्याह "शब्दभेदानुमानं वे"ति । तत एकेन स्वरूपाच्छादितसंज्ञिनः प्रतिपत्तिरपरेणावयवार्थनिबन्धनेति। तृतीयमपि पक्षं प्रदर्शयितुमाह "शब्दभेदस्य वा गतिरि"ति स एवैको द्विशक्तिरुच्चारितस्तत एकया संज्ञिनः प्रतिपत्तिरपरेणावयवार्थसङ्गतिरिति ॥ ३७५ ॥

इदानीं लौकिकस्याकृत्रिमस्य क्व चिद्ग्रहणं क्व चित् कृत्रिमस्य पारिभाषिकस्य क्व चिदुभयगतिरिह शास्त्रे सम्भवतीत्युभयोरपि कृत्रिमाकृत्रिमयोः क्व चिदकृत्रिमएव व्याप्तेः परिगृह्णीत इतरस्यापि विषयं व्याप्नोतीति चातुर्विध्यं संज्ञाशब्दानां प्रदर्शयितुमाह ॥

क्व चिद्विषयभेदेन कृत्रिमा व्यवतिष्ठते ॥ ३७५ऽऽ ॥

कृत्रिमा शास्त्रीया पारिभाषिक्युच्यते सा विषयभेदेन व्यवतिष्ठते

न तु सर्वत्र तथैव(१) । व्यवस्था यथा 'कर्त्तरि कर्मव्यतिहारे' इत्यत्रा-कृत्रिमा गृह्यते व्यतिहारस्यात्र कृत्रिमसंज्ञाश्रयणानुपपत्तेः । 'कर्म-ण्यणि'त्यत्र कृत्रिमा शब्दवैरेत्यादावकृत्रिमा धात्वधिकारात्कृत्रिमाया अत्रानुपपत्तेः । 'कर्त्तृकरणयोस्तृतीये'त्यत्र कृत्रिमेति क्व चिदेकशे-भयरूपतायो ग्रहणमिति दर्शयितुमाह ॥

**संख्यायामेकविषयं व्यवस्थानं द्वयोरपि ॥ ३७६ ॥**

संख्याविषये शास्त्रे कृत्रिमाकृत्रिमयोरपि समाश्रयणं शास्त्री-याया बहुगुणवतुडतीत्यादिकाया अपि कृत्रिमाया लौकिक्या अथ कृत्रिमाया विंशत्यादिकाया अतिशदन्ताया इति प्रतिषेधादत्र शा-पकाद्ग्रहणम् ॥ ३७६ ॥

क्व चिदकृत्रिमः संज्ञाशब्दो गृहीतः कृत्रिमस्यापि प्रत्यायनं करो-तीति प्रदर्शयितुमाह ॥

**विषयं कृत्रिमस्यापि लौकिकः क्व चिदुच्चरन् ।**
**व्याप्नोति दूरात्संम्बुद्धौ तथा हि ग्रहणं तयोः॥३७७॥**

लौकिको ऽकृत्रिमः संज्ञाशब्दः समुच्चरन् कृत्रिमस्यापि शास्त्रीय-स्य विषयं व्याप्नोति यथै'कश्रुति दूरात् सम्बुद्धावि'त्यत्र सम्बोधनं स-म्बुद्धिरिति लौकिकेन शास्त्रीयमप्ये'कवचनं सम्बुद्धिरि'ति गृह्यतएव तत्रापि सम्बोधनस्य विद्यमानत्वादित्यर्थः ॥ ३७७ ॥

अथेदानीं वाक्यविचारप्रस्तावे क्व चित्प्रत्येकं वाक्यपरिसमाप्तिः क्व चित्समुदायइति प्रदर्शयितुमाह ॥

**संवैकशेषद्वन्द्वेषु के चित्सामर्थ्यलक्षणम् ।**
**प्रत्याश्रयमवस्थानं क्रियाणां प्रतिजानते ॥ ३७८ ॥**

वाक्यवद्वाक्यार्थस्यापि प्रत्येकसमुदायपरिसमाप्तिं वाक्यपरिसमा-

---

(१) तथैवेति २ पु० पाठः ।

त्तिं प्रसङ्गात्मतभेदेन निरूपयति । तत्र वाक्यार्थस्य प्रत्येकपरिसमाप्तिरिति तावद्दर्शयति "सङ्केकशेषद्वन्द्वेष्वि"त्यादिना कदा चित्संघेनैकशेषेण द्वन्द्वेन वार्थप्रतिपादनं क्रियते यथा ब्राह्मणा भोज्यन्तां ब्राह्मणो भोज्यतां देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्ताम् अत्र ब्राह्मणकर्तृकाया भुजिक्रियाया वाक्यार्थभूताया प्रत्याश्रयमवस्थानं प्रतिजानते ऽभ्युपगच्छन्ति कीदृशं "सामर्थ्यलक्षणमि"ति सामर्थ्यं समर्थभावात्मकं अग्रे निरूप्यमाणलक्षणं स्वरूपं यस्य तत्तथाविधं सामर्थ्यलक्षणत्वादित्यर्थः ॥ ३७८ ॥

अथ भुजिक्रिया कारकसमुदाय एव नाव्यक्रियावत् किं न समाप्यतइत्याह ॥

भोजनं फलरूपाख्यामेकैकस्मिन्समाप्यते ।
अन्यथा हि व्यवस्थाने न तदर्थः प्रकल्प्यते(१)॥३७९॥

इहैकेन पादप्रक्षालनमपरेणासनउपवेशनमपरेणान्नदान(२) मन्येनान्ननिगरणमिति नैवं भुजिक्रिया निर्वर्त्तयितुमायाति यस्मादसौ भुजिक्रियाफलेन तृप्तिलक्षणेन रूपेणान्नदानादीनां चैकाधिकरणेन निर्वर्त्यते, तथा नाश्रयणेन भुज्यर्थानिष्पत्तेः, भिन्नाधिकरणा सा स्वरूपं न प्रतिभजतइति प्रत्यक्षसिद्धमेव ॥ ३७९ ॥

एतदेव स्फुटयितुमाह ॥

अन्नादानादिरूपां(३) च सर्वे तृप्तिफलां भुजिम् ।
प्रत्येकं प्रतिपद्यन्ते न तु नाव्यक्रियामिव ॥ ३८० ॥

नियतस्वरूपा हि वस्तुगतयो दृश्यन्ते, नाव्यक्रिया ऽनेकसाधनसाध्या सती फलवत्युपजायते भुजिक्रिया त्वेकैककारकनिर्वर्त्येति वस्तु-

(१) प्रकल्पतइति २ पु० पाठः ।
(२) अन्नादानमिति २ पु० पाठः ।
(३) अन्नदानादिरूपामिति २ पु० पाठः ।

गतिः ॥ ३८० ॥

एतदेव दृष्टान्तान्तरेण व्याचष्टे ॥

पाद्यवत्सा विभागेन सामर्थ्यादवतिष्ठते ।
भुजिः करोति भुज्यर्थं न तन्त्रेण प्रदीपवत् ॥३८१॥

श्राद्धकर्मणि ब्राह्मणेषु कर्त्री यथा पाद्यमनेकाधिकरणं तदभ्यर्चनायोपकल्प्यते (१) तथैवेयं भुजिक्रिया सामर्थ्यादसुखाभाव्याद्विभागेनैवावतिष्ठतइति, न तु तन्त्रेण साधारण्येनासौ प्रदीपवदेकाधिकरणैव भुज्यर्थं तृप्तिलक्षणं करोति ॥ ३८१ ॥

अथ भुजिक्रियावदन्यासामपि क्रियान्तरसमाश्रयणेन समुदायपरिसमाप्तिमुपदर्शयितुमाह ॥

दृश्यादिषु क्रियैकापि तथाभूतेषु कर्मसु ।
आवृत्तिमन्तरेणापि समुदायाश्रया भवेत् ॥३८२॥

देवदत्तयज्ञदत्तविष्णुमित्रा दृश्यन्तामित्यत्र दृशिक्रिया तथाभूतेषु योग्यदेशस्थितेषु विषये प्रत्येकपरिसमाप्तिं विना भुजिव(२)न्नोपपद्यतइति नोच्यते, युगपदेवात्र दर्शनक्रियाधिगमफला समुदायमाप्नोतीत्यसौ समुदायाश्रया भवेत् ॥ ३८२ ॥

अथ पच्यादिक्रिया किं समुदायपरिसमाप्ता किं वा प्रत्येकं समाप्तेत्याशङ्क्याह ॥

भिन्नव्यापाररूपाणां व्यवहारादिदर्शने ।
कर्तॄणां दर्शनं भिन्नं संभूयार्थस्य साधकम् ॥ ३८३ ॥

देवदत्तः काष्ठैः स्थाल्यामोदनं पचति विक्लिद्यतस्तण्डुलान् विक्लेदयतीत्यत्र भिन्नव्यापाररूपाणां कारकाणां दर्शनं भिन्नं प्रार्थनादि-

(१) उपकल्पतइति २ पु० पाठः ।

(२) भुजिवदिति २ पु० पाठः ।

को(१)व्यापारो भिन्नः स संभूय सङ्घादर्थस्य पाकक्रियालक्षणस्य साधको दृश्यते व्यवहारादिदर्शन इति। व्यवहारः कश्चिन्नियतविषय एवोपयोगी(२)ऽत्राभिप्रेतः। आदिग्रहणेन तदन्येषां परिग्रहः तेषां दर्शनं समारम्भः प्रारम्भ इति यावत् तस्मिन्सतीत्यर्थः । एतदुक्तं भवति। कर्तृस्था या क्रिया भवति कर्मस्था वेत्यत्र पचिक्रिया कर्मणि समवेता न समुदायइति केचित्। अन्ये त्वाहुः। यद्यपि कर्मणि समवेता तथाप्यधिश्रयणोपसर्जनविक्लित्तिरपि पचेरर्थ इत्यवान्तरक्रियान्यभावे प्रधानक्रियासमाश्रयणेन व्यावृत्तव्यापारस्याविशेषात्संभूय सर्वैर्निर्वर्त्यतइति समुदायएव परिसमाप्यतइति ॥ ३८३ ॥

अथ शास्त्रे प्रत्येकं वाक्यपरिसमाप्तिमुपदर्शयितुमाह ॥

लक्ष्यस्य लोकसिद्धत्वाच्छास्त्रे लिङ्गस्य दर्शनात् ।
अर्थित्वादैच्चु भेदेन(३)वृद्धिसंज्ञा समाप्यते ॥३८४॥

'वृद्धिरादैजि'त्यत्र वृद्धिशब्दः प्रत्येकमादैक्ष्वर्थिषु संज्ञात्वेन नियुज्यते, यस्माल्लोके तथैव लक्ष्यं सिध्यति आश्वगुप्तायनिः(४) ऐतिकायनिः औपगव इति। तथा शास्त्रे प्रत्येकमादैचां वृद्धिसंज्ञा लिङ्गाद् दृश्यते यथा 'प्रस्थे वृद्धमकर्क्यादीनां' 'मालादीनां च' 'वृद्धिर्यस्याचामादिस्तद्वृद्धं' 'प्रस्थेवृद्धमकर्क्यादीनामि'त्यत्र प्रस्थे उत्तरपदे पूर्वपदमवृद्धमाद्युदात्तं भवति तदनन्तरं मालादीनामादिरुदात्तो भवति इत्युक्तं, यदि चैकैकस्य वृद्धिसंज्ञा तदा मालादीनां वृद्धिर्यस्याचामादिस्तद्वृद्धमिति मालादयो वृद्धा भवन्ति ॥ ३८४ ॥

इदानीं क्वचित्समुदाये वाक्यपरिसमाप्तिरिति प्रदर्शयितुमाह ॥

---

(१) पाचनादिकइति २ पु० पाठः ।
(२) उद्योग इति २ पु० पाठः ।
(३) अर्थित्वादैक्ष्वभेदेनेति २ पु० पाठः ।
(४) आश्वगुप्तायनिरिति २ पु० पाठः ।

शतादाने प्रधानत्वाद्
दण्डने शतकर्मके ।
अर्थिनां गुणभेदे ऽपि
संख्येयो ऽर्थो न भिद्यते ॥ ३८५ ॥

गर्गाः शतं दण्ड्यन्तामित्यत्र शतकर्मकं दण्डनं समुदाये परिसमाप्यते । अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति यस्माद्वाक्यार्थज्ञा राजानो विवेचयन्ति यथात्र द्वे कर्मणी प्रधानमप्रधानं चेति तत्र शतकर्मके दण्डने शतादानमेव प्रधानं, यदि च प्रत्येकं शतकर्मदानं समाप्येत तदा गर्गाः शतानि दण्ड्याः स्युः ततश्च प्रधानकर्मणः स्वरूपभ्रंशो भवेत्, न च प्रधानार्थपरित्यागो युक्तः, अतः संख्यान्तराश्रयणे विरोधो वाक्यस्य स्यात्, वीप्सायां बाधप्राप्तिः । अत्र गुणभेदेपि दण्ड्यभेदेप्यप्रधानत्वात्तेषां नात्र प्रत्येकमपि तु अर्थिनां राज्ञां शतकर्मकं दण्डनं समुदायएवावतिष्ठतइति बोद्धव्यम् । एतदुक्तं भवति । प्रत्येकं वाक्यपरिसमाप्तिः समुदाये वाक्यपरिसमाप्तिरित्येतत् न राजाज्ञावशाद् व्यवस्थाप्यते अपि त्वर्थतथाभावादिति न्यायसिद्धमेवैतद्वेदितव्यम् ॥ ३८५ ॥

शास्त्रे प्रदर्शयितुमिदानीमाह ॥

संघस्यैव विधेयत्वात्
कार्यवत्प्रतिपादने ।
तत्र तन्त्रेण सम्बन्धः
समासाभ्यस्तसंज्ञयोः ॥ ३८६ ॥

समाससंज्ञा ऽभ्यस्तसंज्ञा च समुदायएव परिसमाप्यते 'सह सुपा' 'उभे अभ्यस्तमि'ति च । अत्र समाससंज्ञाया अभ्यस्तसंज्ञायाश्च तन्त्रेण साधारण्येन समुदायस्यैव सम्बन्धः । कस्मादित्याह "सहार्थ-

च विधेयत्वादि”ति। यस्मादत्र सञ्ज्ञ एव विधीयते पूर्वपदोत्तरपदरूपे हि समाससंज्ञा विधीयते। तथा ऽभ्यस्तमित्यत्र युगपत् द्वयोरभ्यस्तसंज्ञा विधीयते किञ्चित्कार्यं विधातुमिति। ननु समाससंज्ञायां कथं राजपुरुष इत्यादौ समुदायो विधीयते यावता नित्यत्वाच्छब्दार्थसम्बन्धानां विधेयतानुपपत्तिरित्याशङ्काह “कार्यवत्प्रतिपादन” इति। यदा कार्यवदन्वाख्यानमिति पक्षः प्रतिपाद्यते तदेतदुक्तमित्यर्थः॥ ३८६॥

इदानीं क्व चिदेकत्वेनोभयथापि वाक्यपरिसमाप्तिर्दृश्यत इति प्रतिपादयितुमाह॥

लक्षणार्थी स्तुतिर्येषां काञ्चिदेव क्रियां प्रति।
तैर्व्यस्तैश्च समस्तैश्च स धर्म्म उपलक्ष्यते॥ ३८७॥

उदाहरणमाह॥

वृषलैर्न प्रवेष्टव्यमित्येतस्मिन् गृहे यथा।
प्रत्येकं संहतानां च प्रवेशः प्रतिषिध्यते॥ ३८८॥

अत्र वृषलजातीयस्य प्रवेशनिषेधः क्रियते तत्र चैकस्यापि वृषलत्वस्य सद्भावात्सामर्थ्यात्पृथक् समुदाये च प्रवेशनिषेधार्थः(१)सम्पद्यत इति॥ ३८८॥

प्रकारान्तरेणोपदर्शयितुमाह॥

सम्भूय त्वर्थलिप्सादिप्रतिषेधोपपादने।
पृथगप्रतिषिद्धत्वात्प्रवृत्तिर्न विरुध्यते॥ ३८९॥

भवद्भिः समग्रैरेवाद्यप्रभृति राजोपसेवा न कार्या, समुद्रगमनं वा न विधेयं, कृषिकर्म वा नानुष्ठेयमित्यत्र समुदाये प्रत्येकं वा निषेधे वाक्यस्य न प्रवृत्त्यनुपपत्तिः॥ ३८९॥

अत्रापि शास्त्रीयमुदाहरणं दर्शयितुमाह॥

---

(१) प्रवेशानिषेध इति २ पु० पाठः।

व्यवायलक्षणार्थत्वादट्कुप्वाङादिभिस्तथा ।
प्रत्येकं वा समस्तैर्वा णत्वं न प्रतिषिध्यते ॥ ३९० ॥

व्यवायो व्यवधानं तदुपलक्षणार्थत्वादट्कुप्वाङादिभिरिति प्रत्येकं समुदायेपि तेषां स्थितेर्व्यवायस्य सिद्धत्वात्तथैव णत्वं प्रवर्त्तत इति न कश्चिद्दोषः ॥ ३९० ॥

इदानीं भुजिक्रियाया एकत्वानेकत्वविचारः । तत्रापि किमेकस्मिन् देशे काले पात्रे ऽनुष्ठिता स्वरूपमासादयति, उत देशादिभेदेनानुष्ठितेति विचारयितुमाह ॥

अनुग्रहार्थं भोक्तॄणां भुजिरारभ्यते यदा ।
देशकालाद्यभेदेन नानुगृह्णाति तानसौ ॥ ३९१ ॥

"देशकालाद्यभेदेने"ति नात्र भुजेरनुग्रहार्थाया विशेषः कश्चित् उभयथापि तदनुग्रहस्य निर्वृत्तेरिति ॥ ३९१ ॥

अथास्या एकत्वानेकत्वे विचारयितुमाह(१) ॥

पात्रादिभेदान्नानात्वं यस्यैकस्योपदिश्यते ।
विपर्यये वा भिन्नस्य तस्यैकत्वं प्रकल्प्यते ॥ ३९२ ॥

यस्य मते एकैव भुजिः तृप्तिलक्षणसमानफलत्वात् तस्य देशकालभेदान्नानात्वं स्वतस्त्वेकत्वमेव । कस्य चिन्मते तु भोक्तृभेदात्फलभेदे भुजिक्रियाभेद एव । तस्य विपर्यये पात्राद्यभेदादेकत्वं तस्या बोद्धव्यं स्वभावतस्तु भिन्नत्वमेवेति मतभेदः ॥ ३९२ ॥

किं च ॥

संहत्यापि च कुर्वाणा
भेदेन प्रतिपादिताः ।

---

(१) एकत्वानेकत्वविचारायेति २ पु० पाठः ।

**स्वं स्वं भोज्यं विभागेन**
**प्राप्तं संभूय भुञ्जते ॥ ३८३ ॥**

देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र सामर्थ्याद्भेदेन वाक्यार्थप्रतिपत्ताविच्छावशात्संभूय स्वं स्वं भोज्यं विभागेन प्राप्तं संभूय भुञ्जते(१) ॥ ३८३ ॥

अथ शतादानप्रधानत्वादित्येतत्प्रतिपाद्यस्यार्थस्योपपत्तिं प्रतिपादयितुमाह ॥

**वीप्साया विषयाभावात् विरोधादन्यसंख्यया ।**
**द्विधा समाप्त्ययोगाच्च शतं सङ्घे ऽवतिष्ठते ॥३८४॥**

यद्येकैकं शतं शतं दण्ड्येत तदा वीप्साविषयो ऽपह्नतः स्यात्, तथा शतकर्मकमत्र दण्डनं प्राधान्येन विधीयते । यदि तु प्रत्येकं शतदण्डनं प्राधान्येन विधीयते(२)प्रत्येकं शतदण्डने संख्यान्तरोपजननाच्छ्रुतसंख्या विरुध्यते । न चाप्यत्र द्विधा वाक्यं समाप्यते । यत एकेन प्रधानकर्मणः सम्बन्धो ऽपरेण गुणकर्मणामिति वाक्यार्थज्ञैः पर्यालोच्य सङ्घएव शतादानमवतिष्ठतइत्युच्यते ॥ ३८४ ॥

अथ भुजिक्रियायाः प्रत्येकं परिसमाप्तावपि यत्र देवदत्तयज्ञदत्तविष्णुमित्रैः सह भोक्तव्यमित्युच्यते तत्र द्विधापि प्रत्येकं समुदाये च वाक्यार्थस्य परिसमाप्यतइत्याह ॥

**भुजिर्द्वन्द्वैकशेषाभ्यां यत्रान्यैः सह शिष्यते ।**
**तत्रापि लक्षणार्थत्वात् द्विधा वाक्यं समाप्यते ॥३८५॥**

"लक्षणार्थत्वादि"ति यस्मादत्र सह भोजनं सहैव वा तत्प्रतिषेध इत्येव तावल्लक्ष्यते । तत्र बहुभिः सह भोक्तव्यं द्वाभ्यां त्रिभिर्वा न वे-

(१) भुज्यतइति २ पु० पाठः ।
(२) विधीयेतेति २ पु० पाठः ।

त्येतद्नाभिधीयते । एवं च सहैव भोक्तव्यं न वेति समुदायएव विधिर्वा प्रतिषेधो वा विधीयते, केवलं सह भोजनविधिस्तत्प्रतिषेधो वाभीष्ट इति प्रत्येकं समुदाये च वाक्यार्थो ऽत्र समाप्यतइति बोद्धव्यम् ॥ ३९५ ॥

एवं वाक्यार्थाश्रयणेन प्रत्येकं वाक्यपरिसमाप्तिः समुदाये च वाक्यपरिसमाप्तिरिति प्रदर्शितम् । इदानीं वाक्यसमाश्रयणेन प्रतिपादयितुमाह ॥

**वाक्यान्तराणां प्रत्येकं समाप्तिः कैश्चिदिष्यते ।**
**रूपान्तरेण युक्तानां वाक्यानां तेन संग्रहः ॥ ३९६ ॥**

इहैकं यद्वाक्यं श्रुतं तेन वाक्यान्तराणां वाक्यरूपाणां संग्रहो लक्षणं प्रत्यायनमिष्यते तानि वाचकानि तस्मान्महावाक्यं प्रत्येकं समाप्यते ततश्च तथैवार्थावगतिरिति ॥ ३९६ ॥

अथ वाक्यान्तराणां किमेकमेव तन्महावाक्यमभिधायकमुच्यतइत्याशङ्क्याह ॥

**न वाक्यस्याभिधेयानि भेदवाक्यानि कानि चित् ।**
**तस्मिंस्तूच्चरिते भेदांस्तथान्यान्प्रतिपद्यते ॥ ३९७ ॥**

तस्मादुच्चरितादर्थप्रतिपत्तावर्थपर्यालोचनावशेनावान्तरवाक्यप्रतिपत्तिः सम्पद्यतइत्युच्यते न पुनस्तेन तान्यभिधीयन्तइति ॥ ३९७ ॥

अत्राखण्डवाक्यवादी प्रौढवादितया पदवादिमतं निराकर्त्तुमाह ॥

**येषां समस्तो वाक्यार्थः**
**प्रतिभेदं समाप्यते ।**
**तेषां तदानीं भिन्नस्य**
**किं पदार्थस्य सत्तया ॥ ३९८ ॥**

प्रत्येकमखण्डस्यैव वाक्यार्थस्य परिसमाप्तिः पदार्थानामनुपयोगा-त्पदार्थकल्पना वृथैव ॥ ३९८ ॥

वाक्यवादी विकल्पयितुमाह ॥

अथ तैरेव जनितः सो-
र्थो भिन्नेषु वर्त्तते।
पूर्वस्यार्थस्य तेन स्या-
द्विरोधः सह वा स्थितिः॥ ३९९ ॥

अथोच्यते पदार्थैरेव वाक्यार्थो जनितो भिन्नेषु वर्त्तते पूर्वस्य तेन सह विरोधः सहानवस्थानलक्षणो वा स्यात्, अथ वा सहावस्थिति,-रिति द्वयी गतिः ॥ ३९९ ॥

तत्र सह स्थितौ चोद्यमाह ॥

सहस्थितौ विरोधित्वं
स्याद्विशिष्टाविशिष्टयोः॥ ३९९ऽऽ॥

भेदसंसर्गौ विरुद्धावत्रानुषज्येयातामित्यर्थः। अथ पदार्थवाक्यार्थ-योरत्र सहानवस्थानं यत्पूर्वः पदार्थो वाक्यार्थो वाक्यार्थे तत्र समाप्ते विनिवर्त्तते तदायं दोष इत्याह ॥

व्यभिचारी तु संबन्ध-
स्त्यागे ऽर्थस्य प्रसज्यते ॥ ४०० ॥

वाक्यार्थफलानां पदानामुपात्तार्थपरित्यागे शब्दार्थसम्बन्धो व्य-भिचार्यनित्यः प्राप्नोति। अतः प्रत्येकं वाक्यपरिसमाप्तिपक्षे सत्यभू-तपदपदार्थासम्भव एव ॥ ४०० ॥

अथ समुदायवाक्यपरिसमाप्तिपक्षे किं समुदायार्थेन सह एवार्थ-वान् नावयवाः, आहो स्वित्तदवयवा अपीति विचारयितुमाह ॥

एकः साधारणो वाच्यः प्रतिशब्दमवस्थितः ।
सङ्घे सङ्घिषु चार्थात्मा संनिधाननिदर्शकः ॥ ४०१ ॥

सो ऽर्थात्मा वाच्यः सत्यभूतो वाक्यार्थलक्षण एको ऽखण्डः प्रतिशब्दमवस्थितो बोद्धव्यः। यतो ऽसौ साधारणः सर्व्वेषां वाच्यभूतः स्थितः। अथ तेष्वेव स्थितो ऽसौ नेत्याह "सङ्घिषु चे"ति। साधारणत्वात्समुदायेष्युच्यते तदवयवेष्वपीति। यदि प्रतिशब्दमवस्थितः तत एकपदोपलम्भकाले किमित्यसौ नावगम्यतइत्याह। "संनिधाननिदर्शक" इति। इतरपदसंनिधानं निदर्शकं यस्यासौ तथाभूतः यथोक्तं पुरस्तात् "प्रत्येकं तु समाप्तोर्थः सहभूतेषु वर्त्तत" इति। अतः सकलपदोपलम्भकाले प्रतीयतइति न कश्चिद्दोषः ॥ ४०१ ॥

एतद् दृष्टान्तद्वारेण व्यक्तीकर्त्तुमाह ॥

यथा साधारणे स्वत्वं त्यागस्य च फलन्धने ।
प्रीतिश्चाविकला तद्वत्सम्बन्धो ऽर्थेन तद्वता ॥४०२॥

धने बहूनां साधारणे स्वत्वं स्वस्वामिभाव आत्मीयत्वं वा सर्व्वेषां त्यागस्य च दानलक्षणस्य फलं तदपि सर्व्वेषामस्माकं बहु धनमस्तीति चेतसश्च प्रीतिर्निर्वृतिलक्षणा साप्यविकला साधारणत्वादेव सर्व्वेषां भवति तद्वत्तेनार्थेन समं कृत्वा तद्वतां सङ्घसङ्घिनां सम्बन्धो बोद्धव्यः ॥ ४०२ ॥

इदानीमेतत्प्रसङ्गेन 'सङ्घातस्यैकार्थ्यात्सुबभावो वर्णादि'ष्वेतद् व्याख्यातुमाह ॥

वर्णानामर्थवत्तायां तेनैवार्थेन तद्वति ।
समुदायेन चैकत्वं भेदेन व्यवतिष्ठते ॥ ४०३ ॥

यदा वर्णा अप्यर्थवन्तः समुदायेप्यर्थवत्ता तदा तत्रार्थवत्त्वस्य साधारण्येनैवैकत्वात्समुदायादेवैकत्वप्रतिपादनायैकवचनमुत्पद्यते

न प्रत्येकं वर्णेभ्य इति ॥ ४०३ ॥

एतदेव दृष्टान्तप्रदर्शनपूर्वकं दर्शयितुमाह ॥

**एकेनैव प्रदीपेन सर्वं साधारणं धनम् ।**
**पश्यन्ति तद्वदेकेन सुपा सङ्ख्याऽभिधीयते ॥४०४॥**

सन्तमसे साधारणधनस्वरूपपरिज्ञानं यथैकेनैव प्रदीपेन सम्पद्यते तद्वत्रापि साधारणार्थवत्ताभिव्यक्तये एकेनैव समुदायादुत्पन्नेन सुपा एकत्वलक्षणा सङ्ख्या समुदायावगताभिधीयत इति न पृथक् पृथक्सुबुत्पत्तिः ॥ ४०४ ॥

अत एवं साधारणैवासावर्थवत्ता एकेनैव सुपाऽभिहिता तस्मादसौ वर्णपदयोरपि वाक्ये च भवन्तीति न विशिष्यते न पृथगभिधातुमुपयुज्यतइति बोद्धव्यमित्यभिधातुमाह ॥

**नार्थवत्ता पदे वर्णे वाक्ये चैवं विशिष्यते ॥ ४०४ऽऽ ॥**

ननु पूर्वं वाक्यस्यैवार्थवत्त्वं महता प्रबन्धेन व्यवस्थापितं पदान्यनर्थकान्येवाभिहितानि वर्णानामर्थवत्त्वे कैव कथा । इदानीं वर्णे पदे वाक्ये च समं कृत्वैवार्थवत्त्वोद्घोष्यते इति किमेतदुच्यतइत्याशङ्क्याह ॥

**अभ्यासात्प्रक्रमोऽन्यस्तु विरुद्ध इव दृश्यते ॥ ४०५॥**

इह भिन्नान्यागमदर्शनानि लौकिकैश्चार्वाग्दर्शिभिः तत्राभिनिविष्टैः परस्परं शास्त्राणां पृथक्पृथक् प्रक्रमाः परिपाट्यो दृश्यन्ते विरुद्धा इव परमार्थतस्तत्त्वं सत्यरूपमेकमविरुद्धमेव सर्वत्र स्थितमिति । अतश्च सर्वपार्षदत्वादेतदनुषङ्गात्कथं चिदाश्रितं नैतावता ऽभ्युपेतस्याखण्डपक्षस्य त्याग आयात इति बोद्धव्यम् ॥ ४०५ ॥

इदानीं शब्दस्यार्थाभिधाने स्वव्यापारं विचारयितुकाम आह ॥

**विनियोगादृते शब्दो न स्वार्थस्य प्रकाशकः ।**

अर्थाभिधानसम्बन्धमुक्तिद्वारं प्रचक्षते ॥ ४०६ ॥

इहैक एव शब्दो बह्वर्थः स यदा वक्ता प्रतिनियतएवार्थे विनियुज्यते तदा तमर्थं प्रकाशयतीति दृष्टम् । अतः शब्दस्यार्थप्रतिपादनयोग्यता उक्तिद्वारैवेत्याहुः ॥ ४०६ ॥

अथ किं स्वाभाविकः शब्दार्थसम्बन्धो ऽयेदृशीं दशामुपेतो यदमी शब्दा वक्तृविनियोगमुखप्रेक्षणसम्बन्धाः इत्येवं वादिना भवता विभूषितैव वैयाकरणधुरेत्याशङ्कैतत्समर्थनार्थमाह ॥

यथा प्रणिहितं चक्षुर्दर्शनायोपकल्पते ।

तथा ऽभिसंहितः शब्दो भवत्यर्थस्य वाचकः ॥४०७॥

यथा सहजयैव योग्यतया चक्षुरिन्द्रियमर्थविषयं दर्शनमुपकल्पयद्दृष्टसम्बन्धिप्रणिधानमपेक्षते अन्यथा सर्वदा दर्शनोपजननप्रसङ्गात् । तथैव शब्दः स्वाभाविकेनैव सम्बन्धेनार्थप्रत्यायको ऽप्यभिधातृसम्बन्ध्यभिसन्धान(१)मपेक्षतएव । एतदुक्तं भवति । वाक्यानि स्वव्यापारे प्रतिनियतस्वार्थभाञ्जि भवन्त्यभिधेयार्थं प्रकाशयन्त्यभिधाख्यं स्वव्यापारं पुरस्कृत्यार्थप्रकाशनं कुर्वन्तीति बोद्धव्यं, स चाभिधाख्यो व्यापारः प्रयोक्तृसम्बन्ध्यभिसन्धाननिमित्तक इत्यभिसन्धानत्वेनोपचर्यते । यदाह । तथाभिसंहितः शब्दोर्थस्य वाचको भवतीति । अभिसन्धानमेव ह्यत्र शब्दस्योक्तिलक्षणव्यापारतया ऽतिदिशति । यदा त्वभेदपक्षस्तदा वक्तुरन्तरुल्लसिता प्रतिभैवाभिसन्धिरूपा शब्दमयी भवति । स्पष्ट एवाभिसन्धानोक्त्(२)रभेदनिर्देशः । अतः प्रचारश्चक्षुषोपि व्यापारः प्रणिधानात्मक एव उक्तिः करणविन्यासो न विना शब्दभावनामित्यनुसन्धानकारणकः शब्दस्य स्वव्यापारो ऽभिधानुसन्धानमेव वा शब्दमयीभूतमभिधेति विज्ञेयम् ॥ ४०७ ॥

(१) संबन्धाभिसंधानमिति २ पु० पाठः ।

(२) अभिसंधानोक्त्योरिति २ पु० पाठः ।

ननु चाभिधानमभिधेयं सम्बन्धश्च तयोरित्येतावदेव सुप्रसिद्धं यत्त्वत्र विनियोग उक्तिरभिसन्धानमभिधेत्येवंरूपस्य चतुष्कस्योपयोगः प्रतिपाद्यते तदप्रसिद्धमेवेत्याशङ्क्याह ॥

क्रियाव्यवेतः सम्बन्धो दृष्टः करणकर्मणोः।
अभिधा नियमस्तस्मादभिधानाभिधेययोः ॥ ४०८॥

इह कारकाण्ययःशलाकाकल्पानि परस्परमसम्बद्धान्येव तेषां च यथा क्रियाव्यवधानेन क्रियासमाश्रयणेन सम्बन्धो दृश्यते तथैवाभिधानाभिधेययोर्वाच्यवाचकभावलक्षणः सम्बन्धो ऽभिधाख्येन शब्दव्यापारेण नियम्यते इति नापूर्वमत्राभिहितमिति ॥ ४०८ ॥

एतदेव स्फुटीकर्त्तुमाह ॥

बह्वष्वेकाभिधानेषु सर्वेष्वेकार्थकारिषु।
यत्प्रयोक्ताभिसन्धत्ते शब्दस्तत्रावतिष्ठते ॥ ४०९ ॥

तथा च बहुष्वर्थेषु गवादिषु वस्तुष्वेकाभिधानेष्वेकशब्दप्रतिपाद्येषु शब्देषु(१) च तत्रार्थेषु सजातीयत्वादेकार्थकारिषु सन्निहितेषु सत्सु प्रयोक्ता यत्तत्रार्थरूपमभिसन्धत्ते ऽभिसन्धानेन विनियोगेनाभिधाविषयीकरोति तत्रैवार्थे वाचकत्वेन शब्दो ऽवतिष्ठते नान्यत्रेति स्फुटमेव परिदृष्टम् ॥ ४०९ ॥

प्रकारान्तरेणाप्येतदेव स्फुटयितुमाह ॥

आम्नायशब्दानभ्यासे केचिदाहुरनर्थकान्।
स्वरूपमात्रवृत्तींश्च परेषां प्रतिपादने ॥ ४१० ॥
अभिधानक्रियाभेदादर्थस्य प्रतिपादकात्।
नियोगभेदान्मन्यन्ते तानेवैकत्वदर्शिनः ॥ ४११ ॥

---

(१) सर्वेषु इति २ पु० पाठः।



तथा चाम्नायशब्दा वैदिका अभ्यासवेलायां न कश्चिदप्यर्थमभिदधति तदा ऽनर्थकानेव तानाहुः। यदा तएव स्वरूपग्रहणाय शिष्याणां प्रतिपाद्यन्ते तदा स्वरूपप्रधानास्तइति तत्र तदर्था एवोच्यन्ते। यदा पुनः क्वच विद्याग्ने कर्मणि नियोगभेदेनाभिसन्धानभेदेन तएव विनियुज्यन्ते तदा स्वव्यापारेणाभिधाख्येन तत्तदर्थप्रतिपादकास्तदर्थनिष्ठाः सम्पद्यन्तइति स्फुटमेवाभिधेयव्यतिरिक्तोऽप्यन्यभिधा प्रतिभात्येवेति न तदपन्हव उपपन्नः॥ ४११॥

एवमेकशब्ददर्शने ऽभिसन्धाननिमित्ताभिधालक्षणव्यापारसमाश्रयणेन शब्दस्य तत्तदर्थाभिधानं समुपपादितमिदानीं शब्दे भेदं समाश्रित्यैषां प्रकरणादिभिरेव तत्तदर्थप्रकाशनमुपपादयितुमाह॥

**तेषामत्यन्तनानात्वं नानात्वव्यवहारिणः।**

**अक्षादीनामिव प्राहुरेकजातिसमन्वयात्॥ ४१२॥**

तेषां शब्दानां भेदवादिनो नानात्वमाहुः। केवलमेकजातिसमन्वयस्तेषां सादृश्यरूपो ऽस्ति। उदाहरणमाह "अक्षादीनामिवे"ति यथा ऽक्षादयः शब्दा भिन्ना एव स्थिताः सादृश्यात्त्वभेदेनैव प्रतीयन्तइति॥ ४१२॥

अतश्च किमित्याह॥

**प्रयोगादभिसन्धानमत्यदेषु न विद्यते।**

प्रयोग उच्चारणं तस्मादन्यत्त्वभिसन्धानमुक्तिरभिधा नैव विद्यते कथन्तर्हि नियतमेवार्थमभिदधातीत्याह॥

**विषये यतशक्तित्वात्सतु तत्र व्यवस्थितः॥ ४१३॥**

तत्र तत्र विषये नियतशक्तित्वादिभिन्नशक्तित्वादेव स शब्दस्तत्र तत्र व्यवस्थित इति॥ ४१३॥

तथा भिन्नत्वं सादृश्येपि सत्यर्थप्रकरणादिभिर्निर्गृहीतार्थाभिधा-

नादवगम्यत इत्याह ॥

**नानात्वस्यैव संज्ञानमर्थप्रकरणादिभिः ।**
**न जात्वर्थान्तरे वृत्तिरन्यार्थानां कथं चन ॥४१४ ॥**

युक्तं चैतदन्यथैकत्रार्थान्तरवृत्तित्वं शब्दस्योपलब्धं पुनस्तस्यैवान्यार्थत्वं कथमुपपद्येतेत्यभिधातुमाह "न जात्वि"त्यादि ॥ ४१४ ॥

इदानीं पूर्वोक्तग्रहणाय पुनरखण्डवाक्योपक्रमेण वाक्यवाक्यार्थनिर्णयं संक्षेपेण कर्त्तुमाह ॥

**पदरूपं तु यद्वाक्यमस्तित्वोपनिबन्धनम् ।**
**कामं विमर्शस्तत्रायं न वाक्यावयवे पदे ॥ ४१५ ॥**

योयमत्र विमर्शो विचारः कामं स पदे तदेकपदरूपमेव वाक्यं वाचकं तच्चोपपन्नः। कीदृशं तत्पदरूपं वाक्यमित्याह "अस्तित्वोपनिबन्धनमि"ति अस्तित्वमस्तिक्रिया वाक्यत्वे वाचकत्वे उपनिबन्धनं यस्य। यद्वक्ष्यति "अस्तित्वेनानुषक्तो वे"त्यादि। अथ वा प्रकरणादिनास्तित्वोपनिबन्धनमित्येतच्चोपलक्षणं कदा चिन्निवृत्त्यात्मतया चेति बोद्धव्यम्। तत्रैव विचारो यदुताभिधाव्यापारद्वारकं वाचकत्वं प्रतिनियतशक्तिकृतं चेति न तु वाक्यावयवभूते ऽपोद्धारे परिकल्पिते पद इति तस्यार्थवत्ताविरहादित्यभिप्रायः ॥ ४१५ ॥

तस्मात् स्फोटरूपमखण्डमेव वाक्यं निराकाङ्क्षं वाचकमभ्युपगन्तव्यमिति दृष्टान्तद्वारेणाभिधातुमाह ॥

**यथैवानर्थकैर्वर्णैर्विशिष्टार्थो ऽभिधीयते ।**
**पदैरनर्थकैरेवं विशिष्टार्थो ऽभिधीयते ॥ ४१६ ॥**

यथा लक्ष्यते वर्णैरनर्थकैरभिव्यक्तो विशिष्टार्थः पदरूपः स्फोटात्मा वाचकोभिधीयते एवं पदैरनर्थकैरभिव्यक्त एव विशिष्टार्थः स्फोटात्मा वाचको ऽभिधीयते इति ॥ ४१६ ॥

ननु पदार्थसम्बन्धयस्तत्रोपजायतएव पदानां त्वनर्थत्वे कथं तत्सद्भाव इत्याह ॥

यदन्तराले ज्ञानं तु पदार्थेषूपजायते ।
प्रतिपत्तेरुपायो ऽसौ प्रक्रमानवधारणात् ॥ ४१७ ॥

यदेतत्पदपदार्थज्ञानं विभ्रमरूपमन्तराले वाक्यवाक्यार्थप्रतिपत्तेरेवोपायभूतं बोद्धव्यन्तस्मान्निरंशत्वेपि वाक्यवाक्यार्थयोः प्रक्रमएव प्रथमसमयएव रूपं तयोर्नावधार्यतइति ॥ ४१७ ॥

एवं वाचकाश्रयेणे प्रकारत्रितयमुक्त्वेदानीं वाच्यसमाश्रयणेन तथैव प्रतिपादयितुमाह ॥

पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः ।
संसर्ग एव प्रक्रान्तस्तथा ऽन्येष्वर्थवस्तुषु ॥ ४१८ ॥

अनेन श्लोकेनान्विताभिधानसमाश्रयणेन संसृष्टं वाक्यार्थप्रदर्शनं क्रियते। तथा त्व(१)भिहितान्वयवादिनः पूर्वपूर्वार्थानुगतः(२)संसर्गो वाक्यार्थः । अन्विताभिधानवादिनस्तूत्तरोत्तरपदार्थावगतः प्रथमतरमेव संसृष्ट एव । यदि परमत्र संनिधानं निदर्शकं यस्येतीतिकर्त्तव्यतामात्रस्वरूपावगतावपेक्षमस्तइति बोद्धव्यम् ॥ ४१८ ॥

अङ्गीकृते तु केषां चित्साध्येनार्थेन साधने ।
आधारनियमार्थैव साधनानां पुनः श्रुतिः ॥ ४१९ ॥

यदा केषां चिन्मते तत्र साध्येनार्थेन साध्यार्थनिष्ठेन संसर्गेणेति यावत् । साधनरूपकारलक्षणे ऽङ्गीकृतश्लिष्टे ऽविनाभावितया स्वयमवधृते सति या तत्र वाक्ये साधनानां पुनः श्रुतिः सा नियमार्थैव बोद्धव्या कारकाणां, यदि तत्र परमाधारनियमः क्रियतइति

---

(१) तथा हीति २ पु॰ पाठः ।
(२) पूर्वार्थावगत इति २ पु॰ पाठः ।

बोद्धव्यम् । इन्धनाधारा करणशक्तिः स्थाल्याधारैवाधिकरणशक्तिरेव-मन्यच ॥ ४१८ ॥

तत्र निःसाधना क्रिया न भवतीति साधनमात्रमनियताधार-माश्रितं न त्वाधारसहितमित्याह ॥

आधारनियमाभावात्तदाक्षेपो न विद्यते ।
सामर्थ्यात्सम्भवस्तस्य श्रुतिस्त्वन्यनिवृत्तये ॥ ४२० ॥

साधनानामाधारनियमो नास्ति करणादिशक्तयो हि नियता-धारा इष्यन्तइत्याधाराक्षेपः । तत्र साधनं नास्ति सामर्थ्याद्यदि परं तस्य साधनस्य तत्र सम्भव एवाभ्यूह्यते ततः क्रियाधारा एताः साध-नशक्तयः स्युरिति दण्डेन गामित्यादिका श्रुतिरन्याधारनिवृत्तये तासां पर्यवस्यतीति बोद्धव्यम् ॥ ४२० ॥

अथ क्रियां वाक्यार्थमाश्रित्याह ॥

क्रिया क्रियान्तराद्भिन्ना नियताधारसाधना ।
प्रक्रान्ता प्रतिपत्तॄणां भेदाः सम्बोधहेतवः ॥ ४२१ ॥

क्रियैव विशिष्टा सर्वत्र प्रथमतरमेव वाक्यार्थत्वेन प्रक्रान्ता क्रि-यान्तराद्भिन्नेत्यनेन विशेषकथनम् । एतदेव स्फुटीकर्त्तुमाह "निय-ताधारसाधने"ति । तत्र वाक्ये भेदानां विशेषाणां प्रयोगो ऽसौ स-म्बोधनोपायमात्रमिति बोद्धव्यम् ॥ ४२१ ॥

अथ स्वपक्षानुसारेण वाक्यार्थप्रदर्शनं कर्त्तुमाह ॥

अविभागं तु शब्देभ्यः क्रमवद्भ्यो ऽपदक्रमम् ।
प्रकाशते तदन्येषां वाक्यं वाक्यार्थ एव च(१)॥४२२॥

अक्रम एव निर्विभागः पानकरसादिवत्प्रतिभात्मको वाक्यार्थः स्फोटात्मकं च वाक्यमित्येकयोगक्षेमत्वादेवमुक्तं "वाक्यं वाक्यर्थ एव

(१) एव वेति २ पु० पाठः ।

वे"ति ॥ ४२२ ॥

इदानीमसत्योपाधिः सत्यरूपः शब्दार्थ इति विचारपूर्वकं निद-र्शयितुमाह ॥

**स्वरूपं विद्यते यस्य तस्यात्मा न निरूप्यते ।**
**नास्ति यस्य स्वरूपं तु तस्यैवात्मा निरूप्यते ॥ ४२३ ॥**

यस्य वस्तुनः प्रत्यक्षादिप्रमाणपरिच्छिन्नस्वरूपं(१)विद्यते नीलं पी-तमिति तस्य तावता नात्मा निरूप्यते न व्यवहारगोचरतां नीयते । एतदुक्तं भवति । पदार्थः पृथग्रूपः सन्नपि पङ्गुप्रायो ऽसाविति (२) व्यवहारपदवीं नेतुं वार्यते संसर्गस्य त्वन्वयात्मनः प्रधानस्य तदि-तरोपपत्तेः पदार्थो यावदुपायो द्वारमिति तन्निरूपणमेव साफल्यं भजतइति तस्यैव सत्यत्वं युक्तम् ॥ ४२३ ॥

अथ पदार्थासत्यत्वप्रतिपादनपूर्वकं तदाच्छुरितस्यैव संसर्गस्य वा-क्यार्थत्वं परिघटयितुमुपक्रमते ॥

**अशब्दमपरे ऽर्थस्य रूपनिर्द्धारणं विदुः ।**
**अर्थाविभासरूपा हि शब्देभ्यो जायते स्मृतिः ॥४२४॥**

अर्थस्य रूपनिर्द्धारणस्य स्वरूपपरिच्छेदो ऽशब्द एव, न तत्र शब्द उपायभावमुपयाति । तद्धि निर्विकल्पकैकसमधिगम्यमित्यर्थः । तर्हि शब्दस्य तत्र क्वोपयोग इत्याह "अर्थाविभासे"त्यादि । अर्थप्रतिभास-सदृशायां स्मृतावेव शब्दानामुपयोगः, तेन शब्दस्यार्थेन सह सुदूर-मेव विप्रकर्षस्ततश्च कथं शब्दो ऽर्थमभिदधीतेत्यसत्य एव शब्दार्थः प-र्यवस्यति ॥ ४२४ ॥

अतश्चैतदेव बोद्धव्यमित्याह ॥

---

(१) परिच्छिन्नं स्वरूपमिति २ पु० पाठः ।

(२) नेश्चेति २ पु० पाठः ।

अन्यथैवाग्निसम्बन्धाद्दाहं दग्धो ऽभिमन्यते ।
अन्यथा दाहशब्देन दाहाद्यर्थः प्रतीयते ॥ ४२५ ॥

यदि शब्देन यथावद्बाह्यो ऽर्थः प्रत्याय्येत तदा शब्दसन्निधापितो ऽसौ तामर्थक्रियां कथं न कुर्यात्, यतश्चाग्निसम्बन्धाद्दग्धो दाहमन्यथा ऽनुभवति दाहशब्देन च दाहमन्यथा ऽवगच्छतीति शब्दार्थयोर्नास्ति कश्चिद्वास्तवः समन्वय इति बोद्धव्यम् ॥ ४२५ ॥

तदेवं पदार्थो विपरीतख्यातिरूपो ऽसत्ख्यातिस्वरूपो वा बोद्धव्य इति पदार्थस्यासत्यत्वमभिधाय तदाच्छुरितस्य वाक्यार्थस्य सत्यत्वं प्रतिपादयितुमाह ॥

पृथङ्निविष्टतत्त्वानां पृथगर्थानुपातिनाम् ।
इन्द्रियाणां यथा कार्यमृते देहान्न कल्पते ॥४२६॥

पृथङ्निविष्टं तत्त्वं स्वरूपं पार्थिवत्वादिना भेदेन, अथ वा प्रतिनियतस्थानसमाश्रयणेन निविष्टमभिव्यक्तं तत्त्वं स्वरूपं येषां तानि तथा तेषामिति तथा पृथक् पृथगर्थं(१)शब्दादिलक्षणमनुपतन्ति विषयीकुर्वन्ति तच्छीलास्ते तथा तेषां, यथा सत्यपि पृथक्स्वभावे देहादिना कार्यं प्रातिस्विकं नोपकल्पते, तथैव पदानां केवलानां वाक्यव्यतिरेकेण स्थितानामर्थवत्ताविरहः परिदृश्यतइति ॥ ४२६ ॥

प्रकृतं योजयितुमाह ॥

तथा पदानां सर्वेषां पृथगर्थनिवेशिनाम् ।
वाक्येभ्यः प्रविभक्तानामर्थवत्ता न विद्यते ॥ ४२७॥

वाक्यार्थस्वरूपं प्रतिपादयितुमाह ॥

संसर्गरूपं संसृष्टेष्वर्थवस्तुषु गृह्यते ।

---

(१) पृथगर्थमिति २ पु० पाठः ।

**नात्रोपाख्यायते तत्त्वमपदार्थस्य दर्शनात् ॥ ४२८ ॥**

न पुनरत्र पृथक्पदार्थप्रतिभासावसरे तस्य तत्त्वमुपाख्यायते प्रकटीभवति यस्मात्पदार्थरूपाद्विलक्षणमेव वाक्यार्थस्वरूपं दृश्यतइति ॥ ४२८ ॥

ननु च शशो नास्ति विषाणमस्तीतिवदप्रतीतिकं कथं सर्वमभिधीयते, पदपदार्थप्रतिभासः संवेद्यमानोपि नाभ्युपगम्यते, पदार्थोपहितो वाक्यार्थस्तु सत्यत्वेन निरूप्यतइत्याशङ्क्य सर्व्वोपरि निरूपितमेव व्यवहारगोचरतामुपयाति न स्वरूपेणेति प्रतिपादयितुमाह ॥

**दर्शनस्यापि यत्सत्यं न तथा दर्शनं स्थितम् ।**
**वस्तुसंसर्गरूपेण तद्रूपं निरूप्यते ॥ ४२९ ॥**

इह सर्वोपरि बोध एव पारमार्थिकस्तद्व्यतिरेकेणान्यस्य विचार्यमाणस्यानुपपत्तेः, स च यथा सत्यत्वेन स्वच्छत्वादि(१)रूपतया स्थितो न तथा तद्बोधस्वरूपदर्शनं पदार्थप्रतिभासावसरे स्थितम् । तदवसरे हि वस्तु संसर्गरूपेण नीलपीताद्युपसृष्टतया नीलबोधः पीतबोध इति तद्रूपविरहितमपि निरूप्यते । एवमेतत्संसर्गादिकं वस्तुसंसर्गरूपेण पदार्थोपहितं तथारूपं तद्रूपविरहितमपि निरूप्यतइति किमत्रापराद्धम् । तस्मात्सर्वथा केवलः पदार्थः पदं वा ऽव्यवहार्यमेवातस्तेतदसत्यमित्युच्यते ॥ ४२९ ॥

वाक्यवाक्यार्थौ तु व्यवहार्यत्वात्सत्यभूतावित्यर्थप्रतिपत्तये वाक्यमेव प्रयुज्यतइत्याह ॥

**अस्तित्वेनानुषक्तो वा निष्टत्त्यात्मनि वा स्थितः ।**
**अर्थो ऽभिधीयते यस्मादतो वाक्यं प्रयुज्यते ॥ ४३० ॥**

एतदेव स्फुटयितुमाह ॥

---

(१) स्वरथत्वादीति २ पु० पाठः ।

क्रियानुषङ्गेण विना न पदार्थः प्रतीयते ।
सत्यो वा विपरीतो वा व्यवहारे न सोऽस्त्यतः॥४३१॥

अतो व्यवहारे केवलः पदार्थो नास्त्येवेति बोद्धव्यम् ॥ ४३१ ॥

यद्यप्येकमेव पदं सदित्येतन्निराकाङ्क्षायाः सत्तायाः प्रतिपादकं तथापि तद्भूदस्ति नाभून्नास्ति वेति क्रियापदसम्बन्धमन्तरेण परिसमाप्तार्थं न भवतीति सर्वथा केवलस्य पदमात्रस्य नास्त्यर्थवत्तेति प्रतिपादयितुमाह ॥

सदित्येव तु यद्वाक्यं तद्भूदस्ति नेति वा ।
क्रियाभिधानसम्बन्धमन्तरेण न मन्यते ॥ ४३२ ॥

तत्र च वाक्ये साध्यसाधने परस्परमविनाभाविनी अन्योन्यापेक्षके सर्थयैव(१)व्यवस्थिते । तथा हि । साधनं यथा निष्क्रियं न भवतीत्याकाङ्क्षावशात्क्रियापेक्षकमुच्यते । तथा क्रियापि निःसाधना न भवतीत्याख्यातपदप्रतिपाद्ये क्रियालक्षणे सत्त्वाभिधानेन विना ऽऽकाङ्क्षा न निवर्त्ततइति ॥ ४३२ ॥

तत्र सा क्रिया साधनमाकाङ्क्षत्येवेति प्रतिपादयितुमाह ॥

आख्यातपदवाच्ये ऽर्थे साधनोपनिबन्धने ।
विना सत्त्वाभिधानेन नाकाङ्क्षा विनिवर्त्तते ॥४३३॥

साधनमुपनिबन्धनं यस्याख्यानपदवाच्यस्यार्थस्य तस्मिंस्तथाभूते तस्मात् सत्त्वाभिधानेन विनाकाङ्क्षा न निवर्तते । साधनं हि सत्त्वाभिधायि ततस्तदवतिष्ठते किंकृतस्तत्रगुणप्रधानभावस्तयो, र्यदुच्यते साध्यस्यैव पूर्व्वं प्रविभाग इत्याशङ्क्याह ॥

प्राधान्यात्तु क्रिया पूर्व्वमर्थस्य प्रविभज्यते ।

(१) स्पष्टे एवेति २ पु० पाठः ।

साध्यप्रयुक्तान्यङ्गानि फलं तस्याः प्रयोजकम् ॥ ४३४॥

अर्थस्य वाक्यार्थलक्षणस्याख्यातप्रतिपाद्यस्य क्रियाप्रधानत्वात्क्रियैव प्राधान्यात्पूर्वं प्रविभज्यते न साधनानि, यस्मात्साध्यार्थं साध्यनिष्पत्तये प्रयुक्तानि साधनान्यतो ऽङ्गाप्रधानभूतानि(१)तानीति न तेषां तत्र प्रविभागः। एवं क्रियाप्रयुक्तानि बोद्धव्यानि। प्रसङ्गात् क्रियाया अपि प्रयोजकमाह "फलं तस्याः प्रयोजकमि"ति फलप्रयुक्ता क्रियापीति फलापेक्षया क्रियायाङ्गत्वं बोद्धव्यम् ॥ ४३४ ॥

इदानीं सर्व्वो ऽयं साध्यसाधनव्यवहारः काल्पनिकस्तयोश्च साध्यसाधनयोः परस्परसम्बन्ध आपेक्षिक एव न वास्तव इति प्रतिपादयन्पुनरपि पदार्थासत्यत्वं व्यवस्थापयितुमाह ॥

प्रयोक्तैवाभिसन्धत्ते साध्यसाधनरूपताम् ।
अर्थस्य वाभिसम्बन्धकल्पनां प्रसमीहते ॥ ४३५ ॥

इदं साध्यमिदं साधनं तयोश्चाभिसम्बन्धः सर्वमेतत्काल्पनिकं ततस्तत्त्वशून्यमेव प्रयोक्तृसमीहामात्रजीवितमिति यावत् ॥ ४३५ ॥

यदि हि वास्तवमेतत्स्यात्तदा वस्तुस्वभावस्य ब्रह्मणाप्यन्यथाकर्त्तुमशक्यत्वाद् व्यवस्थितमेवैतन्नवेत्र च तथा परिदृश्यतइति प्रतिपादयितुमाह ॥

पचिक्रिया करोमीति कर्मत्वेनाभिधीयते ।
पक्तिः करणरूपं तु साध्यत्वेन प्रतीयते ॥ ४३६ ॥

देवदत्तः पचतीत्यत्र या पाकक्रिया प्राधान्येनोपलब्धा सैव पचिक्रियां देवदत्तः करोतीत्यत्र कर्मत्वेनैव पक्तिः पाकक्रिया व्यवस्थापिता पचिक्रिया करणं तु प्राधान्येनोन्मज्जद्रूपं प्रतिपादितमिति नैषा वस्तुगतिः, साधनसमुद्देशे च सर्व्वमेतद्वैवक्षिकमिति विस्तरे-

(१) अङ्गान्यप्रधानभूतानीति २ पु० पाठः ।

या प्रदर्शयिष्यति। तथा सम्बन्धस्यापि काल्पनिकत्वमेव वक्ष्यतीति नेह प्रतन्यते ॥ ४३६ ॥

अथ वा अनेकशक्तिरर्थः स्थितोपि यद्यदुपकारवशाद्यथा प्रयोक्तृभिर्विवक्ष्यते तथैवात्मानमुपदर्शयतीत्याह ॥

**यो ऽसौ येनोपकारेण प्रयोक्तृणां विवक्षितः ।**
**अर्थस्य(१)सर्वशक्तित्वात्स तथैव व्यवस्थितः ॥ ४३७ ॥**

तथा चेदमपि ॥ ४३७ ॥

वस्तून्यनेकशक्तिखचितत्वात्सहन्त इति प्रदर्शयितुमाह ॥

**आराद्वृत्तिषु सम्बन्धः कदा चिदभिधीयते ।**
**आश्लिष्टो यो ऽनुपश्लिष्टः स कदा चित्प्रतीयते॥४३८॥**

आराद्वृत्तिष्वतिदूरमपि विप्रकृष्टेषु पदार्थेषु कदा चित्परस्परसम्बन्धः संश्लेषो ऽभिधीयते, कदा चित्तु य आश्लिष्टः सम्बद्धोपि सोनुपश्लिष्टो ऽसम्बद्धो दूरत इति विवक्षावशात्प्रतीयते ॥ ४३८ ॥

रूपान्तरमप्याह ॥

**संसृष्टानां विवेकत्वं(२)संसर्गश्च विवेकिनाम् ।**
**नानात्मकानामेकत्वं नानात्वं च विपर्यये ॥ ४४० ॥**

एकत्वेपि च कल्पनावशान्नानात्वं वस्तूनां दृश्यते राहोः शिर इति यथा, नानात्मकानां च धवखदिरपलाशादीनामेकत्वमेकस्यां बुद्धौ सङ्कलनरूपं दृश्यते वनमिति यथा, विवेकिनां परस्परविलक्षणानां पदार्थानामयःशलाकाकल्पानां संसर्गो वाक्यार्थरूपो दृश्यते यथा देवदत्तः काष्ठैरित्यादौ, संसृष्टानां च विभक्तत्वं यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्यादौ,येषां बुद्ध्या सङ्कलितानां सतां

(१) सर्वस्येति २ पु० पाठः ।
(२) विविक्तत्वमिति २ पु० पाठः ।

पश्चाद्विभागेनावस्थापनं क्रियते ॥ ४४० ॥

तदेतत्कथमुपपद्यतइत्याह ॥

**सर्वात्मकत्वादर्थस्य नैरात्म्याद्वा व्यवस्थितम् ।**
**अत्यन्तयतशक्तित्वाच्छब्द एव निबन्धनम् ॥ ४४१ ॥**

सर्वशक्तिरर्थस्तेन तेन रूपेण निरूपितस्तत्तद्व्यपदेशमात्रं भवतीति नियतशक्तिभिः शब्दैस्तथातथा व्यपदिश्यतइति स्थितम्। अथ वा निरात्मक एवासत्यभूतोसाविति यथा विवक्षया निरूप्यते तथा तथावस्थानमुपदर्शयतीति शब्दैस्तथैव व्यपदिश्यतइति बोद्धव्यम् ॥ ४४१ ॥

इदानीमर्थस्वरूपं शब्दा नैव स्पृशन्ति केवलं तत्र दूरविप्रकर्षेणार्थस्योपलक्षणभावेन स्थिता व्यवहारोपयोगितामुपयान्तीत्यभिधातुमाह ॥

**वस्तूपलक्षणं शब्दो नोपकारस्य वाचकः ।**
**न स्वशक्तिः पदार्थानां संस्प्रष्टुं तेन शक्यते ॥ ४४२ ॥**

शब्दार्थयोर्न वाच्यवाचकभाव उपपद्यते, तथा सति शब्दानामर्थस्वरूपं प्रकाश्यतामुपेयान्न च तथा दृश्यतइत्याह ॥

**सम्बन्धिधर्मो संयोगः स्वशब्देनाभिधीयते ।**
**सम्बन्धः समवायश्च सम्बन्धित्वेन गम्यते ॥ ४४३ ॥**

संयोगशब्दात्संयोगो द्रव्ययोरिति यथावत्परिनिष्टस्वरूपस्तत्र सम्बन्धिस्वभावः प्रतीयते न च तस्य तद्रूपम्, एवं समवायशब्दात्समवायः प्रतीयते इत्याह "सम्बन्धः समवाय" इत्यादि । सम्बन्धित्वेन सम्बन्धस्वरूपविरहेण समवाय इत्यस्मात् प्रतीयते । अथ वा यदा संयोगशब्देनासौ सम्बन्धः स्वतन्त्रो ऽभिधीयते तदा तत्र समवायः सम्बन्धत्वेन गम्यतइति यदा सम्बन्धत्वेन गम्यतइति पाठस्तदैवं योजनीयम् ॥ ४४३ ॥

पदार्थानां स्वतो रूपं न किञ्चिद् व्यवतिष्ठते यथा यथा निरूप्यन्ते तथा तथात्मानमासादयन्तीत्याह ॥

लक्षणाद्व्यवतिष्ठन्ते पदार्था न तु वस्तुतः।
उपकारात्स एवार्थः कथं चिदनुगम्यते ॥ ४४४ ॥

स एवार्थः केन चित्कथं चिदुपयोगादन्यथा व्यपदिश्यते इत्येवमनेकप्रपञ्चैरसत्यभूत एव पदार्थ इति संगृह्य व्यवस्थापितम् ॥ ४४४ ॥

इदानीं वाक्यार्थस्तु सत्यभूत इति प्रतिपादयितुमाह ॥

वाक्यार्थे योऽभिसम्बन्धो न तस्यात्मा क्व चित् स्थितः।
व्यवहारे पदार्थानां तमात्मानं प्रचक्षते ॥ ४४५ ॥

परस्पराभिसम्बन्धस्वरूपः पानकरसादिवदनिर्विभागोऽनंश एव यो वाक्यार्थस्तस्य क्व चित् पृथग्रूपतयात्मा स्थितोऽवधारयितुं न शक्यतइति यावत्। पदार्थानां पुनरयःशलाकाकल्पानां व्यवहारावसरे तमात्मानं जीवितमिव प्रचक्षते तद्वशात्तत्प्रतिपादितपदार्थोद्देशेन सर्वस्य कस्य चित्प्रवृत्तिनिवृत्तिसाफल्यात् स चैकस्मिन् पदार्थे समुदायएव वा परिसमाप्तो बोद्धव्यः ॥ ४४५ ॥

अथ वा नैवासौ क्व चित्परिसमाप्त इदं तदिति पृथग्रूपतयानुपलक्षणात्केवलं पदार्थसम्बन्धिना स्वरूपेणाखण्डस्य वाक्यार्थस्य स्वरूपं प्रतिपद्यतइति प्रतिपादयितुमाह ॥

पदार्थे समुदाये वा समाप्तो नैव वा क्व चित्।
पदार्थरूपभेदेन तस्यात्मा प्रविभज्यते ॥ ४४६ ॥

एतदुक्तं भवति। न पृथगेव गृह्यग्राहिकतया स्वरूपं विवेक्तुं शक्यते परोपाधिद्वारकमेव सर्वदा तस्य निरूपणमवसातव्यमित्युच्यते ॥४४६॥

एतदेव स्फुटीकरणमाह ॥

अन्वाख्यानाय यो भेदः प्रतिपत्तिनिबन्धनम्।

साकाङ्क्षावयवं भेदे तेनान्यदुपवर्ण्यते ॥ ४४७ ॥

तस्यान्वाख्यानाय यो भेदः पदार्थभेदो ऽपोद्ध्रियते स तस्यैव प्रतिपत्तिनिबन्धनं बोद्धव्यः । अतः पदार्थानां भेदे क्रियमाणे सति तेनापोद्धृतेन पदार्थभेदेनान्यदेव पदार्थव्यतिरिक्तं वाक्यार्थस्वरूपमुपवर्ण्यते प्रकटीक्रियते । कीदृशं "साकाङ्क्षावयवमि"ति । भेदे सति साकाङ्क्षा अवयवाः पदार्थस्वरूपाः प्रतिपत्त्युपाया यस्य तत्तथाभूतं तथाभूतस्य च वाक्यार्थस्य नानाशक्तिखचितस्य निर्विभागस्योपाधिकृतः पदार्थद्वारकः प्रविभागो नानारूपत्वमनुगम्यते प्रतीयते ॥ ४४७ ॥

परमार्थस्त्वेक एवासावित्याह ॥

अनेकशक्तेरेकस्य प्रविभागो ऽनुगम्यते ।
एकार्थत्वं हि वाक्यस्य मात्रयापि प्रतीयते ॥ ४४८ ॥

वाक्यस्य स्फोटात्मनो वाचकरूपस्यैकार्थत्वमेक एव निर्विभागस्वरूपो वाच्यार्थो यस्य तत्तथा तस्य भावस्तत्त्वं प्रतीयते कथं "मात्रयापी"ति । यदा तस्य मात्रया नियतसंख्याकेनाल्पीयसा शब्देन योगो ऽभिसम्बन्धो दृश्यते । यथोक्तम् । इग्यण इति योगे स्थान्यादेशभावलक्षणो वाक्यार्थः स संप्रसारणमिति व्यपदिश्यते अतः संप्रसारणमित्येवमेकसंख्येन लघीयस्त्वान्मात्रया व्यपदिश्यते तस्य योगो यदा न परिदृष्टस्तदैतदवगम्यते यदुतानंश एक एवाखण्डस्वरूपोसौ वाक्यार्थो ऽन्यथा सम्प्रसारणमित्यनेनैकसंख्याकेन कथं युज्येत वक्तुम् ॥ ४४८ ॥

तदिदं वाक्यार्थः सत्यरूपः पदार्थस्त्वसत्य एवेति निर्णीतं, स च वाक्यार्थो बौद्ध एवाशब्दीरूप इति प्रतिपादयितुमाह ॥

संप्रत्ययार्थाद्बाह्यो ऽर्थः सन्नसन्वा विभज्यते ।
बाह्यीकृत्य विभागस्तु शक्त्यपोद्धारलक्षणः ॥ ४४९ ॥

सम्प्रत्ययो बुद्धिर्विज्ञानमित्यनर्थान्तरम्। सम्प्रत्ययो ऽर्थो ऽभिधेयरूपो यस्यासौ तथा तथाभूतात्तस्माद्बौद्धाद्वाक्यार्थाद्बाह्यार्थः सम्बन्धीरूपतया विद्यमान एवाथ वा ऽसन्बहिरसत्यभूत एव विभज्यते विभागेनानुगम्यते व्यवस्थाप्यते। कथं कृत्वेत्याह "बाह्यीकृत्वे"ति। अबाह्य एवासौ बाह्यरूपतया प्रथते विवेकानवधारणात् दृश्यविकल्प्यैकीकारेण वाक्यार्थं प्रतिपाद्य पश्चादसौ विभागेनानुगम्यत इति यावत्। विभागस्तत्र कीदृश इत्याह। "शक्त्यपोद्धारलक्षण" इति। शक्तीनां पदार्थसम्बन्धिनीनामपोद्धारः पृथक्करणं लक्षणं यस्यासौ तथा पदार्थशक्तयस्तस्मादपोद्ध्रियन्त इत्यर्थः। अत्र तु बौद्धे वाक्यार्थे समाश्रिते शक्तीनां तत्राविद्यमानत्वात्तस्मादपोद्धारस्तासां(१) कीदृशः स्यात्। ताः पदार्थव्यक्तयो न व्यवस्थिताः। यदि हि तत्र ताः स्युः तदा प्रतीतेऽवगतेऽर्थे स्यादेवार्थक्रियावाप्तिः तस्माद्बौद्धादर्थादन्यत्र बाह्यएवार्थे ताः शक्तयो व्यवस्थितास्ततश्च बौद्धादर्थादन्यत्र बाह्ये ऽर्थे विद्यमानमपि तासां रूपं निराकारेण विज्ञानेनोपलभ्यते तस्माद्विज्ञानाकारस्य बाह्यस्य चार्थस्य शक्तित एकाकारेण विना व्यवहारो नोपपद्यतएवेति बाह्यीकृत्येत्युक्तं, तथा चैकयोगक्षेमत्वाद्बौद्धार्थबाह्यार्थयोर्युक्तो बौद्धेप्यर्थे शक्त्यपोद्धारलक्षणो विभागः। तत्र यदि विज्ञानाकारस्य विकल्पवासनामाहात्म्याद्बाह्येनैकीकृतस्य सत्यतो बहिरर्थो ऽस्ति येनोपजन्यते तदा बाह्य एव शब्दार्थः, न चेदसन्नेव बहिर्बौद्ध एव शब्दार्थ इति निर्णयः॥ ४४८ ॥

अथ वाक्यविचारप्रस्तावे वाक्यानामेकवाक्यत्वं(२)वा मतभेदेन प्रतिपादयितुमाह॥

---

(१) प्रत्ययार्थात्मनियताः शक्तयो न व्यवस्थिताः । अन्यत्र च ततो रूपं न तासामुपलभ्यते । इति श्लोको ऽधिको मूलपुस्तके ।

(२) विभिन्नवाक्यत्वं वेत्यधिकः २ पु० पाठः ।

बह्वष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता ।
तिङन्तेभ्यो निघातस्य पर्युदासस्तथार्थवान् ॥ ४५० ॥

इह वार्त्तिककारेणाख्यातं साव्ययकारकविशेषणं वाक्यमित्यत्रै-कवचनस्य विवक्षितत्वादेकतिङिति वाक्यलक्षणान्तरप्रतिपादना-दनेकाख्यातसद्भावे वाक्यभेद एवेष्यते, सूत्रकारेण त्वतिङ इति प्रति-षेधोपादानसामर्थ्यात्सत्स्वपि बहुषु तिङन्तेष्वर्थस्य साकाङ्क्षत्वात्तत्रै-कवाक्यतैवेष्यतइति प्रदर्शितं बह्वष्वपीत्यनेन ॥ ४५० ॥

वार्त्तिककारमतेन वाक्याभेदस्तत्रैत्युपदर्शयितुमाह ॥

एकतिङ् यस्य वाक्यं तु शास्त्रे नियतलक्षणम् ।
तस्य तिङ्ग्रहणेनार्थो वाक्यभेदान्न विद्यते ॥ ४५१ ॥

नियतलक्षणमिति विवक्षितैकत्वमित्यर्थः ॥ ४५१ ॥

केषांचित्पुनरनेकाख्यातसद्भावेऽपि वाक्यार्थस्य भेदाभेदौ व्यव-स्थितावेवेत्याह ॥

तिङन्तान्तरयुक्तेषु युक्तायुक्तेषु वा पुनः ।
मृगः पश्यत यातीति भेदाभेदौ न तिष्ठतः ॥ ४५२ ॥

इह मृगः पश्यत यातीत्यत्र तिङन्तान्तरसद्भावाद्वाक्यभेद एव, त-था च मृगशब्दस्य यातीत्यस्य च सम्बन्धादेकं वाक्यम् । अनन्तरं वि-भक्तिविपरिणामेन कर्मपदेन प्रत्यवमर्शादेतं मृगं पश्यतेति द्वितीयं वाक्यम् । अन्यस्त्वाह । युक्तायुक्तत्वाद्बहुष्वपि तिङन्तेष्वभेद एव । तथा ह्यत्र मृगशब्देन यातिपदस्य योगः तद्युक्तेन यातिपदेनाख्यातान्तरस्य योगः । तेनात्र मृगकर्तृके सरणे पश्यतेति दृशिक्रियापेक्षया एकमेव वाक्यमिति केचित् । पश्यतेति बहुवचनं वृत्तानुरोधात् । वार्त्तिक-कारस्याप्येकतिङित्यत्रैकतिङ्त्वं प्रधानतिङन्तापेक्षया प्रतिपाद्यमा-नं सूत्रकारमतानुगुण्यं भजतएवेत्यनयोर्नास्ति मतभेदः । तदपरेषां

मतभेद एव बोद्धव्यः ॥ ४५२ ॥

अथ वाक्यपरिसमाप्तिज्ञानपूर्विका नानावाक्यतैकवाक्यता वा ज्ञातुं शक्या नान्यथेत्याशङ्क्य शब्दलक्षणा वाक्यपरिसमाप्तिर्बोद्धव्या नार्थलक्षणेत्यत्र साकाङ्क्षत्वानाकाङ्क्षत्वविचारमाह ॥

**इतिकर्त्तव्यता ऽर्थस्य सामर्थ्याद्यस्य काङ्क्ष्यते।**

**अशब्दलक्षणाकाङ्क्षं समाप्तार्थं तदुच्यते ॥ ४५३ ॥**

अविद्यमाना शब्दलक्षणा शब्दाश्रिता आकाङ्क्षा यस्मिंस्तद्वाक्यं समाप्तार्थमुच्यते। तदवगतस्यार्थस्य तु यत्र सामर्थ्यादर्थतथाभावलक्षणात्तदीयायामितिकर्त्तव्यतायामाकाङ्क्षा जायते, तावता न तत्र तद्वाक्यमपरिसमाप्तमित्युच्यतइति बोद्धव्यं, यथा व्रीहयो बहवो ऽवहन्यन्तामित्यत्र शब्दापेक्षा तावन्नास्त्येव व्रीहीणां त्ववहननमुलूखलमुसलकर्म्मकर्त्रादिसंनिधानमन्तरेण न सम्पद्यतइति तदपेक्षणाद्वाक्यं नात्र परिसमाप्तमिति न युक्तं वक्तुं शब्दलक्षणापेक्षा ऽयोगादिति ॥ ४५३ ॥

एतदेव स्फुटीकर्त्तुमाह ॥

**तत्त्वान्वाख्यानमात्रे तु यावानर्थो ऽनुषज्यते।**

**विनापि तत्प्रयोगेण श्रुतेर्वाक्यं समाप्यते ॥ ४५४ ॥**

व्रीहीणामवहननमात्रमत्रान्वाख्यायते तस्मिंश्च सति उलूखलादिसन्निधानं यदत्रानुषज्यते तस्य प्रयोगेण शब्देन प्रतिपादनेन विनापि तत्र तद्वाक्यं श्रुत्वा शब्दव्यापारेण समाप्तमेवेति बोद्धव्यम् ॥ ४५४ ॥

इदानीमर्थप्रत्यायनाभेदेपि शब्दवृत्तेन गुणप्रधानरूपतया ऽभिधानं शब्देषु सम्भवतीति प्रसङ्गाच्छब्दधर्मप्रतिपादनं कर्त्तुमाह ॥

**चङ्क्रम्यमाणो ऽधीष्वात्र जपंश्चङ्क्रमणं कुरु।**

तादर्थ्यस्याविशेषेपि शब्दाद्भेदः प्रतीयते ॥ ४५५ ॥

चङ्क्रम्यमाणोऽत्र जपं कुरु अथ वा जपंश्चङ्क्रमणं कुर्वित्यत्र उभयथा जपविधिः प्रतीयते, केवलं चङ्क्रम्यमाणो जपेत्यत्र जपः प्राधान्येनाभिधीयते चङ्क्रमणं गुणवृत्त्या, जपंश्चङ्क्रमणं कुर्वित्यत्र तु जपस्य गुणभावः प्राधान्यं तु चङ्क्रमणस्य। अथ चोभयथापि जपयुक्तत्वाच्चङ्क्रमणस्यार्थभेदो न कश्चित्। शब्दप्रतिपादनवैलक्षण्यमात्रमेवावसीयतइति ॥ ४५५ ॥

एवमर्थाभेदेपि शब्दप्रतिपादनवैचित्र्यमुपदर्शितमिदानीं शब्दभेदात्सामर्थ्यादर्थप्रतिपत्तिवैचित्र्यं भवतीत्यत्र शाब्दमपि व्यापारं प्रदर्शयितुमाह ॥

फलवन्तः क्रियाभेदाः क्रियान्तरनिबन्धनाः ।
असंख्याता क्रमोद्दिष्टैरेकाख्यातनिदर्शनाः ॥ ४५६ ॥

यावज्जीवमग्निहोत्रं जुहोति, तथा यजते देवदत्त इत्यादावेकाख्यातनिदर्शनाः एकमाख्यातपदं निदर्शनं वाचकं येषां ते तथाभूताः क्रियाभेदाः प्रतीयन्ते । भेदश्च स्वरूपेण फलेन च भवतीत्याह "फलवन्त" इति फलभेदवन्त इत्यर्थः । स्वर्गकामः कदा चिद्यजते कदा चित्पशुकामः कदा चित्पुत्रकामो धनकामो वेति । फलभेदस्वरूपमाह "क्रियान्तरनिबन्धना" इति । इतिकर्त्तव्यतायां क्रियान्तराणि निबन्धनं येषां ते तथा भूताः । किं च बहुना क्रमेण प्रातिस्विकेनेतिकर्त्तव्यतयानुद्देशेन फलस्वरूपेण च ते संख्यातुमशक्या एव क्रियाभेदास्तेनाख्यातेनैकरूपेणाभिन्नेनैव निदर्श्यन्तइति बोद्धव्यम् ॥ ४५६ ॥

एतदेव स्फुटीकृत्य प्रतिपादयितुमाह ॥

निवृत्तभेदा सर्वैव क्रिया ऽऽख्याते ऽभिधीयते ।
श्रुतेरशक्या भेदानां प्रविभागप्रकल्पना ॥ ४५७ ॥

आख्यातपदे क्रिया सर्वैव निवृत्तभेदा सामान्येनाभिधीयते यस्माच्छ्रुतिमात्राच्छब्दमात्रात्सामान्येन श्रुताद्भेदानां प्रविभागरूपतामसातुमशक्या ॥ ४५७ ॥

उदाहरणमाह ॥

**अश्वमेधेन यक्ष्यन्ते राजानः सत्रमासते।**
**ब्राह्मणा इति नाख्यातरूपाद्भेदः प्रतीयते॥ ४५८॥**

अत्र फलसाधनभेदात् यजिक्रियायाः सत्यपि भेदे नैवाख्यातशब्दात्तत्प्रतीतिरस्य,र्थसामर्थ्यात्तु भेदस्तस्या अवगम्यते इति नाना शब्दधर्म्माः ॥ ४५८ ॥

वैदिकमप्युदाहरणमाह ॥

**सकृच्छ्रुता सप्तदशस्वनावृत्तापि या क्रिया।**
**प्राजापत्येषु सामर्थ्यात्सा भेदं प्रतिपद्यते ॥ ४५९ ॥**

सप्तदश प्राजापत्याननेकवर्णानजांस्तूपरानालभेतेत्यत्रानावृत्तसाध्यालम्भनक्रिया सकृच्छ्रुता शब्देनानावृत्तेनैकेनावगतोत्तरकालं त्वालभ्यभेदाद्भेदेनावतिष्ठतइति बोद्धव्यम् ॥ ४५९ ॥

यस्माच्चाख्यातान्तर्गतो धातुर्निवृत्तभेदाया एव क्रियायाः प्रतिपादकस्तस्माद्भेदासम्भवाद्यथासंख्येन सम्बन्धानुपपत्तेर्भुजिक्रिया देवदत्तादिषु प्रत्येकमवतिष्ठतइत्याह ॥

**देवदत्तादिषु भुजिः प्रत्येकमवतिष्ठते।**
**प्रतिस्वतन्त्रं वाक्यं वा भेदो न प्रविभज्यते ॥ ४६० ॥**

देवदत्तादिकर्तृका भुजिर्वाक्यार्थरूपा ऽत्र प्रत्येकमवतिष्ठतइत्यर्थसमाप्तिदर्शनं शब्दस्य समाप्तिमप्युपदर्शयितुमुक्तं “प्रतिस्वतन्त्रमि”-त्यादि। वाक्यमेवात्र प्रत्येकं देवदत्तादिषु भेदेनावतिष्ठतइति बोद्धव्यम् ॥ ४६० ॥

ननु देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यभेदरूपमेव वाक्यं प्रयुक्तमतः कथमस्माद्भेदेनावसायः स्यादित्याह ॥

उच्चारणे तु वाक्यानामन्यद्रूपं निगृह्यते ।
प्रतिपत्तौ तु भिन्नानामन्यद्रूपं प्रतीयते ॥ ४६१ ॥

शब्दानामन्यथोच्चारणसमये स्वरूपप्रवृत्तिः प्रतिपत्त्यवसरे त्वन्यथैव स्वरूपावसाय इति सत्यप्याख्यातस्याभेदे ऽर्थपर्यालोचनेनात्र प्रत्येकं समाप्तिर्वाक्यवाक्यार्थयो· पर्यवस्यतीत्युच्यते ॥ ४६१ ॥

शास्त्रविषयमप्येतदेव प्रदर्शयितुमाह ॥

एकं ग्रहणकं वाक्यं सामान्येनाभिधीयते ।
कर्त्तरीति यथा तच्च पश्वादिषु विभज्यते ॥ ४६२ ॥

शास्त्रेपि च कर्त्तरि कृदित्येकं प्रत्ययार्थप्रतिपादकं सामान्येन ग्रहणकवाक्यमुपादीयते, तच्च प्रत्येकं प्रत्ययार्थोपाधिषु पश्वादिषु विभिन्नेषु विषयेषु विभागेन सम्बन्धमुपनीयाभिमतलक्ष्यनिष्पत्तये व्यापार्यतइति प्रत्येकमेव तत्परिसमाप्यते ॥ ४६२ ॥

यदि पुनः संयुक्तविधिनोपादीयेत तदा ऽभिमतसिद्धये न स्यादित्याह ॥

अथाकाङ्क्षा निवर्त्तेत तद्गतस्य सकृच्छ्रुतौ ।
नैवान्येनाभिसम्बन्धं तदुपेयात्कथञ्चन ॥ ४६३ ॥

यदि सकृदेव प्रत्ययविधायकेनैव सहैवोपादायार्थपरिसमाप्तिराकाङ्क्षा निवार्येत तदा तद्योगेन तत्रैव परिक्षीणशक्तित्वाद्ग्रहणकवाक्यताविरहादन्येन प्रत्ययविधायकेन सम्बन्धेनैवोपेयादित्यभिमतलक्ष्यानिष्पत्तिरेव ॥ ४६३ ॥

तस्माद्यदेतदुपनिबन्धनभूतं सामान्येनासंयुक्तं विधिनैवोपात्तं सकृद्ग्रहणकवाक्यं सविभागवाक्यानामवान्तरवाक्यानां योनिः कारणं

बोद्धव्यमित्याह॥

एकरूपमनेकार्थं
तस्मादुपनिबन्धनम्।
योनिर्विभागवाक्यानां
तेभ्यो ऽनन्यदिव स्थितम्॥ ४६४॥

अनेके ऽर्थाः प्रत्याय्या यस्य तत्तथा अवान्तरवाक्यान्युपनिबध्यन्ते ऽस्मिन्नित्युपनिबन्धनम्। अथ तेभ्यो ऽनन्यदिवाभिन्नमिव स्थितम्। अथ च प्रत्येकं भेदेन सम्बन्धमुपगत्य यथावन्नत्यसिद्धये विभवतीति॥ ४६४॥

अथाख्याते धातुवाच्या ऽसत्त्वभूता पूर्व्वापरीभूतावयवा साध्यमानावस्था क्षणप्रचयात्मिका या क्रिया तस्याः कीदृशो जातिव्यक्तिव्यवहारः समाश्रीयतइत्याह॥

क्व चित्क्रिया व्यक्तिभागैरुपकारे प्रवर्त्तते।
सामान्यभाग एवास्याः क्व चिदर्थस्य साधकः॥४६५॥

"क्व चिदि"ति बाधविकल्पसमुच्चयातिशयप्रशंसादौ विषये क्रिया व्यक्तिभागैः समीहितार्थसिद्धौ प्रवर्त्तते जातिसमाश्रयेण विकल्पसमुच्चयाद्यनुपपत्तेः। न हि देवदत्तः पचति यज्ञदत्तः पचतीत्यादौ जातेः समुच्चयादिरुपपद्यते। क्व चित्तु यजते पचतइत्यादौ देशकालसाधनादेरेकव्यक्तिव्यवहारो वास्तवः स्यादिति संवृत्त्या लोकव्यवहारसिद्धये तत्र क्व चित्क्रियापरामर्शात्सामान्यभाग एव वाक्यार्थमुपकरोति॥ ४६५॥

इहापि जातिभागमेव क्रियासम्बन्धिनं शब्दाः प्रत्याययन्तीत्याह॥

कालभिन्नाश्च भेदा ये

ये चाप्युष्ट्रासिकादिषु ।
प्रक्रमे जातिभागस्य
शब्दात्मा तैर्न भिद्यते ॥ ४६६ ॥

ये क्रियाभेदाः क्रियाविशेषाः कालभिन्नाः पचत्यपाक्षीत्पक्ष्यतीत्येवमादयो ये चाप्युष्ट्रासिकादिषु विषये साधनभिन्ना उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इत्यादौ तेषु क्रियासम्बन्धतो जातिभागस्य प्रक्रमे सामान्येनैवापर्यालोचितदेशकालसाधनतया प्रक्रमे च शब्दात् शब्दस्वरूपं न भिद्यते साधनसम्बन्धकृतस्तत्र भेदो न प्रथतइति यावत् ॥ ४६६ ॥

तदेवं "देवदत्तादिषु भुजिः प्रत्येकमवतिष्ठत"इत्यादिना शब्दलक्षणभेदमाश्रित्यैका क्रिया ऽनेकैः साधनैः प्रत्येकमर्थं समास्या वाक्यसम्बन्धमुपयातीति प्रदर्शितम्। इदानीं यत्र विजातीया विभिन्नपदवाच्या क्रिया एकशब्दवाच्यानि च साधनानि तत्र कथं भिन्नाभिः क्रियाभिः तेषां साधनानां सम्बन्धः स्यादित्याशङ्क्य तत्रापि प्रतिपत्तिकालसमाश्रयणेन भिन्नान्येव साधनान्यवगतानीति तथैवैताः क्रियास्तैर्भिन्नैरेव साधनैः प्रत्येकमर्थसमास्या वाक्यसम्बन्धमुपयान्तीति प्रतिपादयितुमाह ॥

एकसङ्ख्येषु भेदेषु भिन्ना जात्यादिभिः क्रियाः ।
भेदेन विनियुज्यन्ते तच्छब्दस्य सकृच्छ्रुतौ ॥ ४६७ ॥

समानसंख्येषु भेदेषु साधनविशेषेषु तेषु । "जात्यादिभिरि"ति । जात्या आदिग्रहणादितिकर्त्तव्यतादिभिश्च याः क्रिया भिन्ना असम्बद्धा उपात्तास्ताः साधनाभिधायिनः शब्दस्य सकृदभेदेन श्रुतावपि प्रतिपत्तिभेदसमाश्रयणेन भेदेनैव विनियुज्यन्ते सम्बन्धमुपगच्छन्तीति बोद्धव्यम् ॥ ४६७ ॥

उदाहरणमाह ॥

अक्षादिषु यथा भिन्ना भञ्जिभज्यादिविक्रियाः।
प्रयोगकालाभेदेऽपि प्रतिभेदं पृथक् स्थिताः॥ ४६८॥

अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामिति या भिन्नजातिका भिन्नशब्दवाच्याश्च क्रिया यास्ता वाक्यभेदोपादानरहिता अपि प्रत्येकं समाप्त्या भेदेनैव स्थिता इति। यस्मादन्यसाधनानि तत्र निबद्धानि भेदेनैवोपात्तानीति प्रतिपत्तिवेलायां भेदेनैव क्रिया यथास्वं सम्बन्धमुपयान्तीति ॥ ४६८ ॥

तन्त्रन्यायप्रतिपादनपूर्वकमभिधातुमाह ॥

अक्षाणां तन्त्रिणां तन्त्र-
मुपायास्तुल्यरूपता।
एषां क्रमो विभक्तानां
तन्त्रिबद्धा सकृच्छ्रुतिः॥ ४६९ ॥

तुल्यरूपतेत्यनेन तन्त्रं व्याचष्टे। युक्तं चैतत्। यस्माच्छब्दाः क्रमेण विभागेनैव कदा चित्प्रयुज्यन्ते कदा चित्तन्त्रन्यायसमाश्रयणेन युगपदेवेति शब्दानां प्रयोगवेलायां क्रमयौगपद्ये उपायस्तदत्र तन्त्रेण युगपदेव भिन्नाः प्रयुक्ता अक्षा इति क्रियाभेदेनैवैषां सम्बन्धं गच्छन्ति ॥ ४६९ ॥

अथ क्रमयौगपद्यस्वरूपमत्रोद्दिश्य व्याख्यातुमाह ॥

द्वावप्युपायौ शब्दानां
प्रयोगे समवस्थितौ।
क्रमो वा यौगपद्यं वा
यौ लोको नातिवर्त्तते ॥ ४७० ॥

तत्र ।

क्रमे विभिद्यते रूपं यौगपद्ये न भिद्यते॥ ४७०ऽऽ॥

रूपविभागेनैव क्रमः साधारण्येन यौगपद्यं तत्र भिन्ना क्रिया यौगपद्येपि शब्दानां प्रयोगे क्रमरूपमेवानुपततीत्यर्थतथाभावात्क्रमरूपानुपातिन्येव बोद्धव्येति प्रतिपादयितुमाह ॥

क्रिया तु यौगपद्येपि क्रमरूपानुपातिनी ॥ ४७१ ॥

तथा च शकटाक्षस्यैव भञ्जनं न बिभीतकदेवनाक्षयोः, तथा बिभीतकाक्षस्यैव भक्षणं नेतरयोः, देवनाक्षस्यैव देवनं न पूर्वयो,रित्यर्थतथाभावाद्यौगपद्येपि क्रमानुपातिन्येवासाविति । ततश्च ते क्रमयौगपद्ये भेदसंसर्गशक्तिरूपे शब्दव्यापाररूपे अपि शब्देभ्यो भिन्ने इव व्यतिरिक्ते इव स्थिते लक्ष्येते ॥ ४७१ ॥

परमार्थतस्तु शब्दशक्ती एव क्रमयौगपद्ये इत्यभिधातुमाह ॥

भेदसंसर्गशक्ती द्वे शब्दाद्भिन्ने इव स्थिते ॥ ४७१ऽऽ॥

किन्तर्हि शब्दस्यैवेते द्वे शक्ती, यद्भेदशक्त्या क्रमेणावभाति, संसर्गशक्त्या तु युगपदि,ति । नन्वेवं भेदप्रयोगे ऽनेकेन क्रियापदेन सम्बन्धाद्भियतएव साधारण्याद्यौगपद्यक्रमस्वरूपयोर्भेदात्कथं युगपत्प्रयोगे क्रमरूपानुपातित्वमेव क्रियायाः श्रुतेरुक्तमित्याह ॥

यौगपद्ये ऽप्यनेकेन प्रयोगे भिद्यते श्रुतिः॥ ४७२॥

यौगपद्येपि साधनस्य प्रयोगे भेदेन क्रियापदसम्बन्धाद्भिद्यतएव साधारणी श्रुतिरिति, तस्मै हि सा भिन्नैवोपात्तेत्यर्थः ॥ ४७२ ॥

अथ वा अक्षा इत्यत्रोद्भूतावयवभेदः समुदाय एव प्रतिनिर्दिश्यते तत्रावयवधर्मेण समुदायो व्यपदिश्यते इत्येवं भेदमुपपाद्य यथायोगं प्रत्येकमर्थसमाप्त्या वा क्रियाणां भिन्नानां विनियोगः क्रियतइत्याह ॥

अभिन्नो भेदरूपेण यएको ऽर्थो विवक्षितः ॥

**तत्रावयवधर्मेण समुदायो ऽनुगृह्यते ॥ ४७३ ॥**

अभिन्नः समुदायस्वरूपः भेदरूपेणोद्भूतावयवभेदतया यो ऽर्थो विवक्षितस्तत्रावयवधर्मेण भेदेन क्रमेणेति यावत्समुदायो ऽनुगृह्यते उ पोद्बलीक्रियतइति भेदप्रतिपत्तौ भेदेनैव क्रियाणां सम्बन्धः । अतश्चा- स्य समुदायस्य भेदप्रतिपादने प्रत्येकं वाक्यार्थः परिसमाप्यते ॥४७३॥

अथ वा वचनभिन्न एकशब्द एवाक्षो भुज्यतां अक्षो दीव्यतामि- त्येवमवान्तरवाक्योपप्लाविनी साधनश्रुतिर्भेदेनैवावतिष्ठतइत्याह ॥

**भेदनिर्वचने त्वस्य प्रत्येकं वा समाप्यते ॥**
**श्रुतिर्वचनभिन्ना वा वाक्यभेदे ऽवतिष्ठते ॥ ४७४ ॥**

शब्दपरिसमाप्तेर्भेदप्रकारमाह ॥

**तत्रैकवचनान्तो वा सो ऽक्षशब्दः प्रयुज्यते ॥४७४ऽऽ॥**

एकस्माद्वाक्याद्वाक्यभेदेन सम्बन्धिनि व्यवक्रियमाणे सत्यक्षो भज्य- तामित्याद्येकवचमस्यैवाक्षशब्दस्य प्रयोगः कदा चित् । अथ वा यथा- श्रुतिप्रत्येकं बहुवचनान्तेनैव वाक्यभेद इत्याह ॥

**प्रत्येकं वा बहुत्वेन प्रविभागो यथाश्रुति ॥ ४७५ ॥**

अक्षा भज्यन्तामित्यादिकः प्रविभागः श्रुत्यनतिक्रमेणैव वाक्यानां करणीयः ॥ ४७५ ॥

इदानीमभेदवादिनामपि मते द्विष्ठानां वाक्यानां शक्तिभेदेनैव विभागमभिधातुमाह ॥

**द्विष्ठानि यानि वाक्यानि तेष्वप्येकत्वदर्शिनाम् ॥**
**अनेकशक्तेरेकस्य स्वशक्तिः प्रविभज्यते ॥ ४७६ ॥**

द्वयोरर्थयोस्तिष्ठन्तीति द्विष्ठानि शास्त्रीयाणि लौकिकानि च या- नि वाक्यानि तेष्वपि शब्दैकत्वदर्शिनां मते एकस्यैव तस्य प्रतिपादक-

स्य शब्दस्यानेकशक्तेरसौ स्वशक्तिरेव प्रविभज्यते । यथा 'इग्यणः सम्प्रसारणं' द्विर्वचने ऽचि 'तद्धरति वहत्यावहति भाराद्वंशादिभ्यः' तदस्य ब्रह्मचर्यमि'त्यादीनि शास्त्रीयाणि । तथा श्वेतो धावति अलम्बुसानां यातेत्यादीनि लौकिकानि वाक्यानि । तेष्वप्यर्थद्वयप्रतिपादनाय शक्तिर्विभज्यतइति शक्तितन्त्रप्रतिपादनम् ॥ ४७६ ॥

भेददर्शिनां पुनर्मते भिन्नावेव शब्दौ तन्त्रेणोपात्ताविति शब्दतन्त्रं प्रतिपादयितुमाह ॥

अत्यन्तभिन्नयोर्वा स्यात्प्रयोगस्तन्त्रलक्षणः ।
उपायस्तत्र संसर्गः प्रतिपत्तृषु भिद्यते ॥ ४७७ ॥

तत्रैवं तन्त्रेण द्व्यर्थे तस्मिन्प्रयोगे प्रतिपत्तृयोगे प्रतिपत्त्रनुसारेणोभयात्मासौ संसर्गो वाक्याभिधेयलक्षणो भिद्यते । यथा यणस्थानिकस्येग्लक्षणस्य वर्णस्य का संज्ञा स्यादित्येकेन पृष्टं, तदपरेण यणि कीदृशः स्थान्यादेशभावलक्षणः सम्बन्धः स किंसंज्ञ इति, लाघवादाचार्यस्तन्त्रन्यायसमाश्रयणात्सम्प्रसारणमित्येकेनैव शब्देनोत्तरमाह । तथैकेन पृष्टं किंजातीयो धावतीत्य,परेण किंवर्णो धावत्य,नयोर्लाघवात्प्रतिवक्ति श्वेतो धावतीति । तत्रासौ वाक्यार्थः प्रतिपत्तृषु भिद्यते येन पृष्टं किंजातीयस्तस्य श्वा इतो धावतीत्येवंरूपतया व्यवतिष्ठते । येन च किंवर्ण इत्युक्तं तस्य श्वेतगुणयुक्तो धावतीत्यर्थरूपो ऽसौ जायते इति तन्त्रनिबन्धना द्विधात्रार्थव्यक्तिरुपजायतइति । एवमन्यत्र व्याख्येयम् ॥ ४७७ ॥

एतदेव व्याख्यातुमाह ॥

भेदेनावगतौ पूर्व्वं शब्दौ तुल्यश्रुती पुनः ।
तन्त्रेण प्रतिपत्तारः प्रयोक्त्रा प्रतिपादिताः ॥ ४७८ ॥

पूर्वं यौ शब्दौ भेदेन रूपवैलक्षण्येनाधिगतौ श्वा इतः श्वेत इति

तावेव तुल्यश्रुती भिन्नावेव तन्त्रेण प्रतिपत्तारः यत्नासङ्गन्यायसमाश्रयणेनात्र प्रयोक्त्रा प्रतिपादिताः प्रतिबोधिताः ॥ ४७८ ॥

इदानीमत्र वक्तुरेकस्यैव शब्दस्य प्रतिपादने विवक्षोपजायते तस्यां सत्यामपरो ऽनुनिष्पद्यतइति शब्दभेदमते प्रकारान्तरेण तन्त्रमुपपादयितुमाह ॥

**एकस्यापि विवक्षायामनुनिष्पद्यते परः ॥ ४७८ऽऽ ॥**

वक्तुरिच्छाविरहादपि साधारणत्वादपरस्य निष्पत्तिस्ततोर्थद्वयप्रतिपत्तिः अभेदवादिनामपि मते तन्त्रस्य प्रकारान्तरमाह ॥

**विना ऽभिसंधिना शब्दः शक्तिरूपः प्रकाशते॥४७९॥**

प्रयोक्त्रभिसन्धानमन्तरेण तथासौ शब्दः साधारणत्वाच्छक्तिद्वययुक्तः प्रकाशते । एतदुक्तं भवति । शुक्लजातीयप्रत्यायनशक्तिः प्राणिविशेषप्रत्यायनशक्तिर्वा श्वेतशब्दस्तत्रोदीरितः स तत्रैकमर्थं प्रत्याययंस्तन्त्रेण सामर्थ्यादर्थान्तरप्रकाशनं करोत्येव ॥ ४७९ ॥

अथ वा तुल्यकक्षतया शक्तिद्वययोगाद्युगपदेव अर्थद्वयप्रकाशनं करोतीति शक्तितन्त्रतामाश्रित्याह ॥

**अनेकशक्तिरेकस्य युगपच्छ्रूयते क्व चित् ।**
**अग्निः प्रकाशदाहाभ्यामेकत्रापि नियुज्यते ॥ ४८० ॥**

एकस्यैव शब्दस्य क्व चित् श्वेतो धावतीत्यादौ विषये युगपदेवार्थद्वयप्रत्यायनसमर्थं शक्तिद्वयमाश्रीयते यथा क्व चिदवसरे दाहप्रकाशाभ्यां युक्तोग्निरेकत्रापि प्रकाशे दाहे वा नियुज्यते उपयोगवशाद्धर्मद्वयायाप्युपादीयतइत्यर्थः । तथैवानेकशक्तियोगाद्युगपदर्थद्वयप्रकाशनाय शब्दः समाश्रीयतइति ॥ ४८० ॥

इदानीं शास्त्रविषयमप्येतदुपदर्शयितुमाह ॥

**आवृत्तिशक्तिभिन्नार्थे वाक्ये सकृदपि श्रुते ।**

लिङ्गाद्वा तन्त्रधर्माद्वा विभागेनावतिष्ठते ॥ ४८१ ॥

इग्यणः सम्प्रसारणमित्येतस्मिन्वाक्ये सकृदपि श्रुते कीदृशे शब्द-भेदवादिनां मते आवृत्तिभिन्नार्थे एकत्ववादिनां मते शक्तिभ्यां भिन्नार्थे । तत्र हि शक्तिभेदादर्थभेदः अनन्तरं तद्वाक्यं प्रतिपत्तिशब्दभेदमते लिङ्गात् ज्ञापकाद्विभागेनावतिष्ठते वर्णवाक्यार्थप्रत्यायकतया ऽवतिष्ठतइत्यर्थः । यस्मात्सम्प्रसारणस्येति भूतविभक्तिनिर्देशं पश्यति ततो ऽवस्यति वर्णः संज्ञीति वसोः सम्प्रसारणमित्यादौ भाविविभक्तिनिर्देशाद्वाक्यार्थस्यापि संज्ञित्वमवस्यतीत्यावृत्तिमेव शब्दभेदवाद्यनुमिनोति । अभेदवादी तु शक्तिभेदं तन्त्रधर्माच्छक्तितन्त्रलक्षणादनुमिनोतीत्यत्र सम्प्रसारणशब्दः शक्तिद्वयवशाद्युगपद्वर्णवाक्यलक्षणस्यार्थद्वयस्यापि प्रतिपादनं करोत्येव ॥ ४८१ ॥

संप्रसारणसंज्ञायां लिङ्गाभ्यां वर्णवाक्ययोः ।
प्रविभागस्तत्र सूत्रे एकस्मिन्नेव कल्पते ॥ ४८२ ॥

लिङ्गाभ्यामुपदर्शिताभ्यां भाविभूतविभक्तिनिर्देशलक्षणाभ्यां तत्र एकस्मिन्नेव सूत्रे वर्णवाक्यार्थयोः संज्ञिनोः प्रयोगो लभ्यतइति । उक्तं च'विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्ये'ति । तन्त्रं चेदमेकशेषसमानफलं भाष्ये प्रदेशेषूपन्यस्तमिति ॥ ४८२ ॥

भाष्यकाराभ्युपगमेनार्थतन्त्रसिद्धिमुपपादयितुमाह ॥

तथा द्विर्वचने ऽचीति तन्त्रोपायादिलक्षणः ।
एकशेषेण निर्देशो भाष्ये एवोपवर्णितः ॥ ४८३ ॥

इह द्विर्वचने ऽचीत्यत्र द्विर्वचननिमित्तेचि यो ऽजादेशः स द्विर्वचनएव कर्तव्ये स्थानिवदिति सूत्रार्थो व्याख्यायते तत्रोक्तं यत्पुनर्द्वितीयं द्विवचनग्रहणं कर्त्तव्यं न कर्त्तव्यमित्याह 'एकशेषनिर्देशात्सिद्धमि'ति । यद्येकशेषस्तदा द्विर्वचनं प्राप्नोतीत्यत एकशेषसमानफल-

साधारणलक्षणं तन्त्रमेवानेकशेषशब्देनोक्तं तेन तन्त्रोपायहेतोर्लक्षणएवैकशेषनिर्देशः प्रदर्शितः । तस्मादेकशेषमन्तरेणापि तन्त्रन्यायसमाश्रयणाद्विर्वचने ऽचीत्यत्रार्थसङ्गतेरेकशेषसमानफलं शास्त्रप्रवृत्त्युपायभूतं तन्त्रमभ्युपगतं भाष्यइति सिद्धम् ॥ ४८३ ॥

अथ महाभाष्यस्यावतारान्वाख्यानपूर्वकं टीकाकारो महत्तामुपवर्णयन् स्वरचितस्य ग्रन्थस्य गुरुपूर्वक्रममभिधातुमाह ॥

**प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान् ।**
**संप्राप्य वैयाकरणान् संग्रहे ऽस्तमुपागते ॥ ४८४ ॥**

इह पुरा पाणिनीये ऽस्मिन् व्याकरणे व्याड्युपरचितं ग्रन्थलक्षपरिमाणं संग्रहाभिधानं निबन्धनमासीत् । तच्च कालवशात्सुकुमारबुद्धीन् वैयाकरणान् प्राप्यास्तमुपागतम् । तस्मात् क्लेशभीरुत्वात्संक्षेपरुचयस्ते जनाः । अत एवाल्पो विद्यासु परिग्रहः स्वीकारो येषां ते तथा । ततस्तैः संग्रहाध्ययनउपेक्षिते सत्यस्तं यातः संग्रहः ॥४८४॥

साधुत्वज्ञानौपयिकतया धर्मसाधनत्वेनोपजातोपयोगाय व्याकरणस्मृतेरविच्छेदाय करुणाप्रयुक्तेनाथ भगवता पतञ्जलिना वार्त्तिकव्याख्यानपुरःसरं महाभाष्यनिबन्धनमुपरचितमित्यभिधातुमाह ॥

**कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।**
**सर्व्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥ ४८५ ॥**

गुरुणेति भाष्यकर्त्तुः पूजापदे । तीर्थान्यागमविशेषाः । तान्पश्यति विजानातीति तीर्थदर्शी । अनेन गुरुत्वनिबन्धनः प्रभावातिशयो भगवत उक्तः । तच्च भाष्यं न केवलं व्याकरणस्य निबन्धनं यावत्सर्वेषां न्यायबीजानां बोद्धव्यमित्यत एव सर्वन्यायबीजहेतुत्वादेव महच्छब्देन विशेष्य महाभाष्यमित्युच्यते लोके ॥ ४८५ ॥

अथ महत्त्वमेव विशेषणद्वारेणास्योपपादयितुमाह ॥

**अलब्धगाधे गाम्भीर्यादुत्तानइव सौष्ठवात् ॥४८५॥**

गाधो निष्ठापरिच्छेद इयत्तेति यावत् । असावलब्धो यस्य । क-स्मादित्याह । "गाम्भीर्यादि"ति । गाम्भीर्यं गहनता प्रमेयबाहुल्येन दुरवगाहत्वम् । अतिगम्भीरं हि भाष्यमुपरचितं भगवता पतञ्जलिने-ति न तस्याभिधेयं व्यवच्छेत्तुं केन चिच्छक्यतइति । किमेवमेकान्तं गहनमिदं भाष्यं नेत्याह । "उत्तानइवे"त्यादि । उत्तानं स्पष्टं सौष्ठवं परिपाटी यस्मादेतद्भाष्यं परिपाटिलक्षणादत्र सौष्ठवादुत्तानं स्पष्टप्रायं यत एव प्रतिभाति । अतो नेदमसेव्यं सज्जनमानसमिव निसर्गसुकु-मारमतिगम्भीरं चैतदत एव महाभाष्यमित्युच्यतइत्यर्थः । एतेन सं-ग्रहानुसारेण भगवता पतञ्जलिना संग्रहसंक्षेपभूतमेव प्रायशो भा-ष्यमुपनिबद्धमित्युक्तं वेदितव्यम् । तदेवं ब्रह्मकाण्डे "कायवाग्बुद्धि-विषया ये मला" इत्यादिश्लोकेन भाष्यकारप्रशंसोक्ता इह चैवं भाष्य-प्रशंसेति शास्त्रस्य शास्त्रकर्त्तुश्च टीकाकृता महत्त्वोपवर्णिता । अत एवेदं महाभाष्यमकृतबुद्धयो नैव बोद्धुमलमित्याह ॥

**तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः ॥ ४८६ ॥**

कृता व्युत्पत्त्या प्रकर्षं प्राप्ता महती बुद्धिर्येषां ते तथा तद्रूपवैक-ल्येनाकृतबुद्धयः स्वल्पप्रज्ञा उच्यन्ते । तेषां निश्चयो निर्णयपर्यन्तो बो-धो नैवात्रावास्थित न प्रतिष्ठामलभत । न तेनास्मद्गुरोरत्रभवतो वसुरातादन्यः कश्चिदिमं भाष्यार्णवमवगाहितुमलमित्युक्तं भवति ॥ ४८६ ॥

तथा च संग्रहप्रतिपक्षभूतैराचार्यैस्तर्कविद्यामात्रवेदिभिर्बुद्ध्यपा-टवादिदमाप्लावितमाभासीकृतमित्याह ॥

**बैजिसौभवहर्य्यक्षैः शुष्कतर्कानुसारिभिः ।**

आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके ॥ ४८८ ॥

शुष्कतर्कः केवल एवान्यशास्त्रपरिमलरहितो भण्यते । तमेवानुसरन्ति प्रमेयनिर्णयायेति तदनुसारिणः । महाभाष्यं हि बहुविधविद्यावादबलमार्षं व्यवस्थितं ततश्चान्वीक्षिकीमात्रकुशलः कथं तन्निश्चिनुयादिति तर्कमात्रानुसारिभिस्तैस्तद्विप्लावितम् । तर्कश्च पुरुषाणां स्वबुद्धिमात्रनिर्मितविग्रहो ऽव्यवस्थित एव । यदुक्तम् यत्नेनानुमितोप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यत इति ॥ ४८७ ॥

इत्थं च परस्परवैमत्यादागमसंग्रात्यागाच्च यथावस्थितो व्याकरणागमः पतञ्जलिशिष्येभ्यः कालपरिवासाद्भ्रष्टः सन् ग्रन्थमात्रे पाठमात्र एव व्यवस्थितो दाक्षिणात्येष्वित्याह ॥

यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः ।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः ॥४८८॥

तदेवमुत्सन्नकल्पः संजातो व्याकरणागमः ॥ ४८८ ॥

अथ कालान्तरेण चन्द्राचार्यादिभिरागमं लब्ध्वा तेन चोपायभूतेन सकलानि भाष्यावस्थितानि न्यायबीजानि तान्यनुसृत्य व्याकरणागमः पुनरपि स्फीततां नीत इत्यभिधातुमाह ॥

पर्वतादागमं लब्ध्वा
भाष्यबीजानुसारिभिः ।
स नीतो बहुशाखत्वं
चन्द्राचार्यादिभिः पुनः ॥ ४८९ ॥

पर्वतात्त्रिकूटैकदेशवर्त्तित्रिलिङ्गैकदेशादिति । तत्र ह्युपलतले रावणविरचितो मूलभूतव्याकरणागमस्तिष्ठति केन चिच्च ब्रह्मरक्षसानीय चन्द्राचार्यवसुरातगुरुप्रभृतीनां दत्त इति । ते खलु यथावद्

व्याकरणस्य स्वरूपं तत उपलभ्य सततं च शिष्याणां व्याख्याय बहु-शाखित्वं नीतो विस्तरं प्रापित इत्यनुश्रूयते ॥ ४८९ ॥

अथ कदा चिद्योगतो विचार्य तत्र भगवता वसुरातगुरुणा ममायमागमः संज्ञाय वात्सल्यात्प्रणीत इति स्वरचितस्यास्य ग्रन्थस्य गुरुपूर्वक्रममभिधातुमाह ।

**न्यायप्रस्थानमार्गांस्तानभ्यस्य स्वं च दर्शनम् ।**
**प्रणीतो गुरुणा ऽस्माकमयमागमसंग्रहः ॥ ४९० ॥**

न्यायस्य प्रतिष्ठा प्रस्थानं तस्य मार्गान् न्यायप्रस्थानमार्गान्न्यायप्रतिष्ठितैर्बहुभिर्मार्गैरिति यावत् । न्यायप्रस्थानमार्गांस्तांस्तान् स्वं च दर्शनं व्याकरणसिद्धान्तलक्षणमभ्यस्यायं प्रणीतः । अनेन गुरुणा संज्ञाय न तथा ममायमागमसंग्रहः प्रणीतः येन सन्देहो भवेदपि तु सावधानेनेत्युक्तं भवति । अस्माकमिति बहुवचनादन्येषामपि सहाध्यायिनां ग्रहणम् । अथ वा मया तु तदनुच्छेदायायमुपनिबन्धः कृत इत्यात्मनो बहुमानः प्रकटितः ॥ ४९० ॥

नन्वेतावानेव किमयं काण्डद्वयप्रोक्तो व्याकरणागम इत्याशङ्क्याह ॥

**वर्त्मनामत्र केषां चिद्वस्तुमात्रमुदाहृतम् ।**
**काण्डे तृतीये न्यक्षेण भविष्यति विचारणा ॥४९१॥**

अत्रास्मिन्वाक्यकाण्डे काण्डद्वये वा केषां चिदेव न्यायवर्त्मनां वस्तुमात्रं बीजमात्रं प्रदर्शितमिव । शिष्टे तु तृतीये ऽस्य ग्रन्थस्य पदकाण्डद्वयनिष्पन्दभूते न्यक्षेणादरविशेषेण स्वसिद्धान्तपरसिद्धान्तवर्त्तिनां विचारणा युक्तायुक्तविचारपूर्वकनिर्णीतिर्भविष्यति । ततो नायमेतावान् व्याकरणागमसंग्रह इति ॥ ४९१ ॥

ननु तत्तन्न्यायप्रस्थानमार्गाभ्यासेन किं कृत्यं स्वदर्शनमेव निश्चि-

तं किं न विचार्यतइत्याह ॥

**प्रज्ञाविवेकं लभते भिन्नैरागमदर्शनैः ।**
**कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता ॥ ४९२ ॥**

नानाविधैरागमदर्शनैरागमसिद्धान्तैः खलु प्रज्ञा विवेकं लभते वैशारद्यमाप्नोति । ततश्च निःसंदिग्धं स्वसिद्धान्तमेव संपरिकर्त्तुभिन्नागमदर्शनैः शक्तिर्जायते । अन्यथा ऽदृष्टपरकीयागमस्वरूपेण प्रतिपत्त्रा स्वोत्प्रेक्षामेव तेषु तेषु तेषु चावस्थानेष्वनुसरता कियच्छक्यमुन्नेतुं प्रतिविधातुम् । कदा चित्परमर्षयो योगजधर्मोत्पन्नसामर्थ्याद्यथावत्पदार्थान्पश्यन्तःसिद्धान्तमलमिति शोभते । ये त्वारुरुक्षवः प्राथमकल्पिका मलिनचित्तवृत्तयः शास्त्रादेवातीतानागतव्यवहितपदार्थस्वरूपं निश्चिन्वन्ति तेषां नानागमोपसेवयैवानुप्रसीदति भगवती प्रतिभेति युक्तम् ॥ ४९२ ॥

एतदेव निरूपयितुमाह ॥

**तत्तदुत्प्रेक्षमाणानां पुराणैरागमैर्विना ।**
**अनुपासितवृद्धानां विद्या नातिप्रसीदति ॥ ४९३ ॥**

प्रतिष्ठामुपगतैः पूर्वैरागमैर्बहुविधैर्विना स्वयमेव तत्तदित्ययथायथमेवोत्प्रेक्षमाणानां विकल्पयतां प्रतिपत्तॄणां शास्त्रोपज्ञमेधाविरहिणां पण्डितंमन्यानामभिमानाग्रहाघातानां तेषां भगवती विद्या विशुद्धप्रज्ञा प्रतिभालक्षणा न प्रसीदति अत्यर्थं, किं तर्हि वृद्धोपसेवाशालिनामागमजुषां विगलिताभिमानानामेवैषा भगवती प्रज्ञा प्रसादमुपयातीति सिद्धः ॥ ४९३ ॥

तदयमत्र मेयसमुच्चयः । वाक्यानामष्टधैवादौ विभागः परिकीर्त्तितः । शास्त्रीयमैमांसकयोः कीर्त्तनं वाक्ययोस्ततः ॥ १ ॥ बलाब-

लविचारो ऽपि शास्त्रीयो व्याप्तिनिर्णयात् । ततश्चात्र समासेन वाक्यलक्षणनिर्णयः ॥ २ ॥ सन्देहश्चागमेनापि वाक्यभेदस्य दर्शितः । स्फोट एव तु सिद्धान्ते वाक्यं वाक्येषु साधितम् ॥ ३ ॥ पदवादस्त्वनुमतो नेति व्याकरणे स्थितम् । ततो ऽन्विताभिधानस्याभिहितान्वयकस्य च ॥ ४ ॥ शब्दभागार्थभागाभ्यां दूषणव्रातकीर्त्तनम् । प्रसङ्गेनापरेप्यत्र वाक्यार्थाः षट् प्रदर्शिताः ॥ ५ ॥ अखण्डवाक्यपक्षे च चोद्यपक्षककीर्त्तनम् । उपपत्तिः प्रतिनिधेर्नास्तीति प्रथमं यथा ॥ ६ ॥ पिकादिपदसन्देहो नोपपद्यतइत्यपि । श्रुतिवाक्यविरोधे तु श्रुतिरेव बलीयसी ॥ ७ ॥ प्रतिष्ठितस्य न्यायस्याप्येवं त्यागः प्रसज्यते । अवान्तराणां वाक्यानामुपपत्तिर्विरुध्यते ॥ ८ ॥ प्रासङ्गिकादिषु तथा लक्षणेष्वप्यसम्भवः । प्राप्नोत्येवमखण्डे ऽस्मिन्वाक्ये दोषा उदाहृताः ॥ ९ ॥ अपोद्धारं समाश्रित्य दोषास्त्वेते निराकृताः । संहितायां विभागे ऽथ पदयोर्विलयं गते ॥ १० ॥ उपादानावधिं कर्त्तुं तयोरर्थः प्रकल्प्यताम् । इति दूषणमत्राधात्पदे वाक्ये च वाक्यवित् ॥ ११ ॥ तत्र न्यायवशादत्र स्वपक्षे दोषसंवृतिः । वाक्यार्थस्यात्र भेदोपि विकल्प्य परिकल्पितः ॥ १२ ॥ प्रतिभेदं च सिद्धान्ते वाक्यार्थ उपपादितः । प्रविभागाश्रयादत्र पदार्थस्यापि सम्भवः ॥ १३ ॥ स च द्वादशधा भिन्न इत्यप्यत्रोपपादितम् । प्रतिभालक्षणं सम्यग्विधातुं संहितं कृतम् ॥ १४ ॥ पदभागार्थभागाश्च वितत्य प्रतिपादिताः । अन्वयव्यतिरेकाभ्यां विविक्ततोपपादिता ॥ १५ ॥ सनिमित्ता च सा ऽप्यत्र नामाख्यातसमाश्रया । उपसर्गनिपाताश्च कर्म्मप्रवचनीयकाः ॥ १६ ॥ पदभेदाः प्रसङ्गेन लक्षणेनोपलक्षिताः । सार्थकानर्थकत्वाभ्यां विचारे वर्णनिष्ठिते ॥ १७ ॥ कृते ऽप्यखण्डपक्षो ऽत्र प्रतिष्ठामुपनामितः । पदवादे ऽथ दोषाणां चतुर्णां परिकीर्त्तनम् ॥ १८ ॥ समासेषु विरुद्धार्थप्राप्तिरादावुदाहृता । अध्यादीनां तथा वाक्ये साधनस्याभिधायिता ॥ १९ ॥ अर्था

प्रकृतिरप्यन्न बहुव्रीहेरुदाहृता। प्रभुसंख्यादिषु तथा मात्स्वर्थो ऽव्ययेष्वपि॥ २०॥ इति चोद्यचतुष्केण पदवादः पराकृतः। स्थापिते ऽखण्डपक्षे ऽपि चोद्यसप्तकमाहितम्॥ २१॥ द्वन्द्वे समासे नैव स्याद्द्वन्द्वसंख्याभिधायिका। विभक्तिरिति दोषो ऽत्र प्रथमं परिकीर्त्तितम्॥ २२॥ वाक्यस्यार्थसमाप्तिस्तु प्रत्येकं नोपपद्यते। परामर्शश्च नैव स्यात्सर्वनामभिरेव च॥ २३॥ अनुष्ठानं क्रमेणाथ वाक्यार्थस्य न जातु चित्। स्यादक्रमे त्वनुष्ठानं शक्यते न कथं चन॥२४॥ एकदेशस्य कारणे समुदाये ऽर्थकारिता। अभिमन्यतइत्येतदखण्डे नोपपद्यते॥२५॥ एतानि पञ्च चोद्यान्यपोद्धारस्य समाश्रयात्। समर्थितानि वै सम्यगखण्डं वाक्यमिच्छता॥ २६॥ अथाखण्डं यदा वाक्यं समासेष्वर्थवर्णना। पृथक् पृथक्तदा तस्याः सा च शास्त्रे प्रकीर्त्तिता॥२७॥ नञ्समासे पदार्थस्य विकल्पैर्बहुभिः पुनः। प्राधान्यं परिकल्प्याद्य भाष्ये पक्षाः परीक्षिताः॥ २८॥ यद्यखण्डमिदं वाक्यं नैषा स्यात्कल्पना क्व चित्। दोषावेतावपि शब्दप्रक्रियामात्रमेव च॥२९॥ शास्त्रप्रवृत्ताविति च निराकरणमेतयोः। ततश्चाखण्डपक्षस्य स बाध उपदर्शितः॥ ३०॥ अहत्स्वार्थविकल्पेन बहुव्रीह्यादिगामिना। प्रत्युत प्रभुदोषश्च पदवादे प्रकीर्त्तितः॥ ३१॥ प्रकृत्यर्थः प्रत्ययार्थ इति भिन्नौ परस्परम्। यावत् स्थितौ तयोरेकापायेनावगतिः कथम्॥ ३२॥ इष्टा ऽहं नास्तीति च सा दृष्टा स्याद्वास्तवे कथम्। पदार्थं प्रति दोषो ऽयं पदवादे समुद्धृतः॥ ३३॥ प्रत्ययद्वयगम्ये ऽर्थे एकस्मादेव लभ्यते। अत्तीत्यादौ कथं च स्यात्सत्यता पदपद्धतेः॥ ३४॥ सत्यत्वे ऽथ पदानां स्यात्प्रकृतिप्रत्ययार्थयोः। कथं लक्षणशास्त्रेषु साङ्कर्येण व्यवस्थितिः॥ ३५॥ पदार्थमन्यथैवादौ प्रतिपद्यान्यथा पुनः। वाक्यार्थप्रतिपत्तिश्च दृष्टा नैतत्समञ्जसम्॥ ३६॥ सत्यभूतेष्वथ पदेष्विति वाक्यविदो जगुः। नञर्थानुपपत्तेश्च नास्ति वादः पदाश्रयः॥ ३७॥ उपात्तत्यागसं-

शास्त्रे सर्वत्रेति च दूषणम् । सह प्रागुक्तदोषैश्चाप्येकादश समीरिताः ॥ ३८ ॥ पदवादे ऽत्र दोषास्तु पृथक् पञ्चद्वयं पुनः । शब्दभागार्थभागाभ्यां विस्तरेण विचक्षणैः ॥ ३९ ॥ निराकृतमतो युक्तो वाक्यवादपरिग्रहः । दोषः संक्षिप्यतिक्रान्तः सूत्रकाराभिसंमतः ॥४०॥ अपोद्धाराश्रयादत्र गौणमुख्यविचारणा । ततः कृता सुनियतं टीकाकारेण सादरम् ॥ ४१ ॥ सत्यासत्यविभागोपि ज्ञानानामुपपादितः । मुख्यनान्तरीयकयोरर्थयोरनिवर्त्तनम् ॥ ४२ ॥ ततस्त्वर्थचतुष्कस्य चिन्तनं विहितं क्रमात् । शब्दार्थनिर्णयोपायाः सादरं परिकीर्त्तिताः ॥ ४३ ॥ तात्पर्यं परिपाट्याश्चार्थतात्पर्यमपीति च । वाक्यनिष्ठं समासेन विचारितमतः पृथक् ॥४४॥ उत्सर्गस्या ऽपवादस्य विवेकः परिकीर्त्तितः । संज्ञाशब्देष्वथ कृता निर्णयः परिवत्सरान् ॥ ४५ ॥ प्रत्येकं समुदाये च समाप्त्या वाक्यनिश्चितिः । न्यायः सञ्चिन्तितश्चात्र लक्षितो ऽप्यभिधीयते ॥ ४६ ॥ अथ पूर्वोक्तसंक्षेपद्वारेणाप्युपपादितः । वाक्यवाक्यार्थनिष्ठस्य पदनिष्ठस्य निर्णयः ॥ ४७ ॥ वाक्यैकवाक्यतायाश्च विचारोपि निरूपितः । वाक्यवाक्यार्थनिष्ठस्य पदनिष्ठस्य निर्णयः ॥ ४८ ॥ वाक्यैकवाक्यतायाश्च विचारोपि निरूपितः । साकाङ्क्षत्वं निराकाङ्क्षा वाक्यानां परिकीर्त्तिता ॥ ४९ ॥ यद्वा चिन्ता समासेप्यन्यस्माद्दसुनिरूपिता । अथात्र तन्त्रन्यायस्य सिद्धिर्भाष्यानुगा स्मृता ॥ ५० ॥ अवतारोपि भाष्यस्य संग्रहे ऽस्तमुपागते । निबन्धहेतो शास्त्रस्य टीकाकारेण कीर्त्तितः ॥ ५१ ॥ संग्रहार्थाद्यनुगुणरूपत्वं चोपपादितम् । विप्लावनमथैतस्य संग्रहप्रतिपन्नतः ॥ ५२ ॥ कृतमाचार्यदेवश्चैरावेशविवशैस्ततः । भ्रष्टस्याम्नायसारस्य वैयाकरणगामिनः ॥ ५३ ॥ मूलभूतमवाप्याथ पर्व्वतादागमं स्वयम् । आचार्यवसुरातेन न्यायमार्गान्विचिन्त्य सः ॥ ५४ ॥ प्रणीतो विधिवच्चायं मम व्याकरणागमः । मयापि गुरुनिर्दिष्टाद्माथाम्नायाविलुप्तये ॥ ५५ ॥ काण्डत्रयक्रमेणायं नि-

बन्धः परिकीर्त्तितः। ग्रन्थकारेण ग्रन्थे ऽस्मिन् स्वस्मिन्गुर्वागमः स्फुटम् ॥ ५६ ॥ इत्येव वाक्यकाण्डस्य प्रमेयविषयाः स्फुटम् । सङ्गतिः कीर्त्तिता लघ्वी समासेन निराकुला ॥ ५७॥ विद्वज्जनानां यः खलु सर्वत्र गीयते जगति । तत उपसृत्य विरचिता राजानकशूरवर्मनाम्ना वै ॥ ५८ ॥ यथाङ्गमिथ्याक्कुलैतद्वाक्यकाण्डं समासतः । पुण्यराजेन तस्योक्ता सङ्गतिः कारिकान्विता ॥ ५९ ॥ गुरवे भर्त्तृहरये शब्दब्रह्मविदे नमः । सर्वसिद्धान्तसन्दोहसारामृतमयाय च ॥ ६० ॥ इति श्रीपुण्यराजकृता वाक्यपदीयद्वितीयकाण्डटीका समाप्ता ॥ शुभमस्तु समाप्तम् ॥ संवत् ॥ १८४४ ॥



## श्रीः ।

# वाक्यपदीयस्य काण्डद्वयस्य शुद्धिपत्रम् ।

पृ०

८६ टीकाङ्कः ४५—स्थाने ४६ प्रमादपतितः । तदुत्तरं तथैवाङ्का बोध्याः ।

९४ टीकाङ्कः ६५—स्थाने ६६ प्रमादपतितः । तदुत्तरं तथैवाङ्का बोध्याः ।

१३९ श्लोकाङ्कः १३८—स्थाने १३९ इत्यपेक्षितम् ।

१४९ टीकाङ्कः १७९—स्थाने १७० इत्यपेक्षितम् ।

१५८ टीकाङ्कः २९२—स्थाने १९१ अपेक्षितः । मूलाङ्कः १९१—स्थाने १९२ अपेक्षितः ।

२१४ मूले 'अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः' । इत्यस्याग्रे 'सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' इति श्लोको ऽपेक्षितः । तदनुसारेण ३१८ इति मूलाङ्कः अपेक्षितः ।

२१७ टीकाङ्कः ३१७—स्थाने ३१८ अपेक्षितः ।

२२५ टिप्पण्यां २८७—स्थाने ४५ अपेक्षितम् ।

२२५ मूलाङ्कः ३३४ऽ—स्थाने ३३३ऽऽऽ । इत्यपेक्षितम् । अनेनैव क्रमेणाग्रे ऽङ्काः बोध्याः ।

२४१ मूलाङ्कः २७४—स्थाने २७२ इत्यपेक्षितम् । अनेनैव क्रमेणाग्रे ऽङ्का बोध्याः ।

२६५ टीकाङ्कः ४३९—स्थाने ४३८ इत्यपेक्षितम् । अयमेवाग्रे क्रमः ।

२८५ मूलाङ्कः ४८८—स्थाने ४८७ इत्यपेक्षितम् ।

अयं च सर्वो ऽपि अङ्कविपर्यय आदर्शपुस्तके व्यत्यस्ताङ्कलेखनाज्जातः । ग्रन्थे तु न कश्चिद् व्यत्ययः केवलमेकः श्लोकस्त्रुटितः ॥

॥ श्रीः ॥

श्रीयशोदानन्दनाय नमः ।

# अथ सटीके वाक्यपदीये तृतीयकाण्डारम्भः ।

श्रीगणेशाय नमः । यस्मिन्संमुखतां प्रयाति रुचिरं कोऽप्यन्तरुज्जृम्भते नेदीयान्महिमा मनस्यभिनवः पुंसः प्रकाशात्मनः ॥ तृप्तिं यत् परमां तनोति विषयास्वादं विना शाश्वतीं धामानन्दसुधामयोर्जितवपुस्तत्प्रातिभं संस्तुमः १ काण्डद्वये यथावृत्ति सिद्धान्तार्थसतत्त्वतः । प्रबन्धो विहितो ऽस्माभिरागमार्थानुसारिभिः । तच्छेषभूते काण्डे ऽस्मिन्सप्रपञ्चे स्वरूपतः । श्लोकार्थद्योतनपरः प्रकाशो ऽयं विधीयते ॥ इह पदार्थोद्धारकविचारपरत्वाद्वाक्यपदीयस्य प्रथमकाण्डेन प्रयोजनादिपदार्थे निर्णीते ऽनन्तरकाण्डोपपादितोपपत्तिभिः वाक्यतदर्थयोरव्याख्येयस्थितलक्षणयोः पदार्थयोर्निर्णीतत्वात्तदपोद्धारकापोद्धाररूपः पदविचारः प्रक्रम्यते । तत्र नियतविकल्पो यथाभिप्रायमपोद्धार इति यथासम्भवं पदभेदाननुदिशति ॥

> द्विधा कैश्चित्पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।
> अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥ १ ॥

वाक्यस्यैव निरंशस्य वाचकत्वादन्तरा पदप्रतिपत्तिर्विभ्रम इति किमसत्यपदव्युत्पादनेनेत्याशङ्क्यापोद्धृत्यैव वाक्येभ्य इत्याह । अपोद्धृत्य कल्पनाबुद्ध्या पृथक्पदं निष्कृष्याखण्डवाक्यव्युत्पत्त्युपायः पदव्युत्पत्तिर्वाक्यवादिनां, अखण्डपदव्युत्पत्ताविव परिकल्पितरूपप्रकृतिप्रत्ययागमादेशादिव्युत्पत्तिः पदवादिनाम् । आनन्त्याद्धि वाक्यानां सामस्त्येनाशक्या व्युत्पत्तिः कर्तुमिति सदृशपदद्वारा तदुपपत्तिरित्यर्थः । उभयोरपि चापोद्धृतत्वस्यासत्यत्वं समानम् । तथा हि । अनियतानुपूर्वीको यथार्थं कल्पितान्वयव्यतिरेकनिबन्धनो वाक्यवादिनां पदापोद्धारः । एवं पदवादिनां शास्त्रे ऽप्यन्वयव्यतिरेकनिमि-

त्वार्थापोद्धारवशः प्रकृतिप्रत्ययापोद्धारः । यदाह वाक्यकारः । सिद्ध
त्वन्वयव्यतिरेकाभ्यामिति । तत्र भिन्नत्वं सामान्यम् । द्विधेत्यादिक
विशेष इति विधार्थे धाप्रत्ययोपपत्तिः प्रकारो हि विधार्थः स च सा
मान्यस्य भेदको विशेषप्रकारः । सादृश्यमेव सर्वत्र प्र
कारः कैश्चिदिष्यत इत्येकीयमतम् । कैश्चिदितिवचनात्
भेदे ऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यत इति चोक्तं
यदि वा ऽत्र बुद्धिरूपप्रकल्पितं सादृश्यमेव विधार्थः । ज्ञानप्रतिबि
म्बितस्य हि बाह्यानुकारित्वेन सादृश्यं सर्वत्र प्रकारार्थः । सङ्कल्पितस
दृशस्याबाह्यस्यानिर्वर्तनात् वाक्याच्चापोद्ध्रियमाणस्य पदस्य वा
क्यार्थान्तरापरिकल्पनया ऽर्थवत एवापोद्धारो युक्तः । अर्थापोद्धा
एव हि पदापोद्धारस्य निमित्तं । अनिमित्ते हि तस्मिन्वर्णापोद्धारस्या
पि प्रसङ्गात्तेषामपि व्युत्पाद्यता स्यात् । वाक्यार्थश्च स्थितलक्षणो नि
रंशः कारकोत्कलितशरीरक्रियास्वभावतः । तत्र चांशांशिकल्पनय
ऽपोद्धारे कारकात्मा क्रियात्मा च प्रविभागार्ह इति सिद्धसाध्यलक्ष
णांशद्वयविषयः पदापोद्धारो द्विविधो नामाख्यातरूपः । प्राथम
ल्पिकः शक्तिशक्तिमतोरभेदात् कारकात्मा सिद्धरूपो ऽशः । यद्यपि
नामपदानां प्रत्ययार्थस्य संख्यादेः शाब्दं प्राधान्यं तथाप्यर्थतः प्राति
पदिकार्थस्य जात्याद्यङ्कुरितस्य द्रव्यस्यैव प्राधान्यं सिद्धरूपस्य
संख्याकारकशक्तीनान्तदाश्रयत्वादनयोरेव च नामाख्यातयोर्विशे
त्वान्निपातोपसर्गकर्मप्रवचनीयलक्षणः पदभेदो ऽतर्भवति । तथा हि
सिद्धार्थाभिधायि नामपदमिति तदर्थगतं विशेषं द्योतयन्निपा
तत्रैवान्तर्भवति । सिद्धं ह्यर्थं साक्षादभिदधातु तद्गतं विशेषं
प्रकाशयतु नेयता भेदः स्वरादयस्तु केचित्सत्वप्रधाना एवेति ते ऽ
नामपदमेव । ये तु हिरुगादयः क्रियाप्रधानाः, तेषामाख्याते ऽतर्भ
वः । न हि तिङन्तमेवाख्यातं क्रियाप्रधानस्य सर्वस्यैव तल्लक्षणत्व
त् । अत एवोपसर्गकर्मप्रवचनीयपदान्यप्याख्यातपदमेव साध्यार्थवि
शेषद्योतनात् । एवं निपाता ऽपि । तद्गतभेदान्तरविवक्षायां तु निप
तोपसर्गयोरपि कैश्चित्पृथक्करणम् । तथा हि अस्त्येवापोद्धारे ऽर्थभ
ावविशेषो ऽनयोः । नह्येतौ साक्षादर्थवन्तः अपि तु तद्गतविशेषद्यो
तकाविति वाचकाभ्यां नामाख्याताभ्यां प्रविभक्तौ । सिद्धसाध्यार्थवि
षयविशेषद्योतकत्वान्निपातानां साध्यैकनियतत्वाच्चोपसर्गाणां प

स्परतो भेदः । कर्मप्रवचनीयास्तु क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतव इति सम्बन्धविशेषद्योतनद्वारेण क्रियाविशेषप्रकाशना उपसर्गेष्वेवान्तर्भवन्तीति चतुर्धैव कैश्चित्पदं भिन्नम् । साक्षात्क्रियाविशेषप्रकाशनाभावात्तदपि पञ्चमं पदमिति कैश्चित् । तथा हि । कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति, अतिक्रान्तक्रियाख्यानलक्षणस्य व्यापारस्यात्र सम्भवो न तु वर्तमानस्येत्युपसर्गेभ्यो भेदः । क्रियागतविशेषद्योतनपूर्वकं हि सम्बन्धावच्छेदनमत्र वर्तमानं । तथा हि सर्वः सम्बन्धः क्रियाकृतः। उपकारक्रियोचितत्वात्तस्य क्रियामन्तरेण उपकाराभावात् । तत्र क्वचित्क्रियाशब्दः श्रूयते क्वचिन्न । यत्र श्रूयते तत्र श्रौत एव सम्बन्धविशेषावसायः । तद्यथा मातुः स्मरति मातुः स्मृतं सर्पिषो जानीत इत्यादौ । क्रिया हि स्वभावादेव क्रियान्तरव्यवधानमन्तरेण द्रव्यैः संयुज्यते । यस्मान्मातापितृविषये प्रवर्तते ऽवतिष्ठते वा तस्मान्मातापितृसम्बन्धीदं स्मरणमिति क्रियाकारकभावपूर्वक एवायमपि सम्बन्ध इति वर्णयन्ति । अश्रुते तु क्रियापदे द्वयी गतिः । क्वचित्सम्बन्धस्वरूपमहिम्नैव क्रियाक्षेपसिद्धेः प्रतिनियतक्रियाकारकभावपूर्वकत्वं शेषसम्बन्धस्य विनैव कर्मप्रवचनीयमवगम्यते । तद्यथा उपगोरपत्यं वृक्षस्य शाखेत्यादावपत्यापत्यवत्सम्बन्धो जनिक्रियानिमित्तो ऽवयवावयविसम्बन्धश्च स्थितिक्रियानिमित्त इत्यादि । क्वचित्तु सम्बन्धानां प्रतिनियतक्रियापूर्वकत्वावधारणे नास्ति सामर्थ्यं । तद्यथा राज्ञः पुरुष इत्यत्र स्वस्वामिभावो भरणाद्यनेकक्रियानिमित्त इत्येवावगम्यते । क्रियाविशेषो नावधार्यते तन्निमित्तभूतः । तथा च भाष्यं, यदेतत्स्वं नाम तच्चतुर्भिः प्रकारैर्भवति भरणादपहरणात्क्रयणाद्याच्ञयेति । दानादीनां त्वन्यतमाविनाभावात्क्रिया ऽनुमीयत एव । क्वचित्त्वविनाभाविनी क्रियापि न प्रतीयते तथा चैवं जातीयके विषये कर्मप्रवचनीयो नियतविशिष्टक्रियाकृतत्वसम्बन्धस्य विशेषमवगमयति । तदुक्तं जनयित्वा क्रिया काचित्सम्बन्धं विनिवर्तते । श्रूयमाणे क्रियाशब्दे सम्बन्धो जायते क्वचित् । स चोपजातः सम्बन्धो विनिवृत्ते क्रियापदे । कर्मप्रवचनीयेन तत्र तत्र नियम्यते इति । नियमस्तस्य नियतक्रियाजनितत्वं । तथा हि शाकल्यस्य संहितामनु प्रावर्षत् इति यो ऽयं संहिताप्रवर्षणयोर्हेतुहेतुमद्भावलक्षणः सम्बन्धः स निपठक्रियाजनित इत्यनुना द्योत्यते । अनुर्निशम्येत्यत्रानोर्निश्चामय-

तिक्रियासाहचर्योपलब्धेरिह सम्पाठरूपत्वात्संहितायास्तदनुमानस्यो-
चित्यात्तत्र क्रियावचनत्वमस्यान्यत्र दृष्टशक्तेर्न कल्प्यं । द्योत्यार्थनिष्ठं
च द्योतकत्वमिति तदपि क्रियापदाप्रयोगादत्र नास्ति । न च क्रियाप-
दाक्षेपकत्वं, यथा प्रादेशं विपरिलिखतीत्यत्र वेर्लेखनासमन्वयानुप-
पत्तेर्निमातिक्रियाक्षेपकत्वं । कारकविभक्तिश्चात्र प्रादेशमिति द्वितीयेति
युक्तस्तत्समुचितक्रियाक्षेपः । इह तु संहितामिति शैषिकीयं विभक्ति-
रिति कथं क्रियाक्षेपः । क्रियाकारकयोरेव परस्परमाक्षेप्याक्षेपकभाव-
स्याविनाभावेन व्याप्यत्वात् तद्यथा प्रविश पिण्डीमित्यादौ । नापि
सम्बन्धवाचित्वमत्रानोः । विभक्त्यैव तदभिधानादिति सम्बन्धाव-
च्छेदस्य प्रत्यायको नान्यः सम्भवतीति पारिशेष्यादनोरत्र सामर्थ्य-
मध्यवसीयते । तदुक्तम् । क्रियाया द्योतको नायं सम्बन्धस्य न वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदक इति ॥ भेदको विशेषको
द्योतक इत्यर्थः । अयमत्र भावः । यदनन्यथासिद्धं तत्रानोर्व्यापारकल्पना
युक्ता । यत्पुनरन्यथा ऽर्थसामर्थ्यादिना सिध्यति न तत्र तस्य शक्तिः
कल्पयितुं पार्यत इति पदान्तराणामर्थान्तरानिवेशात्सम्बन्धविशेषस्य
ततो ऽनवगतस्य कर्मप्रवचनीयविषयता सिद्धा । ननु च यदत्राधि-
क्यं वाक्यार्थः स इति क्रियाविशेषजनितत्वलक्षणः सम्बन्धस्याव-
च्छेदो वाक्यार्थः किमिति न कथ्यते अनोस्तु पश्चाद्भावमात्रवृत्ति-
त्वमेवेति । अत्रोच्यते । इहाधिक्यं वाक्यार्थत्वेनोच्यमानं पदार्थपृ-
ष्ठपातित्वेनैवानुसरणीयं न तु पदार्थोल्लङ्घनेन । तत्तद्वाक्योपात्तस्य हि
साध्यस्य वा विशेष्यस्य चोपात्तैरेव साधनैर्विशेषणैश्च संसर्गस्तत्रा-
धिक्यम् । तद्यथा । शुक्लामानय नीलोत्पलमिति च । अत एवोच्यते
आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते इति । इह चानुपात्तस्यैव
पदार्थस्य वाक्यार्थात्प्रतीतिर्नास्तीति न सम्बन्धावच्छेदो ऽत्रापदार्थो
वाक्यार्थः शक्यते कल्पयितुमिति कर्मप्रवचनीयविषय एवायम् । व-
क्ष्यति । निमित्तनियमः शब्दात्सम्बन्धस्य न गृह्यते । कर्मप्रवचनी-
यैस्तु स्वविशेषे विरुध्यते इति । अत्र च दर्शनद्वयं । स्वरूपेणैव सम्ब-
न्धान्तरविलक्षणः कर्मप्रवचनीयेन सम्बन्धो ऽवच्छिद्यते क्रियाविशे-
षजनितत्वेन वेति । तत्र स्वरूपेणावच्छेदे विशिष्टक्रियाजनितत्वप्रतीतिः
सम्बन्धविशेषपर्यालोचनालभ्या । तथा हि । अधिब्रह्मदत्ते पञ्चाला
इति स्वस्वामिभावो ऽयं सम्बन्ध इत्यधिना वेद्यते । ब्रह्मदत्तश्च स्वामी-

श्वरः पञ्चालाश्च जनपदः स्वमिति तयोः सम्बन्धिनोः परिपालनक्रादानादिक्रियाप्रभावित एव सम्बन्धो व्यङ्ग्य इत्यवगम्यते । एवमभिमन्युरर्जुनतः प्रतीति प्रतिना सादृश्यलक्षणोऽयं सम्बन्ध इति द्योत्यते । स पुनः सम्बन्धिस्वरूपपर्यालोचनादस्त्रसंप्रहरणादिक्रियाकृत इत्यवगम्यते । इत्थं च शाकल्यसंहितामनु प्रावर्षदित्यत्रापि हेतुफलभावो नामायं सम्बन्ध इत्येतावत्येवायमनुर्विश्राम्यति । पाठविशेषरूपत्वात्संहिताया निशमनक्रियावगतिः । शब्दश्रवणेन हि देवोऽवर्षदिति सम्बन्धिमहिम्ना विशिष्टक्रियाप्रभावितत्वमवसीयते । केचिदिदानीमनोरेव व्यापार इत्याहुः । स्वरूपावच्छेदेऽपि च क्रियायाः कार्यभूतसम्बन्धापेक्षयातीतत्वात् । कर्म प्रोक्तवन्त इत्यर्थसमन्वेत्येव । वस्तुतः क्रियाफलस्यैव सम्बन्धस्य प्रकाशनात् । यथा तु तत्रभवत्भर्तृहरेस्तत्र तत्राभिप्रायो लक्ष्यते तथा निमित्तविशेषावच्छेद एव कर्मप्रवचनीयकृत इति राद्धान्तः । अधिब्रह्मदत्ते पञ्चाला इति परिपालनक्रियाहेतुत्वं स्वस्वामिभावस्याधिना व्यज्यते । अभिमन्युरर्जुनतः प्रतीत्यत्र पराजयादिकृतोऽनुकार्यानुकरणभावः प्रतिना प्रकाश्यत इत्यादि सर्वत्र योज्यम् । सुस्तुतमतिस्तुतमित्यादौ तु सुः पूजायामतिरतिक्रमणे चेत्यादिना कर्मप्रवचनीयसंज्ञाधिकारिकी स्वार्थनिरपेक्षैवोपसर्गसंज्ञाबाधनाय प्रवर्तते । यथोक्तम् । कर्मप्रवचनीयत्वं क्रियायोगे विधीयते । षत्वादिविनिवृत्त्यर्थं स्वत्यादीनां हि धर्मिणामिति । आर्थेन तु रूपेण विभागे प्रस्तुते क्रियाविशेषावद्योतकत्वादुपसर्गपदे स्वत्यादिरन्तर्भवतीति नाव्याप्तिः । तदेवं वाक्यादपोद्ध्रियमाणस्य पदस्यापोद्धारार्थविशेषाश्रयेण यथासम्भवं भेदो निरंशकवाक्यव्युत्पत्त्युपायभूतः प्रदर्शितः । अत एव स्वादिपदं वाक्यव्युत्पत्त्यनङ्गत्वाच्छास्त्रे सङ्केतितं सुबन्तपदव्युत्पत्त्युपायभूतं नेह गणनार्हम् । प्रकृतिप्रत्ययवदिति दृष्टान्तपक्षनिक्षिप्तमिति नाव्याप्तिः । पदात्किलासावपोद्धारो न वाक्यात् ॥ १ ॥

तदित्थं पदापोद्धारे प्रदर्शिते तदर्थस्यापोद्धृतस्य सिद्धसाध्यरूपद्वययोगिनो मतभेदेन स्वरूपेण दर्शनार्थमाह ॥

पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा ।
पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ ॥ २ ॥

अर्थद्वारेण पदं परीक्ष्यत इति दर्शनभेदेन प्रथममपोद्धारपदार्थविचारः । तथा हि । सर्वेषामपि शब्दानां पदरूपाणां नामाख्यातादिस्वभावानां जातिवादिमते जातिरेवार्थो न द्रव्यम् । द्रव्यवादिमते तु द्रव्यमेव न जातिः । द्वितीयेन वाशब्देन पदार्थान्तरं सूचितं जातिविशिष्टद्रव्याभिधानमिति । अत एव तदेव सङ्कलनारूपं पदार्थाविति स्फुटीकृतम् । अन्यथा चार्थे प्रक्रान्ते वार्थोपसंहारोऽयं नोपपद्यते । तद्वदभिधाने त्वभिधानं तावत् द्वयोरपि समानम् । विरम्य व्यापाराभावाच्छब्दस्य । वार्थस्तु जातिद्रव्ययोर्गुणप्रधानभावः । यद्वा प्राधान्येनैव भिन्नविषयतया पाणिनिदर्शने जातिद्रव्ये शब्देनाभिधीयेते इत्ययमत्र पक्षः पदार्थावित्युक्तः । तत्र नामपदस्य गौरित्यादेर्गोत्वादिजातिनियतक्रियाविषयसाधनैकार्थसमवेतसंख्याजातिविशेषणभावमात्राभिधेयाया अनाश्रयाया जातेरनुपपत्तेः सामर्थ्यात्प्रतीतं द्रव्यं । एवमाख्यातपदस्यापि विभिन्नक्रियाक्षणसमवेता भिन्नाभिधानप्रत्ययहेतुक्रियाजातिविषया साक्षाद्वाचकशक्तिः । कारकादिजातिस्त्वत्र गुणभूता नामपदगतया च कारकजात्या क्रियाजातिराख्यातपदगता व्यक्तिद्वारेण समन्वयमेति । द्रव्यजातिस्त्वेकार्थसमवायात्साधनशक्तिद्वारेण क्रियायोगमनुभवति । संख्याजातिरप्येकार्थसमवायात्स्वव्यक्तात्मना शक्तिमुखेनैव क्रियान्वयमेतीति सर्वपदार्थसमन्वयोपपत्तौ कल्पते वाक्यार्थः । यथा चोत्क्षेपणादिक्षणैरसमयभाविभिरप्यावृत्त्योत्क्षेपणत्वादिजातिरभिव्यज्यते तथाऽधिश्रयणादिभिः क्रियाक्षणैः पचत्यादिक्रियाजातिरिति विचारयिष्यते ॥ व्यक्तिद्वारकं चास्या नित्याया अपि साध्यत्वमुपपद्यते । उपसर्गादिरप्यत्र दर्शने नामाख्यातसहभावी तदर्थस्य विशेषावद्योतकत्वाज्जातिपदार्थ एव । विशेषस्य विशिष्टविश्रान्तस्यैवावसायात्कर्मप्रवचनीयोऽपि सम्बन्धजातिनिष्ठ एव । गुणशब्दानामपि शुक्लादीनां गुणजातिवाच्या संज्ञाशब्दानामपि डित्थादिशब्दानां जातिवाचित्वं समर्थयिष्यते । तदित्थं वाजप्यायनाचार्यमतेन सार्वत्रिकी जातिपदार्थव्यवस्थोपपद्यते ॥ व्याडिमते तु सर्वशब्दानां द्रव्यमर्थः तस्यैव साक्षात्क्रियासमन्वयोपपत्तेर्वाक्यार्थाङ्गतया चोदनाविषयत्वात् । यथाह । चोदनासु च तस्यारम्भादिति । एकजातिसमन्वयवशेन चात्र सङ्केतोपपत्तिः । अनभिधीयमानाऽपि जातिरुपलक्षणीक्रियते शब्दार्थे, यथा गृहादौ का-

कादि। आख्याते ऽपि च सा। भवनाधारद्रव्यप्राधान्यं व्याडिमते। देवदत्तः पचतीति द्रव्येणैव साक्षात्सामानाधिकरण्योपपत्तेः। क्रिया तु गुणभूतात्र, व्यापाराविष्टं हि द्रव्यमाख्यातार्थः, इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं चात्र द्रव्यमिति सार्वत्रिकीयं व्यवस्था। तथा च वक्ष्यति। द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वो ऽर्थ उच्यते इति। अत एव शुक्लादीनामपि द्रव्यपदार्थता सिद्धा। तत्तदुपाधिव्यवच्छिन्नं वा ब्रह्म द्रव्यशब्दवाच्यं सर्वशब्दानां विषय इति वक्ष्यत एव। व्यक्तिपर्यायो वा द्रव्यशब्द इति जातिव्यक्तिविकल्पेन सर्वशब्दविषयः, तथा च सर्वशब्दानामित्यभिधानात्। पदादप्यपोद्धारे प्रकृतिप्रत्ययरूपस्यापि शब्दस्य यथायोगं क्रियाकारकसंख्यादिरपोद्धारपदार्थो जातिव्यक्तिभेदेन समाम्नातः। उभयस्यापि वा शब्दात्प्रतीतेरुभयं पदार्थः। गुणप्रधानभावभेदाऽऽश्रयस्तु मतविकल्पः। नित्यत्वोपवर्णनं च सिद्धे शब्दार्थसम्बन्धे इत्यत्र भाष्ये यस्मिंस्तत्त्वं च न विहन्यते इति द्रव्यस्यापि नित्यत्वम्। प्रवाहनित्यतया शब्दात्सदैव प्रतीतेः ॥ २ ॥

तदेवं दर्शनभेदेन जातिर्द्रव्यं वा पदार्थ इत्युक्ते जातिपदार्थविषयशास्त्रोपयोगी विचारो ऽत्र समुद्दिश्यते। पदस्य हि परीक्षार्थमिदं काण्डं, अर्थद्वारेण च पदपरीक्षा, वाक्यार्थोपयिकत्वेन च तद्विचार इति। जातिपदार्थनये वाक्यार्थभूताख्यातपदवाच्यमिति क्रियया कथं समन्वयः साधनेन हि क्रिया ऽन्वेति न च जातिः साधनम्। तदाश्रयः साधनमिति चेत्, एवमपि जातेः साक्षाच्छब्देन चोदितत्वात्सामर्थ्यात्तदाधारप्रतिपत्तौ यथाचोदितानुषङ्ग इति असम्भवे प्रतिनिधिर्नाभून्नित्यस्य कर्मणः काम्यस्य वा प्रवृत्तस्य लोप इत्यपदिश्य इति विध्यनुपपत्तिरित्याशङ्क्य तत्समर्थनामाह ॥

केषां चित्साहचर्येण जातिः शक्त्युपलक्षणम् ।
खादिरादिष्वशक्तेषु शक्तिः प्रतिनिधीयते ॥ ३ ॥

इह केषां चिज्जातिवादिनामेकार्थसमवायाच्छक्तेः प्रतिपादने जातिरुपलक्षणमुपाय इति मतम्। अन्येषां पुनस्तात्पर्येण जातिरेव शब्देन प्रतिपाद्यते, कार्ययोगस्तु तस्याः क्वचित्साक्षात्क्वचिद्व्यक्तिद्वारेणेति मतम्। अथ वा केषाञ्चिदिति। शब्दानां ये साधनाभिधायिनः तत्र

शक्तितात्पर्येण जातेरुपलक्षणत्वान्नान्तरीयकमुपादानं शक्तिवाचिन्या विभक्तेः केवलाया अप्रयोगार्हत्वात्तच्च प्रातिपदिकस्यावश्यमुपादानमिति तदान्यया जात्या शक्तिरवच्छिद्यते सति सम्भवे । तदभावे तु तत्सदृशापरजातिसहचारितापि । प्रत्यर्थं साधनशक्त्युपादानेऽपि जातिविशेषस्यासम्भवे क्रियासाधनशक्त्यावेदनपरतया जातेः प्रयोगान्मा भूत्प्रधानभूतायाः शक्तेरपि त्यागे क्रियाया असंपत्तिरिति शिष्टसमाचारादन्यजातीयद्रव्यगतापि शक्तिः परिगृह्यते । नचैवमतिप्रसङ्गः । चोदितप्रतिनिधिविषय एवैतस्य न्यायस्येष्टत्वात् । तथा च गोदोहादिचोदनासु तत्सामर्थ्येन महिष्याद्याक्षेपप्रसङ्गः । उपलक्षणत्वाच्च जातिर्नियमं न विधत्ते । तद्यथा । उपघातकनिवारणपरे वाक्ये काकादिरिति सदृशोपादाने श्रौतार्थत्यागो न भवति । यत्र च सम्भवश्चोदितस्य, श्रौतस्यार्थस्य तत्र श्रुतिः सफला । तस्मात्खदिरे बध्नाति पलाशे बध्नातीत्यादौ खदिरादेर्बन्धनसमर्थस्यालाभे तत्सदृशकदरादियक्तसाधनपरिग्रहो युज्यते । अनाधारायाः शक्तेरसम्भवान्नान्तरीयकत्वेन जातेरुपादानं, नियमस्याविधानात् । जातिर्हि शक्त्युपलक्षणं न कार्ययोगिनीति तदाश्रयस्याशक्तत्वेन अन्तरेण द्रव्यान्तरगतापि शक्तिर्गृह्यते । यदि तु तज्जातीयमेव शक्तं स्यात्तदा सन्निहितपरित्यागे कारणाभावात्तज्जातीयमेवोपादीयते । तदशक्तत्वे तूपलक्षणस्योपलक्षणं चरितार्थत्वादसत्यपि तत्कार्ययोगे तदुपलक्षिता शक्तिः शास्त्रचोदितेत्यर्थान्तरगतार्थपर्युदस्तत्वादनुपादीयत इति नियमो नास्ति । सदृशार्थान्तरगता च शक्तिर्गृह्यत इति नातिप्रसङ्गः ॥३॥

अथ येषां जातिवादिनां मते तात्पर्येण जातिरभिधेया न शक्त्युपलक्षणं तेषां कथं प्रतिनिधिरुपपद्यत इत्याशङ्क्याह ।

अस्वातन्त्र्यफलो बन्धिः प्रमाणादीव शिष्यते ।
अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते ॥ ४ ॥

अत इत्यस्वातन्त्र्यफलस्य बन्धे विधानाच्चोदनाजातेः प्रतिपाद्यत्वेऽप्युपलक्षणत्वाभावेऽप्यस्वातन्त्र्यप्रयोजनबन्धिविधिसामर्थ्याच्छक्तिहीनस्य खदिरादेस्त्यागे शक्तं कदरादि प्रतिनिधीयते । वाक्यार्थभूता हि बन्धिक्रिया प्रधानमिति तत्संपादनशक्तस्य पदार्थस्य परिग्रहो न्याय्यः । ननु च दृष्टफले बन्धौ कोऽनुरोध इत्याशङ्क्योक्तं

प्रमाणादीव शिष्यते इति। यथा दृष्टफलं प्रमाणादि चोदितं तथा तदङ्गभूतो ऽपि बन्धिरिति सर्वथा, ऽसावनुरोध्यः । तथा ह्यसति पशोर्यूपे बन्धने प्रमाणाद्यनुपपत्तौ अवदानग्रहाभावात् स्वर्गफलस्य यजेरेवासंपत्तिः स्यादिति तदनुरोधात्तदङ्गसपत्त्यर्थं तत्समुचितसाधनाक्षेपः। तत्र प्रमाणं हिंसाप्रारम्भः। मीञो हिंसार्थस्य ल्युट्यविषयरूपमात्वे च कृते मानं तस्यारम्भः प्रशब्देन द्योत्यते। आदिग्रहणादालम्भनादेरवदानग्रहणपर्यन्तस्य तदुत्तरस्य प्राकरणिकस्याङ्गकलापस्यानुरोधः। अथ कथ मत्र पक्षद्वये प्यायः, यदि नाम ज्ञातः प्रकृत्यर्थभूतायाः शक्त्यवच्छेदेनोपात्ताया असम्भवस्तज्जात्यवच्छिन्नस्याशक्तत्वात्तथापि प्रत्ययार्थस्य शक्तेरवच्छेद्याया अपि त्यागो न युक्तो ऽपित्वन्यगतापि सा गृह्यते। मा भूद्वाचिनः पदस्यानर्थक्यं वाक्यार्थस्य च क्रियाया असंपत्तिरिति गामालभेतेत्यादौ च सर्वत्र योग्यव्यक्तिविषयैव क्रियावतिष्ठत इति प्रतिनिधावपि किमितिसंभ्रमः ॥ ४ ॥

इदानीमत्रैव लिङ्गेनापि प्रतिनिधिमुपपादयति ।

संश्लेषमात्रं बध्नातिर्यदि स्यात्तु विवक्षितः ।
शक्त्याश्रये ततो लिङ्गं प्रमाणाद्यनुशासनम् ॥ ५ ॥

बध्नात्यर्थ उपचाराद्बध्नातिरित्युक्तं। संश्लेषो यूपे पशोर्योजनं देवास्वातन्त्र्यलक्षणं स्वफलानपेक्षं। तन्मात्रं तद्यदि बध्नात्यर्थो ऽभिमतस्तदा तस्य खदिरलतयापि सम्पाद्यत्वात्सम्भवे कदरोपादाने सामर्थ्यं नास्तीति ततः संश्लेषादुत्तरकालं प्रमाणादीनां पशुमालभेत हृदये ऽवद्यति अथ वक्षसीत्यादिवचनेन यदनुशासनं तदत्र समर्थद्रव्योपादाने लिङ्गमनुमानं। अथ वा पूर्वं बन्धिरेव लिङ्गमासीत्, इदानीं संश्लेषमात्रं बध्नातिस्ततः प्रमाणाद्यनुशासनं तदत्र समर्थद्रव्योपादाने लिङ्गमनुमानम्। अथ वा पूर्वं बन्धिरेव लिङ्गमासीत् इदानीं यदि संश्लेषमात्रं बध्नातिस्ततः प्रमाणाद्यनुशासनं लिङ्गमित्यर्थः। पशुविशसनाङ्गस्य हि बन्ध्यर्थस्यात्रोपादानं युक्तं। असमर्थश्च विशसने बध्नात्यर्थो न तदङ्गमिति एकप्रकरणोपात्तप्रमाणाद्यर्थपर्यालोचनालभ्यः प्रतिनिधिः पूर्वं पदार्थसामर्थ्यात्। अनन्तरं वाक्यार्थसामर्थ्यात्प्रतिनिधिरुक्तः। सम्प्रति करणसामर्थ्यादिति पक्षत्र-

ये विकल्पः । शक्तेराश्रयः किञ्चिद्‌द्रव्यं तत्रोपादीयमाने लिङ्गमिति सम्ब-
न्धः । यद्वा शक्तिः कार्यस्य निर्वर्तको द्रव्यस्यात्मातिशयः तदाश्रये
तदभ्युपगम इत्यर्थः । तदेवं, यदुक्तं वाक्यकाण्डे । यत्र जातिसमुद्देशे
प्रतिनिधिं प्रत्यपरो दर्शनभेद इति सोऽयमिह व्याख्यातः । तत्र पु-
नरन्यो दर्शनभेदः प्रतिपादितः । असम्भवनियमत्यागो नियममात्र-
बाधनेति । तथा हि, व्रीहिभिर्यजेतेति देवतोद्देशेन द्रव्यत्यागस्य यज्य-
र्थस्याप्यजनिक्रियैकदेशभावापन्नं द्रव्यैकमात्रं यजेतेत्येव सामर्थ्या-
दायातम् । एतावतैव हि यज्यर्थ इति श्रुतिप्राप्तसन्निधानमेव द्रव्य-
मात्रम् । द्रव्यदेवतारहितस्य त्यागमात्रस्य यज्यर्थस्यायोगात्प्रतीते त-
स्मिन्नर्थसामर्थ्यादनन्तरं द्रव्याक्षेपस्यायोगात् । इत्थं च क्रियाप्रधान-
त्वेऽप्याख्यातस्य, तदेकदेशभूतं साधनाधारमपि द्रव्यसामान्यं श्रुति-
प्राप्तसन्निधानं शाब्दमेव । तत्र व्रीहिभिरिति व्रीहित्वेनाविरुद्धैकार्थस-
मवायेन विशेषणपरिपोषः । निर्विशेषस्य सामान्यस्याभावात् । अध्या-
पापार्था हि व्रीहिश्रुतिः शब्दसामर्थ्यप्राप्तं द्रव्यत्वमात्रमविरोधान्न बा-
धते । तद्धि श्रुतिसामर्थ्यप्राप्तं, व्रीहित्वं पुनरर्थसामर्थ्यायातं निर्विशेषस्य
सामान्यस्याभावात् । एवं च द्रव्यत्वमात्रस्य श्रुत्याऽङ्गभावश्चोदितो
न व्रीहित्वस्य विशेषस्येति, तदसम्भवे ऽपि विशेषान्तरेण सामान्य-
मात्रस्य परिपोषे प्रतिनिधिविषये चोदितस्य बाधा न भवति । ननु
चाध्याकाले व्रीहिभिर्द्रव्यत्वस्याऽबाधितत्वाद्विकल्पः प्राप्नोति सर्वत्र
व्रीहिभिर्यवैर्वेत्यादि । अविशिष्टं हि द्रव्यत्वं श्रुतिसामर्थ्यप्राप्तं, तस्य चे-
द्व्रीहिश्रुत्या विशेषान्तरावच्छेदो न क्रियते तदा तदपि विशेषान्तरं
तेन व्रीहित्वं प्राप्तसन्निध्यमेवेति विकल्पप्रसङ्गः । तथा च व्रीहिश्रुतेरा-
नर्थक्यम् ॥ अत्रोच्यते ॥ इह व्रीहित्वेन द्रव्यत्वे विशेषिते वस्तुसाम-
र्थ्याद्यवत्वादीनामसम्भवः । न हि यत्र व्रीहित्वैकार्थसमवायि द्रव्य-
त्वं तत्रैव यवत्वैकार्थसमवायि सम्भवति । ततश्चासम्भवनियमो नामा-
यं । त्रिप्रकारो हि नियमः, कश्चिच्छब्दसामर्थ्यायातो भवति यत्र यक्ष-
प्राप्तौ सत्यां श्रुतिः । यथा व्यक्तौ पदार्थे विप्रतिषेधे परमिति । कश्चित्पु-
नरसम्भवात् शब्दव्यापारे पदार्थानामितरेतररूपसाङ्कर्याभावादेकचो-
दना तदन्यनिवृत्तिफलेति, पदार्थस्वरूपविमर्शायातोऽसम्भवनिय-
म इत्युच्यते । तथा चेह शब्दसामर्थ्यायातं द्रव्यत्वमिति व्रीहिभि-
रिति तत्राऽव्यापारः शब्दव्यापारः । अखण्डे ऽपि हि वाक्यार्थेनये ऽपो-

प्रारब्धयागतो भेदसंसर्गादिविकल्पः। तत्र व्याडिमते भेदो वाक्यार्थः पदवाच्यानां द्रव्याणां द्रव्यान्तरनिवृत्तितात्पर्येणाभिधेयत्वात्। जातिवादिनो वाजप्यायनस्य तु मते संसर्गो वाक्यार्थः सामान्यानां संश्लेषमात्ररूपत्वाद्वाक्यार्थस्य। इयति चरितार्थे व्रीहिशब्दे व्रीहित्वस्य यवत्वादिभिर्विरुद्धैरेकस्मिन्नर्थे समवाय इति तत्र तानि निवर्तन्ते। ततश्च प्रतिनिधौ वस्तुसामर्थ्यायातस्य नियमस्य बाधेऽपि शाब्दस्य द्रव्यत्वमात्रस्याबाधितत्वान्न चोदितार्थत्यागः। ननु स्वनिर्विशेषस्य सामान्यस्यासम्भवात् यजिना विशेषनिष्ठमेव द्रव्यत्वमाक्षिप्तमिति सर्वविशेषाणां श्रुतिसामर्थ्यप्राप्तत्वाद्व्रीहिभिरिति पुनः श्रुतिर्नियमफलैव श्रौतेनापि रूपेण सङ्गतेति कथं श्रौतार्थत्यागः। प्रतिनिधौ नैतन्न्याय्यम्। न हि शब्दो वस्तुचिन्तामनुसरति कस्य चिदेव वस्तुभागस्य शब्दव्यापारविषयत्वात्। तथा च यजतिशब्दस्येयत्येव सामर्थ्यं द्रव्यमात्राक्षेपे, न तु तद्विशेषे। अन्यथा निर्गुणस्य च द्रव्यस्यासम्भवात् गुणस्याप्याक्षेपकोऽसौ किमिति न वर्ण्यते। तस्माद्द्रव्यत्वमात्रस्यैवाक्षेपः शाब्द इति तत्परिपोषाय विशेषान्तरावापो न नियमफल इति शास्त्रेणापर्युदस्तानां विशेषान्तराणां प्रतिनिधिसिद्धिः। तदित्थमसम्भवन्नियमत्यागो वर्णितः। नियममात्रबाधश्चाप्युच्यते। इह सर्वत्रैव क्रिया प्रधानं वाक्यार्थः। तया च स्वसिद्ध्यर्थं योग्यद्रव्यमाक्षिप्यते साधनं। तदेव च पदान्तरेण विशिष्टं कथ्यते। इत्थं स्थिते यत्र श्रुतस्य साधनस्यासम्भवस्तत्र प्रधानभूतक्रियासम्पत्त्यर्थं साधनान्तरं प्रतिनिधीयते। क्रिया हि न प्रतिनिधीयते प्राधान्यात्। क्रियान्तराश्रयणे च कर्मान्तरस्याचोदितस्यानुष्ठानाच्छास्त्रस्योल्लङ्घनं स्यादिति गुणभूतस्य साधनस्यैव प्रतिनिधिराचरितः शिष्टैः। तत्र च प्रधानभूतक्रियापदार्थाक्षिप्तस्य आक्षिप्तस्य साधनमात्रस्य न त्यागः, अपि तु व्रीह्यादिपदोपात्तस्य द्रव्यविषयस्य नियममात्रस्य बाधः स च न दोषाय। शक्तिमात्रस्य साधनरूपस्य क्रियासामर्थ्याक्षिप्तस्य प्राधान्याच्छास्त्रचोदितस्योपात्ताधाररूपद्रव्याभावे तदपरतदाधारभूतद्रव्योपादानेऽपि तस्यापरित्यागाच्चोदितार्थोल्लङ्घनाभावात् ॥ ५ ॥

तदेवमेतदनन्तरकाण्डे दर्शनद्वयमुपपादितमिति यथासम्भवं प्रतिनिधिश्च चिन्तितः। इदानीं जातौ शब्देनाभिधीयमानायां

तत्र जात्यन्तराभावान्निर्निमित्ता शब्दस्य प्रवृत्तिरायातेत्याशङ्कोपपादयितुमाह॥

स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना॥ ६॥

स्वा असाधारणी आत्मीया गोशब्दत्वादिका न तु सकलशब्दसाधारणी शब्दत्वादिः। एवं चासाधारणत्वेन विशेषणात्तया सम्बन्धाव्यभिचारः। शब्दस्यार्थजात्या सम्बन्धव्यभिचारः। शब्दस्यार्थजात्या सम्बन्धव्यभिचारेऽपीति स्वा जातिरेव मुख्यमभिधेयमित्युक्तं भवति। तथा च वाक्यकारः न वा शब्दपूर्वको ह्यर्थे सम्प्रत्यय इति। अत एवाव्यभिचारिण्या स्वरूपजातेरर्थजात्यभिधाने शब्दस्य नान्तरीयकमभिधानमिति प्रथममित्याह। यदभेदेन यत्प्रतिपत्तिः तदवश्यं तत्र प्रतिपत्तव्यमित्येतावतात्र प्राथम्यं न तु क्रमेणाभिधानम्। यद्वा सम्बन्धव्युत्पत्तिकालापेक्षं प्राथम्यम्। तथा हि सम्बन्धव्युत्पत्तिकालेऽर्थजात्या नास्ति सम्बन्धः। तथात्वे वाचकत्वेन तत्र विनियोगोऽनर्थकः स्यात्। अर्थस्य प्रतिपन्नत्वादिति सोऽर्थस्तावत्तेन शब्देन न प्रतिपन्नः। यदि च स्वजात्यभिधानं तदानीं न स्यात्, तदानर्थकत्वाद्विभक्तियोगो न स्यादिति प्राक्संज्ञिनाभिसम्बन्धात्संज्ञा रूपपदार्थिकेत्युक्तं। रूपं हि स्वरूपं स्वाजातिर्वा इति दर्शनभेदेन कथ्यते। सर्वैरिति। स्वरूपपरैरर्थपरैश्च तस्या एव स्वरूपतया व्यवहाराच्छब्दस्वरूपेणावस्थिता जातिः प्रतिपद्यते। अर्थस्य झटित्येव शब्दस्वरूपाभेदेनावबोधेऽपि यथाप्रतिपादितक्रमाश्रयेण ततः स्वजातिप्रत्यायनादनन्तरं अर्थजातीनां गोत्वादीनामात्मसु तस्याः शब्दजातेः समारोपस्य कल्पना न परमार्थः शब्दविवर्तत्वेनार्थस्य शब्दात्तत्वतो भेदाभावात्। यद्वा सम्बन्धव्युत्पत्तिकाले गौरयमर्थ इत्यर्थजात्या शब्दजातेरत्यन्तभेदात्सामानाधिकरण्यान्यथानुपपत्याऽभेदाध्यारोपः कल्प्यते। यथा गौर्वाहीक इति। अन्यथा सङ्केतस्यैव कर्तुमशक्यत्वात्। यथा चायमनादिरपौरुषेयो वाच्यवाचकभावः तथाध्यारोपोऽपि। अन्यथा वाच्यवाचकभाव एव न घटेत। तथा बौद्धस्य दृश्यविकल्पार्थैकीकारो भेदानध्यवसायलक्षणः। ननु यथा गौर्वाहीक इत्यत्र पुरुषेच्छया ऽध्यारोपः। व्यवहारे शब्दार्थयोः सदैवाभेदावसायात्क-

धर्मियं प्रतिवर्णमनभिव्यक्ता साधारणी जातिरसमसमयभाविभि-र्वर्णैरभिव्यज्यत इति चेत् यथोत्क्षेपणत्वादिजातिरिति ब्रूमः। तथा हि प्रत्येकं क्रमेक्षणानामुपव्यञ्जकत्वे ऽपि यः प्रथम उत्क्षेपणक्षणः स परमाणुमात्रदेशाक्रमणमात्ररूपत्वात् भ्रमणक्षणात् सारूप्यवशादनवधार्यमाणभेद एकैको ऽसमर्थो नियतजात्यभिव्यञ्जन इति क्षणान्तरमपेक्षते। न च तस्य भ्रमणक्षणाद्विशेषो नास्ति उपक्रम एवोत्क्षिपामीत्येवं प्रयत्नजनितत्वात्। एवं गोशब्दमुच्चारयामीत्ययं प्रयत्नो यद्यपि गगनशब्दजनकात्प्रयत्नादन्य एव हेतुभेदाच्च गकारयोरपि भेद एव तथापि सादृश्यादसौ दुरवधार इति व्यञ्जको ऽपि सन् प्रथमो ध्वनिरस्फुटमभिव्यनक्तीत्यावर्तमानो ऽपि न विशदतरसामान्यविशेषाभिव्यक्तौ हेतुः। यदा त्ववयवप्रबन्धः क्रमेणोपलब्धो भवति, अथ शब्दजातिविशेषोपाधियुक्ता व्यवहारा अवतिष्ठन्ते। तदानीं साहचर्यात्परस्परावच्छेदवशेन विलक्षणतया। प्रतिभासनात्। यथा च श्लोकः सकृत्पठ्यमानो नावधार्यते अभ्यासेन तु स्फुटावभासः, तथा चरमत्वेन विचकास्ति रत्नतत्त्ववत्स्फोटतत्त्वं। प्रथमाक्षरेण हि जातेराभासमात्रं जन्यते तदुत्तरोत्तरवर्णकलापेन तु स्फुटतरस्फुटनपरिच्छेदाधानं। संस्कारविशेषोत्पादनद्वारेणाभिव्यक्तिविशेषस्य रत्नतत्त्वादौ दृष्टेः। तस्माच्छब्दादर्थं प्रतिपद्यामहे इति व्यवहाराद्वर्णानामर्थावसायजनकत्वानुपपत्तेः प्रक्रियाभङ्गस्य प्रथमकाण्ड एव विहितत्वान्निरवयवं प्रत्यायकं शब्दतत्त्वं जातिव्यक्तिभेदेन भिन्नं स्फोटस्वभावमेवाङ्गीकार्यं। गौरयमर्थ इति च वाचकाभेदेन वाच्यप्रतीतेः तदध्यासखचितवपुर्व्यवहार्यो ऽर्थः। तत्र च स्वरूपस्य वाच्यता प्रथमकाण्ड एव निर्णीता इह तु सम्बन्धसमुद्देशे ऽपि निर्णेष्यते ॥६॥

तत्रैतत्स्याच्छब्दसमवायि सामान्यं व्यधिकरणत्वात्कथमर्थजातिमभेदेन व्यपदिशेदित्याशङ्क्य निदर्शनेनैतद् व्युत्पादयति ॥

यथा रक्ते गुणे तत्त्वं कषाये व्यपदिश्यते।
संयोगिसन्निकर्षाच्च वस्त्रादिष्वपि गृह्यते ॥ ७ ॥
तथा शब्दार्थसम्बन्धाच्छब्दे जातिरवस्थिता।
व्यपदेशे ऽर्थजातीनां जातिकार्याय कल्पते ॥ ८ ॥

रक्ते गुणे तत्त्वम् । तस्य रक्तस्य गुणस्य भावो रक्तत्वं लौहित्यसामान्यं गुणव्यक्तिसमवेतमुच्यते । तत्समवेतसमवायात्कषाये रक्तगुणाधारे द्रव्ये व्यपदिश्यते व्यपदेशाय कल्पते । तद्विशेषणभूतं हि तत्कषायद्रव्यमभिधीयते, लोहिता लाक्षेति । तेन संयोगिना वस्त्रादयः, तयोः संयोगिनोः कषायवस्त्रयोः सन्निकर्षः सम्भेदः, तस्मान्निमित्तात्तत्रापि तल्लौहित्यं गृह्यते । संयुक्तसमवेतसमवायाद्वस्त्रादिष्वपि लौहित्यनिमित्तो व्यपदेशः । लोहितं वस्त्रमित्यर्थः । तथा शब्दार्थसम्बन्धादिति । लोहितगुणकषायद्रव्यसम्बन्धस्थानीयात्समानाधिकरणतयावस्थितात् स्वाभाविकात्केवलं व्युत्पत्तिकालेनिर्ज्ञातात्तदन्यथानुपपत्त्यैवाध्यारोपस्य कल्पनात्सम्बन्धादेव शब्दजात्या व्यपदेशः । अथात्रार्थजातिस्तस्या एव वाच्यत्वं प्रक्रम्य व्यपदेशे कल्पते स्वरूपाभेदेन जातिकार्याय कल्पते । जात्यादिशब्दे जातिषु वाचकत्वेन प्रवर्त्तमाने स्थिता जातिर्न केवलं व्यपदेशाय कल्पते यावज्जातिकार्याय च । अथ वा व्यपदेशे सति जातिकार्याय कल्पत इत्यर्थः । निःसामान्यानि सामान्यानीत्यर्थः । जातीनां स्वतो जातिरहितत्वे तत्कार्ये शब्दप्रत्ययानुवृत्तिलक्षणम् । शब्दार्थयोः सो ऽयमित्यभेदेन सम्बन्धाच्छब्दसमवायिनीजातिरर्थेनाध्यारोपिताभेदा सम्पादयन्ती तदात्मना सम्पद्यन्त इत्युपचर्यते । व्यक्तिरूपे च शब्दे जातेः समवायो न तु वर्णेष्ववस्थितेत्युपपद्यते । वर्णानां हि यौगपद्याभावादवाचकत्वमिति कथं तत्र शब्दजातेः समवायः स्यात् । केवलं स्फोटस्य जातिव्यक्तिभेदेन दर्शनद्वयमिति व्यक्तिस्फोटे जातिः समवेता । अर्थभेदेन हि भिन्नस्य नित्यशब्दस्याभिन्नाभिधानप्रत्ययहेतुर्जातिरवश्याभ्युपगन्तव्या । अत एव तया छुरिताया व्यक्तेरेव वाचकत्वं । उपलक्षणभूता तु जातिराश्रीयते इति कथमत्राननुयायिन्या व्यक्तेर्वाचकत्वमिति न चोदनीयम् । शब्दार्थसम्बन्धश्चात्र योग्यतालक्षणो ऽभिप्रेतः, सर्वो हि शब्दः संज्ञात्वेन विनियुज्यमानः सर्वत्रार्थे योग्यतालक्षणेन सम्बन्धेन सम्बद्धः । केवलं शक्त्यवच्छेदमात्रे संज्ञाकर्तुर्व्यापारो नत्वपूर्वसङ्केतकरणे, अर्थसम्बन्धस्यापौरुषेयत्वात् । एवं चादैक्षु वृद्धिशब्दो नापूर्व एवं सङ्केतित इति सर्वेषामनेकार्थत्वात् वक्तृभेदाद्वानेकत्वे समानाकारप्रत्ययनिबन्धनं जातिरेषणीया । तद्यथा आकाशस्य संयोगिभेदेन कल्पितभेदस्यावैकत्वे सत्याकाशत्वं वक्ष्यते । नचैवं

सर्वस्मात्सर्वार्थप्रतीतिप्रसङ्गः । प्रसिद्धिविषयेणार्थप्रतीतेः कुत्र चित्कस्य चित्प्रसिद्धत्वात् । प्रसिद्धानां चार्थानामर्थप्रकरणादयो विभागहेतव उक्ताः । तद्यथा गोशब्देन नवस्वर्थेषु सन्निहितेष्वपि प्रकरणादेः प्रतिनियतार्थावसायः । तदेवं शब्दजात्या शब्दव्यक्तिर्वाचिका प्रथममभेदेन व्यपदिश्यते ततो ऽर्थजातिः ततस्तद्व्यक्तिरित्ययं वास्तवः क्रमः । प्रत्यायने तु अक्रमनेव । शब्दाच्छुरितत्वे ऽपि चार्थस्य न स्वरूपव्यपगमः । यथा ह्यालोकाच्छुरितो ऽपि घटो न स्वरूपेण तिरोभवति एवं शब्दस्वरूपोपरक्तो ऽर्थः । स्वरूपारोपेण शब्दालोकयोरर्थप्रकाशकत्वस्यैवंविधस्य दृष्टेः । यथा च गौर्वाहीक इत्यत्र न गोत्वमात्रं प्रतीयते अपि तु अध्यारोपितगोरूपो वाहीकः । एवमिहापि । ननु स्फटिकमणाविवार्थे शब्दजातेः समावेशो विवक्षितः तस्यैव वाहीकवत्प्रत्याय्यत्वात् । स्वाभाविकश्चायमर्थप्रत्यायने शब्दानामभेदसम्बन्धो ऽभ्युपाय इति प्रतिपाद्यो ऽपि तथैव प्रतिपद्यते । न हि पुरुषाधीनमेतत् । अनादौ संसारे ऽनेनैव प्रकारेण सम्बन्धव्युत्पत्तेः को ऽत्र नियमतो ऽध्यारोपयिता कल्प्यतां । अव्युत्पन्नसङ्केतस्यापि चाभिन्नप्रत्ययोत्पत्तेरर्थजातिरप्यस्तीति न शब्दजातिरेवाध्यारोपिता ऽस्त्विति वाच्यं । शाब्दी ह्ययमेवंविधा प्रतीतिरिति चाक्षुषेण रक्तादिप्रत्ययेन निदर्शनभूतेन व्युत्पादिता । वस्तुसंनिवेशित्वाभावे ऽपि च शब्दजातेरयमनादिरध्यारोपो रूढः । सर्वैव व्यवहारे शब्दार्थयोरभेदावसायाद्भेदस्यापि च गौर्वाहीक इति वत् प्रतिज्ञानान्मिथ्याज्ञानमिदं न भवति । प्राक्सम्बन्धसंवेदनसमयादर्थजातयो भेदेनावभान्त्येव । अव्युत्पन्नसङ्केतस्य बालकस्य पुरो ऽवस्थितेषु सास्नादिमत्सु पिण्डेषु भिन्नः प्रत्यय उत्पद्यते तदा वाचकसन्निधानाभावादभिन्नप्रत्ययहेतुरर्थजातिरवधार्यते । अत एव कथं भेदेन तदनिर्धारितायामर्थजातौ शब्दजातिः समारोप्यत इत्यादि न चोदनीयम् ॥ ७ ॥ ८ ॥

जातिकार्याय कल्पत इत्युक्तमेवार्थमभिव्यनक्ति ॥

जातिशब्दैकशेषे सा जातीनां जातिरिष्यते ।
शब्दजातय इत्यत्र तज्जातिः शब्दजातिषु ॥ ९ ॥

आकृत्यभिधानाद्वैकविभक्तौ वाजप्यायन इति जातिपक्षे प्राधान्यादेकशेषस्य, तत्फलमेकशब्दप्रयोगो ऽत्रैकशेष उक्तः । सहविव-

ष्मा चैकशेषेण लक्ष्यते । जातिशब्दैकशेषे प्रसक्त इति वा योजनीयं । सेति शब्दजातिः । अर्थजातीनामभेदेन प्रत्यवस्यमाना जातिशब्दगता जातिरेकशब्दवत्त्वं, सम्पादयति जातिकार्ये । तद्यथा गावी वृक्षा इत्यादिरभिन्नसामान्यनिबन्धनस्तदेकार्थसमवायात्समाश्रितविशिष्टसंख्य एकशब्दप्रयोगः । तथा जातय इमा इत्ययमपि जात्याश्रयापरजात्यभावाद्वाचकजात्यध्यासाश्रय उपपद्यते । शब्दगतं च सामान्यं जातिवाचककार्यमुपचरतीत्युच्यते न त्वर्थजातिष्वेवेति नियमः केन चिक्रियत इति । यदा शब्दजातयो ऽपि प्रत्याय्याः तदाऽऽस्वप्यभिधानगतं जातिकार्याय कल्पत एवेत्याह शब्दजातय इत्यत्रेति । तज्जातिः शब्दगतं सामान्यम् । शब्दजातय इमा इत्यत्रैकपदप्रयोगे तस्योच्चारितस्य शब्दजातिशब्दस्य या जातिः सा शब्दजातिषु गोशब्दत्वादिकासु व्यक्तिस्थानीयासु प्रतिपाद्यास्वभिन्नशब्दप्रयोगे निबन्धनमित्यर्थः ॥ ९ ॥

यद्येवं शब्दजातिः शब्दगतानामपि जातीनामन्या वाचकजातिस्तासामध्यस्येत्यनवस्थाप्रसङ्ग इत्याशङ्क्याह ॥

> या शब्दजातिः शब्देषु शब्देभ्यो भिन्नलक्षणा ।
> जातिः सा शब्दजातित्वमप्यतिक्रम्य वर्त्तते ॥ १० ॥

प्रयोक्तृभेदाद्बहुषु शब्दजातिशब्देषु अभिन्नाप्रत्ययनिबन्धना या जातिस्तेभ्य एव शब्देभ्यः स्वाश्रयभूतेभ्यो भिन्नस्वभावा सा गोशब्दत्वादिशब्दजातिवर्गान्तःपातिनी न तु व्यपदेशान्तरार्हा । शब्दजातिशब्दस्यापि गोशब्दत्वादिवत् शब्दजातय इत्यनेनैवैकशब्दप्रयोगे सापि प्रत्याय्यत इति न प्रयोगानवस्थापत्तिरित्यभिप्रायः ॥ १० ॥

तदेवं ध्वनिकायसिद्धाध्यासदर्शनाश्रयेण सार्वत्रिकी जातिपदार्थव्यवस्था दर्शिता । स्वरूपभूता हि जातिः सर्वेषां । शब्दानामन्तरङ्गत्वादसाधारणत्वाद्धेतुत्वाच्च प्रथमं प्रतिपाद्या । इदानीमध्यासानाश्रयेणापि प्रौढवादितया जातिपदार्थव्याप्तिमुपपादयितुमाह ॥

> अर्थजात्यभिधाने ऽपि शब्दजात्यभिधायिनः ।
> व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः ॥ ११ ॥

अन्यथा चात्र सम्बन्धः । तथा हि, अस्तु शब्दजातेरर्थजातीनां जातिकार्यं, सम्बन्धव्युत्पत्तिस्तु न घटते । स यत्र हि सङ्केतस्तत्र शब्दजातिरध्यस्यते । स एव त्वनेकत्वादर्थजातीनां सामान्यान्तरमन्तरेण न सम्भवतीत्याह । अर्थे जात्यभिधानेऽपीत्यादि । यद्यपि शुद्धाः पदार्थजातयः शब्दैरभिधीयन्त इत्याश्रीयते तथापि सर्वे जात्यभिधायिनो जात्यादिशब्दा अपि तदा जातिवाचिन एव । ननु निःसामान्यानि सामान्यानीति सिद्धान्तात्कथं जात्यादिशब्दा अपि जात्याधारां जातिमभिदध्युरित्याह । व्यापारलक्षणा इति । व्यापारः कार्यं प्रयोजनं तदेव लक्ष्यतेऽनेनेति लक्षणं हेतुर्येषां पदप्रत्याय्यानामर्थानां ते तथा नियमितस्वरूपाः । अयमाशयः । वैशेषिकादीनां भवन्तु निःसामान्यानि सामान्यानि, तानि हि व्यक्तिष्वन्वयप्रत्ययावसेयानि परोपाधिरूपाणि स्वतन्त्रव्यक्तिवादिदन्तावभासितत्वाभावात् सामान्यान्तरेण नोपाधीयन्ते । वैयाकरणानां शब्दार्थोऽर्थ इत्यभ्युपेयतामन्वयिरूपावच्छेदेन शब्दस्य प्रत्ययस्योत्पत्तेर्जातिष्वपि जातिरविरुद्धाऽभ्युपगम्या । एतदेव हि व्यक्तिष्वपि जात्यभ्युपगमे निमित्तमित्यत्रापि तथाभ्युपगमे कः प्रद्वेषः । प्रत्यक्षा अपि च पदार्थाः स्वकार्यं विज्ञानादिकं कुर्वन्तः, सन्तीति व्यवह्रियन्ते किं पुनः शब्दवाच्याः पदार्था इति सामान्यवचनाद् द्रव्यादयोऽपि शब्दवाच्यत्वेनैव लक्ष्यन्ते । शब्दप्रमाणकानां हि यच्छब्द आह, तत्परमार्थरूपं । तथा चान्वयिरूपेण गुणोऽप्यभिधीयमानो जातिरेव, यथोपमानसमासे श्यामादिः । तथा चोपमानानि सामान्यवचनैरित्युच्यते । एवं क्रियाऽप्यभेदेनाभिधीयमाना जातिः । तथेदं तदिति स्वातन्त्र्येण विशेष्यतयाभिधीयमाना जातिगुणक्रिया अपि द्रव्यमिति यथावसरमग्रे निर्णेष्यत एव । एतच्च लौकिकव्यवहारानुगुण्येन शास्त्रेऽस्मिन् व्युत्पाद्यते । शास्त्रान्तरप्रसिद्धा हि व्यवस्था लोकविरुद्धा । लोके हि गवि शृङ्गं, वृक्षे शाखेति व्यवहारः । तथैव च व्याकरणेऽप्याधारसप्तमी । शास्त्रान्तरे त्ववयवेष्ववयवीति शृङ्गे गौः शाखायां वृक्ष इति स्यात् । इत्थं च शब्दाभिधेयस्येहार्थत्वात्सर्वे जात्यभिधायिनो यस्मात्, शब्दव्यापारेण पदार्था लक्ष्यन्ते, यद्यपि बहिर्वस्तूनि न सन्ति तथापि शब्दैस्तथा प्रत्याय्यन्ते ऽतो भिधाव्यापारवशादन्वयिरूपेण प्रत्यायनाद्यातिर्जातौ पदार्थे सिद्धेप्येषो

ऽप्यर्थः, अभिधाव्यापारलक्षणत्वमेव व्यक्तयति ॥

जातौ पदार्थे जातिर्वा विशेषो वापि जातिवत् ।
शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचिनः ॥ १२ ॥

जातौ पदार्थे इति पक्षावच्छेदं करोति । अत्र हि पक्षे सर्व एव शब्दो जातिवाचीत्यभ्युपगन्तव्यं । भवतु मा वा भूज्जातिषु जातिः, शब्दैस्तु जातिर्व्यतिरिक्तया जात्यैकस्वभावैवापेक्ष्यते प्रत्याय्यत्वेनाऽङ्गीक्रियते । स्वालक्षण्येन हि वस्तूनां भेदः शब्दैः स्प्रष्टुं न शक्यते, अन्वयिरूपावेशेन सम्बन्धव्युत्पत्तौ शब्दस्य वाचकत्वात्तथा च जातीनामितरेतरभेदो वस्तुसन्ना ऽभिधीयते अपि त्वभेदकल्पेन ता अभिधीयन्ते । अभेदश्च सामान्यमिति सिद्धमेकशब्दत्वं जातय इति । तथा यो ऽपि विशेषः संज्ञाशब्दानां वाच्यः प्रतिनियतः, सो ऽपि जातिवत्प्रसिद्धजात्या तुल्यमेव वक्ष्यते शब्दैः । तत्रापि बाल्यकौमाराद्यवस्थाभेदः शब्देन न स्पृश्यते ऽपि त्ववस्थातृरूपमेवानुगतमसिद्धं प्रत्यभिज्ञाप्रत्ययनिमित्तं तत्रावश्याभ्युपगन्तव्यं। अतो यस्माज्जातिवत्सर्वमपेक्ष्यते शब्दैस्तस्माज्जातिविशेषं प्रतिपादयन्तः सर्वे जात्यभिधायिन इति जात्यभिधानव्याप्तिं निगमयति । एवञ्च संज्ञाशब्दानामपि जातिवादिमते जातिशब्दत्वमित्येकैव शब्दानां प्रवृत्तिः ॥१२॥

एवं दर्शनान्तरे ऽपि शब्दव्यापाराश्रयेणैव व्याप्तिसिद्धिरित्याह ॥

द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वार्थ उच्यते ।
द्रव्यधर्माश्रयाद् द्रव्यमतः सर्वार्थ इष्यते ॥१३ ॥

न केवलं मयैव जातिपदार्थवादिनैतदङ्गीकृतं सर्वार्थो जातिरिति। यावद्द्रव्येपि पदार्थे, द्रव्यपदार्थपक्षे ऽपि द्रव्यधर्मा सर्वार्थ उच्यते,कुतः द्रव्यधर्माणामाश्रयणाद्द्रव्यमतः सर्वार्थ इष्यते, व्याप्तिरतः सिद्धा भवतीत्यर्थः । द्रव्यवादिनाप्येतदभ्युपेतव्यं व्याप्तिसिद्धये। शब्देन यो ऽर्थ उच्यते सर्वो ऽसौ द्रव्यधर्मयुक्त एवेत्यभिप्रायः । यथा तव द्रव्यवादिनः केचिदेव शब्दा मुख्यद्रव्यवाचिनस्तदन्ये तूपचरितद्रव्याभिधायिनः । तथा ममापि जातिवादिनो मुख्यां जातिमभिदधति केचिदुपचरितामन्य इति मतद्वये ऽपि साम्यं। तत्र द्रव्यधर्मा

इदं तदिति प्रत्यवमर्शयोग्यत्वं, परिनिष्पन्नास्वातन्त्र्यं, लिङ्गं, सङ्ख्यायोगश्चेत्येवमादयः । तेषां शुक्लादिगुणेष्वध्यारोपात्ते ऽपि द्रव्यस्येव धर्मो येषामिति द्रव्यधर्माणः । तथा हि शुक्लो नीलं स्त्रीपुन्नपुंसकानि सत्त्वगुणाः । तथैकत्वादिभिः शब्दैः प्रत्याय्यमाना गुणादयो द्रव्यधर्माणः स्वातंत्र्यादिरूपेणावभासन्त इति सर्वो ऽर्थो द्रव्यरूपेणाभिधीयते ॥ १३ ॥

एवं शब्दव्यापाराश्रयेण व्याप्तिरुपपादिता । अधुना वैशेषिकदृष्ट्याप्यर्थगतसमानधर्माश्रयेण जातिपदार्थव्याप्तिमाह ॥

अनुप्रवृत्तिधर्मो वा जातिः स्यात्सर्वजातिषु ।
व्यावृत्तिधर्मसामान्यं विशेषे जातिरिष्यते ॥ १४ ॥

जातीनामेतज्जातित्वं येयं स्वाश्रयानुवृत्तिः । सर्वजातीनां साधारणो धर्मः सा च, ताभ्यो ऽनन्यापि सादृश्याद्भेदेन परामृष्टा सती, सर्वासां जातिः । सर्वैव हि जातिः स्वव्यक्तीरनुवर्तते । उपलक्षणं चैष धर्मः । तेन स्वानुरूपप्रत्ययजनकत्वं, यद्बलाद्द्रव्यं तद्रूपमाभाति । स्वानुरूपाभिधानहेतुत्वं, यद्वशाद्द्रव्यं तद्रूपाभिधानवाच्यं भवति । प्रत्याश्रयं च सर्वात्मना परिसमाप्तिः साधारणो जातिधर्मः । यदि भागशो जातिर्वर्तेत तदा भाग एव गोत्वादिप्रत्ययः स्यात् । सम्पूर्णश्च विषाणाद्यवयवदर्शने ऽपि झटिति गोत्वाकारप्रत्ययः प्रसूयते । प्राप्ताश्रयपरिसमाप्ता अपि च गुणाः प्रतिद्रव्यं भिन्ना, जातिस्त्वेकैवेत्येवमादयो ऽसाधारणा धर्मवाच्याः । यथा च गोत्वादिजातिः सर्वा व्यक्तीर्व्याप्नोति तथैते धर्माः सर्वजातीर्व्याप्नुवन्तीति जात्या तुल्यरूपत्वाज्जातिकार्याय कल्पन्ते । एवं सर्व एव विशेषा व्यावर्तन्ते । अन्यथा ऽनुगमात्सामान्यानि स्युर्न विशेषा इति सर्वविशेषेषु साधारणी व्यावृत्तिः, सामान्यसमो धर्मो भवंस्तेषु जातिरित्युच्यते । नन्वेवं गोपिण्डेष्वपि सास्नालाङ्गूलखुरककुद्विषाणाद्यवयवसम्बन्धस्य साधारणत्वात्सैव जातिरस्तु मैवं, सास्नादिमत्त्वेन सास्नादिमानित्यादि प्रत्ययो जन्यते न तु गौर्गौरिति । अनुरूपं हि कार्यं कारणं कल्पयति तद्यथा दण्डीति प्रत्यये दण्डसम्बन्धो निमित्तं न तु दण्डोपादित्सा । यथैवमनुवृत्त्यापि न जातिर्जातिरिति प्रत्ययो, युक्तं व्यावृ-

स्या च विशेषो विशेष इति । नैतदेवम् । गत्यन्तराभावादत्र सदृशधर्मरूपा जातिः, यत्रधर्मो जातिः कल्पते । मुख्ये जातिमत्त्वे बाधकोपपत्तेः । तथाहि । सामान्येष्वपरसामान्यसमवायेऽनवस्थादि बाधकमन्यत्र निर्णीतम् । नित्यद्रव्यवृत्तिषु व्यावृत्तिप्रत्ययजनकेषु सामान्याभ्युपगमे संशयापनोदाय विशेषान्तरकल्पने तेषामपि सामान्यसमवाये सन्देहविषयत्वाद्विशेषान्तराभ्युपगमेऽनवस्थाप्रसङ्गः । अथ कश्चिन्निःसामान्येऽस्ति विशेषः, तदा तद्विशेषात्सर्वेऽपि तथा स्युरित्यन्यत्र विस्तरेणोक्तम् । गोपिण्डेषु सामान्याभ्युपगमे न किंचिद्बाधकमिति न तत्र यथा कथंचिन्निमित्तं परिकल्प्यम् । तदेवं यत्र जात्यभ्युपगमे प्रमाणबाधास्ति तत्र सदृशधर्मरूपा जातिः । तथा च भावेष्वपि सामान्याभ्युपगमे भावत्वापत्तेरभवनात्मकधर्मसामान्यादन्वयिप्रत्ययविषयतेति सैव तत्रापि जातिः ॥ १४ ॥

कालाकाशदिशामेकत्वान्नित्यत्वेनावस्थाभेदाभावाच्च कथं जातिः, येन व्याप्तिसिद्धिरित्यत आह ॥

संयोगिधर्मभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ॥ १५ ॥

यथा सामान्यविशेषाणामन्वयिधर्मोपाधिरभेदः तथाऽऽकाशस्यापि संयोगोपाधिर्भेद इति प्रकृतापेक्षः समुच्चयः । आकाशेन संयोगो विद्यते तेषां आकाशाधिकरणानां घटादीनां ते संयोगिनः । आकाशं हि सर्वेषां मूर्तानामधिकरणम् । अवकाशदानाद्धि तदाकाशं । मूर्तास्तु भावाः परस्परप्रतिबन्धका इति न ते ऽवकाशदायिनः । संयोगिनां धर्मभेदः प्रत्यक्षादिप्रमाणसिद्धं परिमितत्वं तद्वशाद्वा लोकप्रसिद्धं परिमितदेशवृत्तित्वं । यत्र हि देशे संयोगः परिसमाप्तो वर्तते स प्रदेशो भवत्याकाशस्यानेकः । कार्यं प्रति देशः प्रदेश इति निर्वचनात् । गुणाश्च केचिद्व्याप्यवृत्तयो यथारूपादयः । संयोगस्तु मूर्तिपरिच्छिन्नवस्तुवृत्तिरिति सर्वदा प्रदेशवृत्तिरेव । अतः संयोगस्य नियतदेशतया संयोगिनोऽपि नियतदेशवृत्तय इति संयोगिधर्मभेदेनाकाशस्य भेदो भवत्युपाधिकृतो न स्वतः । यदाह देशे च परिकल्पित इति । देशभेदाच्च सामान्यमाकाशस्यापि विद्यते । अतश्च प्रतिदेशमिदमाकाशमिदमाकाशमित्यभिन्नाभिधानप्रत्ययानुवृत्तिलक्षणमाकाशसामान्यमा-

काशशब्दगोचरो ऽस्ति । एवं समानन्यायत्वात्कालादीनामपि प्रदेशपरिकल्पनेन सामान्यमुपवर्णनीयम् । तथा हि कालस्य युधिष्ठिरादिसंयोगवशेन भेदेन सत्यभिन्नं कालसामान्यं कालशब्दवाच्यमस्ति । एवं मेरुं प्रदक्षिणमावर्तमानस्य सवितुर्लोकपालगृहीतैर्देशविशेषैर्ये संयोगाः, तदुपाधिना सूर्येण दिशः संयोगे सति भेदभिन्नं दिक्सामान्यं दिक्शब्दवाच्यं परिकल्प्यम् । आत्मा तु प्रतिशरीरमन्य एवेति तत्राप्यस्त्येवात्मत्वसामान्यम । एवं समवायस्यापि सम्बन्धिभेदान्नानात्वोपचारे सर्वत्रेह बुद्ध्यनुवृत्तेर्जातिः परिकल्पनीया । ननु च संयोगिदेशेनाकाशस्य देशपरिकल्पनेन संयोगिनामितरेतराश्रयत्वम् । नैतदस्ति । इतरेतरव्यावृत्तिरूपतैव रथादीनां मूर्तत्वात्परिच्छिन्नपरिमाणत्वं बोधयति । कल्पितास्त्वाकाशदेशा लोकप्रसिद्धाः संयोगिवस्तुगतां परिच्छिन्नदेशतां ज्ञापयन्ति । सामान्यतयाकाशदेशत्वे रथादीनां प्रत्यक्षादिप्रमाणावसितरूपविरुद्धं व्यापित्वमारोपितं, स्वगतेन परिमितत्वेनाकाशस्य प्रदेशकल्पनया निराक्रियते । यद्येवं कल्पिता देशाः कथमाकाशस्य स्वतो निरवयवस्य देशभेदनिबन्धनं कार्यं जातिप्रक्लृप्तिलक्षणं जातिशब्दलक्षणं वा कुर्युः । येन तद्गता जातिरभिधीयेत । उच्यते । व्यक्तिस्थानीयानां देशानामद्वैतदर्शने यथा ऽसत्यत्वमसत्या व्यक्तयः स्मृता इति वक्ष्यते । तथेहाप्याकाशस्य सत्यत्वे व्यक्तीनां न कश्चिद्विरोधः ॥ १५ ॥

अथ वा मुख्या एवाकाशस्य देशा घटादीनामिवेत्याह ॥

अदेशानां घटादीनां देशाः सम्बन्धिनो यथा ।
आकाशस्याप्यदेशस्य देशाः संयोगिनस्तथा ॥ १६ ॥

इह देशो ऽवयव उच्यते । घटादयश्चावयविनः स्वात्मनि निरवयवाः । ये हि तेषामवयवभूताः कपालादयस्ते आरम्भकाः कारणभूता व्यतिरिक्ता एव समवायसम्बन्धेन सम्बन्धिनः । एवमाकाशमपि केन चिदप्यनारब्धत्वादमूर्त्तं व्यापि निरवयवमित्यात्मभूतदेशाभावाद्रथादयः संयोगिन एवास्य देशाः तथा तद्भेदादाकाशभेदे सर्वत्राभिन्नप्रत्ययानुगमाज्जातिरपि कल्प्या । आकाशं ह्यवच्छिन्दन्तो ऽर्था, देशास्तस्य भवन्ति । तत्कृतावच्छेदं चाकाशमपि तेषामा-

धारभावापत्तेर्देश इत्यन्योन्यदेशत्वम् । मूर्त्तामूर्त्तयोर्मूर्त्तास्त्वव्यापकाः परस्परमवच्छेदका न भवन्तीत्याधार एवैतेषां देशः ॥ १६ ॥

कथं तर्हि देशो गौणत्वव्यवहारः । यदि हि कस्य चिन्मुख्याः प्रदेशा आत्मभूतास्युस्तदायं युक्तः स्यान्नान्यथेत्यत आह ॥

भिन्नवस्त्वाश्रया बुद्धिः संयोगिन्यनुवर्तते ।
समवायिषु भेदस्य ग्रहणं विनिवर्तते ॥ १७ ॥
अतः संयोगिदेशानां गौणत्वं परिकल्प्यते ।
अविवेकात्प्रदेशेभ्यो मुख्यत्वं समवायिनाम् ॥१८॥

भिन्ने पृथक्सिद्धे वस्तुनि आश्रयो यस्या बुद्धेः । अप्राप्तयोः प्राप्तिः संयोग इति पृथक्सिद्धपदार्थविषया संयोगबुद्धिः भेदस्य ग्रहणं विनिवर्तत इति । यतो ऽपृथक्सिद्धानामिह बुद्धिहेतुः समवायो यथा इह कपालेषु घट इति भेदेन ग्रहणादविवेकाद्विवेक्तुमशक्यत्वात् । यतो भिन्नाबुद्धिः संयोगिनां अतस्तत्प्रदेशानां गौणत्वं । यतश्च समवायिनामभिन्ना बुद्धिरतस्तत्र मुख्यत्वं । समवायप्रभावाद्धि प्रदेशेभ्यो विवेक्तुं समवायिनो न शक्यन्त इति तेष्वेव देशेषु कपालादिष्वेव तदारब्धमवयवि द्रव्यमुपलभ्यते । अतस्तत्र मुख्याः समवायिनः प्रदेशत्वेन व्यवस्थाप्यन्ते । संयुक्तानां ते नैवमिति गौणत्वमित्यनेनौपचारिकत्वमाकाशदेशानां समर्थितम । ननु च यथा घटादीनां संयोगिनां परस्परसंयोगे ऽपि परस्परदेशभावो न भवति एवमाकाशेनापि न स्यात् । नैतदस्ति । आकाशेन सदा सम्बद्धा द्रव्यादय इति तत्राध्यारोपो युक्तो न तु घटादीनामपि नियतसंयोगानाम् । अत एव घटादिष्वाकाशानुगतः प्रत्ययो दृश्यत एव घटाकाश इत्यादि, अध्यारोपे च न भेदविगलनमित्युक्तम् ॥ १७ ॥ १८ ॥

तदेवं वैशेषिकदर्शनाश्रयेण जातिपदार्थव्याप्तिरुपपादिता । इदानीं विज्ञानवादेनापि पदार्थव्यवस्थामाह ॥

अनुप्रवृत्तिरूपां यां प्रख्यातामाकृतिं विदुः ।
के चिद्व्यावृत्तिरूपां तु द्रव्यत्वेन प्रचक्षते ॥ १९ ॥

सर्वपार्षदं हीदं शास्त्रमिति शब्दार्थो ऽर्थ इति वा पदार्थव्य-

यस्त्वेयमनुगताकारा या बुद्धिस्तस्यां प्रतिभासमानस्तदाकारो ऽर्थरूपतया ऽवसीयमानवपुर्द्वयविकल्पयोरभेदाध्यवसायात्सामान्यमाहुः । व्यावृत्ताकारबुद्धिसंवेद्यविशेषाकारो ऽत्र च दर्शने तुल्यमिति प्रसङ्गादुक्तम् । एवं च बाह्यस्य सामान्यस्याभावात् आकाशादावपि तत्समर्थने न प्रयतितव्यम् । अनपह्नवनीयाभिन्नाकारप्रत्ययोपजनस्य सर्वथैव सिद्धेर्विज्ञाननये च सर्वमेव प्रत्ययात्मकमङ्गीकृतमेव । शब्दादुच्चरिताद्वा ऽऽकारवती बुद्धिरुत्पद्यत इति तदाकारस्यैव शब्दार्थत्वं न बुद्धेः । सद्याकारो बाह्योऽस्तु न वा, शब्दवाच्यत्वस्य न काचित्क्षतिः ॥ १९ ॥

ननु च वस्तूनां देशकालादिनिमित्तो भेद इति तदनादरेणाभिन्नान्येव तानि सिद्धानीति किमर्थं व्यतिरिक्तसामान्यकल्पनायां प्रयस्यत इत्याशङ्क्याह ॥

भिन्ना इति परोपाधिरभिन्ना इति वा पुनः ॥
भावात्मसु प्रपञ्चो ऽयं संसृष्टेष्वेव जायते ॥ २० ॥

निरुपाधिनो वस्तुनो ऽव्यवहार्यत्वात्सर्व एव परोपाश्रयो व्यवहार इति सामान्यादौ व्यतिरिक्तसामान्यकल्पनैव माकारीत्यत्र तात्पर्यार्थः ॥ २० ॥

तदेव व्यतिरेकमुखेनापि प्रपञ्चयति ॥

नैकत्वं नापि नानात्वं न सत्त्वं न च नास्तिता ॥
आत्मतत्त्वेषु भावानामसंसृष्टेषु विद्यते ॥ २१ ॥

एकत्वसंख्याधीन एकत्वेन व्यवहारः, पृथक्त्वनिबन्धनो नानात्वेन व्यवहारः, सत्तानिबन्धनः सत्त्वेन, स्वरूपसत्त्वेन तु सामान्यादीनामभावोपाधिर्नास्तीति व्यवहार, इति संसर्गदर्शने सर्वः परोपाश्रयो ऽयं प्रपञ्चो वैचित्र्यम् ॥ २१ ॥

एवं व्यतिरिक्तोपाधिदर्शनमुपन्यस्याधुना स्वशक्तय एवोपाधय इत्यद्वैतदर्शनाश्रयेणापि प्राह ॥

सर्वशक्त्यात्मभूतत्वमेकस्यैवेति निर्णयः ।
भावानामात्मभेदस्य कल्पना स्यादनर्थिका ॥ २२ ॥

एकमेव ब्रह्म सर्वशक्तीति प्रमाणेन सिद्धे ऽस्मिन्नर्थे ऽविद्यापरिकल्पितस्य भावभेदस्यापारमार्थिकत्वात् कार्यनानात्वोन्नीयमानः शक्तिभेद एवैकस्य युक्तो न तु स्वरूपभेदः ॥ २२ ॥

तथा च ॥

तस्माद् द्रव्यादयः सर्वाः शक्तयो भिन्नलक्षणाः ।
संसृष्टाः पुरुषार्थस्य साधिका न तु केवलाः ॥ २३ ॥

द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः पदार्था न पृथग्भूताः । एकस्यैव शक्तयो विलक्षणव्यापारानुमेया इति ता यथायथमुपगतसमन्वयाः प्रावरणाद्यर्थक्रियाकारिण्य इत्यस्मिन्मते सर्वत्रैव जातिव्यक्तिप्रविभागः कल्पितः, सत्यासत्यौ तु यौ भागौ इत्यत्र वक्ष्यमाण इति नाकाशादीनामपि कश्चिद्विशेष इत्यर्थः । यथा हि वैशेषिकाणां व्यतिरिक्तं सामान्यं, नैवमिह, केवलं विश्वमूर्त्तेः पदार्थस्य शक्तिमात्रं । न केवलं सामान्यमेव यावद् द्रव्यादयो ऽपीति प्रसङ्गात्कथितं । भेदाभ्युपगमे ऽपि द्रव्यादीनां संसृष्टानामर्थकारित्वं परमेकमेव शक्तिमदस्त्वित्यर्थः ॥ २३ ॥

तत्रैतत्स्यात्संसृष्टानां साधनत्वेनासामर्थ्यं संसर्गस्य तथात्वात्तस्य च व्यतिरेके द्वैतापत्तिरित्याशङ्क्याह ॥

यथैव चेन्द्रियादीनामात्मभूता समग्रता ।
तथा सम्बन्धिसम्बन्धसंसर्गे ऽपि प्रतीयते ॥ २४ ॥

चक्षू रूपालोकमिश्रितं, मन इन्द्रियार्थोन्यपरम्पराहितविशेषाः सङ्घटिता विज्ञानहेतवो ऽन्वयव्यतिरेकाभ्यां दृष्टा इति नेयमेभ्यः सामग्री नाम पदार्थान्तरं जनिका । अत एव हि सामग्रीजनकाः सामग्रीशब्दवाच्या वस्त्वन्तरस्यानुपलब्धेः । एवमेकेन सम्बन्धिना सर्वशक्तीनां साधारणभूतत्वेन प्रकृतत्वात्सम्बन्धो द्रव्यादिशक्तीनां । ततो य एकस्मादाधारव्यतिरेकात्संसर्गो रूपसम्मूर्च्छनं तस्मिन्नपि संसर्गे सति पुरुषार्थसाधके स्वभावभूता समग्रता विज्ञायते । तत्रापि ह्यात्मभूतैव न्यायायाता । द्रव्यमात्रेण गुणादिसंसर्गरहितेन व्यवहाराभावात् । एवं गुणादिमात्रेणेत्यघटमानिनः संसर्गस्य द्रव्यादिभिर्विवेकानवधारणात्स्वभावेनैव । क्वचित्पाठः तथा सम्बन्धिसम्बन्धसंसर्गो

ऽपि प्रतीयत इति । तत्रापि सम्बन्धिना सर्वशक्त्याधारेण सम्बध्यन्त इति सम्बधात् द्रव्यादिशक्तयः, तासां सम्बन्धानां शक्तीनामन्योन्यसंसर्गो ऽप्यात्मभूत एवेति व्याख्या । यद्वा सर्वशक्तेः पदार्थस्य सम्बन्धिनां संसर्गे ऽपि संसर्गावस्थायामपि तथैवासौ सम्बन्धः, आत्मभूत एवासौ संसर्ग इत्यर्थः । क्वचित्सामान्यानुगमाच्च विश्वस्य प्रमाणसिद्धो भेद इति प्रथमकाण्ड एव निर्णीतम् । तदेवम् यथादर्शनं जातिः शब्देन प्रतिपाद्यत इति इत्युपपादितम् । सा च नित्येति नित्यशब्दार्थः, तथा च नित्यावेवोपवर्णितावित्युक्तम् ॥ २४ ॥

तत्र जातेर्नित्यत्वे कार्योपयोगमाह ॥

नतदुत्पद्यते किञ्चिद्यस्य जातिर्न विद्यते ।

आत्माभिव्यक्तये जातिः कारणानां प्रयोजिका ॥२५॥

व्यक्त्यधीना जात्यभिव्यक्तिरिति स्वाश्रयकारणानां प्रयोजककर्त्तृत्वमिवावलम्बते जातिः । सदा सन्निहिता कार्योत्पत्तौ कारणानां सहकारिणीत्यर्थः । निमित्तकारणत्वाद्वैशेषिकदर्शने जातीनामेषो ऽर्थः प्रयोजकपदेन भङ्ग्याभिहितः ॥ २५ ॥

ननुकारणेष्वसन्निधानात्कथन्तेषाम्प्रयोजिकेत्याह ॥

कारणेषु एवं कृत्वा नित्यानित्येषु जातयः ।

क चित्कार्येष्वभिव्यक्तिमुपयान्ति पुनः पुनः ॥ २६ ॥

सर्वगतत्वाज्जातीनां कारणेष्वपि सन्निधानात्पदबन्धः । तथा च जात्यात्मना कारणेषु कार्याणामवस्थानाज्जातिरूपोपरागेण तदवसायात्तत्तत्साधनानां प्रवृत्तौ कार्यारम्भे तत्समवेतजात्यभिव्यक्तिरसकृदाश्रयोपलब्धौ भवति । नित्याः परमाणवः कारणानि दर्शनान्तरे प्रधानपुरुषादयः, अनित्या वीरणादयः । क चिदिति । दृश्येषु किञ्चित्किल कार्यं जात्याश्रयं निष्पन्नमपि । अदृश्यं यथा वायुर्द्रव्यमिति । तत्र हि तज्जात्यभिव्यक्तिर्नास्ति । इत्थं च कृत्वा प्राक् प्रभवादपि जातेर्विद्यमानत्वान्नित्यत्वं पोषितम् ॥ २६ ॥

तथा च जातिपदार्थनये ऽप्रजातेरुपयोगं दर्शयति ॥

निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।

स्वाश्रयस्याभिनिष्पत्तौ सा क्रियाणां प्रयोजिका ॥२७॥

घटं करोतीति कथमसतो निर्वर्त्यमानस्य क्रियायां साधनभावः कर्मण इत्येतदत्र चोद्यं नावतरति। जातेः सत्त्वात्स्वाश्रयनिर्वर्त्तनाय क्रियां प्रत्युक्तेन कारणपदबन्धन्यायेन प्रयोजकत्वादिति जातिरूपाश्रयेण च साधनता व्यक्तिरूपाश्रयेण च कर्मता निर्वर्त्यत इति कारकं कर्मेति सामानाधिकरण्योपपत्तिः। न हि जातिव्यक्ती अत्यन्तभिन्ने, गवाश्ववत्संमूर्च्छितस्वभावादित्युभयरूपाश्रयो व्यपदेशो ऽविरुद्धः। प्राप्यविकार्ययोस्तु कर्मणोः सत्त्वात्सत एव साधनोपपत्तिरिति निर्वर्त्यमानमिति विशेष्याह। जात्यात्मना च निरूप्य, वस्तुकारणेषु योग्येषु प्रवर्तन्ते तदर्थिन इति प्रयोजिकेत्युच्यते। एतच्च जात्यभिधानपक्षे सम्भवति घटशब्देन जात्यभिधानात्। व्यक्तिपदार्थपक्षे तु, उपचारसत्ताश्रयं साधनत्वं वक्ष्यति। व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः। साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितमिति ॥ २७ ॥

कारणानां प्रयोजिका जातिरित्युक्तं तथा च जातिपदार्थपक्षे न द्रव्यस्य क्रियासाधनत्वं अपि तु सैव विधिप्रतिषेधयोः साधनं जातिरित्याह ॥

विधौ वा प्रतिषेधे वा ब्राह्मणत्वादिसाधनम्।
व्यक्त्याश्रिताश्रिता जातेः सङ्ख्याजातिर्विशेषिका ॥२८॥

जातेः पदार्थत्वे तत्र विधौ चोदिते प्रतिव्यक्तिपरिसमाप्तत्वात्तस्याः सकृदनुष्ठाने ऽपि कृतशास्त्रार्थो ब्राह्मणमालभेतेति। एवं ब्राह्मणं न हन्यादित्यादिरपि प्रतिषेधो जातावेव, सकृदनुष्ठाने ऽपि च पुनरुल्लङ्घने चोदितस्य दोषः। तथा हि अहननं चोदितं हननं तु क्वचिदनुष्ठितमिति विरुद्धक्रियाचरणात्प्रत्यवाय एव। क्वचित्तु विध्यनुष्ठाने ऽन्यत्र तदभावे ऽपि न विरोधः। तथा चाहुः। नाकरणानि विधिं बाधन्ते प्रतिषेधस्तु क्रियां निवर्तयतीति। तस्माद्यदा यदा हननबुद्धिरुत्पद्यते तदा तदा प्रतिषेधः सर्वत्र ब्राह्मणजातौ व्याप्रियते। अत्र च जात्यवच्छिन्नकर्त्तव्यताप्रतिषेधावभासस्य सङ्कल्पस्यानुष्ठेयत्वम्। इत्थं प्रवृत्तिनिवृत्तिमये पुरुषार्थे सर्वत्र जातेरुपयोगो दर्शितः। अनुष्ठानस्य प्राधान्यात्तदङ्गं पराङ्गभूतं सामान्यं युज्यते द्रव्यसंश्रयेति।

वक्ष्यमाणन्यायेन संख्याविवक्षामत्राह । व्यक्त्याश्रितेति । व्यक्तिं द्रव्यमाश्रिता या एकत्वसंख्या तदाधारा या जातिराश्रयभेदभिन्नेष्वेकत्वगुणेषु प्रत्ययानुवृत्तिनिमित्तं सा प्रातिपदिकवाच्यम् । द्रव्यजातिमेकार्थसमवेतसमवायादवच्छिनत्ति, जातेः पदार्थत्वे विभक्तेरपि संख्याजात्यभिधायित्वात् । वास्तवेन च रूपेण संख्याजातिर्विशेषिका । शब्देन तु प्रत्ययार्थस्य प्राधान्याद्विशेष्यासौ । एवं चैकत्वसंख्याया अत्र विवक्षितत्वान्न युगपदनेकव्यक्तिविषयमनुष्ठानं चोदितं । सत्यपि जातिपदार्थत्वे एकस्यामपि च व्यक्तौ सर्वात्मना परिसमाप्ता जातिरिति न का चित्क्षतिः । कामनाहेतुकश्च विधिरिति सत्यां कामनायां व्यक्त्यन्तरे ऽप्यनुष्ठानाविरोधः । एवं प्रतिषेधे ऽपि हननबुद्धिर्निमित्तमिति तदुत्पत्तौ सर्वत्र तत्प्रवृत्तिः । तदेवं जातेः पदार्थत्वे चोदना सूपपत्तिः । यदा ऽह वाक्यकारः धर्मशास्त्रं च तथेति ॥ २८ ॥

ननु जातिरेव पदार्थ इत्यवधारणानुपपत्तिः । तस्याः स्वाश्रयसमवायावियोगात्, अत एव यासां कार्यसिद्धेः कारणानामाश्रयेषु भाव इत्याश्रयादुत्कर्षयितुमशक्या जातिः केवला कथं शब्देनाभिधीयत इत्याशङ्क्य दृष्टान्तेनैतदुपपादयितुमाह ॥

यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते ।
तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते ॥ २९ ॥

प्रतिबिम्बे भावान्तरोत्पत्तिर्विरुद्धपरिणामेष्वित्यादिना पूर्वं निराकृतेति मुखादिप्रतिबिम्बमादर्शादौ भ्रान्त्या ऽपि दृश्यमानं मुखशब्दाभिधेयमादर्शादिव्यञ्जकरहितं शुद्धं । एवं शब्दो ऽपि जातिं व्यक्तिरहितामभिदधाति । अयमाशयः । आश्रयसमवायावियोगे ऽपि सर्वत्राभेदात्सङ्केतोपपत्तौ जातिः शब्दाभिधेया शुद्धा, शाब्दे ज्ञाने तथाप्रतीयते । ऐन्द्रियके तु ज्ञाने विवेकानवसायात् भवतु जातिव्यक्त्योः सम्मूर्च्छितावभासः, शब्दे तु यथासङ्केतं प्रतीतिहेतुत्वे न का चित्क्षतिः ॥ २९ ॥

यद्येवं शब्दादप्रतीयमाना व्यक्तयः कथं शब्दज्ञानविषयतया जातीर्विशिंष्युरित्याशङ्क्याह ॥

यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते ।
इन्द्रियार्थेष्वदृष्टोऽपि ज्ञानभेदाय कल्पते ॥ ३० ॥
तथात्मरूपग्रहणात्केषां चिद्व्यक्तये विना ।
सामान्यज्ञानभेदानामुपयान्ति निमित्तताम् ॥ ३१ ॥

यद्वा युगपदुपलब्ध्यन्यथानुपपत्त्याऽनुमितसत्त्वानीन्द्रियाणि नित्यपरोक्षत्वानुपलभ्यमानस्वगतचक्षुःश्रोत्रादिविशेषाणि शब्दस्पर्शरूपरसगन्धेष्विन्द्रियार्थेषु चाक्षुषादिप्रत्ययविशेषहेतुभावं नियमेन प्रतिपद्यन्ते । न हि चाक्षुषं ज्ञानं श्रोत्रेन्द्रियकार्यं । एवमगृह्यमाणस्वभावा व्यक्तयः । शब्देनाभिधानवेलायां केषां चिदेव सामान्यज्ञानभेदानां काश्चन प्रत्यक्षप्रत्ययानामिहोपयान्ति हेतुतां व्यक्तयः । शाब्दे प्रत्यये शब्दार्थभूतानां सामान्यानां वस्तुतः समवायनियमात् विशेषमावेदयन्तीति न साङ्कर्यं शब्दार्थ इत्यर्थः । अगृह्यमाणस्यापि तदानीं व्यक्तिरूपस्यान्यदा प्रत्यक्षकाले गृहीतत्वात् व्युत्पन्नसम्बन्धस्यापि तद्विषयावसायाविरोधात्सम्प्रत्यगृह्यमाणस्यापि दृष्टे प्रतीतिविशेषहेतुत्वमिति । एतावता सामान्येनात्रेन्द्रियाणि दृष्टान्तः । केषां चित्सामान्यज्ञानभेदानामित्यर्थात्काश्चन नैव व्यक्तय इति लभ्यते । तदेवं केवलं जात्यभिधानपक्षः समर्थितः । तद्वदभिधाने तु न कश्चिद्दोषः जात्युपलक्षिते द्रव्ये ऽभिधाविश्रान्तेर्विरम्य व्यापाराभावात् । द्रव्यपदार्थनये तु जातिरनभिधीयमानैवमुपलक्षणमभेदेन सङ्केतार्थं द्रव्यस्येति, तत्रैव क्रियायोगोपलब्धेः शब्दवाच्यत्वं । यथोक्तं चोदनासु च तस्यारम्भादिति ॥ ३० ॥ ३१ ॥

इदानीं यदुक्तं प्राक्, सर्वशक्त्यात्मभूतत्वमेकस्यैवेति, अत्रापि मते जातिव्यक्तिप्रविभागमाह ॥

सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः ॥ ३२ ॥

अविद्यावृत्तिरूपस्य सर्वपदार्थेष्वागमापायिनो ऽसत्यत्वाद्व्यक्तिरिति व्यवहारः । तदेव हि सत्यं यस्मिंस्तत्त्वन्नविहन्यते इत्यन्वयिरूपं भेदप्रत्ययेष्वबाध्यमानं सत्यं जातिरिति व्यवहृतमद्वैतवादिभिः । तद्यथा । रुचकस्वस्तिककुण्डलादयो विकाराः परस्परोपमर्द्देन

भवन्तो ऽस्थिरप्रत्ययविषया:, सुवर्णमित्येव तु समन्वयिविज्ञानादवसेयं सत्यत्वम् । एवमभेदान्तरविवक्षायां तेज इत्येव सत्यं । तत्राप्यभेदस्तत्कारणमित्यन्त्या परा प्रकृतिः सत्या सर्वविकारानुयायिनी प्रशान्तकल्लोला चिदेकघना ब्रह्मेत्यागमविदः । तदुक्तं पृथिवीधातौ किं सत्यं विकल्पः, विकल्पे किं सत्यं विज्ञानं, विज्ञाने किं सत्यं ॐ अथ तद् ब्रह्मेति । प्रतिभावमिति । परमतेन भावानां भेदाख्यायां चित्सामान्यस्य सर्वत्रानुगमादेव महासत्तारूपमभावप्रतियोगि विश्वस्य जगतः सत्यरूपमवदातदर्शनैः साक्षात्कृत्योपदिष्टं भगप्रमाणम्, नमस्ते भगवत इति ॥ ३२ ॥

इत्थं चात्राद्वयनये परमार्थसत्ये सैव जातिर्महासत्ताख्या परब्रह्मस्वभावा, तस्या एव गोत्वादिजातिभेदेन विवर्ते व्यवहार इत्याह ॥

सम्बन्धिभेदात्सैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ ३३ ॥

वक्ष्यमाणैराश्रयादिभिः स्वसम्बन्धिभिर्भिद्यमानोपचरितभेदा गवाश्वादिषु सत्तैव महासामान्यमेव जातिर्गोत्वाश्वत्वादिका अपरसामान्यं, नान्या परमार्थभिन्ना सा विद्यते । तथा गोः सत्ता गोत्वं नापरमन्वयि प्रतिभासते एवमश्वस्य सत्ता अश्वत्वमित्यादि वाच्यम् । तस्यामेव च गवादिभेदभिन्नायां सत्ताख्यायां जातौ सर्वे गवादयो डित्थादय आकाशादयश्च शब्दा वाचकत्वेन व्यवस्थिता इत्यसाङ्कर्येण नियतोपाधिवशाज्जात्यभिधायिनः सिद्धाः ॥ ३३ ॥

सर्वशब्दविषयत्वमेवाभिव्यनक्ति ॥

तां प्रतिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥ ३४ ॥

सर्वभावेषु सद्रूपं सामान्यमनुगतं, अभावस्यापि बुद्ध्याकारेण निरूपणात् । महासत्तया ऽनया ऽवियोगात् प्रातिपदिकमात्रवाच्या सत्ता । तदुक्तं प्रातिपदिकार्थः सत्तेति । धातुभिरपि साधनाधीनलब्धजन्मसु क्रियाव्यक्तिषु समवेता यथोपाध्युपगृहीतनानात्वा सत्तैवाभिधेयत्वमापद्यते । सिद्धसाध्यरूपार्थद्वयात्मना च तस्या एव व्यावृत्तेस्तदपरस्याभावात् सर्वशब्दविषयत्वं सत्तायाः । प्रत्ययभागेनाप्यत्र य-

थायथं संख्याकारकाद्युपाधिविशिष्टा सत्तैवाभिधीयते । सा चोदय-व्ययरहितत्वान्नित्या, सत्प्रत्ययस्य सर्वदानुवृत्तेः । एते सत्तामात्रस्या-त्मनो महतो, यद्विशेषाः परिणामाः, यतः परं विशेषेभ्यो लिङ्गमात्रं म-हत्तत्त्वं, तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति। प्रतिसंसृज्यमानाश्च तस्मिंश्च सत्तामात्रे महत्यात्मन्यव-स्थाय यत्तन्निःसत्तासत्तं निःसदसदव्यक्तमलिङ्गं तस्मिन्प्रतियन्तीत्येवं सांख्ये बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमि-त्यतो ऽनन्तरस्य विकारग्रामस्य कारणरूपानुगमात्सत्तारूपत्वमविरुद्धमिति सत्तारूपं सर्वं जगदाख्यातं भवतीति सत्ताद्वैतवादः सांख्यनयेनाप्युपबृंहितः । एवं च सर्वशब्दवाच्या सत्ता शब्दप्रवृत्ति-निमित्तभूतेति यथायथं भिन्नोपाधिभावप्रत्ययाभिधेया सैव । नन्वेवं गोत्वमिति प्रकृतिप्रत्यययोरेकार्थताप्रसङ्गः । नैतत् । क्रियाविभेदेन सत्ताया भेदात् । प्रातिपदिकेन गवाश्रयायास्तस्या अभिधानं प्रत्ययेन तु निष्कृष्टाश्रयस्य सामान्यस्याभिधेयत्वदोषः । प्रकृत्यर्थनिमित्तश्च भावप्रत्ययभेद इति न साङ्कर्यप्रसङ्गः । यदुक्तं तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते इति ॥ ३४ ॥

एतदेवोपपादयितुमाह ॥

प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते ।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते ॥ ३५ ॥

क्रियावाची धातुः सत्त्ववाचितामेति, गीयते क्रियासत्त्वे च सत्तैव । तथा हि । साधनपरिस्पन्दवशात्क्रियाणां व्यक्तिस्थानीयानां विशेषशब्दवाच्यानां पौर्वापर्ये तद्गतापि जातिस्तथात्वेन प्रतिभासत इति सैव साक्षात्सत्ताख्या क्रिया सकलधातुविषया। तस्या एवावान्तरो धात्वर्थभेद इत्यनन्तरमेव वक्ष्यते । साधनसम्पर्कहेतुकप्रतीयमानरू-पापरामर्शी सत्तैव सत्त्वं द्रव्यमित्युच्यत इति सिद्धसाध्यरूपो द्विधा भिवर्तः सन्मात्ररूपस्य परस्य ब्रह्मणः प्रतिपादितः। तदेव हि सर्वत्रा-नुगतम् । न चात्र दर्शने सद्भ्यः सत्ता व्यतिरिक्ता भावत इति सर्वं तन्मयं । ततश्च सर्वशब्दानां सत्तावचनत्वाज्जातिपदार्थव्याप्तिः। यद्यपि च द्रव्यपदार्थे ऽपि ब्रह्मद्रव्यस्याभिधानमुपाधिभेदभिन्नस्य वक्ष्यति तथापि तात्पर्यभेदादवस्थाभेदः । जातिपदार्थे सर्वत्रान्वयि-

रूपं जात्यात्मना ब्रह्म विवक्षितम्। द्रव्यपदार्थनये तु परिनिष्ठितरूपं परमार्थनयेति दर्शनविकल्पाश्रयमेवं च पक्षद्वये ऽप्येकपक्षीभावरूपः सिद्धान्तः। परमार्थदृष्ट्या ऽत्र सर्वपार्षदत्वात्पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः। एष च सर्वत्रैवास्य ग्रन्थकारस्याभिप्रायः। पदार्थचर्चाविषये ब्रह्मदर्शननयेनैव सम्बन्धादिविचारे विनिगमनात्॥ ३५॥

इदानीं समग्रः क्रियाकलापः सत्ताविवर्त्त एवेति निरुक्तकारमतेन संवादमाह॥

सैव भावविकारेषु षडवस्थाः प्रपद्यते।
क्रमेण शक्तिभिस्ताभिरेवं प्रत्यवभासते॥ ३६॥

षट् भावविकारा भवन्तीति ह स्माह भगवान्वार्ष्यायणिरिति निरुक्तकारः। तत्र च भावस्य परमार्थरूपस्य सत्तात्मकस्य जन्मादयो विकारा इत्यर्थः। सन्मात्रस्वभावा हि सत्तोत्तरोत्तरविकारापत्तौ जायते ऽस्ति विपरिणमते वर्धते ऽपक्षीयते विनश्यतीति व्यपदेशमासादयति। प्रथमतरं च सन्मात्रं रूपमस्तिशब्देन नाभिधीयते अपि तु जन्मोत्तरकालभावी तस्या अवस्थाविशेषः। जन्मानन्तरभावि हि रूपं तस्या लोके सदिति व्यवहार्यं। ततः प्राक्पश्चाद्भाविन्यः पुनरवस्था जन्मविपरिणामादिरूपेण व्यवहार्याः। तथा हि। स्वशक्तिमाहात्म्यात्पूर्वं जायत इत्यवसीयते पश्चादस्तीति। अवस्थितस्य विकारापत्तिरिति विपरिणमते तच्च विपरिणमन्मुहूर्तमपि नावतिष्ठते इति वर्धते यावदनेन वर्धितव्यं ततो ऽपक्षीयते मुहूर्त्तमप्यनवस्थानादेव। अत एवोक्तं ततो ऽपायेन युज्यत इति। ततो ऽपि विनाश इत्येवं क्रमस्थितिः। एवंभूतास्तस्याः काश्चन शक्तयो विद्यन्ते येनैकैव सती तथा तथा विचित्रेण रूपेण प्रतिभासते। न च परिणतिदर्शनाभिप्रायेणायं विकारशब्दः। अनित्यत्वप्रसङ्गात् अपि तु विवर्तपर्यायो ऽयं। तथा हि सर्वशक्त्यात्मभूतत्वात् ब्रह्मणो ऽनेकविकारप्रदर्शनसामर्थ्यलक्षणा अविद्याख्या शक्तिः कार्यभेदादुपचरितनानात्वा समस्तीत्यागमविदः। इत्थं च स्वाभिरेव शक्तिभिरव्यतिरिक्ताभिर्जन्मादिरूपतया ऽविद्यायामाभासते। तदेव ब्रह्म सर्वभावेषु समानरूपं सत्तात्मकमन्यस्य तद्व्यतिरिक्तस्याभावादित्येषो ऽत्रार्थः॥ ३६॥



यदि तर्हि स्वशक्तिमाहात्म्याज्जन्मादिरूपतया सत्तैवावभासते कथं न युगपदवभासः । क्रमेणेति कथं । न हि क्रमो नाम कश्चित्क्रियाविशेष इत्याशङ्क्य कालाख्या ऽपि शक्तिर्ब्रह्मण एवेत्याशङ्क्याह ॥

आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम् ।
पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम् ॥ ३७ ॥

यो ऽयं क्रियाणां क्रमः सो ऽप्यात्मभूतो ऽस्याः सत्तायाः । न केवलं ताः क्रिया एव, क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासंवेदनात् यत्र क्रमे इदं कालदर्शनं । कालं नाम पदार्थान्तरं तीर्थिकाः पश्यन्ति पौर्वापर्यादिरूपेण प्रविभक्तं । कालस्य प्रविभक्तत्वाद्दर्शनमपि प्रविभक्तमित्युक्तम् । तात्पर्येण तु कालः पौर्वापर्यादिरूपेण प्रविभक्त इव क्रियोपाधिवशात् । क्रमाख्या हि कालशक्तिर्ब्रह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारकमेव पौर्वापर्येणावभासोपगमविधायिनी नापरो द्रव्यभूतः काल इत्यभ्याहितकलां यस्य कालशक्तिमुपाश्रिता जन्मादयो विकाराः षड्भावभेदस्य योनय इत्यत्र शब्दप्रभायां निर्णीतो ऽयमर्थः ॥ ३७ ॥

ननु च जन्मनाशाववस्तुत्वात्कथं सत्तात्मकौ स्यातामित्याशङ्क्य नाशस्य तावत्सत्तात्मकत्वमुपपादयति ॥

तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥ ३८ ॥

अनपायोपजनविकारित्वान्नित्या ब्रह्मात्मिका सत्ता निरन्वयविनाशा । स हेत्वभावो नाम न भावाद्व्यतिरिक्तः । केवलं प्रागूर्ध्वं च तिरोभावमात्रं भावावभासस्य यदस्माभिरभ्युपगम्यते सैव नास्तिता कथ्यते । सत्तैव तिरोभूता स्वकारणेषु शक्तिरूपतया ऽवस्थिता । वस्तूनां नाशो न तु निरूपाख्यो ऽसौ । समस्तेषु च भावेषु तिरोभूतेषु उपसंहृतक्रमः सिद्धरूपः तिरोभावो नाश इत्यादिनामपदप्रत्याख्यः । यदा तु सैव नास्तिता तिरोभावात्मरूपा साधनसम्पर्कवशात्प्रतीयमानस्वभावा विवक्षिता तदाख्यातपदप्रत्याख्या पूर्वावस्था ऽपक्षीयत इत्युच्यते । तदुत्तरा तु विनश्यतीति द्वौ भावविकारौ प्रातिलोम्यपरिणामलक्षणौ । तत्र च भवनधर्मणो भावस्य भवनविरोधात्तिरोभावमात्रं विनाशः ॥ ३८ ॥

एवं सत्ताप्रतियोगिनो ऽपि प्रथमं तद्विकारत्वमवस्थाप्य जन्मनस्तद्विकारत्वं व्याचष्टे ॥

पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ ३९ ॥

कारणे शक्तिरूपेणावस्थानाख्यात्पूर्वधर्मात्प्रच्युता, धर्मोत्तराभिव्यक्तिप्रगुणां निष्ठामप्राप्ता सत्ता, गृहीतक्रमा कार्याभिमुखोत्तरोत्तरावस्थाविशेषमासादयन्ती, जायत इति व्यपदिश्यते, नत्वसत एवोत्पादो जन्म। तद्यथा न सतो ऽत्यन्तं विनाशः, तथा जन्मापि नाभूतपूर्वस्याविर्भावः। एतच्च नाभावो जायते भावो नैति भावो ऽनुपाख्यतामित्यादिना प्रकटयिष्यति । अत एव चावस्थामात्रत्वात्कार्यकारणयोरभेदाद् यथाविवक्षं जनिक्रियाकर्तृत्वोपपत्तिरङ्कुरो जायत इत्यादौ। एतच्च निपुणतरं कारकसमुद्देशे वक्ष्यते । पूर्वापरावस्थान्तरालवर्तिक्षणपरम्पराक्रमविवक्षायां च जनिक्रियान्वयो न उपरिष्टादवस्थायाम् । तथा च वक्ष्यति। पूर्वामवस्थामजहत्संस्पृशन् धर्ममुत्तरम् । संमूर्च्छित इवार्थात्मा जायमानो ऽभिधीयत इति । उत्तरावस्थायाश्च पूर्वावस्थासु समारोपात्कर्तृत्वं। व्यावृत्तं हि कारकं निरूपयन्तो जायत इति व्यवहरन्ति । निष्ठायां पुनरस्तीति जन्मोत्तरकाला सत्ता व्यपदिश्यते। ततो ऽपि धर्मान्तराविर्भावोन्मुखतायां विपरिणमते। तत्रापि वृद्धौ वर्धत इति जन्मविशेषा एवैते न पृथगुपात्ताः। तदयमानुलोम्यपरिणामः। तदेवं सत्तैव क्रियाविवर्तान्वयिनी। षण्णामेव स्वपरः क्रियाभेदः सर्वधातुविषयः। तत्रैव च सिद्धरूपतायां द्रव्यता। सिद्धिर्हि निष्पत्तिरिति क्रियापूर्वभाविनी नात्यन्तमर्थान्तरभूता॥३९॥

अथ यदुक्तं सम्बन्धिभेदात्सत्तैव भिद्यमानेति, तदिदानीं सम्बन्धिनं दर्शयितुमाह ॥

आश्रयः स्वात्ममात्रा वा भावा वा व्यतिरेकिणः ।
स्वशक्तयो वा सत्ताया भेददर्शनहेतवः ॥ ४० ॥

क्रियाद्रव्ययोः सत्तात्मकत्वप्रतिपादनात्तद्व्यतिरेकेण वस्त्वन्तराभावाद्यद्यपि सर्वं सत्तात्मकपरब्रह्ममयं, तथापि व्यवहारे ऽविद्याप्रवृत्तिरूपे यथावभासं भेदस्यासत्यस्यानपह्नवनीयत्वात् द्र-

व्यादिसत्ताश्रयः प्रतिभागो ऽयमविरुद्धः। तत्राश्रयः सत्तायाः स्वाधारो, व्यञ्जकत्वात् भेददर्शनस्य भेदावभासस्य न तु भेदस्यैव भावतो भेदहेतुः। तद्यथा। एकमपिमुखं तैलोदकादर्शमणिकृपाणादावनेकरूपमवभासते। एवं व्यञ्जकानां गवादीनां भेदात्सत्ता गोत्वाश्वत्वादिरूपतया ऽवभासत इत्यर्थः। स्वात्मीया वा मात्राः कलाः परिकल्पिता भागा अंशा गोत्वादिसामान्यविषयाः परिच्छिन्नविषयाः सर्वविषयायाः सत्ताया विच्छिन्नावभासतां दर्शयन्ति येन तैरेव सा विच्छिन्नेवाविच्छिन्नाप्यवभासते। ते चाश्रयभेदादेव ततः परिकल्पितभेदाः। तथा च,सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषितेति, गोत्वादिभिः सत्ताभेदं वक्ष्यति। दृष्टश्च स्वांशैरेव परिकल्पितैर्भेदावभासः। तद्यथा अवयविनः। आत्मा परो ऽपि सम्भवति कल्पनानिर्मितेन भेदेनेति, स्वग्रहणेन विशेष्यते स्वश्चासावात्मेति। दृष्टश्च काल्पनिको भेदो यथा हंत्यात्मानमात्मनेति। न ह्यात्मव्यतिरिक्तो हन्ता कश्चित्प्रत्यवभासते। अर्थान्तरत्वेनावभासमाना वा देशकालेन्द्रियादयो भेददर्शनहेतवः। सत्ताया वा इहेदानीमिदमन्यत्रान्यदान्यदिति देशादिनिमित्तो वस्तुभेदः। तथा देशासत्तिविप्रकर्षकृतो ऽन्यथावभासो वस्तूनां। यथाहुः दूरे यथा वा महत्सु महानल्पोपि दृश्यत इति। तथा रात्रौ नीलोत्पलादीनामन्यथावभासः, अन्यथाहनीति कालकृतो भेदः। तथा च कामलाद्युपहतनयनानां शुक्ले शंखे पीतत्वावभास इति इन्द्रियनिमित्तो भेदः। देशादावपि च सत्तायाः संबन्धिनो ऽन्ये भेदका इति विषयभेदान्नेतरेतराश्रयता। तथा चायमत्र परमार्थः। आत्मीया एव शक्तयो योग्यताख्यास्सत्तायास्तथाविधाः सन्ति याभिर्विश्वप्रपञ्चं रचयति। तद्यथा चिन्तामणिरर्थिनां यथासंशयमाकारनानात्वं दर्शयति, तथानन्तशक्ति सन्मात्रं ब्रह्माविद्याविलसितसहं सांसारिकप्रमातृविषये नानारूपं चकास्तीत्यन्ते वस्तु सतत्वमुद्घाटितम॥ ४०॥

इत्थं च दर्शनान्तरोपन्यासपूर्वकं स्वदर्शने जातिपदार्थव्यवस्थामुपपाद्य व्यवहारे भिन्नाया गोत्वादिजातेर्यथासंभवं स्वगतो भंगश्चर्च्यते॥

पृथिव्यादिष्वभिव्यक्तौ न संस्थानमपेक्षते।

अनुच्छिन्नाश्रयाज्जातिरन्यस्मिन्नाश्रये स्थिता॥४१॥

पृथिवीत्वाप्त्वतेजस्त्वादयो जातिविशेषाः प्रतिनियतावयवरचनानपेक्षा एव महति परिमिते चाश्रये ऽभिव्यक्तिमासादयन्ति । तथा हि । लोष्ठो ऽपि पृथिवीरूपेण प्रतीयते मृत्समूहो ऽपि घटो ऽपि पर्वतो ऽपीत्यादि । एवं समुद्रो ऽपि बिन्दुरपि चोदकत्वेन प्रतीयत इत्यादि वाच्यं । क चित्तु गोत्वादिका सालत्वादिका तालत्वादिका च जातिः संस्थानमभिव्यक्तौ नियमादपेक्षत एवेत्यर्थादुक्तं भवति । तथा समवेतत्वे ऽपि न गुणवदाश्रयविनाशात् जातिर्विनश्यति । घटादौ गुणा ह्याश्रयप्रतिबन्धोदयाद् युक्तं यदाश्रयविनाशमनुविनश्येयुः । जातीनां चाश्रयप्रतिप्रबन्धो, नात्मालाभः । केवलं प्रतीतावाश्रयमपेक्षन्ते ताः । एकव्यक्तिविनाशेपि च तदन्यत्रानुगतसंविदन्यथानुपपत्तेरनुमितिसद्भावाज्जातिः समवस्थितैवेत्यनुच्छिन्नाश्रयादाश्रयादुच्छेदो ऽस्या नायाति । आश्रयो ऽस्या नोच्छेदहेतुरित्यर्थः । आश्रयश्च विनश्यन्नुच्छेदहेतुः सम्भाव्यत इति नाश्रयविनाशादस्या विनाश इत्यर्थः । तृतीयार्थे वा पञ्चमी आश्रयेण सह न विनश्यतीत्यर्थः ॥ ४१ ॥

ननु महाप्रलये नित्यानां सर्वेषां विनाशादाश्रयाभावे कथं जातयोऽवतिष्ठेरन्नित्याह ॥

अनुच्छेद्याश्रयामेके सर्वां जातिं प्रचक्षते ।
न यौगपद्यं प्रलये सर्वस्येति व्यवस्थिताः ॥ ४२ ॥

एक इति । य आधारं विना तासामवस्थानमन्ते नेच्छन्ति त आश्रयोच्छेदो नास्त्येवेत्याहुः । तथा हि । न कदाचिदनीदृशं जगदिति वदन्तो महाप्रलयस्याभावमिच्छन्तः परमाणुत्वादिजातिवद् घटत्वादिजातीनामाश्रयो ऽनुच्छेद्यः सर्वथोच्छेत्तुमशक्य इत्याहुः । तथा च सदैव व्यवस्थिता जातयः, कस्य चिदाश्रयस्यापाये ऽन्यपराश्रयवृत्तित्वादिति नित्यत्वसिद्धिः । अथ वा पृथिव्यादौ नष्टे ऽपि पार्थिवादिपरिमाणुषु पृथिवीत्वादयो विश्राम्यन्ति, तद्गतेषु च रूपादिषु रूपत्वादयः ।आदिसर्गे च युगपत् सर्वभावप्रलयो नास्तीत्यस्मिन्मते व्यवस्थिता एक इति समन्वयः । एवमेकस्मिन्नपि ब्रह्माण्डे युगपद्भावानां प्रलयो नास्तीति दर्शनाश्रयेणोक्तम् । यद्वा ब्रह्माण्डान्तरे विनष्टे ऽपि ब्रह्माण्डान्तरसम्भवाद्युगपत्प्रलयो नास्ति । तथा चाहुः । अण्डानामीदृशानां तु परिसंख्या न विद्यत इति ॥ ४२ ॥

ये तर्हि महाप्रलयमिच्छन्ति तन्मते कथमित्याह ।

प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम् ।
द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः ॥ ४३ ॥

एकत्वमभेदमूलम, प्रकृत्या प्रधानेन सह परब्रह्मणा वा ये पश्यन्ति जगतः, तेषां मते सर्वथा भावप्रपञ्चस्य निरन्वयविध्वंसाभावान्महासामान्यरूपे तत्र परस्मिन्मूलकारणे प्रविलयमात्रं महाप्रलय इति शक्तिरूपेषु पदार्थेषु यथायथं स्वजातियोगस्तदानीमविरुद्ध एवेति द्रव्यात्मना जातीनां तदानीमपि सत्त्वं, द्रव्यादर्थान्तराभावात्। अत एव सत्त्वमित्येव वक्तव्ये, द्रव्यग्रहणं द्रव्यादभिन्नत्वं बोधयितुम् । यद्वा द्रव्यं मूलकारणं तत्र सत्त्वं तस्य वा यत्सत्त्वं कारणसत्तामवलम्बत इत्यर्थः । अद्वैतिनां हि कारणमेवानुगतं सामान्यं। द्रव्यशब्दो वा वस्तुपर्यायः। तेन द्रव्यसत्त्वं वस्तुन एव विद्यमानत्वं मुख्यं सत्त्वं, न तूपचरितं साधारणमेव, शक्तिरूपतया ऽवस्थानादित्यर्थः। वैशेषिकदर्शने तु निराधारा एव घटत्वादिजातयो महाप्रलय आसते न हि गुरुत्वादयः। पतनमासां माभूदित्याधारः। अभिव्यक्तिमात्रे तस्योपयोगात् ।इदानीं चानभिव्यक्ता एवासतां को विरोधः। शास्त्रकारस्तु स्वसिद्धान्तेनैव निर्मितवान् ॥ ४३ ॥

एवं व्यक्तिसर्वगतत्वं सामान्यानामाश्रित्योक्तम। इदानीं सर्वगतत्वेनाप्याह ॥

ब्राह्मणत्वादयो भावाः सर्वप्राणिष्ववस्थिताः ।
अभिव्यक्ताः स्वकार्याणां साधका इत्यपि स्मृतिः ॥४४॥

भवन्ति सर्वत्रेति भावा ब्राह्मणत्वक्षत्रियत्वादयः सामान्यविशेषाः। ते प्राणिषु पिण्डेषु क्षत्रियादिष्ववस्थितत्वात्सर्वगताः। तथाऽपि च ब्राह्मणमालभेतेत्यादौ न साङ्कर्यप्रसङ्गः। यस्मात्सर्वगतत्वेऽपि प्रतिनियताभिव्यञ्जकव्यङ्ग्या, इति प्रतीतस्य क्रियाङ्गत्वाद्यत्रैवाभिव्यक्तिमासादयन्त्युपदेशादिना व्यञ्जकेन, तत्रैव स्वकार्यसम्पादका इत्यविच्छिन्नागमपारम्पर्येण स्मर्यते। यथा सर्वगतत्वं पारम्पर्यागतं तथा प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपीत्यर्थः ॥ ४४ ॥

एवं च प्रलये घटत्वादिजातयः परमाण्वादिष्ववस्थिता इति

प्रकरणसामर्थ्यादुक्तं भवति। आदिग्रहणेन ह्यचेतने जातीनामपि सर्वगतत्वमत्र विवक्षितं। तेन जातयोऽप्यचेतनेष्वपि स्थिता इति पूर्वं सर्वगतत्वमाह ॥

चित्रादिष्वप्यऽभिव्यक्तिर्जातीनां कैश्चिदिष्यते।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः ॥४५॥

आलेख्यनिर्मिते पुस्तकर्मणा दार्वादिना वा कृते ऽपि ब्राह्मणे सादृश्यात्तदाकारानुकारप्रत्ययोदय इति तत्रापि तज्जातिप्रकाशः। प्राण्युपघातात्पुनरधर्म इति चित्रस्योपघाते तदभावः। एवं धर्मो ऽपि चित्रस्थब्राह्मणपूजायां न भवति। कैश्चिदिति वचनादत्रारुचिं सूचयति। किल मुख्यसादृश्यात्प्रतिकृतिषु प्रत्ययानुगमोपपत्तिर्न तु तद्वशात् जातिसमवाय इति युक्तं। तदत्र पूर्वं, निर्वर्त्यमानं यत्कर्मेत्यादिना प्राक्प्रभवनादपि जातेः सद्भावान्नित्यत्वमुपपादितम्। इदानीं पुनराश्रयध्वंसे ऽप्यवस्थानादिति पूर्वापरकोटिगामित्वात् प्राक् प्रध्वंसाभावाभ्यामयोगात् परिपूर्णस्य नित्यत्वस्यासिद्धिः। ननु अविदितशब्दार्थसम्बन्धस्यान्येभ्यो व्यावृत्तं गोष्वनुगतं रूपं गौर्गौरिति न प्रतिभासते। यदि च ताभिर्व्यक्तिभिरभिव्यक्तं तत्सामान्यं, कथं तत्प्रत्ययो न स्यात् ॥ ४५ ॥

अथान्येभ्यो ऽव्युत्पन्नः तेभ्यः प्रतिपत्स्यते ते ऽपि कुतस्ते ऽपि कुत इति साक्षाद्दर्शिनं सर्वज्ञं द्रष्टारमन्तरेणान्धपरम्परा प्रसज्यते। सर्वत्र च शब्दार्थसम्बन्धेऽन्धपरम्पराया एव वृद्धव्यवहार इति नाम कृतं स्यान्निर्मूलत्वाद्। ब्राह्मणत्वादीनां रूपव्यञ्जनसादृश्याद्बालमूकादिज्ञानसदृशो ऽप्यसौ गोत्वादीनामिवानुवृत्तस्य व्यावृत्तरूपावभासो नास्तीवश्यमेव सर्वज्ञो ऽभ्युपगन्तव्य इति मन्यमान आह ॥

ज्ञानमस्मद्विशिष्टानां तासु सर्वेन्द्रियं विदुः।
अभ्यासान्मणिरूप्यादिविशेषेष्विव तद्विदाम् ॥ ४६ ॥

अस्मदिति पञ्चमीबहुवचनम्। पञ्चम्या आदित्यदादेशे कृते प्रतिनियतपदार्थदर्शिभ्यो ऽस्मदादिभ्यो विशिष्टाः सर्वदृश आदिगुरवः संति। तथा च पतंजलिः, स पूर्वेषामपि गुरुः कालेनानवच्छेदादिति। सर्वज्ञानामीश्वरो गुरुरुपदेष्टा। तस्य च बुद्धीन्द्रियदेहानां

कालेनानवच्छेदाश्रित्यता। अन्यथा प्रलये वृत्ते पुनरुत्पन्नेषु ब्रह्मादिषु क उपदेष्टा स्यात्ततश्च निःशास्त्रं निरनुष्ठानं विधिनिषेधयोरन्धमूकप्रायं जगत्स्यात्। अथ प्रलयो नैवास्ति, अपि तु न कदाचिदनीदृशं जगदिति जैमिनीयाः। तदेतदसत्। सर्वशास्त्रेषु प्रलयस्मृतेः। अथाम्नायस्य क्रियार्थत्वात् भूतार्थवाचकं वाक्यमप्रमाणमित्युच्यते। तथा हि कार्यपरत्वेनैव वृद्धव्यवहारात् शब्दार्थसम्बन्धव्युत्पत्तिप्रतिपत्तेर्यत्परः शब्दः स शब्दार्थ इत्याख्यायिकामात्रवर्णने सिद्धार्थाभिधाने प्रयोजनाभावात् विधिनिषेधचोदनाभावात् कस्य चिदप्यशासनाद् भूतार्थवाक्यमशास्त्रत्वादेव न प्रमाणतामर्हति। प्रवर्तकवाक्याङ्गभावेन तु समन्वयमेति। शास्त्रे स्तावकत्वेन ह्यर्थवादवाक्यानि विधिवाक्याङ्गभावगमनादन्वयभाञ्जि भवन्ति। एवं हि विधिरुपोद्बलितो भवति। अत्र ब्रूमः। किमनर्थकानि वर्णवदेवार्थवादवाक्यानि महावाक्ये विधायके कार्यार्थप्रतिपादके ऽङ्गभावमुपयान्ति, आहोस्विदात्मीयः कश्चिदेषामर्थो ऽस्ति यत्र प्रतिपत्तिमादधति कार्यपराणि संपद्यन्त इति पक्षद्वयं। प्रथमः पक्षो न युक्तः। यथायथं सिद्धार्थानां स्वार्थप्रतिपत्तिदर्शनादकिञ्चित्करस्यानर्थस्य परत्राङ्गभूततानुपपत्तेः। केवलं सा प्रतिपत्तिस्तत्र स्वार्थे प्रमाणभूता ऽन्यथा वेति विचार्यम्। यत्र बाधः तत्राप्रमाणं। अबाधे तु प्रमाणमेव। अबाधिता हि सम्वित्स्वतः प्रमाणमिति जैमिनीयनयः। सर्वज्ञेश्वरदेवतानां च शास्त्राधिगतानां न किं चन बाधकमुत्पश्यामः। ननु च मार्जारादीनां सार्थकं वचनं श्रूयते न च तत्र सम्वादो ऽस्तीत्येवमेव सर्वमदृष्टार्थप्रमाणम्। मैवं वोचः। सर्वज्ञभूतानां वचनस्यागमान्तरेणापि सार्थकस्य संवादोपलब्धेरबाधितत्वमेव। चर्मचक्षुषः परमेतन्न मन्यन्ते। तथा हि भगवान्पतञ्जलिः, शब्दार्थसंयमनात्सर्वभूतरुतज्ञानमादिदेश। तस्माद्यत्र नास्ति संवादो बाधकमात्रपर्यवसानमर्थवादवाक्यं, तदसत्यार्थप्रतिपादनेनास्तु कार्यमात्रप्रतिपादनपरम्। यत्र तु नास्ति बाधः शास्त्रान्तरेण संवादस्तत्प्रमाणमेव। न च तत्र कार्यपरता सिद्धार्थप्रतिपादनेन। पुराणेतिहासवाक्यानां तावत्स्वेव प्रश्नोत्तरयोः समासत्वदर्शनात्तत्परिज्ञानमात्राच्च धर्मोत्पत्त्यभ्युपगमात्। किञ्च ध्येये निर्णीते ध्यानादिरनुष्ठातुं शक्यत इति निष्प्रयोजनता ऽपि नास्तीश्वरादिप्रतिपादकानां वाक्यानां। तथा च शास्त्रं। आत्मा ज्ञातव्यो मन्तव्यो

निदिध्यासितव्य इति। पातञ्जलमपि, तस्य वाचकः प्रणव, स्तज्जपस्त-दर्थभावनं, ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्चेति। स्मृतिकाराणां च मन्वादीनामभ्युपगमो महेन्द्ररुद्रादीनां प्रत्याख्यानमिति पक्षपातः। न हि मन्वादयो महर्षयो न हि सर्वज्ञा वीतरागा वा। रागादिमत्त्वे अज्ञत्वे वा तेषां कथं तद्वचनं प्रमाणं। तस्मात्साक्षात्कृतधर्माणो ऋषयो बभूवुस्ते ऽव-रेभ्यो ऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुरुपदेशात् ग्लायन्तो ऽवरं बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि चेत्यागमप्रा-माण्यात्सन्ति सर्वज्ञा येषामन्धपरम्पराव्युदासार्थमादिगुरुर्भगवान्सर्व-शास्त्रप्रवक्ता, तैरेव मुनिभिरागम्यते। शास्त्रस्य हि शब्दनित्यत्वे ऽपि रचनावत्त्वादीश्वरप्रणीतत्वमेव। तथा च शास्त्रादीश्वरः समधिगम्यते। तस्माच्छास्त्रं प्रवृत्तमिति तस्य शास्त्रं निमित्तं। शास्त्रं पुनः किन्निमित्तं। ईश्वरनिमित्तं। तदेतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः सम्बन्ध इत्युक्तं। तथा च गीतायां स्वाविष्टमहेश्वरभावेन भगवता कृ-ष्णावतारेणाभिहितं, वेदान्तकृद्वेदविदेव चाहमिति। एवमपि च शास्त्र-स्य नित्यत्वे क्षतिर्नास्तीश्वरबुद्धिरूपत्वात्तस्य। ईश्वरस्य नित्यत्वं काले-नानवच्छेदादुक्तमेव। विशिष्टरचनावत एव वेदस्येश्वरबुद्धौ दर्शनात्म-नि सदावस्थितत्वमिति स्मृतिवद्यथाकालं मन्वादिवदस्य रचनाकर्त्ता ऽपि नास्तीत्युक्तं ब्रह्मकाण्डे। अनादिमव्यवच्छिन्नां श्रुतिमाहुरकर्तृकां। शिष्टैर्निबध्यमाना तु न व्यवच्छिद्यते स्मृतिरिति। तदेवमागमप्रामाण्या-द्भावतत्त्वदृशः शिष्टाः सन्त्यतीन्द्रियार्थदर्शिन इति ते यथायथं गोत्वब्रा-ह्मणत्वादिजातीराश्रयविवेकेनाध्यक्षयन्ति। तच्च तेषां शिष्टानां ज्ञानं सर्वेन्द्रियं, प्रतिनियमानपेक्षत्वात्। सर्वज्ञा हीन्द्रियान्तरेणापीन्द्रियान्त-रव्यापारं कुर्वन्ति। तथा चागमः। नेदानीमिन्द्रियैरेव पश्यन्ति घ्राणतः शब्दं शृणोति पृष्ठतो रूपाणि पश्यति अप्यङ्गुल्यग्रेण सर्वेन्द्रियार्थानु-पलभत इति। अथ वा न चाक्षुषमेव तेषां विप्रादिजातिविषयं विज्ञानं, अपि त्विन्द्रियान्तरसम्बन्ध्यपि। शब्दादौ सूक्ष्मजातिविशेषावधारणक्ष-ममित्यर्थः। तदेवमागमप्रामाण्यमाश्रित्य सर्वज्ञसिद्धिरत्र सूचिता पू-र्वार्धेन। विस्तरेणागमप्रामाण्यं वाक्यपदीये ऽस्माभिः प्रथमकाण्डे शब्दप्रभायां निर्णीतमिति तत एवावधार्यं। उत्तरार्धेनागमसिद्धेः सर्वज्ञ-त्वानुमानं तदुपोद्बलकमाह। अभ्यासादित्यादिना। इहाभ्यासवशात् ज्ञा-नैश्वर्यादीनाम् पुरुषविशेषेष्वतिशयो दृष्टः। यथा चैकघटिकादीनां

रत्नतत्त्वपरीक्षायां, रूपतत्त्वयोश्च रूप्यतातिशयपरिच्छेदे यथाऽभ्यास-सम्प्रकर्षतारतम्यं। यच्च सातिशयं तदवश्यं क चित्काष्ठाप्राप्तं सम्भाव्यते। यथादित्ये तेजो दाहकत्वमग्नौ शैत्यमप्सु।तथा ज्ञानैश्वर्यशक्तिबलादयो गुणाः सातिशयाः पुरुषेषु दृष्टाः सर्वज्ञे ऽपि व्यापिकाष्ठाप्राप्तमतिशयमावेदयन्तः, तत्समुचितमाधारं पूर्णसमस्तसम्पर्कमनुमापयन्त्येव। अतिशय एव हि ज्ञानादीनां तारतम्येन दृश्यमानः सर्वज्ञबीजं। न च यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनादिति वाच्यं। स्वार्थस्य स्वाश्रयानुसारेण व्यवस्थापयितुमशक्यत्वात्। आदित्यादौ च प्रकाशकत्वादेः स्वार्थातिलङ्घनेन दृष्टत्वात्। तस्मात्सम्भावनानुमानेनापि सर्वज्ञसिद्धिर्रुचिता। तदुक्तं तत्र निरतिशयसर्वज्ञबीजमिति। यदेतत्सर्वज्ञबीजं ज्ञानादीनामतिशयलक्षणं तत्तत्र निरतिशयं। यत्र निरतिशयं स सर्वज्ञइत्यर्थः। सर्वज्ञग्रहणं चात्रैश्वर्योपलक्षणं तेन यत्र निरतिशयमैश्वर्यं स सर्वेश्वरः परमेश्वर इत्यादि सिद्धं। राजादीनामैश्वर्यतारतम्यदर्शनात्।इत्थं च मूलभूतेश्वरसम्भवादृषीणामपि ज्ञानं। तदप्यागमपूर्वकमित्युक्तं। परमेश्वरस्तु कालेनानवच्छिन्नः सहजज्ञानैश्वर्यादिधर्मयुक्तः। तस्य चेतस्यचेतनं जगदिच्छा तु विद्याप्रत्यगात्मन इव शरीरमित्युपकार्योपकारकभावसंस्थानविशेषयोगादिज्ञाता स एवैतन्निमित्त इति बुद्धिमत्कर्तृकमपीदमत्र विश्वं सिद्धमिति स्थितम्। तदेवमागमसिद्धाः सन्त्यस्मद्विशिष्टाः। इन्द्रियप्रतिनियमानपेक्षं च साक्षात्काररूपं तेषां ज्ञानमित्यतीतानागतसूक्ष्मव्यवहितविप्रकृष्टार्थसतत्त्वदृशो योगिनः सर्वा गोत्वब्राह्मणत्वादिजातीरध्यक्षयन्तः, तदपदेशमसङ्करेणारभन्ते। ब्राह्मणत्वादिष्वप्यस्ति किं चित्सास्नादिस्थानीयं रूपव्यञ्जनमस्माकं परमतीन्द्रियम्। विशिष्टैस्तदवधार्य संज्ञाः प्रणीताः। तदुक्तं प्रत्यक्षपूर्वकं संज्ञाकर्मेति। अत्र भवतामुपदेशाद्वयमपि सम्प्रदायपारम्पर्याद्यथायोगं गोत्वादिजातीरध्यवस्यामः। अस्मद्विशिष्टानां चेदं संज्ञाप्रणयनं यथावस्थितशब्दार्थसम्बन्धप्रकाशनमात्रं न त्वपूर्वसङ्केतकरणं स्वाभाविकत्वाच्छब्दार्थसम्बन्धस्येति ॥ ४६ ॥

शिष्टप्रामाण्यात्सन्ति ब्राह्मणत्वादिजातयो विविक्ता यथायथं भावप्रत्ययाभिधेयाः। तत्रेदं विचार्यते। तामाहुस्त्वतलादय इत्युक्तं। जातिगन्धत्वं उत्पलगन्धत्वं मल्लिकागन्धत्व मित्यत्र किं परजातौ गन्धसामान्ये भावप्रत्ययः किं वा ऽपरजातावपरसामान्ये विशि-

ष्टाश्रयगन्धसमवायिनीत्याशङ्क्याह ॥

जात्युत्पलादिगन्धादौ भेदतत्त्वं यदाश्रितम् ।
तद्भावप्रत्ययैर्लोके ऽनित्यत्वान्नाभिधीयते ॥ ४७ ॥

इह लौकिके शब्दव्यवहारे विवक्षाधीने यदा जातिगन्धादिशब्दात्समासाद्भावप्रत्ययः क्रियते तदा सामर्थ्ये समासविधानात्तदेव प्रवृत्तिनिमित्तमिति तत्रैव भावप्रत्ययः, समासकृत्तद्धितेषु सम्बन्धाभिधानमिति वचनादित्याधाराधेयसम्बन्धः सप्तमीसमासे, तत्पूर्वकः शेषसम्बन्धो वा षष्ठीसमासे तद्वाच्यः । यदा तु गन्धशब्दादेव पूर्वं भावप्रत्ययः पश्चात्समास इति विवक्षा तदा भेदस्य, जात्युत्पलाद्यां ह्याश्रितस्य विशिष्टस्य गन्धस्य, यत्तत्त्वं पारमार्थिकं तत्कर्मभूतं, यदाश्रितं कर्तृभूतमपरसामान्यं तद्भावप्रत्ययवाच्यं न भवति । अनित्यत्वात्सर्वत्रासन्निधानात् । भेदस्य वा गन्धविशेषस्य तत्त्वं विशिष्टं सामान्यं, यदाश्रितं समवेतमिति समानाधिकरणे पदे । अयमत्रार्थः । यदुत्पलगन्धसमवेतं विशिष्टं सामान्यं, न तच्चन्दनगन्धादिव्यक्तौ सन्निहितमिति व्यभिचारादनित्यम् । न तु सामान्यमनित्यं भवति । गन्धशब्दश्चाविशेषेण गन्धमात्रे वर्तत इति गन्धमात्रव्यापिनैवास्य प्रवृत्तिनिमित्तेन भावप्रत्ययाभिधेयेन भवितव्यम् । न चोत्पलगन्धसमवेतं विशिष्टं सामान्यं सर्वगन्धव्यापीति नेदमभिन्नं गन्धशब्दप्रवृत्तिनिमित्तम् । आश्रयविशेषेण तु जातेर्गन्धत्वमुत्पलस्य गन्धत्वमिति समवेतसमवायाद्विशेषणे विशिष्टावसायसिद्धिः । न चैवं नास्त्येव सामान्यविशेषः । आश्रयभेदेन गन्धव्यक्तीनां भेदात्, शाबलेयत्वादिवदपरजातियोगोपपत्तेः । तथा च भेदतत्त्वं यदाश्रितमित्याह । गुणानामाश्रयभेदाद्भेद इति वक्ष्यते । अस्त्येव चोत्पलगन्धानामन्यतो व्यावृत्तोऽन्वयी प्रत्यय इति तन्निमित्तसामान्यसम्भवः केन वार्यते । अत एव लोकग्रहणं । लोकव्यवहारे परं नाभिधीयते । गन्धयुक्तिविदस्त्वभियुक्ताः पश्यन्त्येव विशिष्टं सामान्यम् । समासादपि च भावप्रत्यये सामान्यविशेषः सम्बन्धस्य समासवाच्यत्वाच्छब्देनाप्रतिपादनादनित्य इति नाभिधीयते ॥ ४७ ॥

काश्चिज्जातयो ऽसंविदूज्ञानपदा अपि सन्तीत्याह ॥

अस्वशब्दाभिधानास्तु नरसिंहादिजातयः ।

सरूपावयवेवान्या तासु श्रुतिरवस्थिता ॥ ४८ ॥

नरसिंहगौरखरत्वादिजातयो विद्यमानासाधारणवाचकाः । समानं रूपं ययोस्तावयवौ यस्या नरसिंह इत्यादिश्रुतेः शब्दस्य सा तत्र वाचिका । एषा हि श्रुतिर्नरसिंहत्वजातिविषयनर, सिंहेति-शब्दद्वयसादृश्येनावभासमाना नरत्वसिंहत्वजातिप्रतिभामत्रोत्पाद-यति । न च नरसिंहाभ्यामारब्धो नरसिंहः अपि तु जात्यन्तरमेवात्र शबलरूपे वस्तुनि समवेतं,चित्र इव रूपे चित्रत्वमिति तदसाधारण-मेषा शक्नोति प्रत्याययितुम । भावतश्च निरंशैवेयं श्रुतिरित्यवयव-सादृश्यमपि न वास्तवमितीवशब्दः सादृश्याभिमानमात्रपरः । यथा निरंशवाक्यस्थानां पदानामिति भ्रान्त्या, नरत्वादिजातौ प्रतिभोत्पा-दनाश्रेयमसाधारणा नरसिंहजातौ श्रुतिर्न चान्यापि विद्यत इत्यस्व-शब्दाभिधाना । शब्दो ऽभिधीयते नेत्यभिधानं यस्या इति ॥ ४८ ॥

तदेवमर्थद्वारेण पदे परीक्ष्यमाणे प्रकृतिभागस्य जात्यर्थतया जातिमुपपाद्य प्रत्ययभागस्यापि तदुपपादितेन जात्यभिधायितायां प्रकृतिप्रत्यययोः समभिव्याहारमुपपादयितुमाह ॥

जात्यवस्थापरिच्छेदे सङ्ख्या सङ्ख्यात्मनैव वा ।
विप्रकर्षे ऽपि संसर्गादुपकाराय कल्पते ॥ ४९ ॥

द्रव्यजातेः क्रियाजातेश्च सुबन्ततिङन्तपदगतप्रकृतिवाच्यायाः स्वाश्रये द्रव्ये ऽवस्थानं समवायः, तत्र परिच्छेदः किमेकद्रव्ये तस्याः समवायो विवक्षितः किं वा ऽनेकद्रव्य इत्येवं रूपः। तस्मिन्निर्णीयमाने यथायथं सुप्तिङन्तप्रत्ययवाच्या संख्याजातिरेकार्थसमवेतसमवा-यात्साक्षात्सम्बन्धाभावे ऽप्युपयोगाय सम्पद्यते। तिङन्तपदवाच्याया अपि जातेः क्रियाजात्या स्वाश्रयद्वारेणास्त्येवैकार्थसमवेतसमवायः। जातेर्वावस्थारूपभेदः स्वाश्रयविशेषेण संसर्गलक्षणः । शब्दात्प्रतीतया वा संख्याजात्या सामर्थ्यादाक्षिप्ता संख्याव्यक्तिरेकार्थसमवायात्प्रकृ-तिवाच्यां जातिं विशिनष्टि। प्रतीतस्य ह्यवच्छेदकत्वं । प्रतीतिश्च शब्दा-दर्थसामर्थ्याद्वा भवन्ती न विशेष्यते । यद्वा द्रव्यपदार्थपक्षे संख्या-व्यक्तिः शब्दवाच्या विशेषणम् । जातिपदार्थपक्षे तु संख्याजातिरिति विकल्पः । तत्र गौः गावौ पचति पचत इत्यादौ विशिष्टजातीयो वि-

शिष्टसंख्यावच्छिन्नश्चार्थः प्राधान्येन प्रतीयत इति प्रत्ययार्थस्य विशेषणत्वं प्रकृत्यर्थस्य च विशेष्यत्वम् । तथा च क्रियाप्रधानमाख्यातमित्युपपत्तिः । पचतीत्यादौ साध्यत्वात्प्रकृत्यर्थस्य प्राधान्यात्कारकादिना प्रत्ययार्थेन तस्य विशेषणात् । औपगव इत्यादौ तु प्रकृत्यर्थोपरक्तस्य प्रत्ययार्थस्यापत्यलक्षणस्याभिधानं प्राधान्येनेत्येतद्विषयमेवेदं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति । प्रायिकमेतत् । तथा हि । संख्या प्रकृत्यर्थानुग्रहायेहोक्तेति गामानयेत्यादौ तद्विशिष्टस्य प्राधान्यम् ॥ ४९ ॥

एवं तावत्सामान्येन प्रकृत्यर्थविशिष्टः प्रत्ययार्थोऽभिधीयते पदेनेति द्रव्यद्वारेण सम्बन्धाज्जात्या प्रकृतिप्रत्यययोः समभिव्याहारोपपत्तिरुक्ता । इदानीं क चित्तात्पर्यभेदाच्छ्रुतोऽप्यर्थो न विवक्ष्यत इति वाक्यार्थोपयिकत्वं पदार्थस्य विचारयितुमाह ।

लक्षणा शब्दसंस्कारे व्यापारः कार्यसिद्धये ।
सङ्ख्या कर्मादिशक्तीनां श्रुतिसाम्येऽपि दृश्यते ॥५०॥

कर्मादयोऽपि शक्तयो विभक्तिवाच्याः संख्यावदिति तासां कर्मादिशक्तीनां श्रुतेः शब्दस्य स्ववाचकस्यामादेः साम्येऽपि द्विविधो व्यापारो वाक्यार्थे लक्षण एकः । स च शब्दसंस्कारे शब्दसंस्कारविषये । संख्याकर्मादिरहितस्य प्रातिपदिकमात्रस्यासम्भवान्न केवला प्रकृतिः प्रयोक्तव्येति शब्दसंस्कारार्थं स्वार्थेन प्रकृत्यर्थमनवधारयन्त्यपि विभक्तिः प्रयुज्यते क चित् । तद्यथा । ग्रहं संमार्ष्टीति । कथमत्रैकत्वं न विवक्षितं । शब्दसंस्कारमात्रपरमेव त्वेकवचनमिति चोद्ये न्यायं वक्ष्यति । इह तु वस्तुमात्रापेक्षतया कर्मादिशक्तीनां शब्दसंस्कारार्थमुपादाने विवक्षा । यथा सक्तूञ्जुहोतीति । अत्र हि सक्तुसाधनो होम इत्येतावन्मात्रं विवक्षितं । हवनक्रियाया अदृष्टार्थत्वेन फलवत्वात्प्राधान्यात्क्रियाविषयत्वमात्रेणेप्सिततमा अपि सक्तवः क्रियासमन्वयमात्रे चरितार्थाः । न हि कथं नाम सक्तवो भस्म सम्पद्येरन्निति होमः क्रियते अपि सक्तुसाधनेन तेनादृष्टं सम्पद्यतामिति । यद्येवमदृष्टार्थत्वात् क्रियायाः, सक्तवो नैवेप्सिततमा इति नास्त्येवात्र कर्मशक्तिः । तद्सत्यास्तस्याः कथमविवक्षा । सतो ह्यविवक्षा शब्दोपात्तस्य न्याय्या । तद्यथा ग्रहमित्येकत्वस्य, तस्त्वसतः । न हि काष्ठानि पच-

न्तीत्युक्त्या काष्ठानां कर्मशक्तिरविवक्षितेत्युच्यते अपि तु करणशक्तिः । सत्यमेतत् । अदृष्टमेव तु न सम्पद्येत यदि सक्तव ईप्सिततमत्त्वेन नाश्रीयेरन्, अनन्योपायसाध्यत्वादित्यदृष्टार्थत्वसामर्थ्यादेव सक्त्वर्थताऽभ्युपेतव्या क्रियायाः । तद्यथा आराधनस्य देवतार्थता । अदृष्टार्थमेवहि देवताराध्यत इत्यदेवतार्थत्वे तस्यादृष्टार्थत्वमेव हीयेत । एवमिह प्रधानमङ्गं सक्तवो ऽदृष्टस्येति भवन्त्येवेप्सिततमाः । अविवक्षितन्तु तदीप्सिततमत्वं तावन्मात्रफलत्वेन क्रियाया अनभिसंहितत्वात्फलान्तरप्रयुक्तत्वाच्च सक्तूनां । क्रियाफलत्वस्य न व्रीहाणामिव रूपान्तरेणोपादानादविवक्षितत्त्वम् । तस्मादीप्सिततमत्वं कारकान्तरापेक्षया सत्वम्, विवक्षितं च कयाचिदपेक्षयात्रेति स्थितम् । क्वचित्तु कार्यसिध्यर्थं संख्याकर्मादिशक्तीनां व्यापारः कार्यस्य वाक्यार्थभूतायाः क्रियायाः सिद्धिनिमित्तो द्रव्यावच्छेदोपयोगः । संख्यादिविशेषवता द्रव्येण साध्यमानायाः क्रियायाः प्रतिपादनात् । तद्यथा । पशुना यजेतेति । अत्र हि यजिरेकेनापि पशुना विकलो निष्पद्यत इति विवक्षितैव सा संख्येति वक्ष्यते न्यायः । कर्मशक्तेश्चाविवक्षा व्रीहीनवहन्तीति । व्रीहयो ह्यवघातेन संस्कार्यत्वादीप्सिततमाः । न त्ववघातमात्रार्थं कश्चित्प्रवर्तते अपि तु व्रीह्यर्थं । तेषामवघातेन संस्कृतानां पुरोडाशयोग्यस्वभावातिशयप्रतिलम्भेन यज्याङ्गतासिद्धेरित्यवहननक्रियात्राऽप्रधानं । संस्कार्या व्रीहय एव प्रधानं, तण्डुलीकृतानामुत्तरत्रोपयोगात् । सक्तूनां तु भस्मीभूतानामसत्वान्नोत्तरत्रोपयोगः । तदाहुः । भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हति[?] । सक्तवो नोपयोक्ष्यन्ते नोपयुक्ताश्च ते क्वचिदिति । अवहननक्रिया चात्राप्रधानं वास्तवेन रूपेणाख्यते । शाब्देन तु रूपेण क्रियैव सम्पाद्यतया चोद्यते सर्वत्रेति सैव प्रधानम् । तथा च तदपेक्षं कर्मणः कारकत्वमवैति वाक्यार्थप्रधानभूता क्रियेति क्रियाविवेके विस्तरेणास्माभिरभिहितमिति तत एवावधार्यम् । इत्थं च तानि द्वैधं गुणप्रधानभूतानीति भावशब्दानां द्वैविध्यकथनं वास्तवरूपाभिप्रायमवगन्तव्यम् । पूर्वं तु लक्षणा शब्दसंस्कारो व्यापारः कार्यसिद्धय इति पठन्तो लक्षणा द्रव्योपलक्षणं तत्र शब्दसंस्कारमात्रोपयोगिद्रव्योपादानमिति तद्विषयत्वाच्छब्दसंस्कारो लक्षणेति सामानाधिकरण्यं व्याचक्षते ॥५०॥

इदानीं शब्दसंस्कारे लक्षणाख्यो व्यापारो विभज्यते ॥

न विना सङ्ख्यया कश्चित्सत्त्वभूतो ऽर्थ उच्यते।
अतस्सर्वस्य निर्देशः सङ्ख्या स्यादविवक्षिता ॥ ५१ ॥

इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं द्रव्यं संख्यासमन्वयसहम्, तस्यापत्यमित्यादौ निर्देशे साक्षान्निर्दिदिक्षितमिति नान्तरीयकत्वान्निर्देशमात्रे न केवला प्रकृतिः प्रयोक्तव्येति चरितार्था संख्या न विवक्षितेत्युत्सर्गः। तदुक्तं तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वादिति। जातिस्तु द्रव्यस्य द्रव्यान्तराद्विवेकमवगमयितुमुपादीयत इति न तदविवक्षा न्याय्या। सर्वथा विवक्षाभावे प्रकृतिप्रत्ययार्थयोः शब्दप्रयोगस्यैवाभावात्। तथा च प्रकृतिवाच्या संख्या विवक्ष्यत एवेति हि वक्ष्यति ॥ ५१ ॥

अस्योत्सर्गस्य केचिद्विशेषमाहुः ॥

एकत्वं वा बहुत्वं वा केषांचिदविवक्षितम्।
तद्धि जात्यभिधानाय द्वित्वं तु स्याद् विवक्षितम् ॥५२॥

यज्जातौ न सम्भवति तद्व्यक्तिगतं पारम्पर्येण व्यवच्छेदकतया ऽवसीयत इति द्रव्यगता संख्या जातेरवच्छेदिका न्याय्या, न तु स्वगता एकत्वद्वित्वबहुत्वलक्षणा। एकत्वं हि जातेरव्यभिचारि बहुत्वमप्यातिदेशिकम्। ननु जातेर्नैव संख्यास्ति द्रव्यधर्मत्वात्तस्याः। नेह शास्त्रान्तरप्रसिद्धा प्रक्रिया या प्रमाणं अपि तु स्वकृतान्तः कश्चिदाश्रेयः। अस्ति च प्रमाणमेकत्वे। जातेः प्रमाणैनैकत्वविशिष्टाया एव सिद्धेः। तथातिदेशिकं जात्याख्यायामेकस्मिन्बहुवचनमिति। जातिपरायां चोदनायामेकत्वबहुत्वे न विवक्ष्येते। ब्राह्मणो न हन्तव्यः सुरा न पेया वृषलैर्न प्रवेष्टव्यमिति। यत्र तु विवक्षा तत्र द्रव्यपरा चोदनेति। द्वित्वं तु न जात्याख्यायां विहितमिति तत्सर्वथा द्रव्याश्रयमेवेति विवक्ष्यते सर्वत्र ॥ ५२ ॥

तदपि क्वचिन्न विवक्ष्यत इत्याह ॥

यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधम्।
इत्येवं लक्षणं ऽर्थस्य द्वित्वं स्यादविवक्षितम् ॥ ५३ ॥

औषधदानविषयभूतव्याधितोपलक्षणार्थस्यैवमनेनप्रकारेण

व्याधिं निमित्तत्त्वेनोपादाय प्रवृत्तस्योपलक्षणस्यैताविस्येवमुपात्तस्य यद्वाच्यं द्वित्वं तदत्राविवक्षितं । सप्तमी चेयं लक्षणे ज्ञायते ऽर्थस्योपलक्षणे वेत्यर्थः । औषधस्वरूपमहिम्नैवात्र व्याधित्रिषयतासिद्धेः । तद्दानस्यैताविति व्याधितान्तरनिवृत्त्यर्थमुपादीयमान एकस्यापि तयोर्मध्यात्सम्भाव्यमाने व्याध्युद्भवे तदौषधदानस्येष्टेर्विवक्षात्र द्वित्वे। सम्भावनाविषयत्वाच्च व्याधिसम्भवस्य यदा द्वयोरपि तत्सम्भवः तदा समुदितावेवौषधदानस्य विषय इति सहविवक्षया चोदनाऽर्थवती । व्याधिप्रतीकारप्रयुक्तं पुनरौषधदानमित्येकस्यापि व्याधितत्वे तत्सम्भवः । बहुषु च प्रकृतेषु एताविति परामर्शस्यानुपपत्तेराविवक्षायामपि द्वित्वस्य, बहुषु तदौषधदानाप्रसङ्गः । किं चौषधदानेन द्वावनुग्राह्याविति प्रधाने चात्र संख्या न विवक्ष्यते । यत्र तु क्रमेणापि द्वयोरेव चोदनार्थप्रतिपत्तिः,वृक्षौ च्छेत्तव्याविति तत्र विवक्षैव । इह तु सम्भावनाविषयं व्याधितत्वं भविष्यदुत्प्रेक्ष्य चोदनेति क्रमेण युगपद्वा व्याधिसम्भवे तदुपपत्तिः । न हि भविष्यतो नियमेन सह भाव्यं नियम्यते ॥ ५३ ॥

तदेवं प्रत्ययोपात्ताया विवक्षिताविवक्षितत्वं वाक्यार्थपर्यालोचनया विषयविभागेन प्रतिपाद्याधुना प्रकृत्युपादानाया एकान्तेनैव विवक्षेत्याह ।

एकादिशब्दवाच्यायाः कर्मण्यङ्गत्वमिष्यते ।
सङ्ख्यायाः खनति द्वाभ्यामिति रूपाद्धि साश्रिता ॥५४॥

द्वाभ्यां मन्त्राभ्यां मृदं खनति, चतुर्भिरादत्ते ऽष्टभिर्हरतीत्यत्र प्रकृतिनिमित्तभूतायाः प्रातिपदिकवाच्याया द्व्यादिसंख्यायाः क्रियावच्छेदकत्वमभ्युपगम्यते, सा संख्या विवक्षितैव । अन्यथा शब्दार्थ एव त्यक्तः स्यादिति । प्रातिपदिकस्यान्यथानुपपन्नस्य प्रयोगस्य रूपात्स्वभावाद्विशिष्टसंख्याविधायिनः सामर्थ्यादत्र विवक्षा । रूपशब्दो वा प्रातिपदिकपर्याय इति रूपात्प्रातिपदिकान्न विभक्तेरित्यर्थः । यथा द्विपुत्र इत्यादौ । अत्र हि विभक्तिवाच्यो भेदः, समास एकार्थीभावान्निवर्त्तते । प्रकृतिवाच्यस्त्ववतिष्ठत एव । तदभावे हि शब्दप्रयोग एव निष्फलः स्यात् । ग्रहमित्यादौ तु प्रत्ययः प्रातिपदिकार्थप्रत्यायने साहचर्यं गच्छतीत्यर्थवा-

नित्यत्वाऽविवक्षा युक्ता। यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरात्रमोदनं निर्वपेदित्यत्रावयवद्वयारब्धः सङ्घ उभयशब्दवाच्यो न तु संख्यावाच्युभयशब्द इत्येकावयवविनाशे ऽपि समुदायस्य विनाशान्निर्वापः क्रियत एव ॥ ५४ ॥

इदानीं यदुक्तं व्यापारः कार्यसिद्धय इति तद्विभज्यते। तत्र द्वित्वमेव विवक्ष्यते नैकत्वबहुत्वे इति पूर्वमुक्तम्। अधुना त्वेकत्वमपि क्वचिद्विवक्ष्यत इत्याह ॥

यजेत पशुनेत्यत्र संस्कारस्यापि सम्भवे।
यथा जातिस्तथैकत्वं साधनत्वेन गम्यते ॥ ५५ ॥

शब्दसंस्कारार्थत्वं यद्यप्यत्र विभक्तेः सम्भाव्यते तथापि पशुजातेर्यथा प्रातिपदिकवाच्यायाः क्रियाङ्गभावः, तथैकत्वमपि विभक्तिवाच्यं,एकपदोपादानान्न त्यज्यते। जातिवदेकत्वमपि क्रियाङ्गमित्यर्थः। एकपदोपादानो ह्यर्थ एकत्वेन बुद्धौ विपरिवर्तमानः कथं भेदेन पशुना यजेतैकेन चेति सम्बध्येत। प्रकृतिप्रत्ययाभ्यां हि यो विशिष्टः प्रत्ययार्थो ऽभिधीयते तेनाभिधयैव संस्पृश्यते यज्यर्थः। एकपदत्वे ऽन्तः पदसंबन्धस्यापौरुषेयत्वात्। अतश्चोभयमपि शक्यविधानं। भेदेन तु स्पर्शे वाक्यभेदप्रसङ्गादशक्यविधानं स्यात्। भिन्नपदोपादानं तु वस्तुभेदेन संबध्यतापि। शक्यविधानत्वात्। यथा रक्ताश्वमानयेति। तत्र च वाक्यभेदो रक्तमानयाश्वमानयेति वाक्ययोः समन्वयः। एकपदोपादाने तु शोणमानयेति वदौपादानिको विनियोगः। ग्रहं संमार्ष्टीत्यत्र तु यथा न शक्यविधानं तथा दर्शयिष्यते। अनेन च पशुशब्दार्थस्य पूर्वमनिर्ज्ञातत्वमप्रधानत्वं च विवक्षानिबन्धनं ध्वनति। अस्मादेव वाक्यात्साधनत्वेन प्रतीयत इत्यर्थः। अग्रे तु स्फुटमेव दर्शयिष्यति। ननु विनियोजकया श्रुत्या द्रव्यस्य क्रियासाधनत्वं विहितं न तु गुणस्य। संख्यायाः विनियोजकप्रमाणस्य द्रव्य एवोपक्षीणत्वात् गुणविनियोगे प्रमाणाभावः। सत्यम्। श्रुत्यादिषड्व्यतिरिक्तो ऽयं विधिव्यापार उपादानाख्यः। न हि संख्यारहितं द्रव्यमात्रं विधिरुपादत्ते। एकपदोपात्तस्य गुणस्य त्यक्तुमशक्यत्वात्। प्रतीयते हि सगुणं द्रव्यं एकरसपाशाद्या प्रतीत्येति यथायोगं गुणद्रव्ययोरन्वयः ॥ ५५ ॥

तदेवमयं वादी बाधकमन्तरेणाविवक्षां न मन्यते । ये तु शब्दसंस्कारार्थत्वमेव संख्यायाः प्रतिजानते ते कथमनेकत्वं विवक्षन्तीत्याह ॥

लिङ्गात्तु स्याद् द्वितीयादेस्तदेकत्वं विवक्षितम् ।
एकार्थविषयत्वे च तल्लिङ्गं जातिसङ्ख्ययोः ॥ ५६ ॥

शब्दसंस्कारार्थमेव पशुनेत्येकत्वम् । विवक्षा तु लिङ्गात्तज्ञापकाद्वाक्यादन्तरङ्गत्वात् । तथा हि आग्नेयमजमग्निष्टोम आलभेतेत्युक्त्वा ऐन्द्राग्नं द्वितीयमुक्थ्ये, ऐन्द्रं पृश्नि तृतीयं षोडशिनीति द्वितीयादित्वेनाजो विशेष्यते। यदि चाजमित्येकत्वमविवक्षितं स्यात् तदा द्वितीयादित्वस्यासिद्धत्वात् द्वितीयमित्यादि पुनर्विधानं न स्यादित्यभिधानसामर्थ्याद्वित्वमेकत्वमिति निश्चीयते । न च विवक्षायामप्येकत्वस्यात्र द्वितीयं तृतीयमित्युपपद्यत एव । अनियतसंख्याप्रसङ्गे द्वितीयादित्वेन विशेषणात्। नैतदस्ति। एवं हि पक्षे ऽनुवाददोषः स्यात्। लिङ्गत्वे तु द्वितीयादित्वमपूर्वमेव विहितं नित्यमविकल्पितं श्रुतं नोपरुध्यते । पक्षे तु वादे हि श्रुतस्य वैकल्पिकत्वं स्यादित्येष विकल्पितं श्रवणं परित्यक्तं भवेदिति दोषप्रसङ्गः । एकाश्रये परिसमाप्तत्वे चैकत्वसंख्याया जातेश्चैतदेव लिङ्गमिति प्रसङ्गादाह। यथा ह्येकत्वं प्रत्याश्रयपरिसमाप्तं तथा सत्यप्यनेकार्थसमये जातिरपीत्यस्मादवसीयते। तथैकत्वसंख्याया एकः समानो ऽर्थो विषय आश्रयो ऽस्या जातेरित्यत्रापि तदेव द्वितीयादित्वं लिङ्गं । अन्यथा आश्रयेषु जातेरेकदेशेन प्रवृत्तौ द्वयोर्द्वयोः पूरणो नासौ तज्जातीयः स्यात् । अपि तु जात्येकदेशः । न च जात्येकदेशो जातिर्भवति। समानाश्रयत्वे च जात्येकत्वयोर्जातिः प्रकृत्यर्थः साकल्येन क्रियाङ्गतयोपादीयते । अन्यथैकत्ववत् तत्राधारे सर्वात्मना जातेः परिसमाप्त्यभावे एकत्वमशक्योपादानं । एकस्मिन्सर्वात्मना जातेरपरिसमाप्तत्वात् । अतश्च द्वितीयादित्वं विघटेत । स्यादेकत्वमनुमापयत्तदाश्रये सर्वात्मना जातेः समाप्तिमप्यनुमापयत्येतल्लिङ्गं। यावता हि विना नोपपद्यते तावतो ऽर्थस्यैतल्लिङ्गम् । यथा चैकत्वं विवक्षां विना नोपपद्यते तथा जातेस्तत्र समानविषयत्वमपि नेत्यन्यथा तत्र जातेः समाप्त्यभावे साक-

त्वेन प्रकृत्यर्थः क्रियाङ्गतया नोपात्तः स्यादिति प्रकृत्यर्थोपरोध प्रसङ्गः। द्वित्वादेरनेकाश्रयपरिसमाप्त्यभावान्न तेन सह जातेरेकार्थविषयत्वे लिङ्गमेतत् । एवं ह्यनेकाश्रितत्वमेव ज्ञापितं स्यात् । तच्च जातित्वादेव सिद्धमिति एकत्वेनैव सह जातेरेकार्थसमवायो लिङ्गादवगन्तव्यः ॥ ५६ ॥

इदानीं यदुक्तं यजेत पशुनेत्यत्रैकत्वं जातिवद्विवक्ष्यते इति तत्र पूर्वसूचितं विवक्षानिबन्धनं ग्रहवैलक्षण्येन प्रकटयति ।

अन्यत्राविहितस्यैव स विधिः प्रथमं पशोः ।
क्रियायामङ्गभावश्च तथैतत् स्याद्विवक्षितम् ॥ ५७ ॥

यजेः कर्त्तव्यता वाक्यान्तरात्सिद्धेति पशुनायजेतेति गुणविधिस्तात्पर्यतः । तथा च ज्ञातस्य पशुगुणस्य प्रमाणान्तरात्प्रथममनेनैव ज्ञापनमित्युत्पत्तिविधिरयं पशोः । अस्माद्वाक्यात्प्रथममुत्पन्न इव पशुरनेनैव ज्ञापितत्वात् । ज्ञप्तिरेव हि प्रथमोत्पत्तिर्भण्यते। स चोत्पत्तिविधिरत्राङ्गत्वेन यजिक्रियाविषयेणाङ्गित्वेन चेत्यस्मात्कारणद्वयात्तदेकत्वमत्र विवक्षितम् । तथा हि । शब्दप्रमाणका वयं शब्देन चैकत्वविशिष्टो ऽर्थश्चोदित इति कथं तदेकत्वं त्यज्यतां । तदुक्तं । यथा जातिस्तथैकत्वं साधनत्वेन गम्यते, इति । यथा शब्दचोदिता जातिस्तथैकत्वमपीति, इहत्यस्तत्र न्यायः सूचितः । शब्दश्च प्रथममिदमाह । न तु शब्दान्तरं संख्यान्तरयुक्तं ग्रहादिवदस्तीति प्रथमोपदेशो विवक्षाकारणम् । अङ्गत्वोपदेशश्च यागस्य प्राधान्यात् । यदि ह्यङ्गतयोपदेशः स्यात्पशोः, तदा ग्रहं सम्मार्ष्टीतिवद्ग्वेदविवक्षेत्यर्थः । तस्माच्छ्रुतसंख्याहाने हेत्वभावादेकत्वविशिष्टसाधनसाध्यत्वेन नियतरूपं प्रधानमवगतं भवतीत्यनियतानेकसंख्योपादानमप्रमाणकम् । अत्र के चित्क्रियायामङ्गभावस्येति पठन्तः प्रथमं क्रियायामङ्गभावस्य विधिरिति योजितवन्तः ॥ ५७ ॥

एतन्न्यायवैपरीत्येन ग्रहं संमार्ष्टीत्यत्र लक्षणाख्यं व्यापारमाह।

ग्रहास्त्वन्यत्र विहिता भिन्नसंख्याः पृथक् पृथक् ।
प्राजापत्या नवेत्येवमादि भेदसमन्विताः ॥ ५८ ॥
अङ्गत्वेन प्रतीतानां संमार्गे त्वङ्गिनां पुनः ।

निर्देशं मतिं या संख्या सा कथं स्याद्विवक्षिता ॥ ५६ ॥

प्राजापत्या नव ग्रहा भवन्ति । दशैनानध्वर्युः प्रातःसवने ग्रहान्गृह्णाति, ऐन्द्रवायवं ग्रहं गृह्णाति, मित्रावरुणं ग्रहं गृह्णातीत्यात्यादावुत्पत्तिवाक्ये ग्रहाणां सोमाधाराणां पात्राणां भिन्नसङ्ख्यानां पृथक् पृथक् तेषु प्रकरणेषु भेदेनोपात्तानां तथैवानुभूतानां ग्रहं संमार्ष्टीत्यत्र स्मृत्योपस्थापितानां यथोत्पत्तिवाक्यानुभवमेवात्र स्मृतिबुद्धावुपस्थानं युक्तमिति भिन्नसङ्ख्या एव प्रतीयन्ते । उत्पत्तिवाक्ये हि ग्रहाणामङ्गत्वेन सोमधारणार्थमुपदेश इति तत्र प्राधान्याद्विवक्ष्यते सङ्ख्या । अपूर्वोपदेशाच्च पशुनेति नवनव दशेति प्रातिपदिकार्थत्वादपि तत्र नियोगतो ऽपेक्षा, सम्मार्गे तु वास्तवेन रूपेण । सम्मार्गस्य ग्रहशुद्ध्युत्पादनार्थत्वात्संस्कार्या ग्रहा एवाङ्गिनः प्रधानभूताः शाब्देन रूपेण क्रियाप्राधान्ये ऽपि । ततश्चोत्पत्तिवाक्यापेक्षया सम्मार्गवाक्येन पुनर्यो ऽयंग्रहमिति निर्देशस्तत्र पूर्वश्रुता एव ते सम्मार्जनविषयभावार्थमुपात्तास्तात्पर्येत इति पूर्वसङ्ख्यान्वयिनः । प्रकरणार्थपर्यालोचनया हि वाक्यार्थो ऽवतिष्ठते न तु यथाश्रुते पदार्थमात्रे ऽवस्थातव्यम् । स्तुतिनिन्दाप्रधानेषु वाक्येष्वर्थो न तादृशः, पदानां प्रविभागेन यादृशः परिकल्प्यत इति न्यायात्, अवान्तरवाक्यान्वयेन महावाक्यार्थानुसारेण पदार्थापोद्धार इत्यन्यत्र प्रकरणानुभूतभिन्नसङ्ख्याकग्रहग्रहणं । तदनेन विवक्षायां हेतुद्वयमुक्तम्, अन्यत्र विधानं प्राधान्यं च । यद्यपि बहुष्वेकत्वमप्यविरुद्धमनुभूतं तथाप्यनेकमध्यपात्येकत्वमनुभूतं न तु केवलमित्यनेकसहचारिण एवात्र स्मृतिः । अत एव पृथक्पृथगनेकसंख्याया भूयोदर्शनेन तत्प्रभवसाधनोत्पत्तिस्थैर्यस्मृत्यव्यभिचारस्थापनार्थमाह। पृथक्पृथगिति पृथक्पृथग्भिन्नसङ्ख्यानामनुभूतत्वात्तथैव च स्मृतिः। सम्मार्गे ऽनुवादे ऽत्रेत्यर्थः । ग्रहैर्जुहोतीति हवने ग्रहाणामुपयोगात्संस्कार्यत्वं । अङ्गानां प्रधानोपकाराय संस्कारार्हत्वात् । न च ग्रहैकत्वविशिष्टः सम्मार्गविधिर्न्याय्यः । गुणस्य द्रव्यसमकक्ष्यतया क्रियायामङ्गभावाभावात् द्रव्यद्वारेणाङ्गत्वाद् द्रव्यानुयायित्वे ऽनुभूयद्द्रव्यभेदाश्रयणात् । चित्रगवीर्बध्नाति शोणं याजयेदित्यत्र तु चित्रशोणश्रुत्यन्यथानुपपत्त्या गुणविवक्षौत्पत्तिकी ॥ ५९ ॥

इदानीमविवक्षौत्सर्गिकी सर्वत्र, शब्दसंस्कारार्थं विभक्त्युपादानादिति यत्नाद्विवक्षामाह।

नान्यत्र विधिरस्तीति संस्कारो नापि चांगिता।
हेतुः संख्याविवक्षायां यत्नात्सा हि विवक्षिता॥ ६०॥

वाक्यान्तरे ग्रहाणां भिन्नसङ्ख्यानां विधिरस्तीत्यतो हेतोरत्र ग्रहं सम्मार्ष्टीत्येकवचनं शब्दसंस्कारार्थमात्रमित्येतन्न युक्तम्। नान्यत्र सम्मार्गे ग्रहाणामङ्गिताप्राधान्यमेकत्वस्य विवक्षाभावे हेतुः निमित्तं, अपि तु न विना संङ्ख्यया कश्चिदित्युक्ताभ्यायाम्, सर्वत्रैव प्रातिपदिकार्थस्योपलक्षणार्थं वचनमित्यविवक्षितम्। यत्र तु कश्चिन्न्यायो युक्तिरूपोऽस्ति तत्र तस्माद्यत्नात्सङ्ख्या विवक्ष्यत इत्यौत्सर्गिक्या अविवक्षया विवक्षापवादः॥ ६०॥

न च विवक्षाहेतुर्यत्नोऽस्ति ग्रहमित्यादावित्याह॥

सम्मार्जनं विशेषश्च न ग्रहे क्वचिदाश्रितः।
विहितास्ते च संस्कार्याः सर्वेषामाश्रयस्ततः॥ ६१॥

ग्रहं सम्मार्ष्टीत्यनुपात्तविशेषस्य पूर्वावधृतस्य ग्रहसंस्मरणोदितः। पूर्वं च भिन्ना ग्रहा दृष्टाः। तदाह विहिता स्त इति। न ह्येको ग्रहस्सोत्पत्तिवाक्ये विहितः अपि तु बहवो नव दशेत्येवं विहिताः। न च तेषां मध्ये कश्चिदेव संस्काराद् बहिः अपि तु सर्व एव ते तथेत्याह। ते चसंस्कार्या इति। सर्वेषां संस्कार उपयुज्यते उत्तरत्र सोमधारणे सर्वेषां संस्कृतानामुपयोगात्। ततश्च भूयसां विहितानां यद्येको विवक्षितोऽभविष्यत्तदा तस्य चिन्हभूतः कश्चिद्विशेषो निरदेक्ष्यत। आर्कमाश्विनं मैत्रावरुणं वा ग्रहं सम्मार्ष्टीति। न चासौ निर्दिष्टः। एकवचनं तु न विशेषः। तस्य प्रतिनियतैकविषयत्वाभावादनियतैकोपादाने कस्येति विशेषावधारणाभावात् अशक्यानुष्ठानार्थोपदेशप्रसङ्गादिति जातमिदमेकवचनं बोद्धव्यं न तु व्यक्ताविति नास्माद्यत्नाद्विवक्षासिद्धिः। किं च सर्वत्र शब्दसंस्कारार्थमेकवचनमित्येवमिदमुपक्रान्तम्। तथा चैकवचनं न यत्नः। तस्मात्सामान्योपदेशात्संस्कार्यत्वस्य च समानत्वादुत्पत्तिवाक्यावधृतसङ्ख्यानां सर्वेषामेव ग्रहाणां संस्कार्यत्वपरिग्रह इति सिद्धम्॥ ६१॥

पशुना यजेतेत्यत्र को यत्नः सङ्ख्याविवक्षायामित्याह ॥

प्रत्याश्रयं समाप्तायां जातावेकेन चेत्क्रिया ।
पशुना न प्रकल्पेत तत्र स्यादेव प्रकल्पनम् ॥ ६२ ॥

जातेः प्रत्याश्रयपरिसमाप्तत्वं पूर्वं लिङ्गेनापि साधितमित्येकत्रापि पशुत्वजातेरवैकल्यात्क्रियाङ्गतोपपत्तौ किमर्थं द्वितीयाद्युपादीयेत। यदि हि जातिराश्रये एकदेशेन वर्तेत तदैकव्यक्त्युपयोगे जातिः पदार्थो बाध्येत जात्यंशस्याजातित्वादिति प्रकृत्यर्थसामर्थ्याद्द्वितीयाद्युपादीयेत । न चैवम् । एकत्रापि जातेर्निर्ह्रासितत्वात् । स्यादेतत् । भवत्येकत्रापि प्रकृत्यर्थोपपत्तिः । वाक्यार्थभूता तु क्रिया नैकसाधनसाध्येति प्रधानानुरोधादङ्गान्तरमुपादीयेतेत्याशङ्क्याह । एकेन चेत्क्रिया पशुना न प्रकल्पेतेति । अदृष्टफलस्य यागस्य पशुनैकेनाप्यवदानद्वारेणोपकारान्निष्पत्तेरसंपत्तिर्नास्ति, यतस्तदनेकत्वप्रकल्पनमत्र भवेत् । सामर्थ्यात् बुद्धिस्थमनेकसङ्ख्योपलक्षणं तदित्यनेन निर्दिशति । अस्मादेव पशुना यजेतेति प्रमाणभूताद्वाक्यादेकस्य क्रियासाधनता ऽवसीयते । अन्यथा ग्रहवद्वाक्यान्तरात्सङ्ख्यान्तरस्यानवसाये ऽनियतैकपरिग्रहे अशक्यानुष्ठानो ऽर्थ उपदिष्टः स्यात् ॥ ६२ ॥

नन्वङ्गभूयस्त्वात्फलभूयस्त्वमिति यथासम्भवं पश्वन्तरोपादानं भविष्यतीत्याशङ्क्याह ॥

एकेन चेत्प्रसिद्धायां क्रियायां यदि सम्भवात् ।
पश्वन्तरमुपादेयमुपादानमनर्थकम् ॥ ६३ ॥

अयमर्थः । इहैकस्य पशोः क्रियासिद्धौ हेतुभावो ऽस्ति न वा । द्वितीये पक्षे शास्त्रोल्लङ्घनमित्याद्यः पक्षः । तत्र च लाघवादेकेनैव क्रियानिष्पत्तावधिगतसमीहिताः किमर्थं साधनान्तरान्वेषणप्रयासमनुभवेयुरधिकारिणः । न हि यथासम्भवमिति शास्त्रचोदना । अचोदितानुष्ठाने च शास्त्रोल्लङ्घनादानर्थक्यमिति फलभूयस्त्वस्याप्यभावः । न ह्येकेनानेकेन वा यज्ञौ निष्पाद्यायां फलहेतुः कश्चित्स्वरूपातिशयः । तस्मादुपायलाघवात्प्रथमेनैव पशुना ऽवदानग्रहणस्य निष्पत्तेरेकस्य पशोरालम्भे ऽपरस्यालम्भो निष्प्रयोजनः ॥ ६३ ॥

* यथानिष्पन्नस्य तस्य निष्पत्त्यर्थं यत्नान्तरं नाद्रियत इत्यत्र दृष्टान्तमाह ॥

यथैवाहितगर्भायां गर्भाधानमनर्थकम्।
तथैकेन प्रसिद्धायां पश्वन्तरमनर्थकम् ॥ ६४ ॥

आहितो बीजात्मनोपक्षिप्तो गर्भो यस्यां तत्र पुनर्गर्भाधानमफलं स्वाहितस्याधाने विशेषाभावात्। एवमेकपशुसाध्ये यागे पश्वन्तरमफलं सिद्धस्य साधनवैफल्यात्। पश्वन्तरोपादाने तु तत्साधनं क्रियान्तरमेव स्यात्। न च तत्र विधिप्रतिपत्तिः। इत्थं दार्ष्टान्तिकानुगुण्याद्गर्भाधानमनर्थकमित्युक्तं न शक्यमिति। आनर्थक्यस्य साध्यस्य प्रक्रमे निदर्शने सम्भवदप्यशक्यत्वं साध्येन समन्वितं न स्यात्। गर्भाधानार्था वा संस्कारा गर्भाधानशब्देनात्र विवक्षिताः शास्त्रचोदिता इति तेषामाहितगर्भाधानायामानर्थक्यमिति दृष्टान्तदार्ष्टान्तिकयोः साम्यं सुष्ठु सङ्गच्छते ॥ ६४ ॥

तदेवं लाघवाच्चोदितमेकत्वं पशावाश्रीयत इत्येकीयं मतम्। अन्ये तु न्यायान्तरमत्राहुरिति प्रदर्शयति ॥

तावताऽर्थस्य सिद्धत्वादेकस्याप्यनतिक्रमम्।
केचिदिच्छन्ति न त्वत्र सङ्ख्याङ्गत्वेन गृह्यते ॥ ६५ ॥

नात्रैकत्वसङ्ख्या पशुविषये विवक्ष्यते अपि तु प्रातिपदिकार्थोपलक्षणमेव सा। संख्यामात्रयुक्तः प्रातिपदिकार्थः साधनं। तस्य तु पूर्वं लाघवमेकत्वस्योपादाने निमित्तमभिहितम्। इदानीं त्वेकत्वपूर्वकत्वादनेकत्वस्य व्यतिक्रमे प्रयोजनाभावादेकसङ्ख्या एकस्यैवोपादानं कथ्यते। तत्परिमाणेनैकेनैव क्रियासिद्धिरिति सामर्थ्यादेकत्वस्याव्यतिक्रमो ऽत्यागः। तदेवं लाघवे पूर्वोक्तसामर्थ्ये एवोपात्ते शेषभूतमिदं। न त्वत्र सङ्ख्याङ्गत्वेन गृह्यत इत्येकवाक्यतयोपपत्तेर्वाक्यभेदेन व्याख्यानं पूर्वैर्दूषणरसिकतया दूषणं कृतं। सामर्थ्यादेकत्वस्याव्यतिक्रमे तु न संख्याङ्गत्वेन गृह्यते। वचनप्रापितः सङ्ख्यायाः क्रियाङ्गभावः स्यात्सामर्थ्यादतिक्रममात्रमिति शब्देनाविहितमेकत्वमित्यचोदितार्थानुष्ठानप्रसङ्ग इति दूषणं कारिकावयलाघवाद्विभज्य पूर्वैः कल्पितं। ग्रन्थकारस्त्वत्र मते कारिकान्तरे-

यैषामन्वयव्यतिरेकाभ्यामित्यादिना दूषणं दास्यति ॥ ६५ ॥

कथं तर्हि द्वितीयादि लिङ्गमेकत्वविवक्षायामन्यथोक्तमित्याह।

द्वितीयादिषु यल्लिङ्गमुक्तं न्यायानुवादि तत् ।
न सङ्ख्या साधनत्वेन जातिवच्चेन गम्यते ॥ ६६ ॥

एकत्वविवक्षासिद्ध्यर्थं नैतल्लिङ्गमपि तु लाघवादेकेन सिद्धत्वात्क्रियायामनेकोपादानस्य निष्प्रयोजनत्वात् क्रमव्यतिक्रमे प्रयोजनाभावाच्चैकत्वसङ्ख्यापरिग्रह इति यदेतन्न्यायद्वयमुक्तं तदनुवादपरमुक्थे द्वितीयमित्यादि लिङ्गं नापूर्वमर्थं गमयति । यस्मात्तेनानन्तरोक्तेन न्यायद्वयेनैकत्वस्यापरित्यागाच्छाब्देन रूपेण न सङ्ख्या साधनत्वेन गम्यते शब्दसंस्कारमात्रार्थत्वादेकवचनस्य, तेन वाक्यारम्भेन सङ्ख्यात्र न विद्यते। यस्मादविवक्षायामपि न्यायादिष्टसिद्धिः। यद्वा तेन लिङ्गेन सङ्ख्या साधनत्वेन नावेद्यते न्यायादेवेष्टसिद्धेरनुवादमात्रार्थं तदित्यर्थः । जातिवदिति वैधर्म्यदृष्टान्तः। यथा शब्दचोदिता जातिरङ्गमिति गम्यते नैवमेकत्वमुक्तादेव न्यायात्तदनङ्गत्वे च समीहितसिद्धेः ॥ ६६ ॥

केचिदिति वचनात्परमतं, एतद् दूषयति ॥

अन्वयव्यतिरेकाभ्यां सङ्ख्याभ्युपगमे सति ।
युक्तं यत्साधनत्वं स्यान्नत्वन्यार्थोपलक्षणम् ॥ ६७ ॥

विभक्तिप्रत्ययं सत्वेत्यनुवर्त्तते। तस्मिन्सति प्रतीयते तदभावे व्यतिरिच्यते व्यावर्त्तते न प्रतीयते सङ्ख्येति पशुमालभेतेत्यादौ शब्दोपादानायाः तस्याः प्रतीतिश्चेदभ्युपगम्यते विधानमपि कथं नास्तीति शब्दोपात्तायास्त्यागो न युक्तः, अपि त्वेतदेव युक्तं यत्साधनत्वं क्रियाङ्गत्वं। न त्वन्यार्थोपलक्षणं प्रकृत्यर्थोपलक्षणं युक्तमित्यर्थः । सत्वभूतस्यार्थस्य शब्देनाभिधाने तत्संस्कारप्रतिपत्तये वचनमिति प्रकृत्यर्थोपलक्षणमात्रं तद्भवति। नचैतन्न्याय्यम् । यथा ह्यन्वयव्यतिरेकाभ्यां प्रकृतिवाच्या जातिः शब्दवती न त्यज्यते तथा सङ्ख्यापीति न्याय्यम् । नह्येकयोगक्षेमस्याङ्गाङ्गितया एकपदोपात्तस्यार्थस्य खण्डशो विनियोगाविनियोगौ युक्ताविति भावः। शब्देनाचोदिते त्वेकत्वे सामर्थ्यात्प्रतिपत्तौ यदैकपशूपात्तानामेकादशानाम-

वदानां दैवान्मानुषाद्वा वैगुण्यादन्यतमविलोपः तदा पश्वन्तराण्यवदानार्थमुपादीयेरन्नह्येवं का चिच्छब्दार्थबाधा तदानीं भवति। शब्देनाचोदितत्वादेकस्य। तथा च तत्कर्माज्येन न निर्वर्त्तेतेति प्रतिनिध्यभावः। मुख्याभावे हि प्रतिनिधिरुपादीयते। मुख्यं च वचनेन सङ्ख्यानुपादाने विद्यत एव। यस्य पुनः शब्दचोदितमेकत्वं तस्योपपन्नो ऽत्र प्रतिनिधिरित्यवदानलोपे तत्कर्माज्येन सम्पाद्यते। न तु पश्वन्तरमुपादीयते चोदितैकत्वत्यागप्रसङ्गात्। यद्येवं वपाविनाशे ऽपि पश्वन्तरं नोपादीयेत। नैतदस्ति। यस्मान्नालम्भनमात्रसम्पत्त्यर्थं पशोरुपादानं अपि तु यागार्थम्। तत्रैव च तदेकत्वं विवक्ष्यते। यागश्च वपां विना न सम्पद्यते। तस्मात्पश्वन्तरोपादाने ऽपि नातिक्रान्तमेकत्वम्। तत्रैकत्वेनैव यागस्य निर्वर्त्तितत्वादवदानान्तरार्थं तु पश्वन्तरं चोदिते सत्येकत्वे न लभ्यते इत्यवदानान्तरकार्यं घृतेन सम्पद्यत इति न्यायः॥ ६७॥

यतश्च साधनत्वं युक्तं अतः॥

साधनत्वे पदार्थस्य सामर्थ्यं न प्रहीयते।
सङ्ख्याव्यापारधर्मोऽतस्तेन लिङ्गेन गम्यते॥ ६८॥

यदा शब्दोपात्तत्वाज्जातिसंख्ययोः तुल्यत्वं, तदा साधनत्वे पदार्थस्य सामर्थ्यं न प्रहीयते। पदस्येति वाक्यशेषः। सकलस्य हि पदार्थस्य साधनत्वे पदस्य तदभिधानलक्षणं सामर्थ्यं तज्ज्ञापितं भवति। अतश्च परिपूर्णस्य पदार्थस्य साधनत्वात्संख्याया एकत्वलक्षणायाः क्रियाया व्यापाराख्यो धर्मः तेन लिङ्गेन गम्यते। यतस्तत्पदस्य सामर्थ्यमप्रहेयं अतस्तेन सामर्थ्यलक्षणेन लिङ्गेन हेतुना गम्यते संख्या व्यापारधर्मः। यतस्तदप्रहेयं, अतस्तद्भवति हेतुः संख्याव्यापाराधिगतौ। यथा यतो ऽविनाभूतो धूमः, अतस्सम्भवत्यग्न्यधिगमहेतुः। अथ वा तेन लिङ्गेन द्वितीयादिनैतद्गम्यते न तु पूर्वोदितस्य सामर्थ्यादपरिग्रहमात्रस्य तदनुवादि लिङ्गं यथा तैरुक्तम्। अपि तु मदीयन्यायेनैव तत्सङ्गतमित्यर्थः। यत्र तल्लिङ्गं नास्ति सङ्ख्याव्यापारसूचकं तत्राविवक्षेति भावः। तद्यथा ग्रहं सम्मार्ष्टीति। अत एव सङ्ख्यायाः क्वचिदव्यापारलक्षणो धर्मः, तेन लिङ्गेन गम्यते इत्यकारप्रश्लेषं केचिद्व्याचक्षते किल। लिङ्गाभावे ग्रहं सम्मार्ष्टीत्यादौ न्यायाद-

विवक्षेति लिङ्गमभवत्तत्र साधकतमं। यथा साधनाभावःस्तोकेन मुक्तः स्तोकान्मुक्तः इत्यादौ । तदेवमनेन श्लोकद्वयेन स एवार्थो निर्वाहितो यो ऽन्यत्राविहितस्यैवेत्यादौ निर्णीतः । ननु च विवक्षां प्रतिजानता ऽभ्युपेतः सङ्ख्यायाः साधनभावः। सङ्ख्या च द्रव्यविशेषणं शक्तिस्तु साधनमिति कथमेतद्विशेषणं तथा स्यात् । नैष दोषः । शक्तेर्निराधाराया अनुपपत्तेस्तदभेदापन्नं फलतो द्रव्यमेव साधनं न्याय्यम्। तथा च कटः कर्म देवदत्तः कर्त्तेति सामानाधिकरण्यं दृश्यते। अथ कर्मादिशब्दैर्द्रव्यायमाणं तदभिधीयते तर्हि कर्मणि द्वितीयेत्यादौ विभक्तिविधाने शक्त्यवच्छिन्नस्य द्रव्यस्यैव सङ्ख्याविशेषणत्वं। युक्तं चैतत्। न हि शक्तिषु सङ्ख्या समवैति । तस्मादाश्रयितव्यसाधनत्वात्सङ्ख्यापि तथा। एतदेव सङ्ख्यायाः क्रियाङ्गत्वं यत्साधनावच्छेद इति सर्वं सुस्थम्॥ ६८॥

पूर्वं ग्रहाणां संस्कार्यत्वादार्थेन रूपेण प्राधान्येन सत्यविवक्षोक्ता। अथ पुनः प्रकारान्तरेणात्र विवक्षाविवक्षे व्यवस्थापयितुमाह।

अपूर्वस्य विधेयत्वात्प्राधान्यमवसीयते ।
विहितस्य परार्थत्वाच्छेषभावः प्रतीयते ॥ ६९ ॥

वास्तवेन रूपेण पूर्वं गुणप्रधानभावश्चर्चितः । अयं तु वाक्यव्यापाराश्रयेणेति विशेषः। तथा हि । पशोरुत्पत्तिवाक्येनापूर्वस्य विधेयत्वात्प्राधान्यमिति यथाश्रुतमेकत्वं न त्यज्यते विधेयत्वादित्यनेनैवापूर्वस्याक्षेपे सति पुनर्वचनं व्याप्त्यर्थं । क्रियाया वाक्यार्थत्वेन प्राधान्ये ऽपि सर्वत्रापूर्वस्य प्राधान्यप्रज्ञानज्ञापनेन विधीयमानत्वादित्यर्थः। विहितस्य तु ज्ञातस्य सतो ऽन्यार्थत्वेनानुवादादप्राधान्यमिति तत्र विधिवाक्यगतानुसरणं न्याय्यम्॥ ६९॥

एतदेव प्राकरणिके ऽर्थे योजयति ।

सम्मार्गस्य विधेयत्वादन्यत्र विहिते ग्रहे ।
विधिवाक्ये श्रुता संख्या लक्षणायां न बाध्यते ॥ ७० ॥

ग्रहं सम्मार्ष्टीत्यपूर्वस्य सम्मार्गस्य विधेयत्वात्प्राधान्यादन्यत्र प्राजापत्या नव ग्रहा इत्यादौ विधिवाक्ये विहिते प्रथमं ज्ञापिते ग्रहे ग्रहसामान्य इत्यर्थः। तत्र च विधिवाक्ये या श्रुता नव इयेत्यादिका

संख्यापदोपादाना संख्या, लक्षणायां ग्रहं सम्मार्ष्टीत्यत्र पूर्वक्षिप्तग्रहोपलक्षणपरे ऽनुवादवाक्ये न बाध्यते न त्यज्यते, अस्या विधौ प्राधान्यात् । इह त्वनुवादवाक्ये ग्रहणमात्रोपलक्षणपरायां चोदनायां नान्तरीयिका द्रव्योपलक्षणार्था शब्दसंस्कारमात्रपरा संख्या, ग्रहश्रुतिस्त्वनर्थिका मा भूदिति ग्रहजात्युपलक्षणार्थेति यथाविभिन्नसङ्ख्याकग्रहोपादानार्थं मा भूत् गुणेन प्रधानोपरोध इति । गुणा हि प्रधानोपकाराय प्रवर्त्तन्त इति प्रधानसंख्यया गुणसंख्या ऽत्र बाध्यते।ननु च दशैतानध्वर्युः प्रातःसवने ग्रहान्गृह्णातीत्युत्पत्तिवाक्यं क्रियाविषयं । ग्रहं संमार्ष्टीति त्वनुवादवाक्यं सम्मार्जनक्रियाविषयमिति विषयभेदादविरोधे बहवो ग्रहा गृह्यन्तां, एकस्तु संमार्ज्यतामिति नास्ति बाधः । अत्रोच्यते । यद्यपि बहिर्व्यापारभेदाद्भिन्नविषयत्वादविरोधः, तथापि प्रतिपत्तौ तयोः सङ्ख्ययोर्विरोध एव । तथा हि।पूर्वं नव दश वा बुद्धौ समवस्थिता, इदानीं तदुन्मूलनेनैको बुद्धावुपारोहयितव्यः । एवं चान्यथा ऽवगते प्रधाने ऽन्यथा पुनरप्रधानवेलायामवगमो न युक्तः। अपि तु यथासिद्धस्यैवानुवादात्संमार्गे प्रधानवेलावगतसङ्ख्याकानामेवावधारणं ग्रहाणां युक्तं । यत्रस्थो हि ग्रहो ऽनूदितः, तत एवास्य स्वरूपमनुसर्तव्यम्। एवं च साधनप्रचयात्संमार्गस्यापि प्रधानस्योपकारादुभयानुग्रहः सम्पद्यते । बहुषु मध्ये ऽवस्थितश्चानुभूत इति तथैवात्र स्मृत्या ऽनुवादो न्याय्यः।तथा च प्रधानोपकारानुरोध एवेहान्यथोक्तः । पूर्वं ग्रहार्थत्वात्सम्मार्गस्य संमार्गवाक्य एव ग्रहाणां प्राधान्यमुक्तं, इह तु विधिवाक्यगतं प्राधान्यमभिहितमित्येतावता विशेषः ॥ ७० ॥

पशुना यजेतेत्यत्रापि तर्हि यागस्य विधेयत्वात्पशोरप्राधान्यमिति तदीयमेकत्वं त्यज्येतेत्याशङ्क्याह ।

विधिवाक्यान्तरे संख्या पशोर्नास्ति विरोधिनी ।
तस्मात्सगुण एवासौ सहैकत्वेन गम्यते ॥ ७१ ॥

पशुगुणविशिष्टो यागो विधीयत इत्यज्ञातज्ञापनात्पशोरपि विधानं। उत्पत्तिवाक्यगता च सङ्ख्या न त्यज्यत इत्युत्सर्गः । तद्यथा। पशौ । ग्रहेत्युत्पत्तिवाक्यापेक्षायां संमार्गस्य विधिवाक्ये, तद्विरोधिनी

सङ्ख्या त्यज्यते। पशौ तु विधिवाक्यान्तरं नास्तीति प्राथमकल्पिकी न त्यज्यते सङ्ख्यैकत्वलक्षणेति, तेन सहासौ क्रियाङ्गभावमनुभवति । सगुण इति । सह लिङ्गलक्षणेन पुंस्त्वाख्येन गुणेन वर्तत इत्यर्थः । यद्वा गुणः शुक्लादिः । यत्र गुणश्रुतिर्नास्ति यथा पशुना यजेतेति, तत्राश्रितो गुणसामान्य इत्यर्थः । यत्रापि गुणश्रुतिरस्ति यथा गामश्वाज शुक्लां, श्वेतं छागमालभेतेति, तत्रापि तद्गुणः स गृह्यते एकवाक्योपात्तगुणयुक्त इत्यर्थः । एतच्च वक्ष्यमाणार्थोपोद्घातार्थमुक्तम् । केचित्पुनराहुः सगुण इत्येतदेव स्फुटीकृतं सहैकत्वेनेति । अत्र तु पौनरुक्त्यं दोषः । न हि कारिकाभागस्य भागान्तरेण व्याख्यानं युक्तम् । यदि वा गुणो विशेषणं जातिः पशुत्वलक्षणा तया सह गम्यते । जातेरिव श्रुतस्यैकत्वस्य त्यागे कारणाभावात् तदेकत्वमपि गम्यत इति दृष्टान्तगर्भं वचनम् । तदेवं न्यायवादिमतानुसारेण सिद्धान्तोऽत्रावस्थापितः । तथा हि । न्यायवादिभिः पूर्वपक्षोऽत्र कृतः । एकत्वयुक्तमेकत्वस्य श्रुतिसंयोगादिति । एवं विद्वान्सोमेन यजेतेति सोमयागे दशापवित्रेण ग्रहं संमार्ष्टीति श्रूयते । तत्रैकस्य ग्रहस्य संमार्गः प्राप्तः । एकत्वश्रुतिसंयुक्तो ह्ययं पदार्थः श्रूयते । एवं पूर्वपक्षं कृत्वा सिद्धान्तितं सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणमिति। ग्रहजात्या द्रव्यं लक्षयित्वा संमार्गो विधीयतेऽविशिष्टं लक्षणं सर्वद्रव्येषु । न हि विशेषो गम्यते को ग्रहः संमार्ष्टव्यः को नेति । न ह्येतदेकत्वं विधीयते प्राधान्येन, अपि तु संमार्गस्य प्रधानस्य विधिः। अविधीयमानमेकत्वं, न द्वितीयादि निवारयितुमर्हतीति सामान्यवचनेन प्राप्ते द्वितीयादौ संमार्गो विधीयते । पशोस्तु यागार्थत्वात्परिच्छिन्नेन तेन यागोपकारादेकत्वविवक्षेत्युक्तं । चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेतेति वाक्यविदां राद्धान्तः ॥ ७१ ॥

इदानीं सङ्ख्यावदन्यस्यापि गुणस्याश्रयावच्छेदकत्वद्वारेण क्रियाङ्गत्वोपादानमनुपादानं चेति सङ्ख्याप्रसङ्गेन विचारयितुं सगुण एवासावित्युपोद्घाते सत्याह ॥

निर्ज्ञातद्रव्यसम्बन्धे यः कर्मण्युपदिश्यते ।
गुणस्तेनार्थिता तस्य द्रव्येणेव प्रतीयते ॥ ७२ ॥

निर्ज्ञातः प्रथमं द्रव्यसम्बन्धो यस्य तस्मिन्कर्मणि क्रियायां

यो गुणः शुक्लादिर्विधीयते तेनापि तस्य कर्मणः क्रियालक्षणस्य द्रव्यवदर्थिता । तथा च सम्बन्ध इति द्रव्यपदार्थसम्बन्धपक्षे प्राह। जातिपदार्थपक्षे तु वक्ष्यति, यदा तु जातिः शक्तिर्वेत्यादि । ननु च क्रिया जनकत्वात्साधनमपेक्षतां,गुणे तु कापेक्षा तस्याः। अथ सगुणेन द्रव्येण निर्गुणस्यासम्भवाज्जन्या क्रियेत्युभयापेक्षा तर्हि क्रमो ऽयं । निर्ज्ञातद्रव्यसम्बन्धे पश्चाद्द्रव्यवद् गुणे ऽप्यपेक्षेति अपेक्षाऽसत्त्वाच्चोपमा नोपपद्यते । अत्रोच्यते । क्रिया तावत्साध्यस्वभावा साधनमपेक्षते। तच्च द्रव्यमिति तदपेक्षोपदिश्यमानगुणापेक्षापि तस्य गुणस्य साधनावच्छेदोपयोगाद्भिद्यत एव क्रियायाः । तत्र यद्द्रव्यवहितमन्तरङ्गं तत्प्रथममपेक्ष्यं । तथा च द्रव्यं । गुणस्तु तदाधारत्वन्मुखेन सम्बन्धसहो बहिरङ्गः पश्चादपेक्षणीयः । अत एव निर्ज्ञात इति भूताभिधानं। द्रव्यस्य शक्त्याधारत्वात् प्रथमं क्रियासम्बन्ध इत्यर्थः। एवं च साक्षादसमन्वयादुपमा । एतच्च, आर्थक्रमापेक्षयोच्यते। न तु शब्दव्यापारापेक्षया । गामभ्याज शुक्लामिति हि वाक्यं सकृदेव गुणप्रधानभावेन सम्बन्धविशिष्टमर्थमाक्षिपति न कश्चित्तत्र द्विरस्य व्यापारः ॥ ७२ ॥

एवं गुणद्रव्ययोः श्रौतः क्रियासम्बन्ध उक्तः । इदानीं तयोः परस्परं वाक्योपसमन्वयप्रतिपादनायाह ॥

कश्चिदेव गुणो द्रव्ये यथा सामर्थ्यलक्षणः ।
आधारोऽपि गुणस्यैवं प्राप्तः सामर्थ्यलक्षणः ॥ ७३ ॥

निर्गुणस्य द्रव्यस्यासम्भवः सामर्थ्यं तेन लक्ष्यते तत्र द्रव्ये गुणः । आधारो ऽपि द्रव्यं गुणस्य सामर्थ्येन निराधारगुणासम्भवस्वभावेन लक्ष्यते । गुणमात्रं च द्रव्येणापेक्षितं द्रव्यमात्रं च गुणेनास्मात्सामर्थ्यादित्याह । कश्चिदेवेति । अपरामृष्टजातिभेदौ द्रव्यगुणौ परस्परेणापेक्षितौ।प्राप्त इति।प्रतीतिलब्ध इत्यर्थः। सामान्यमात्रे प्रतीत्यव्यभिचाराद्विशेषणाव्यभिचारात् ॥ ७२ ॥

एवमाधाराधेयसामान्यसंसर्गे लब्धे श्रुतयोरेकवाक्यत्वाद्वाक्यीयेन समन्वयेन परस्परसम्बन्धमाह ॥

तयोस्तुपृथगर्थित्वसम्बन्धो यः प्रतीयते ।

न तस्मिन्नुपघातो ऽस्ति कल्प्यमन्यत्र चाश्रुतम् ॥ ७४ ॥

पूर्वोपवर्णितेन सामर्थ्येन पृथक् परस्परं गुणद्रव्ययोराकाङ्क्षायां सत्यामेकवाक्योपात्तयोः श्रुतयोरेव समन्वयो यः प्रतीयते न तत्र बाधः श्रौतेऽर्थे त्यागाभावात् । असति तत्परित्यागहेतावश्रुतपरिकल्पना न न्याय्या । अत एव प्रतीयत इति निर्बाधप्रतीतिः प्रमाणतामाह । अपोद्धारबुद्ध्याश्रयेण चैतदुच्यते । निरंशे हि वाक्ये पूर्वमेव विशेषविवक्षा । तथा हि । निरवयवेन वाक्येन विशिष्ट एवार्थः प्रतिपादितः । तत्र प्रतिपत्त्यर्थमंशांशिकतया ऽपोद्धारपदार्थः परिकल्प्यते । सामान्यात्मा स एव विशेषो भवति विशेषसम्बन्धे सतीति प्रतिपादनोपायक्रमः । तथा च विशेषसम्बन्धे ऽपि सामान्यात्मा पदार्थो न स्वरूपात्प्रच्यवते अपि तु तद्विशेष इति । अत एवावतिष्ठते, न तु त्यज्यते । सामान्येन स्थितानां यदा विशेषे ऽवस्थानमुपपद्यते सामान्यवृत्तीनामुच्चरितानां तथाभूतानामेव तिरोभावादुत्तरकालं को ऽसौ विशेषे च तिष्ठतां । न च सामान्यविशेषयोर्युगपद्विवक्षा सम्भवति । विशेषविवक्षायां हि सर्वस्मान्नियमेन सामान्यादवच्छेदो विज्ञायत इत्युपात्तस्य सामान्यस्य त्यागप्रसङ्गः । स च नित्ये शब्दार्थसम्बन्धे न युक्तः । तिरोभूतश्च निवृत्तो ऽनवधार्यमाणात्मा शब्दो ऽन्यस्यापि पदस्य सामान्यनिष्ठत्वात्केन चिद्द्रव्यप्रतिपादिते विशेषे निर्विषयः क्वावतिष्ठताम् । यदुक्तम् । सामान्यार्थस्तिरोभूतो न विशेषे ऽवतिष्ठते । उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठतामिति । तस्माद्विशिष्ट एवार्थो वाक्यादवगन्तव्य इत्यश्रुतस्य कल्पनावकाश एव नास्ति। नापि श्रुतस्यार्थस्य त्यागसम्भवः । अपोद्धारपदार्थाश्रयो ह्ययं विचारः प्रस्तुतः । तथा श्रुत्यादीन्यखण्डवाक्यपक्षे नोपपद्यन्त इत्याक्षिप्तवाक्यकाण्डे ऽपोद्धारपदार्थकल्पनेनैवोपपादितानि । श्रुतिप्रतिपादितस्य श्रौतार्थस्य त्यागे ऽश्रुतकल्पना न युज्यत, इत्येकवाक्योपात्तत्वमत्र सम्बन्धहेतुः। परस्परसम्बन्धे हि एकवाक्यता ऽपीष्यते । वाक्यार्थेन प्रधानेन गुणानामाक्षेपादश्रुतपरिग्रहे सर्वत्र वाक्यभेदप्रसङ्गान्न क्वचिदेकवाक्यता भवेत् ॥ ७४ ॥

ननु च क्रियाकारकसम्बन्धे विशेषणविशेष्यभावे च प्रति-

पाये वाक्यभेदप्रसङ्गः । न चासौ न्याय्यः । नैष दोषः । गुणप्रधान-भावेनात्र सम्बन्धद्वयसम्भवः । स च एकस्मिन्वाक्ये अविरुद्धः ॥७४॥

तथा हि । श्रुतिवाक्यलक्षणमत्र प्रमाणद्वयमस्तीत्याह ॥

क्रियया यो ऽभिसम्बन्धः स श्रुतिप्रापितस्तयोः ।
आश्रयाश्रयिणोर्वाक्यान्नियमस्त्वत्र तिष्ठते ॥ ७५ ॥

श्रुत्या कारकविभक्त्या क्रियायां सम्बन्धो द्रव्यगुणयोः समशीर्षकतया प्रतिपादितः । वाक्यादखण्डप्रतिभोत्पत्तावपोद्धारेण गामभ्याज शुक्लामभ्याजेति पदार्थविभजनात् गामेव शुक्लामेवेति गुणगुणिनोरेकवाक्योपात्तयोर्विनियोगो वाक्यस्य प्रामाण्येनावतिष्ठते । अश्रुतगुणद्रव्यपरिकल्पने हि प्रतिपदार्थं क्रियाभेदात् गामभ्याज शुक्लां चेति वाक्यभेदः स्यादित्येकरसयैव प्रवृत्त्योपात्तगुणविशिष्टस्य द्रव्यस्य क्रियासमन्वये तदेकवाक्यत्वं पोषितं भवति । नियमो द्रव्यगुणयोराधेयान्तरादाधारान्तराच्च व्यवच्छेदः । सति परस्परसम्बन्धे न चान्यनिवृत्तिः शब्दान्तरमस्ति वाचकमित्येकवाक्याश्रयकशब्दोपादाना ऽसौ श्रौतीति वाक्यीया ऽवतिष्ठते । नतूक्तं न्यायवादिभिः । अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति । यत्रार्थैकत्वं श्रूयते वाक्ये, तत्र द्रव्यगुणयोर्नियमो भवति परस्परसम्बन्धात्मकः । कुतः ऐककर्म्यात् । एकं हि कर्म वाक्यार्थभूतं क्रियालक्षणं । प्रधानमुद्दिश्य द्रव्यगुणौ शेषभूतौ विधीयेते इति तयोः परस्पराकाङ्क्षत्वादेकवाक्यतायां सामानाधिकरण्यान्यथानुपपत्त्या ऽसत्यपि सम्बन्धवाचकषष्ठीलक्षणविभक्तिश्रवणे विशेषणविशेष्यभावसम्बन्धावसाय इति सूत्रार्थोऽस्मन्नयानुगुणः ॥ ७५ ॥

एवमवस्थिते सति, इदमत्रापततीत्याह ।

तत्र द्रव्यगुणाभावे प्रत्येकं स्याद्विकल्पनम् ।
श्रुतिप्राप्तो हि सम्बन्धो बलवान्वाक्यलक्षणात् ॥७६॥

श्रुतिप्राप्तः, श्रुत्योपस्थापितः क्रियाकारकसम्बन्धो, वाक्यं लक्षणं लक्ष्यते ऽनेनेति प्रतिपादकं यस्य तस्माद्बलवानिति । तस्य सर्वथा त्यागाभावः।साक्षाद् द्वितीयाश्रुति स्तद्विभक्तिश्च श्रौतसम्बन्धाऽऽवेदिका ऽन्योन्यस्वरूपानुविद्धयोः क्रियाकारकयोः प्रतीतेः । वाक्यीय-

स्य तत्सम्बन्धस्य साक्षाद्वाचकं नास्ति केवलमुभयस्यैकत्रावयोपादानाद्योग्यार्थसमन्वयपदान्तरमनवधानात्परस्परेण सम्बन्धो ऽवगस्यात्यत इति श्रुत्यपेक्षया दुर्बलत्वं । पदान्तरापेक्षत्वाच्च पदान्तरस्य नियतस्य सन्निधानाभावान्नावश्यं वाक्यीयसम्बन्धो विशेषणविशेष्यभावलक्षण इति तस्मिन्बहिरङ्गे निवृत्ते ऽपि श्रौतस्यान्तरङ्गस्यानिवृत्तिः । एवं च श्वेतं छागमालभेतेति श्वेताभावे कृष्णस्यालम्भनवच्छागाभावे पिष्टपिण्डीमालभ्य कृती स्यादिति चोद्यमत्र दर्शने ॥७६॥

जातिपदार्थनये तु सिध्यतीष्टव्यवस्थेत्याह ।

यदा तु जातिः शक्तिर्वा क्रियां प्रत्युपदिश्यते ।
सामर्थ्यात्संनिधीयेते तत्र द्रव्यगुणौ तदा ॥ ७७ ॥

केषां चित्साहचर्येण जातिःशक्त्युपलक्षणमिति जात्युपलक्षिता शक्तिः। जातिपदार्थे प्रतिनिध्युपादानार्थे क्रियासाधनत्वेन चोद्यत इत्युक्तत्वाज्जातिः शक्तिर्वेत्याह । अत्र दर्शने, न द्रव्यगुणयोः श्रौतः क्रियाभिसम्बन्धः। अपि तु जातिक्रिययोः शक्तिक्रिययो र्वा विभक्तिप्रापितः सम्बन्धः। निराधारयोश्च जातिशक्त्योरसम्भवात्सामर्थ्यात्सन्निधापितं स्वाधारं द्रव्यं तेनापि स्वाधेयो गुण इति द्वयोरपि द्रव्यगुणयोः सामर्थ्यात्प्राप्तत्वम् ॥ ७७ ॥

ततश्च प्रतिनिधिविषये ।

जातीनां च गुणानां च तुल्ये ऽङ्गत्वे क्रियां प्रति ।
गुणाः प्रतिनिधीयन्ते छागादीनां न जातयः ॥ ७८ ॥

द्रव्यव्यवधानात् द्वावपि जातिगुणौ क्रियाङ्गभावमनुभवत इति तुल्यत्वं। तत्र तथापि च्छागादीनां सम्बन्धिन्यो जातयो न प्रतिनिधीयन्ते। छागाभावे मेषो नालभ्यते अपि तु गुणानामेव प्रतिनिधिः प्रसिद्धः। श्वेताभावे कृष्णो ऽपि च्छाग आलभ्यते ॥ ७८ ॥

कात्र युक्तिरित्याह ।

व्यक्तिशक्तेः समासन्ना जातयो न तथा गुणाः ।
साक्षाद् द्रव्यं क्रियायोगि गुणस्तस्माद्विकल्पते ॥ ७९ ॥

व्यक्तिशक्ते द्रव्यशक्तेः । शक्तस्य द्रव्यस्येत्यर्थः । शक्त्याश्रयो द्रव्यस्योपयोग इति शक्तिग्रहणमुत्पत्तिप्रभृत्याविनाशादन्वयाद-

धिष्ठानसम्बन्धयोरेककालत्वादासन्ना द्रव्ये जातिः । गुणास्तु तन्निष्ठोत्तरकालभाविनः कालान्तरपरिवासादन्योन्यस्वभावपरिणामिन इति द्रव्याद्विप्रकृष्टाः। यदि नाम न समासन्ना गुणाः कथमेतावता विकल्प इत्याह। साक्षाद्द्रव्यं क्रियायोगीति। एतदुक्तं भवति। यदि द्रव्यमनपेक्ष्य गुणः साक्षात्क्रियायोगी स्यान्न विकल्पेत। यदा तु द्रव्यं साक्षात्क्रियायोगि, जातिगुणौ, तद्द्वारेण तदा प्रत्यासत्तिविप्रकर्षचिन्ता जायते। तथाहि। द्रव्यं साक्षाच्छकं क्रियासम्बन्धक्षममिति तद्द्वारेण समन्वययोग्यम्। तत्रासन्नं न विकल्पते जातिरूपमित्यन्यजातीयस्य न प्रतिनिधिः। अपि तु अन्यगुणस्य। कृष्णे ऽपि च्छागे छागबुद्धिरन्वेत्येव। अन्यजातीयस्योपादाने तु जातेरात्मकल्पायास्त्यागे सर्वथैव साधनभेदात्क्रियान्तरमेव स्यात्। कदरे तु सादृश्यात् खदिरबुद्धेरनपगमः। एतच्च जातिपक्षे युज्यते। श्रौतस्य जातिरूपस्याऽत्यागात्। द्रव्यपदार्थपक्षे तु जातेरनभिधेयाया उपलक्षणत्वात्त्यागेऽपि नास्ति श्रौतार्थत्याग इत्यन्यजातीयस्यापि प्रतिनिधिप्रसङ्गः। श्रौतस्य सम्बन्धस्य च द्रव्यपदार्थपक्षे पूर्वं गुणद्रव्ययोः साम्यमुक्तं। इह तु सामर्थ्यादाक्षेपे प्रत्यासन्ना जातिर्न त्यज्यत इति जातिपदार्थमुत्कर्षयितुं विचारितम्। अत एव यदा तु जातिरिति तु शब्दः पूर्वस्माद्विशेषणार्थः। तदेतद्भाष्ये विहितं। यत्र ह्यनन्तरं द्रव्यं तत्प्रधानं, न हि शुक्लमालभेतेति पिष्टपिण्डीमालभ्य कृती भवतीति। प्रत्यासन्नतरत्वाज्जातेस्तद्वाची द्रव्यशब्दो ऽभिप्रेतो न गुणोपसर्जनद्रव्यवाची। अनिर्धारितरूपस्य हि द्रव्यस्य जातिरात्मरूपनिर्धारणोपयोगिनी स्वात्मप्रदानेनारूपिता तदाकारतां प्राप्नोति। तत्प्रतिनिधौ वस्त्वन्तरभावाच्चोदितस्य त्यागप्रसङ्गः॥ ७९॥

पूर्वोक्तं पक्षमन्यमतत्वेनोपसंहरति।

साम्येनान्यतराभावे विकल्पः कैश्चिदिष्यते।

अतद्गुणो ऽतश्छागः स्यान्मेषो वा तद्गुणो भवेत्॥८०॥

यथा जातिर्द्रव्योपलक्षणं निरुपाधेरर्थस्याव्यवहार्यत्वात्। एवं गुणो ऽपि। तथा जातिवदाधारनियतो गुणो नीलादिर्वाय्वाकाशादेस्तदभावादिति सति साम्ये ये द्रव्यवद्भेद्यत्वाद् द्रव्यलक्षणप्राप्तं गुणमप्यभिधेयं मन्यन्ते व्याडिदर्शनस्थिता द्रव्यपदार्थिकाः, तेषां गुणो

पि क्रियासम्बन्धं जातिद्रव्यद्वारेणार्हतीति द्रव्यसम्बन्धपरिपोषार्थं । वाक्यीयसमन्वयत्यागेन द्वयोरपि गुणद्रव्ययोः प्रतिनिध्युपपत्तिरित्यनभिमतमपि पक्षं मतान्तरत्वेन निर्दिशति । केश्चिदिति । द्रव्यस्य हि प्रतिनिधिर्भाष्यकारप्रभृतिभिः शिष्टैर्नाङ्गीकृतः ॥ ८० ॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृतमेवानुसन्धातुमाह ॥

जातेराश्रितसङ्ख्यायाः प्रवृत्तिरुपलभ्यते ।
सङ्ख्याविशेषमुत्सृज्य क्वचित्सैव प्रवर्त्तते ॥ ८१ ॥

प्रासङ्गिकेन पूर्वप्रस्तुतस्य व्यवधानाद्युक्तमप्येतत्पुनः स्मारितं सामान्येनाधिकं वक्तुम् ॥ ८१ ॥

तथाहि ॥

पराङ्गभूतं सामान्यं युज्यते द्रव्यसङ्ख्यया ।
स्वार्थे प्रवर्त्तमानं तु न सङ्ख्यामवलम्बते ॥ ८२ ॥

पूर्वं शाब्देन व्यापारेण विधीयमाना ऽनूद्यमानत्वेन गुणप्रधानभावमाश्रित्य गुणे ऽपि ग्रहे सङ्ख्या विवक्ष्यत इति प्रतिपादितम् । इदानीं तु वास्तवं गुणप्रधानभावमाश्रित्य गुणे सङ्ख्या विवक्ष्यते इति न्यायो ऽवतार्यते ॥ ८२ ॥

यजेत पशुनेत्यत्र यज्यर्थायां पशुश्रुतौ ।
कृतार्थेकेन पशुना प्रधानं भवति क्रिया ॥ ८३ ॥

यागस्य प्राधान्यात्तत्साधनभूतः पशुरित्येकेन यागसम्पत्तौ प्रधानस्य क्रियालक्षणस्य वाक्यार्थस्य निष्पत्तेर्गुणभेदप्रत्यनादरात्पराङ्गभूतमत्र पशुसामान्यं द्रव्यसङ्ख्यया युज्यते इति जातेराश्रितसङ्ख्याया अत्र प्रवृत्तिः । तथा हि । प्रधानं गुणभेदे सत्यावर्त्तेतेति क्रियान्तरमेवैतत्स्यात् । ततश्च न प्रधानानुयायिनो गुणाः स्युः । अपि तु प्रधानं गुणानुयायीत्येतदनिष्टं प्रसज्येतेत्याह ॥ ८३ ॥

तथा हि ॥

यावतां सम्भवो यस्य स कुर्यात्तावतां यदि ।
आलम्भनं गुणैस्तेन प्राधान्यं स्यात् प्रयोजितम् ॥८४॥

यस्येत्यधिकारिणः । अङ्गप्रयुक्ते च प्रधाने प्रधानत्वमेव तस्य

न स्यात्, तत्प्रतिगुणानां च गुणत्वमिति संरक्ष्यो ऽयं नय इत्यभिप्राय. ॥ ८४ ॥

स्वार्थे प्रवर्त्तमानं तु न सङ्ख्यामवलम्बत इत्यत्रोदाहरणमाह ॥

सम्मृज्यमानतन्त्रे तु ग्रहे यत्र क्रियाश्रुतिः ।
सङ्ख्याविशेषश्रवणं नैव तत्राद्रियामहे ॥ ८५ ॥

सम्मृज्यमानो ग्रहार्थस्तन्त्रं यत्र ग्रहे ग्रहशब्दे । विशेषणसमासो ऽयं । सम्मृज्यमानं च तन्त्रं च तस्मिन् ग्रहे संस्कार्यत्वात्प्रधाने सम्मार्जनक्रियायाः शब्दप्रधानभूताया यत्र श्रुतिः ग्रहं सम्मार्ष्टीत्यत्र तत्र स्वशब्देन प्रतिपादितस्यापि सङ्ख्याविशेषस्यैकत्वलक्षणस्य विवक्षा न भवति । उत्पत्तिवाक्यानुसारेणानेकसङ्ख्यस्यैव तस्यात्र विवक्षितत्वात् । न हि सम्मार्गोऽत्र तन्त्रं, येनैकेनापि ग्रहलक्षणेन साधनेन तस्य सम्पत्तावनेकोपादानं पशुबलिः फलं स्यात् । अपि तु ग्रहस्तन्त्रमिति यथासम्भवं तस्य संस्कार इति सङ्ख्याविशेषमुत्सृज्य जातिः प्रवर्त्तते ॥ ८५ ॥

तदेवं गुणे सङ्ख्या विवक्ष्यते न तु प्रधान इत्यत्र शास्त्रीयं ज्ञापकमाह ॥

शिष्यमाणपरे वाक्ये यदेकग्रहणं कृतम् ।
शेषे विशिष्टसङ्ख्ये ऽपि व्यक्तं तल्लिङ्गदर्शनम् ॥ ८६ ॥

सरूपाणामेकशेष इत्यत्र शिष्यत इति शेष इति कर्मसाधनशेषशब्दाश्रयेण शिष्यमाणो ऽवतिष्ठमानः परः प्रधानं एकशेषलक्षणेन संस्कार्यत्वाद्भवतीत्येकवचनान्तत्वादेकसङ्ख्यायुक्ते ऽपि प्रतीते शेषशब्दे यत्पुनरेकशब्दोपादानं तत्स्वार्थे प्रवर्त्तमानं प्रधानभूतं सामान्यमाधारगतसङ्ख्याश्रयेण प्रवर्तत इत्यस्यार्थस्य ज्ञापकं स्फुटं । भावसाधने तु शेषशब्दे शेषणक्रियायाः प्राधान्येन शिष्यमाणस्येति द्विबह्वोरपि शेषणमेकमेवेति, एकत्वे विवक्षिते ऽपि द्विबह्वोर्निवारणार्थमेकशब्दो ऽर्थवानेवेति न ज्ञापकं स्यात् ॥ ८६ ॥

एवं गुणे सङ्ख्या विवक्ष्यत इति न्यायं वैदिकोदाहरणपृष्ठपातितया ऽवस्थाप्य प्रकृतोपयोगितां दर्शयितुं व्याकरणे ऽप्युदाहरणमाह ॥

समासप्रत्ययविधौ यथा निपातिता श्रुतिः ।
गुणानां परतन्त्राणां सा तथैवोपपद्यते ॥ ८७ ॥

सुप्सुपेत्यत्र समासस्य विधिरिति तस्यैव प्राधान्यम् । न ह्यवयवानामिदमनुशासनम् । समुदाये तेषामन्तर्भूतत्वात् स्वातन्त्र्याभावात् । न चाप्यवयवाः केचनात्र वस्तुतः सन्ति । विशिष्टे ऽर्थे समासपदस्याभिन्नस्यैव प्रवृत्तेः । यथोक्तं वाक्यकाण्डे । ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बल इति । अभिन्नस्य समासपदस्यैव परिकल्पितपूर्वपरावयवानां विभागः सञ्चिकीर्षितः । अन्वयव्यतिरेकाभ्यां हि विशिष्टार्थशब्दावधारणं । तौ चात्र समासपदे राजपुरुषादौ स्तः । समुदायेन विशिष्टस्य सम्बन्धस्य प्रतिपादनात् । अवयवाभ्यामप्रतिपादनात् । समुदायसंस्कारप्रयुक्त एव चावयवानां विभक्तिलोपह्रस्वत्वपुंवद्भावादिसंस्कारः । अवयवसंस्कारादिनान्तरीयकत्वात्समुदायसंस्कारस्य । तस्मादत्र समासविधौ येन प्रकारेणैकसङ्ख्यामुपादायैकत्वं प्रतिपादयन्ती श्रुतिः सुप्सुपेतिशब्दोपनिपतिता श्रीविषयभाविभागेभा, तेनैव प्रकारेण न्यायेनोपपद्यते युज्यते। श्रुतमेकत्वं विवक्ष्यत इत्यर्थः । को ऽसौ न्याय इत्याह । गुणानां परतन्त्राणामिति.। प्रधानवशवर्त्तित्वाद् गुणानामवयवानां या सङ्ख्यामुपादायार्थे प्रवृत्ता सती सुप्सुपेति श्रुतिस्तत्सङ्ख्यायोगिनमेवार्थं प्रतिपादयतीत्येकस्य सुबन्तस्य समासः कष्टश्रित इत्यादौ भवति । ननु बहूनां महत्कष्टं श्रित इति द्वितीयान्तजातेराश्रयादनेकस्य समासे तस्यानियतत्वादनवस्थानात्प्रधानभूतः समासो नियमेन प्रतीयत इति विप्लवत्तस्यानुग्रहो निराकृतः स्यादिति प्रत्यवयवं समासभेदात् गुणानामेव प्राधान्यं स्यात् न तु गुणाः प्रधानानुयायिन इत्यर्थः । द्वन्द्वबहुव्रीह्योस्त्वनेकमिति वचनसामर्थ्यादनेकपदावयवः समासो ऽभ्युपगम एव । अत एव च लिङ्गात्सङ्ख्याविवक्षासिद्धिः । प्रत्ययविधाविति ङ्याप्प्रातिपदिकादित्यत्र समाहारद्वन्द्वनिर्दिष्टायाः प्रातिपदिकलक्षणायाः प्रकृतेः सिद्धरूपायां अनुवादात्स्वादिविधिवाक्ये ऽधिकारात्पूर्वस्य स्वादेरेकवाक्यतया प्रत्ययस्य विधानमिति प्राधान्यात्तदङ्गे प्रातिपदिके यथाश्रुतसङ्ख्याङ्गीकारः । ननु च सुप्सुपेति विभक्त्यैकत्वस्य प्रतिपादितत्वादस्तु सङ्ख्याविवक्षा । ङ्याप्प्रातिपदि-

कादित्यत्र तु का ऽत्रावेकत्वसङ्ख्या श्रुता यस्या विवक्षोच्येतास्य यदि समाहारैकत्वं। तदयुक्तम्। तस्य समुदायसम्बन्धित्वात् समुदायात्प्रत्ययोत्पत्तेरविवक्षितत्वान्न तस्यैकत्वमत्र विवक्षितत्वेन प्रतिपाद्यम्। अपि तु प्रत्येकमवयवानाम्। तेषां चात्र वृत्त्यन्तर्गतत्वाद् द्वित्वादिप्रतियोग्येकत्वं न प्रतीयते ऽपि त्वविज्ञातसङ्ख्याविशेषाणि स्वरूपमात्रेणैव ङ्याप्प्रातिपदिकानि। भवतैव तर्ह्यस्माकं दिक् प्रदर्शिता। वयमप्यधुना तथैवं व्याचक्ष्महे। यथा निपतिता श्रुतिः। येनैव प्रकारेण निपतिता अर्थवच्छब्दरूपं च स्वरूपमात्रेण प्रतिपादयन्ती निपतिता। यथा च तावति तात्पर्यमिति न द्वितीयमपेक्षते। द्विवचनबहुवचनान्तानामसमासाद् वृत्तौ सङ्ख्याविशेषानवगतेः प्रतियोग्यपेक्षामन्तरेण च द्वित्वाद्यनुत्पत्तेः। अतश्चार्थात्प्रत्येकमेकत्वं ङ्याप्प्रातिपदिकादिति वदतो विवक्षितम्। अन्ये तु प्रत्येकवाक्यादस्माद्यत्प्रातिपदिकं जायते, ङ्यन्तादाबन्तात्प्रातिपदिकादिति, तत्र श्रुतमेकत्वं विवक्ष्यत इति व्याचक्षते। अत्र तु यथा निपतिता श्रुतिरित्ययुक्तम्। न हि प्रतिपादकमुपप्लवमानं वाक्यं श्रुतिविषयम्। तदत्र सङ्ख्याविवक्षायां बहुभ्यो ङ्याप्प्रातिपदिकेभ्यः स्वादिप्रत्ययस्य परत्वासम्भवाद्यथाप्रकृत्यावर्त्तेत प्रत्ययः। यथा च गुणानुयायि प्रधानं स्यान्न तु गुणास्तदनुयायिनः। ननु च स्वादीनां प्रकृतिसम्बन्धस्य विधीयमानत्वात्कथं तेषां प्राधान्यं। एवमपि प्रकृतीनां तावद् गुणत्वं सिद्धमिति तत्र गुणे सङ्ख्या विवक्ष्यत इति सिद्धो ऽस्मन्नयः। न च प्रकृतिरेव प्रत्ययपरतया सन्विचिकीर्षिता। प्रकृतिप्रत्ययपरिकल्पनेन पदस्यैवान्वाख्येयत्वात्तस्यैव लोके प्रयोगात्। यद्यपि च प्रत्ययपरत्वेव संस्कृता प्रकृतिरेव पदं तथापि तात्पर्यदृशा प्रकृतेः प्रक्रियाभेदेनासत्यत्वादविकल्पं पदमेव सत्यमुद्दिश्य संस्कारप्रवृत्तिः। वाक्यार्थप्राधान्ये त्वपूर्वस्य प्रत्ययस्यैव विधीयमानत्वात्प्राधान्यं। अत एव समासप्रत्ययविधावित्याह। इत्थं च नात्र भिन्नवाक्यतया सम्बन्धिविधानं। प्रक्रियायां प्रकृत्यनुवादेनैकवाक्यतया स्वादीनां विधानात्सुप्तिङोरविशेषविकरणाद्वाक्यमाभिधानादिति तु सङ्ख्यावाक्यभेदाभिप्रायं। न तु प्रकृतिवाक्येनापि नैकवाक्यता ऽत्र विवक्षितेति मन्तव्यम्। न चैकवाक्यतया विधाने प्रत्ययसंज्ञासम्बन्धो विलक्षणः प्रकृतिभेदेन विना न शक्यते विधातुं। विधिसम्बन्धो हि पूर्वं, ततो

विधानाल्लब्धसत्तानां स्वादीनां प्रत्ययसंज्ञासम्बन्धः । सतो हि कार्यिणः कार्येण भवितव्यम् । भाविनोऽपि बुध्या विषयीकरणाद्वाऽयमानावस्थायामेव प्रत्ययादिसंज्ञासमन्वयादित्येकवाक्यतयैवात्र प्रत्ययविधिर्ग्रन्थकाराभिमतः ॥ ८७ ॥

किमेष एवोत्सर्गः, गुणे सङ्ख्या विवक्ष्यत इति । नेत्याह ॥

गुणे ऽपि नाङ्गीक्रियते प्रधानान्तरसिद्धये ।
सङ्ख्या कर्ता तथा कर्मण्यविशिष्टः प्रतीयते ॥ ८८ ॥

तथा कर्तेति । एवं च सति कर्त्ता ऽविशिष्टः प्रतीयत इति सम्बन्धः । स हि गुणः । ईप्सिततमं तु कर्म संज्ञाद्वारेण धीयमानसंस्कारं प्रधानं । कर्मणीति । कर्त्तुरीप्सिततमं कर्मेत्यत्र कर्मसंज्ञायां विधीयमानायाम्, तस्या एव तया वा संस्क्रियमाणस्य कर्मणः प्राधान्यात्कर्त्तुः क्रिययेप्सिततममिति स्वाश्रयक्रियासम्बन्धितया कर्ता निर्दिश्यमानो गुणो ऽविशिष्टः सूत्रोपात्तलिङ्गसङ्ख्याभ्यामनवच्छिन्नः, कर्त्रोः कर्तृणां च क्रिययेप्सिततमस्यापि कर्मसंज्ञासिद्ध्यर्थे भूयः प्रधानानुग्रहाय प्रतीयते अवगम्यते । समासप्रत्ययविधौ तु बहूनां सुबन्तानां समासे ऽव्यवस्था स्यात्, बहुत्वस्यानियतत्वात्कर्मसंज्ञा तु बहुविषया प्रचयमनुभवतीति न दोषः । प्रत्ययविधिरपि बहुभ्यः प्रकृतिभ्यो नास्ति परत्वस्यानिर्वाहात् । तथा च सरूपवार्त्तिक उक्तं । एकविभक्तेरिति चेन्नाभावाद्विभक्तेरिति । तदेवं प्रधानप्रचये भूयाननुग्रहः कृतो भवतीति प्रधानस्याविवक्षितसङ्ख्यत्वे सिद्धे न गुणगता सङ्ख्याऽङ्गीक्रीयते । अन्यथा प्रधानसङ्कोचे तदुपरोधः स्यादिति प्रधानान्तरसिद्धिः । प्रयोजनमेतद्युक्तिगर्भं द्रष्टव्यमिति । गुणानां पारतन्त्र्यादेव न्यायात्कर्त्तुरीप्सिततमामित्यत्र न विवक्ष्यते सङ्ख्येत्युक्ता युक्तिः ॥८८॥

अत्रैवोपोद्बलनार्थमाह ॥

यस्यान्यस्य प्रसक्तस्य नियमार्था पुनःश्रुतिः ।
निवृत्तौ चरितार्थत्वात्सङ्ख्या तत्राविवक्षिता ॥ ८९ ॥

यस्य पुनः श्रुतिरिति सम्बन्धः । पूर्वं सामान्येनाक्षेपादेकैव श्रुतिः पुनःश्रुतिरित्युच्यते । यथेह कर्तुः । पुनःशब्दो वा तु शब्दस्यार्थे । स पूर्वमप्रधाने विवक्ष्यते सङ्ख्येत्युक्तम, तदपेक्षयेह विशेषद्योतनार्थः ।

किमर्थमसौ पुनः श्रुतिरित्याह । अन्यस्य कर्मादेः प्रसक्तस्य प्राप्नुवतो नियमार्था निवृत्त्यर्था । तथा हि । ईप्सिततमस्य सम्बन्धिशब्दत्वाद्धेनेप्सिततमं कर्म तस्याक्षेपस्तावत्सिद्ध इति करणादेरपीप्सिततमप्रसङ्गे कर्तुरित्युच्यमानं कारकान्तरनिवृत्तितात्पर्यान्नियमार्थमिति । द्वौ बहवो वा कर्त्तारो न निवारिताः । तथा ऽपि कारकान्तरनिवृत्तिर्विवक्षिता सिध्यत्येवेति निर्देशार्थैवात्र सङ्ख्या । नन्वेवमनेनैव न्यायेन यजिना अनियताङ्गाक्षेपात् पशुनेति करणान्तरनिवृत्तितात्पर्येणोच्यमानमविवक्षितसङ्ख्यं प्रसज्येत । नैष दोषः । यथेप्सिततमस्य सम्बन्धिशब्दत्वादवश्यं साधनमात्राक्षेपे सिद्धे कर्तुरिति पुनःश्रुतिर्भवति, नैवं यजेः करणाक्षेपो ऽवश्यम्भावी । देवतोद्देशेन हविःप्रक्षेपमात्रस्य यज्यर्थत्वात्त्यज्यमानस्यैवाक्षेपो न करणस्येति करणाक्षेपस्य नान्तरीयकत्वाभावान्न पशुनेति पुनःश्रुतिः अपि त्वपूर्व एवायमङ्गविधिः । पशुरेवात्र त्यज्यमान इति चेत्, त्यागमात्रे ऽपि तर्हि यजेः प्रयोगो दृश्यते, अग्नौ सुष्ठु यजत इति । अत्रापि हविष आक्षेप इति चेत्, एवं तर्हि दृष्टार्थानां क्रियाणां लोके भवेन्नाम सामर्थ्यात्साधनाक्षेपः । अदृष्टार्थासु तु शब्दप्रमाणकत्वाद्यजेतेत्यतो यागः कर्त्तव्य इत्येव प्रतीयते । पशोरपूर्वैव चोदनेयमिति यथाश्रुतसङ्ख्याविवक्षैव न्याय्या । न च तस्मिन्यागे द्वाभ्यां प्रधानान्तरसिद्धिरस्ति । नापि यागान्तरे एकेनैव सर्वस्य यागस्य सिद्धिः । ननु च कारकान्तरनिवृत्तितात्पर्ये कर्तुः सामर्थ्यात्सार्थाद्धीयते पथिक इत्यत्रापादानेन सामर्थ्येन ईप्सिततमस्य पथिकस्य कर्मसंज्ञाभावाद्धीयत इति कर्मणि लकारोत्पत्तिः कथं । न चायं कर्मकर्त्तृविषयः । कर्मस्थक्रियाणां कर्मवद्भावस्योक्तेः । जहातिश्च त्यागमात्रवचनः कर्तृस्थक्रियः । सार्थो हि त्यजति पथिकस्तं नानुगच्छति । ततश्च पथिकस्यापायस्तत्फलं, न धातुवाच्यः । किं च पूर्वकर्मणः सतः कर्तृत्वं कर्मकर्तृत्वं । इह तु सार्थापेक्षमेव पथिकस्य कर्मत्वं स च सार्थो ऽपादानमिति कथं तदपेक्षं कर्मत्वमित्यनेनैव चोद्यते । अत्रोच्यते । इह कारकाणां स्वव्यापारे स्वातन्त्र्यं सर्वेषामेव विद्यते । अकिञ्चित्करस्य क्रियाङ्गभावायोगात् । तथा च सामान्यसंज्ञापूर्वको विशेषसंज्ञासम्भव इति सार्थस्य जहातौ स्वातन्त्र्यमपादानस्यानवगतमेव । सार्थो हि पथिकं जहदपाये साधनभावमनुभवति । यथा ज्वलन्ति काष्ठानि

पाके। ततश्च सामर्थ्यात्प्रतीयमानं स्वातन्त्र्यं कर्मसंज्ञाहेतुरत्रोपपद्यते यथा प्रविश पिण्डीमिति। यद्येवं कर्मादीनामपि स्वव्यापारे स्वातन्त्र्यमस्त्येवेति तदाश्रयापि कर्मसंज्ञा स्यात्, माषेष्वश्वं बध्नातीति, अनर्थकं कर्तुरिति विशेषणम्। नैतदस्ति। सदपि तत्र स्वातन्त्र्यं न कर्त्रा न्यग्भावितमिति न कर्मसंज्ञाहेतुः। इह तु सामर्थ्यस्यापगमान्ते त्यागे जहातेर्वर्तनादनपगमे ऽपादानत्वं न्याय्यं। त्यागे ऽपि स्वातन्त्र्यं न विरुध्यत इति भवति तदपेक्षं कर्तृत्वम्। नन्वेवमपि स्वातन्त्र्यस्याद न्यग्भावाभावे ऽपादानमुत्तराणीति कर्तृसंज्ञया ऽपादानसंज्ञाया बाधनात्कर्तृतृतीयैव स्यात्। तद्यथा धनुषा विध्यतीति करणे तृतीया। नैष दोषः। नान्तरीयकयोः शक्त्योः शब्दसामर्थ्यादुभयोः प्रतीतौ युगपद्विवक्षायां बाध्यबाधकभावः। तथा हि धनुषः शरनिःसरणे ऽवधिभावगमनं विना वेधने साधकतमता नोपपद्यत इति द्वयोर्युगपद्विवक्षायां करणसंज्ञया ऽपादानसंज्ञाबाधनात्तृतीया। कृतायामपि तृतीयस्यामस्यावधिभावः प्रतीयत एवेति। अभिन्नफलत्वे सति तुल्यबलत्वात्परत्वेन व्यवस्था। सार्थेन हीयत इति तूक्ते सार्थस्य कर्तृत्वमेवावगम्यते नापादानत्वमपायस्याप्रतीतेः। सार्थेन हि पथिको हीयते। यावच्चासावपि ततोऽनापेतस्तावत्सार्थस्य कुतस्तं प्रत्यपादानत्वमिति तदेतदभिधातुमपादाने पञ्चम्येवात्रन्याय्या। तत्र त्यागफलस्यापायस्य प्रतीतेस्त्यागे स्वातन्त्र्यमवगम्यत एव। ननु सार्थेन हीयत इत्यत्रापायो गम्यत एव। तथाहि। हीयत इति कोऽर्थः। त्यज्यत इति। यदि च ततः साक्षादेवेयात्पथिकः, ततोऽस्य सार्थस्य तस्यां जहातिक्रियायां कर्तृत्वमुपपद्यते नान्यथा। सत्यमेतत्। किन्तु सार्थेन हीयत इत्युक्ते संशयो जायते किं सार्थेनात्मनः सकाशात् पथिकः परित्यज्यते किंवान्यतः सार्थेनापि कृष्यत इति। अवधिभावे तु सार्थस्य पञ्चम्या प्रतिपादिते तस्यैव कर्तृत्वं नियतमवगम्यते। तस्मादन्यथासिद्धावधिभावप्रतिपत्त्यर्थमपादानसंज्ञैव तत्र विधेया ननु विप्रतिषेधः फलभेदे। सत्यम्। तुल्यबलत्वेन परत्वादपादानमुत्तराणि बाधन्त इति युक्तम्। सार्थे तु विवक्षितार्थप्रतिपाद्यसामर्थ्यात्कर्तृसंज्ञा न प्रवर्तते। यद्येवं कर्तुरिति कर्तृसंज्ञकेनेप्सिततमस्य कर्मसंज्ञायां पथिकस्य तदभाव इति तदवस्थं चोद्यम्। नैतत्। कर्तृग्रहणस्य स्वातन्त्र्योपलक्षणार्थत्वात्। न च स्वातन्त्र्य-

मात्रं कर्तृशब्देन लक्ष्यते येन सकलकारकसाधारणत्वात् अस्य विषयव्यावृत्तिविषये ऽपि कर्मसंज्ञा प्रसज्येत । प्रधानभूतस्वातन्त्र्योपलक्षणादिति सामान्येन कर्तृसंज्ञकत्वात्कर्तृसंज्ञकत्वमनपेक्ष्य प्रधानभूतं स्वातन्त्र्यमात्रं यस्यास्ति कर्तृसंज्ञकस्याऽकर्तृसंज्ञकस्य च तस्योभयस्याप्येकवाक्यतया संग्रह इति वाक्यभेदानवतारात्सर्वं सुस्थम् । एवं लः कर्मणि च भावे चाकर्मकेभ्य इति वचनात् भावकर्मकर्तृषु सामान्येन विधानात्परस्मैपदात्मनेपदयोरविशेषेण प्रसक्तौ भावकर्मणोः शेषात्कर्तरीति नियमार्था पुनःश्रुतिरिति निवृत्तितात्पर्यादविवक्षिता सङ्ख्येति प्रत्ययनियमपक्षे नियम्यमानत्वात्प्रत्ययस्य प्राधान्ये ऽर्थानां गुणत्वाद् गुणे ऽपि सङ्ख्या नाङ्गीक्रियते ऽत्रेति द्विबहुष्वपि कर्मादिष्वात्मनेपदपरस्मैपदसिद्धिरत्रोदाहरणत्वेन योजनीया । अयमेव ह्यस्य मुख्यो विषयः। पूर्वश्रुत्यैव विधावुपादानात्पुनः शब्देन नियमार्थमेवानुवादात्तथा च यजेत पशुनेत्यादावतिप्रसङ्गो न भवति । पशोरुत्पत्तिवाक्यं किलेदं प्रथममित्यविषय एवायमस्य श्लोकस्य। एवं सरूपाणामेकशेष इत्यत्र शिष्यमाणपरे वाक्ये ऽन्यनिवृत्त्यर्थत्वात्सरूपश्रुतेः श्रुतसङ्ख्याऽविवक्षायां द्वयोरप्येकशेषः सिध्यति ॥ ८९ ॥

गतमदः । उक्तमिदम् । समासप्रत्ययविधौ यथा निपतिता श्रुतिः । गुणानां परतन्त्राणां न्यायेनैवोपपद्यत इति । तथा च प्रातिपदिकस्य एकस्या विभक्तेरभावात् एकविभक्ताविति चेन्नाभावाद्विभक्तेरिति प्रातिपदिकैकशेष एकविभक्तिनिमित्तो दूषितः । अत्र तु भाष्ये ऽथ वा पुनरस्त्वेकविभक्तावेकशेष इति स एव सिद्धान्तितस्तत्कथमुपपद्यत इत्युपपादयितुमाह ॥

सरूपसमुदायात्तु विभक्तिर्या विधीयते ।
एकस्तत्रार्थवान् सिद्धः समुदायस्य वाचकः ॥ ९० ॥

सह विवक्षायामेकशेषवचनात्परस्परापेक्षावयवार्थोपपादितसमुदायार्थप्रादुर्भावात्सरूपप्रातिपदिकाविषये ऽवयवानां समुदायस्य च पृथगेवार्थवत्त्वाद्भिन्नैव प्रातिपदिकसंज्ञा । ततश्च समुदायात्प्रातिपदिकादन्यैका विभक्तिः ङ्याप्प्रातिपदिकादित्यत्र सङ्ख्याविवक्षायामपि । ननु च समुदायात्प्रातिपदिकादिवा ऽवयवेभ्यो ऽपि प्रा-

तिपदिकेभ्यो विभक्तेरुत्पत्तिरत्र स्यात् । तथा च समुदायविभक्तेर- न्त्यावयवविभक्त्या व्यवधानात्कथमेकविभक्ताविस्यस्योपपत्तिः । अथ सुबन्तानां सरूपाणामेकशेषो न प्रातिपदिकानामिति नास्ति व्यव- धानम् । एवमपि यो ऽसावेकः सर्वेतरः शिष्यते तदीया विभक्तिरपि शिष्यत इति सा समुदायविभक्तिश्चेति द्वे श्रूयेयाताम् । अत्रो- च्यते । समुदायावयवसन्निधाने समुदायकार्यमेव प्रवर्त्तते नावयव- कार्यं । समुदायपारतन्त्र्यादवयवानां । अस्ति च समुदायकार्येण विभ- क्त्याख्येनात्रावयवानामनुग्रहः । तथा हि । समुदायादुत्पद्यमाना विभक्तिरवयवार्थगतमपि सङ्ख्याविशेषं विभजति स्पष्टं । अवयवार्था- नामेव परस्परापेक्षितरूपाणां समुदायार्थत्वादिति लाघवेनैकेनैव प्रयत्नेन तन्त्रलक्षणेनावयवानुग्रहः कृतो भवतीति नावयवेभ्यः पृथ- ग्विभक्त्युत्पत्तिः । तद्यथा । पपाचेत्यत्र समुदायैकाच एव द्विर्वचने- नावयवैकाचामप्यनुग्रहः । विरूपसमुदायविषये तु सहविवक्षासम्भ- वे ऽपि न समुदायार्थप्रादुर्भावः । तथा ह्युक्तम् । याभ्यां चैकमनेकार्थं ताभ्यामेवापरमिति । अवयवार्थानां प्राधान्यात्प्रत्यवयवं तत्र विभक्त्यु- त्पत्तौ द्वन्द्वः सुबन्तानां सिध्यति । ननु च सरूपविषये ऽपि परस्प- रापेक्षैवावयवानां समुदायप्रादुर्भावबीजं । न तु सरूपार्थसमवेतजा- तिसम्भवात्समुदायस्य तद्वाचकत्वे भिन्नसमुदायार्थोपपत्तिः, जा- तिपदार्थदर्शने प्रत्याख्यानादेकशेषस्य । किं च जातेरभिधेयत्वे द्विवचन बहुवचनानुपपत्तिः । एकत्वात्तस्याः । कामं बहुवचनं तान्त्रिकं भवेत् न तु बहुद्रव्यावसायः । तस्मादुद्भूतावयवार्थभेदः समुदायो ऽपेक्षिते- तरेतरावयवार्थभेदत्वात्सरूपाविरूपाविषये ऽपि समान एव । एवं तर्हि सुबन्तानां द्वन्द्ववचनसामर्थ्यात्तन्त्रेण विरूपसमुदायादेका विभक्ति- र्नोपपद्यते । सरूपविषये तु न किञ्चिद्बाध्यत इति तत्रैवायं न्यायः । यदि वा व्यक्तिपदार्थनये ऽप्यारब्ध एकशेषो जातिरनभिधीयमाना ऽपि सम्बन्धव्युत्पत्त्यर्थमवश्यमुपलक्षणत्वेनापेक्षणीयेति तन्निबन्धना सरूपाणां सङ्घटना । प्रातिपदिकानां विरूपाणां त्वेकक्रियाविषयत्वेना- पेक्षितसुबन्तावस्थायां सङ्घटनं न प्रातिपदिकावस्थायां परस्परसम्ब- न्ध इति सुबन्तानामेव द्वन्द्वः । वर्णानां तु निरर्थकत्वाद्वनं धनमि- त्यादौ समुदायस्यैवार्थवत्त्वान्नायं तन्त्राख्यो न्यायः सम्भवतीत्यस- ति प्रातिपदिकसंज्ञायामर्थवद्ग्रहणे ऽवयवेभ्यो ऽप्यनर्थकेभ्यो विभक्त्यु-

त्पत्तौ नलोपादिचोद्योद्भावनं युक्तमेव। अप्रयोगसमवायिनोऽपि च प्रातिपदिकार्थादिकस्य परस्परार्थापेक्षा प्रयोक्त्राकाङ्क्षायत्ता पदवदुपचर्यत एव। न हि पदमपि वाक्यमपि वा प्रयोगसमवायि स्वतः किंचिदपेक्षते। प्रयोक्त्रधीना ह्याकाङ्क्षा परपर्यायेच्छायोग्येषु शब्देष्वध्यारोप्यते। असति च प्रातिपदिकस्यापेक्षणे नियतक्रियाविषयसाधनभावापरिज्ञानाद् द्वितीयाद्यनुपपत्तेः पदमेव नावतिष्ठत इत्यपेक्षासिद्धौ समुदायार्थोपपत्तिः। सामर्थ्ये च समासविधानात् प्रातिपदिकार्थानामपेक्षानुमानम्। सर्वत्रैव च प्रकृतिप्रत्ययादीनामपोद्धारार्थेनार्थवत्त्वाऽभ्युपगमे परस्परमन्वयोपपत्तिः। तदेवं समुदायार्थोपपत्तौ तस्य वाचकः प्रातिपदिकसमुदायो ऽर्थवत्त्वात्प्रातिपदिकसंज्ञकः सिद्धः। समासग्रहणेन तुल्यजातीयविषयत्वान्नियमस्य, सुबन्तसमुदायस्य वाक्यस्यैव प्रातिपदिकसंज्ञा निवार्यत इत्येकविभक्तौ प्रातिपदिकैकशेषः समर्थितः सङ्ख्याविवक्षायामपि ॥ ९० ॥

एवं च कृत्वा भूयान्प्रधानस्यानुग्रहः कृतो भवतीत्याह ॥

प्रत्ययस्य प्रधानस्य समासस्यापि वा विधौ।
सिद्धः सङ्ख्याविवक्षायां सर्वथा ऽनुग्रहो गुणे ॥ ९१ ॥

ङ्याप्प्रातिपदिकादिति प्रकृत्यनुवादेनापूर्वस्य प्रत्ययस्य विधौ, विवक्षितायामपि सङ्ख्यायां गुणे केवलात्प्रातिपदिकात्समुदायाच्चोत्पत्तिस्तस्य सिद्ध्यति सर्वथा सर्वेण प्रकारेण प्रधानस्य प्रत्ययस्य विषयव्याप्तिलक्षणो ऽनुग्रहः सिद्धः। तथा सुप्सुपेति समासस्यापि प्रधानस्य विधौ, विवक्षितायामपि सङ्ख्यायां गुणे सङ्ख्यायां द्वन्द्वे ऽनेकग्रहणाद् बहूनां समासः करिष्यते। बहुव्रीहौ त्वनेकपदावयवे स्वरसमासान्तपुंवद्भावेषु दोषो ऽवयवतत्पुरुषाश्रयेण निवारित इति नास्त्यनिष्टम्। अविवक्षितायां सङ्ख्यायां बहूनामस्थितानां नियमेन समासो न विज्ञायेतेत्युपरोधस्तस्य कृतः स्यात्। उत्तरपदे द्विगुविधानाच्च लिङ्गात्सुसूक्ष्मजटकेशादावनेकपदो बहुव्रीहिः सिद्धः। द्वयोश्च द्वन्द्वे कृते पुनरपरेण सह द्वन्द्व इत्यनेकवचनमुपसर्जनार्थमित्युक्तम् ॥ ९१ ॥

एवं पूर्वं प्रातिपदिकार्थभूतां जातिं निरूप्य विभक्त्यर्थो ऽपि सङ्ख्याजातिरित्युक्त्वा तत्प्रसङ्गेन विवक्षाविवक्षे विचार्य इदानीं तस्यामेव

जातौ यदधिकं विचार्यमवशिष्यते तदेव विचारयितुमाह ॥

अभेदरूपं सादृश्यमात्मभूताश्च शक्तयः ।
जातिपर्यायवाचित्वमेषामप्युपवर्ण्यते ॥ ९२ ॥

इत्यत्र शङ्का । अन्वयविज्ञानोन्नीयमानसद्भावा जातिरित्युद्घोष्यते । सा च व्यक्तिभ्यो ऽव्यतिरेकेणात्मानं न दर्शयति । तदेता एव व्यक्तयः सादृश्यादेकाकारप्रत्ययप्रसवहेतवः प्रकृत्यैवैकप्रत्यवमर्शजननेनसामर्थ्याद्ध्यासाद्वा सन्तु किमपरेण सामान्येन कृत्यम् । तदेतदभ्युपगच्छति । अभेदरूपमव्यतिरिक्तं व्यक्तीनां तत्सादृश्यमेकप्रत्यवमर्शजनकं वाच्यव्यतिरिक्तमेव शक्तिलक्षणं सामर्थ्यं तदपि जातिरिति व्यपदिश्यत एव । अन्विताकारज्ञानजनकं हि व्यक्तीनां किं चन रूपं सामान्यमिति सर्वपार्षदन्यायः । ततश्च सादृश्यं शक्तिरित्यपि नामान्तरेणोच्यतां न का चिदनुपपत्तिः । व्यतिरेकाव्यतिरेकचिन्तात्तु प्रवादिनां ग्रह एवेत्यभिप्रायः ॥ ९२ ॥

अत्र वैशेषिकदर्शनाश्रयेण व्यतिरेकपक्षं जातीनां समर्थयितुमाह ॥

दण्डोपादित्सया दण्डं यद्यपि प्रतिपद्यते ।
न तस्मादेव सामर्थ्यात् स दण्डीति प्रतीयते ॥ ९३ ॥
नेच्छानिमित्तादिच्छावानिति ज्ञानं प्रवर्त्तते ।
तस्मात्सत्यपि सामर्थ्ये बुद्धिरर्थान्तराश्रया ॥ ९४ ॥

अयमत्रार्थः । यदा ऽनुगताकारे ज्ञाने व्यक्तीनां व्यावृत्ताकाराणां हेतुत्वं नोपपद्यत इति सामान्यं परिकल्प्यते । सादृश्यसामर्थ्ये तु व्यक्त्यव्यतिरिक्ते । तद्वदनुपायिनी व्यतिरिक्ता जातिरभ्युपगन्तव्या । ननु च सा ऽपि कथमवयवेन व्यक्तिं नानुयायात् । तथा च गवाश्वादौ साङ्कर्यप्रसङ्गः । नैतदेवं, प्रतिनियताश्रयवृत्तित्वात्सामान्यानाम् । किमत्र निमित्तमिति चेत् । विशिष्टसंस्थानजातित्वं व्यक्तीनाम् । अन्यो ह्यवयवसन्निवेशो गवामन्यस्त्वश्वानामिति गोत्वाश्वत्वयोराधारनियमसिद्धिः । तत एव तर्हि विशिष्टात्सन्निवेशात्सादृश्यापरपर्यायात्प्रतिनियमेनानुगताकारप्रत्ययो ऽस्तु । यथा सावयवसन्निवेशः प्रतिव्यक्तिभिन्नो ऽपि सामान्यस्य भिन्नस्याश्रयावच्छेदहेतुः तथा ऽनुगताका-

रस्यापि ज्ञानस्य हेतुर्भवतीत्यलमन्तर्गडुना सामान्येन। तदुक्तम्। तुल्यभेदे यथाजातिः प्रत्यासत्त्या प्रसर्पति। क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनमिति। अत्रोच्यते। इह कार्याणां प्रतिनियतकारणजन्यत्वान्न सर्वो जनकः सर्वत्र कार्ये व्यापारयितुं पार्यते। तथा हि। दण्डीति प्रत्यये दण्डसम्बन्धो निमित्तं, स तु दण्डसम्बन्धः सर्वत्र किं न भवतीत्युक्ते दण्डजिघृक्षा तस्य निमित्तं भण्यते। न चैतद्वक्तुं शक्यते। दण्डोपादानेच्छाया एव दण्डसम्बन्धं प्रति नियमहेतोरस्तु दण्डीति प्रत्ययः किमपरेण तत्र दण्डसम्बन्धेन निमित्तेन कृत्यमिति। दण्डोपादित्सा दण्डसम्बन्धस्य निमित्तम्। तस्या अपि किं निमित्तमित्युक्ते दण्डस्य यत्र कार्ये विनियोगः तत्र सामर्थ्यादिदर्शनं तदुपादित्सानिमित्तं वक्तव्यम्। तथा च तत एवेच्छानिमित्ता दण्डोपादित्सावानित्यस्तु प्रत्ययः किमत्रेच्छासमवायः स्वात्मनिमित्तमुद्घोष्यत इति। नैतच्छक्ष्यते ऽभिधातुम्। अनुरूपं कार्यं अनुरूपकारणजन्यमितीच्छासम्बन्धादिच्छावानिति ज्ञानम्। दण्डीति। एवं सादृश्यादेः सामान्यस्य विषयनियमसामर्थ्ये सत्यपि न तस्मादेव सामर्थ्यादनुगताकारज्ञानजनकत्वं युक्तं तत्सदृशमित्यादिज्ञानादिति तन्निमित्तं व्यतिरिक्तं सामान्यमवश्याश्रयणीयमिति सिद्धम्॥ ९४॥

अन्यथा ऽतिप्रसङ्ग इत्याह॥

स्वभावो ऽव्यपदेश्यो वा सामर्थ्यं वा ऽवतिष्ठते।
सर्वस्यान्ते यतस्तस्माद्व्यवहारो न कल्पते॥ ९५॥

इह कार्याणां प्रतिनियतकारणानभ्युपगमे कारणकारणादेव सिद्धावभ्युपगम्यमानायां तत्रापि तत्कारणादित्यनवस्थायामापादितायां सर्वान्ते मूलकारणं ऽवस्थानव्यम्। तच्च मूलं कारणं सर्वस्य वस्तुनः। सर्वस्य वादिनो ऽन्ते पर्यनुयोगावसाने नित्यस्य प्रधानादेः कारणस्य स्वभावो ऽव्यपदेश्यो ऽयमस्य स्वभावो ऽस्माद्धेतोरित्येवं व्यपदेष्टुमशक्यो ऽवतिष्ठते। अत एवास्मिन्नवधौ हेतुप्रश्नपरम्परा निवर्तते। येषां च नित्यं कारणं तेषां सामर्थ्यं हेतुशक्तिः प्रश्नपरम्परावसाने ऽवतिष्ठते। तदपि सामर्थ्यमव्यपदेश्यमेव, वैलक्षण्येनेदं तदिति शब्देन व्यपदेष्टुमशक्यत्वात्।

अथ वा नित्यकारणपरिग्रह एव । तस्यात्यन्तपरोक्षत्वात्स्वभावो ऽव्यपदेश्यो ऽनेकशक्त्यात्मकत्वे तु सामर्थ्यमप्यस्य परोक्षत्वादेवाव्यपदेश्यम् । एकमेव वा वस्तु स्वभावशब्देन सामर्थ्यशब्देन च व्यवहरन्तीति तदुक्तिरेव प्रतिपादयति । एवमव्यपदेश्यस्वभावे ऽवस्थानात्तस्मादव्यपदेश्याच्छाब्दो व्यवहारो न प्रकल्पते । एकवाक्ये यथानुपातवस्तुनिबन्धनो हि परिदृश्यमानः स्थूलार्थाश्रयो गामानयौदनं भुङ्क्ष्वेति व्यवहारः सो ऽत्यन्तहेतुवश इति स्वभावं सामर्थ्यं चानय भुङ्क्ष्व चेत्येवं वक्तव्यम् । अव्यपदेश्यत्वाच्च स्वभावादेस्तेन व्यवहारो नोपपद्यत इत्युक्तमव्यवहार्यं वस्तूपक्षेप्तुमित्यर्थः । तदेवं भिन्नव्यवहारनिबन्धनानि सामान्यान्यभ्युपगन्तव्यानि । सादृश्यात्तु सदृश इति व्यवहारः, शक्तिमत्त्वात्तु शक्तिमानिति । अन्यस्य सादृश्यज्ञानं सामान्यज्ञानाद्भिन्नजातीयेष्वपि गोगवयादिषु भावात् । अथ नावधार्य विवेकेन जायत इत्यनुगतस्य ज्ञानस्य निमित्तपरिकल्पनायां यदेव किंचिन्निमित्तं स्यादिति को ग्रहो जातिष्विति । उच्यते । तत्र रूपिसमवायाच्चाक्षुषाण्येव सामान्यानीति ब्रूमः । विप्रतिपन्नं तु प्रतिकार्यकल्प्यत्वमुच्यते । न च ज्ञानं नान्यकार्यं जडाङ्कुरादिसदृशं अपि तु बोधरूपमिति । तस्य तत्सामान्यं न चक्षुरादिवदवधिमति प्रत्ययरूप कारणमपित्वालम्बनप्रत्ययरूपम् । आलम्बनं च संवेद्यमानम् । अतश्चेहापि तदेवायातं, संवेद्यते तस्य स्वरूपमप्युपयुज्यमानमिति । अथ विकल्पस्य सामान्यविषयो न तु प्रत्यक्षस्य । तदयुक्तम् । असति सामान्ये विकल्पो न प्रत्यक्षम् । न सति । सत्याविषयत्वात् । विकल्पाविषयत्वाच्च तस्यासत्यत्वम् । असत्याविषयत्वाच्च तस्याः सत्यत्वमितीतरेतराश्रयता । किं च । प्रतिकर्म व्यवस्थायां ज्ञानस्य बौद्धैरुच्यते यतो नीलाकारमतो नीलस्य संवेदनमिति तद्वत्सामान्यवादिभिरप्युच्यते । यतो ऽभिन्नाकारमतो ऽभिन्नस्य संवेदनमिति को ऽनयोरुक्त्योर्विशेषः, येन नीलं प्रत्यक्षं सामान्यमेवाप्रत्यक्षमिति । एवमस्य न कश्चिद्विशेषो दण्डादिभ्य इति, नास्ति वै सादृश्यं निदर्शनैः । एकार्थकारित्वाच्च भिन्नः प्रत्ययो नास्ति हेतुभेदात्कार्याणामपि भेदादित्येकप्रत्ययवमर्श एवासति समासे नोदियात् । रूपादिव्यतिरेकेण च द्रव्याभ्युपगमात् प्रत्यर्थमपि नास्ति । एकार्थसाध्या काचिदर्थक्रिया किमुतार्थभेदो भवेत् । उदकाहरणाद्यपि रूपादिसमुदा-

यसाध्यमेकमिति, तत्र समुदायबुद्धिर्भवेत् नैकबुद्धिः । यथैकाङ्कुरजनकत्वेऽपि क्षितिबीजादीनाम् । मिथ्यारूपसंविदैकबुद्धिरित्यपि क्वचित् । क्वचित्संवेदनमूलत्वान्मिथ्याबुद्धेरवश्यं काचिद्भेदबुद्धिः सत्याऽभ्युपेतव्येत्यनपह्नवनीयानि प्रतिनियतकार्यसाधनानि सामान्यानीति स्थितम् ॥ ९५ ॥

अधुना साङ्ख्यनयेनाद्वैतनयेन वा व्यतिरिक्तां जातिं समर्थयितुमाह ॥

यथा भेदान् परित्यज्य बुद्ध्यैक इव गृह्यते ।
व्यक्त्यात्मैव तदा तत्र बुद्धिरेका प्रवर्त्तते ॥ ९६ ॥

इहैकरूपसमन्वयादेककारणपूर्वकं विश्वम् । असदनुत्पत्तेश्च कार्यकारणयोरभेद इति सर्वं किंचिद्भेदाभेदात्मकं वस्तु । एकस्यैवानेकधाऽवस्थानात्ततोऽभेदः सामान्यं भेदो विशेषः । तत्र सर्वात्मभेदो महासामान्यं तस्यैव च यथाभागमवच्छेदादवान्तरसामान्यानि । अवच्छेदकाश्च धर्मास्तस्यैव यस्य परिणाम इति न ततोऽतिरिच्यन्ते । सर्वं ह्येकस्यैव परिणामो विवर्त इति वा । एवं च कृत्वा कार्यकारणयोर्धर्मधर्मिणोः सामान्यविशेषयोश्च नात्यन्तं भेदः । एवमप्यतीतेनाप्यत्यन्तमभेदः । तथा ह्यप्रतीतेः । केवलं संविज्ञानमर्थानवगत्या भेदाभेदशब्दाभ्यां यदाभिधीयते तदा शब्दसादृश्यमात्रादविवक्षितभेदाभेदरूपाध्यारोपेण परैर्विरोधो निर्विषय इवापद्यते । तत्र यदा भेदान्परित्यज्य भेदाभेदरूपाविवक्षया व्यक्त्यात्मैव व्यक्तिरूपमेव बुध्या एक इव गृह्यते अभिन्नं प्रतीयते तदा तदेव च सामान्यमेकबुद्धिविषयो न ततोऽन्यात्किंचित् । व्यक्त्यात्मनो हि मूलभूतमेकत्वमात्मभेदहेतुपरित्यागादविरुद्धं । यद्यपि च प्रकृतिरूपान्वयात्सर्वमेकमेव तत्वतः, तथापि परिणामवैचित्र्याद्विकाराणामवान्तरभूतानामपि व्यावहारिकमनेकत्वमप्यनवगतामितावशब्दः । तत्र यदा समस्तभेदपरित्यागस्तदा सद्वस्तुमात्रं पदार्थ इति चैकबुद्धिः प्रवर्त्तते धर्मतिरस्कारे तु धर्मिमात्रं द्रव्यमिति बुद्धिः । सजातीयगतभेदहेतुपरित्यागे विजातीयभेदापेक्षायां पृथिव्यापस्तेज इत्यादि व्यवहारः । तत्राप्यर्थान्तराद्भेदापेक्षायां स्वसदृशाभेदापेक्षणे गौरश्वो घट इत्यादिभेद इति यथायथमुदाहार्यम् ॥ ९६ ॥

नन्वेवं दर्शनक्रमेणाभिन्नाकाराया जातिबुद्धेर्विषयमवस्थाप्य जातिपदार्थे प्रत्याख्यानादेकशेषस्य तद्विषये समूहबुद्धेर्विषयमवस्थापयितुमाह ॥

भेदरूपैरनुस्यूतं यदेकमिव मन्यते ।
समूहावग्रहा बुद्धिर्बहुभ्यो जायते तदा ॥ ९७ ॥

भेदरूपाण्यपि यत्र संश्लेष्यन्ते ऽभेदरूपं च तत्र समूहमवगृह्णाति परिच्छिनत्ति या बुद्धिः सा प्रवर्त्तते । एकमिवेति । भिन्नेष्वप्येकत्वस्याध्यारोपात् । एवमपि चैकत्वोपसर्जनेभ्यो बहुभ्य एवेयं बुद्धिर्जायते न तु जातिप्रत्ययवदेकस्मादेव । अयमाशयः । यद्यपि ता एव व्यक्तभेदा व्यक्तयो जातिरिति दर्शनं तथापि सम्भवत्येकशेषस्य विषयो भेदप्राधान्येनैकधर्मावेशनिमित्ताभेदोपसर्जनतया तासां प्रतीतेः । अत एव च द्वन्द्वैकशेषयोर्वचनभेदोपपत्तिः । जातिप्रत्ययस्तु सर्वथा अभेदप्राधान्येनैव ॥ ९७ ॥

इदानीं सदृशबुद्धेर्विषयमाह ॥

सकृत् प्रवृत्तावेकत्वमावृत्तौ सदृशात्मनाम् ।
भिन्नात्मिकानां व्यक्तीनां भेदापोहात्प्रपद्यते ॥ ९८ ॥

इह भेदहेतूनां त्यागे सामान्यबुद्धिरित्युक्त्वा तेषामपि च परिग्रहे समूहबुद्धिरिति राश्यन्तराभावान्निर्विषयसादृश्यबुद्धिः स्यादित्याशङ्क्येदमुच्यते । भिन्नात्मिकानां व्यक्तीनां सकृत्प्रवृत्तौ भेदापोहादनालीढभेदं तदनुस्यूतं चैकत्वं जात्यात्मकं समूहात्मकं वा प्रतिपद्यते बुद्धिः । आवृत्तौ तु सदृशात्मनाम् । भेदहेतुपरित्यागेनाभिन्नात्मिका व्यक्तीरवगृह्य कार्यान्तरविषतया गृहीतभेदा एव ता गृह्णातीत्यविश्रान्ता सैव बुद्धिर्भेदापोहान्नान्या, आवृत्तेरेकधर्मत्वात्सदृशात्मनां प्रतिपद्यते । एवं भेदाभेदावग्रहरूपत्वान्नेयं जातिबुद्धिः । तस्या एकान्तेनाभेदावसायरूपत्वात् । नापि समूहबुद्धिः सकृदेव भेदानुस्यूतस्याभेदस्य ग्रहणान्नावृत्त्या । समूहावग्रहे हि समूहिनामनावृत्ता सैव बुद्धिः सामान्यं गृह्णाति । गोगवययोस्तु पूर्वं भेदं प्रतिपाद्य अनन्तरमवयवसन्निवेशायत्तो ऽभेदो ऽवसीयत इति सादृश्यबुद्धिस्तत्र । एवं च बुद्धिभेदादेव न सादृश्यं सामान्यमित्युक्तं भवति ॥९९॥

तदेवं व्यतिरिक्तजातिदर्शनमव्यतिरिक्तजातिदर्शनं च विस्तरतो ऽभिधायेदानीं सौगतानां सम्बन्धि काल्पनिकं जातिदर्शनमाह।

अनुप्रवृत्तेति यदा भिन्ना बुद्धिः प्रतीयते।
अर्थो व्यावृत्तरूपो ऽपि तथा तत्त्वेन गृह्यते॥ ९९॥

इहाभिन्नप्रत्ययावसेया जातिरित्युच्यते। न चाभिन्नः प्रत्ययो ऽस्ति। न हि य एवैकस्यां व्यक्तौ गौरिति प्रत्ययः स एव द्वितीयस्यामपि त्वन्य एव। प्रत्यर्थनियतत्वाद् बुद्धीनाम्। अतश्च नैव कश्चिद्भिन्नेष्वभिन्नप्रत्ययः। केवलं भिन्ना ऽपि सती बुद्धिरनुप्रवृत्ता ऽनुगता ऽभिन्ना प्रतीयते। न च तत्र बुद्धितत्त्वव्यतिरेकेण अन्यत्सामान्यं गोज्ञानत्वाद्यस्ति। तस्याप्यभिन्नप्रत्ययस्य प्रतिबुद्धि भेदात्। तत्राप्यपरसामान्यकल्पनायामनवस्थापातात्। न च बुद्धिष्वपरसामान्यस्यासाधारणः कश्चिद्वाचको ऽस्तीति किं तत्सामान्यं नाम, यतश्चानादिकालीनभेदावग्रहसामर्थ्यप्रतिघातनिमित्तविभ्रमवशाद् यथा बुद्धीनामभेदावसायो भिन्नानामपि वस्तुनः, तथा ऽर्थानामपि व्यक्तिलक्षणानां स्वरूपपररूपाभ्यां व्यावृत्तस्वभावानां तत्त्वेनाभेदेन सामान्यावग्रहेणावसायो भविष्यतीति भेद एव परमार्थो ऽभेदावसायो मिथ्येति सौगताः॥ ९९॥

किमनादिकालीनविभ्रमवशादेवायमुत बहिरप्यस्याभेदावसायस्य किं चन निमित्तमस्तीत्याह॥

सरूपाणां च सर्वेषां न भेदोपनिपातिनः।
विद्यन्ते वाचकाः शब्दा नापि भेदो ऽवधार्यते॥१००॥

सरूपात्मको द्विविधो व्यवहारः। तत्र समानं रूपं येषां वास्तवस्य भेदस्यानवधारणादर्वाग्दर्शनानां वस्तूनां प्रतिभासते। न हि तत्त्वतो वास्तवं सारूप्यमस्ति। सौगतनये तस्य निराकृतत्वादिति दुरवधारभेदत्वेन यत्सरूपत्वम्, तदेव निर्दिश्यत इति सादृश्यनिबन्धनो ऽभेदावसायलक्षणः प्रख्यात्मको व्यवहारः। असाधारणभावरूपनिवेशे संविज्ञानपदाभावाच्चोपाख्यात्मको ऽप्यभेदेनैव व्यवहारः। उपाख्याया वाचकस्य शब्दस्य साङ्केतिकत्वात्स्वलक्षणे वृत्त्यनुपपत्तेः। "शब्दाः साङ्केतिकं प्राहुर्व्यवहाराय संस्मृताः। तदा स्वलक्षणं

नास्ति सङ्केतस्तेन तत्र न" इत्यादिना वेदितत्वात् । यद्यपि चावधारणा-भावादेव वाचकाभावोऽपगतोऽवधारणपूर्वकत्वाद्वाचकानां तथापि यत्रापि गवादिष्ववधार्यते भेदः तत्रापि तस्य वाचका न सन्ति । स्व-लक्षणस्य शब्देनाभिधातुमशक्यत्वात् अपि त्वभेदाध्यवसायानुविधा-यिन एव ते तत्रापीति दर्शयितुं भेदेन वाचकाभाव उक्तः । इत्थं च विशेषाणामपि वचनादप्यनुगमाभिमानो वाचकाभावाच्चाभिन्ना शब्दप्रवृत्तिर्न भूतं सामान्यं नाम किं चनात्र निमित्तमित्युक्तं भवति ॥ १०० ॥

सर्वेषामिति व्याप्तिर्ह्युक्ता तामेवोपपादयितुमाह ॥

ज्ञानशब्दार्थविषया विशेषा ये व्यवस्थिताः ।
तेषान्दुरवधारत्वात् ज्ञानाद्येकत्वदर्शनम् ॥ १०१ ॥

ज्ञानानां तावद्विषयभेदाद्भेदो न्याय्योऽप्यर्वाग्दर्शिनो गौर्गौ-रित्यभेदावसायादशक्यपरिच्छेद इत्येकत्वमध्यारोपितं तत्र पश्यन्ति। एवं च शब्दानामनुनासिकादीनां धर्माणां भेदेऽप्यभेदेनावसायः। स एवायं गोशब्द इति क्रमवतामवस्थायिनां शब्दानां न किं चि-त्सामान्यमस्ति । अथ भेदेनावसीयते, सूक्ष्माणां विशेषाणां दुर-वधारत्वादर्थानां खण्डमुण्डादिः स्फुट एव भेदो नाद्दतो वाग्दर्शनैः। विजातीयान्वयिरूपोल्लेखनात् । तथा च मणिमुक्ताप्रवालादीनामभि-युक्तप्रणिधानगम्यो विशेषो न सर्वैर्विविच्यते ॥ १०१ ॥

अवदातदर्शनास्तु यथातत्वं विवेकिन एवेति भेदवादिनः । जातिवादिनस्तु मन्यन्ते ॥

ज्ञानेष्वपि यथार्थेषु यथा सर्वेषु जातयः ।
संसर्गदर्शने सन्ति ताश्चार्थस्य प्रसाधिकाः ॥ १०२ ॥

अनपन्हवनीयोऽयमभिन्नावसायः सर्वजातिसद्भावाऽऽवेदक इति ज्ञानानामपि सामान्यविशेषाः सन्तु काऽनुपपत्तिरिति वस्तूनां भेदाभेदरूपमर्थान्तरानिमित्तं मन्यमानाः प्राहुः । ता एव ज्ञानजातयोऽर्थस्य प्रसाधिकाः । बाह्यानामर्थजातीनां निश्चायिकाः । बुद्धेरन्विता-वभासिद्धौ व्यक्तीनामपि सामान्यावधारणादर्थस्यात्मीयस्य सामा-न्यकार्यस्यानुवृत्त्यादेः प्रसाधिकाः। यत्र यत्र च सत्यप्यवान्तरविशेषे

ऽभिन्नः प्रत्ययो ऽस्ति तत्र प्रमाणसिद्धानां सामान्यविशेषाणामङ्गीकरणमानन्त्ये ऽपि न दोषाय । असाधारणसङ्केताभावे ऽपि च जात्युत्पलादिगन्धादीनामिव सत्वमस्त्येव ॥ १०२ ॥

संसर्गदर्शन एव प्रकारान्तरमाह ॥

ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकम् ।
न जातु ज्ञेयवज्ज्ञानं पररूपेण रूप्यते ॥ १०३ ॥

यथा ज्ञेयं व्यतिरिक्तसामान्यरूपेण रूप्यते पररूपवत् क्रियते नैवं ज्ञानं संविदात्मसमवेतेन व्यतिरिक्तसामान्यरूपेण रूप्यते । ज्ञेयधर्मः किलायं यत्पररूपेण रूपणम् । ज्ञानं तु स्वतन्त्रं ज्ञेयमेव न भवति । ज्ञेयनिष्ठतया हि ज्ञानानां ज्ञेयस्थस्य सामान्यस्याभेदेन तद्रूदभेदावसायः प्रत्यर्थनियतत्वे ऽप्युपपद्यते । बाह्यपरवशत्वेनास्वाधीनत्वात् ज्ञानानां स्वत एव वैलक्षण्यानुपपत्तेः, बहिरभिन्नेन निमित्तेन तत्र भाव्यम् । तद्यथा घटो, घट इति घटाकारे बाह्यं निमित्तं तथा भेदे ऽपि तद्गतं सामान्यमिति युक्तम् ॥ १०३ ॥

कथं पुनर्ज्ञेयं ज्ञानं न भवतीति पररूपेण रूप्यत इत्याह ॥

यथा ज्योतिः प्रकाशेन नान्येनाभिप्रकाश्यते ।
ज्ञानाकारस्तथान्येन न ज्ञानेनोपगृह्यते ॥ १०४ ॥

यथा घटादीनां दीपः प्रकाशकः स्वप्रकाशे दीपान्तरं नापेक्षते तथार्थस्य प्रकाशकं ज्ञानमात्मप्रकाशनाय प्रकाशान्तरानपेक्षमिति स्वप्रकाशकं सिद्धम् । जडवैलक्षण्यं हि प्रकाशत्वमिति तस्यापि प्रकाश्यत्वे जडतापत्तिः । अर्थप्रकाशकाले च प्रकाशकस्याप्रकाशे ऽर्थसंवेदनमेव न स्यात् । प्रकाशासञ्चेतने तल्लग्नार्थसञ्चेतनासिद्धेः । उत्तरकालं सञ्चेतनं क्वोपयोगि । उत्पन्नायां च प्रकटतायामात्मसमवेतस्य तदानीम् ज्ञानस्यासञ्चेतनान्मम प्रकटितो ऽर्थ इत्यात्मगामि संवेदनं न स्यात् । तस्माज्ज्ञानान्तरेण स्वप्रकाशकं ज्ञानं न गृह्यते, परप्रकाश्यत्वे प्रकाशकत्वाभावादिति तदाकारस्य परेण रूपेणाभावाज् ज्ञेयस्थमेवाभिन्नं सामान्यं, अस्याभेदनिमित्तं । तद्वशादस्य ग्राह्याकारस्य ज्ञानान्तरेणाभेदग्रहणात् । स्वसमवेतसामान्यवशेन त्वभेदप्रतिभासे बहिः सामान्यपरिकल्पो निर्निबन्धन एव स्यात् । अन्यथै-

वाभेदप्रतिभासस्योपपत्तेः । अर्थानां तु व्यतिरिक्तत्वादभिन्नं सामान्यमुपपद्यते । ज्ञानानां तु सामान्याकारो न व्यतिरिक्त इति नाभिन्न उपपद्यते । प्रत्यर्थनियतत्वेन तेषां भेदात्तदभिन्नस्य तस्यापि तथात्वोपपत्तेरिति नार्थैः साम्यमस्ति । बुध्याकाराणामाकारसाम्यादेव च ज्ञानानामभेदावसायसिद्धेर्न संवेदनभागे ऽपि सामान्ययोग इति साकाराः स्वप्रकाशा निःसामान्या बुद्धयः सिद्धाः । यद्यपि च वैशेषिका ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकमिच्छन्तो न साकारं नापि स्वप्रकाशं विज्ञानमिच्छन्ति । तथापि न वयं दर्शनान्तरप्रक्रियां ब्रूमः, अपि तु यत्प्रमाणोपपन्नमितीदमत्र दर्शनमुपक्षिप्तम् ॥ १०४ ॥

ननु च यथा घटो ऽयमिति ज्ञाने घटो ऽभिधीयते तथा घटज्ञानमेतदिति ज्ञाने न घटज्ञानम् । को ह्यत्र विशेषः । यदि तु विषयसंवेदनरूपा बुद्धिर्नानुभूयेत शब्देनापि तथा नाभिधीयेत । अनुभवपूर्वकत्वादभिधानस्य । न चात्मनाऽऽत्मानमनुभवति बुद्धिः । स्वात्मनि व्यापारविरोधात् । बोधरूपत्वात्तु स्वयमज्ञातैवार्थमवभासयतु । एतावानस्य बाह्याद्विशेषो ऽस्तु । तद्बुभुत्सायां तु बुध्यन्तरमेवापेक्ष्यम् । ज्ञानज्ञेयसिद्धिमात्रनिष्ठत्वाच्च व्यवहारस्य प्रत्ययान्तरानपेक्षणाद् बुद्धिमाला ऽपि नानुषज्यत इत्याह ।

घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम् ।
घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ॥ १०५ ॥

घटज्ञानमिति ज्ञानं घटाद्याकारं ज्ञानं यदा ज्ञानान्तरेण परामृश्यते । एवं ममात्रानुभवो भूत इति प्रत्ययविषयं यत्परामर्शज्ञानं तत् घटज्ञानभिन्नलक्षणं साक्षाद्विषयेण जनितत्वात् । अनुकार्यप्रत्यया एव हि विषयेण जन्यन्ते नान्ये ज्ञाननिबन्धना व्यवधानात् । सारूप्यबलेन च ग्राह्यग्राहकभावेन वैधर्म्येण न च घटज्ञानं ज्ञानान्तरे प्रतिभासते । अतो न तद् गृह्यते । अथोच्यते । सरूपमेव तज्ज्ञानं घट इत्येवमनुसन्धानादित्याह । घट इत्यपि यज् ज्ञानं विषयोपनिपाति तत् । न तु तत् ज्ञाने उपनिपतति । अतो न बुद्धिमालम्बते स्वयमेव तु प्रकाशत इत्यर्थः । अन्ये व्याचक्षते । घटज्ञानाद् बाह्यविषयाद् घटज्ञानमित्येवं ज्ञानं ज्ञानभिन्नं न विषयप्रविष्टं स्वात्म-

व्यवस्थितं ज्ञानं सञ्चेत्यते यस्माद् घट इत्येवमाकारं यद्विच्छिन्नं ग्राह्यप्रसूतं तदपि विषयमनुपतति ग्राह्यपरवशम्। विषयाप्रकाशने ज्ञानास्तिताया एवानिबन्धनत्वात् । एवं च बोधत्वाविशेषाद्यद्यपि ज्ञानज्ञानमिति मतं तदपि बाह्यविषयमेवेत्युक्तं भवति । अन्ये तु व्याचक्षते घटज्ञानमिति ज्ञानं विषयो यस्य तत् घटज्ञानविलक्षणम् । एवंस्वरूपमनाकारम् । न हि संविदाकारस्तज्ज्ञानाभिमते प्रतिबिम्बीभवति । सारूप्यवशेन ग्राह्यग्राहकभावोऽन्यथाज्ञानत्वाविशेषादिदमस्य संवेदनमिति प्रतिनियमो न स्यात् । घट इति तु पदे तत् बाह्यविषयं ज्ञानं, तद्विषयोपनिपाति विषयाकारमुपादत्ते । अथ वा घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम् । किं तद्वैलक्षण्यमित्याह । घट इत्यपि यत् ज्ञानं विषयोपनिपाति तत् । निराकारमपि तद्विषयमनुपतति परिच्छिनत्ति निरूपयति । एवं रूपोऽय मर्थ इति । घटज्ञानमिति तु ज्ञानरूपानुपाति । यतो घटज्ञानगतं विषयं निरूप्य ज्ञानरूपं किमपि तदित्येतावत् यदि परं निरूपयितुं शक्नोति। न तु सा तदीया बोधरूपता तस्य प्रतिभासते। परसंवेदनपर इव। परेण हि ज्ञानमुपादाय घटज्ञानमस्योत्पन्नमिति कया चिद्युक्त्या ज्ञानं परिच्छिद्यते न तु स्ववत्परस्य प्रतिभासत इति ततो विलक्षणं न तस्य परिच्छेदकम् । उपलम्भात्मत्वात्स्वयं प्रकाशत इति स्वसंवेदनं ज्ञानमुच्यते । न ह्यात्मानमर्थमिव प्रकाशयतीति न स्वात्मन्यस्य कश्चिद्व्यापारः ॥ १०५ ॥

ननु ज्ञानस्य ग्राह्याकारो न व्यतिरिक्तस्स च घटज्ञानमिति ज्ञानेन संवेद्यत इति बुद्धिरेव संवेदिता भवतीत्याशङ्क्याह ॥

यतो विषयरूपेण ज्ञानरूपं न गृह्यते ।
अर्थरूपविविक्तं च स्वरूपं नावधार्यते ॥ १०६ ॥

निराकारवादेऽयं परिहारो लगति । यतस्तत्रापि घटज्ञानमेतदिति ग्राह्यस्वभावेन ज्ञानान्तरमुपलक्षयति । तद्रहितमात्मतत्त्वं तस्यावधारयति । न च ग्राह्याकारो ज्ञानस्य रूपम् । औपाधिकत्वात् । यथा स्फटिकस्य नीलादि । न च ग्राह्याकारविविक्तं ग्राहकरूपं ज्ञानान्तरेणोपलक्ष्यते शुद्धबुद्ध्यनुकारेण बुध्यन्तरानुपपत्तेः। एवं च विषयाप्रकाशने ज्ञानत्वायोगात्, ज्ञानज्ञानाभिमतमपि वि-

यनिष्ठमेव । तथा चोपसर्जनेन विषय एव तेन विशिष्टो ऽवस्थाप्यते। ज्ञातो ऽयमर्थ इति नीलज्ञानमित्येतदपि नीलनिष्ठतया विषयप्रभावं ज्ञानं परामृश्यते । एवं च कृत्वा संविदाकारस्य ज्ञानान्तरेणाग्रहणान्न व्यतिरिक्तसामान्यरूपेण निरूपणम् । ग्राह्याकारस्य तु ज्ञानान्तरेणाभेदेन ग्रहणं ज्ञेयस्याभिन्नसामान्यनिमित्तं तेन तस्य ग्राह्याकारस्याविलक्षणस्य जनने तथैव बुध्यन्तरेण ग्रहणादिति न तत्र सामान्यान्तरमुपयुज्यते । नापीतरेतराश्रयदोषः । ज्ञेयसामान्यस्याभिन्नज्ञानजनकत्वेनाभिन्नज्ञानस्य च ज्ञेयताप्रतिपादकत्वेन व्यापारभेदात् । तेनैतदेव चोद्यम् । यथा विनैव सामान्यमभेदावसायो बुद्धीनामेवमर्थानामपि भविष्यतीति बुद्धीनामपि सामान्यवशेनैवोक्तप्रकारेण भेदावसायादिति । ननु यदि ज्ञानरूपमर्थरूपविविक्तं नावधार्यते स्वतो ऽप्यस्य सिद्धिर्न स्यात् । सत्यम् । सर्वदैव ग्राह्याकारः सहभाव्यनुभूयते ऽस्य, किं तु तत्पृष्ठभाविनो ह्लादनीयप्रकाशा अहङ्कारास्पदविच्छिन्नग्राह्याकारविधर्माण उत्तररूपा अहङ्कारास्पदतया सञ्चेत्यन्त इति स्वतस्तद्विविक्तरूपावधारणमस्ति बुद्धीनाम्। ज्ञानान्तरेण तु ह्लादादयो गृह्यमाणा अपि तथा न संवेद्यन्त इति अनुभवसिद्धमेतदनपह्नवनीयमित्यलमतिविस्तरेण। तदेवं प्रमाणे परिशुद्धा जातिः शब्देनाभिधीयमाना दृष्टादृष्टविषयव्यवहारसाधनसमर्थेति जातिपदार्थसिद्धिः ॥ १०६ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
जातिसमुद्देशः प्रथमः ॥



जातिर्वा द्रव्यं वा पदार्थावित्युक्तं तत्र वाजप्यायनदर्शनेन जातिं विशेषणभूतां पदार्थं व्यवस्थाप्य व्याडिदर्शनेन विशेष्यरूपं द्रव्यमपि पदार्थं व्यवस्थापयितुं यथादर्शनं तदेव पर्यायान्तरैरुद्दिशति ॥

आत्मा वस्तु स्वभावश्च शरीरं तत्वमित्यपि ।
द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम् ॥ १ ॥

इहार्थक्रियायां द्रव्यमेवोपयुज्यत इति तदेव प्रवर्त्तकमर्थिनाम् । अतः शब्देन तदेवोच्यते । अनभिधीयमाना तु जातिरवच्छेदिका गुडशब्दे माधुर्यादय इवेति द्रव्यवादिनां दर्शनम् । द्रव्यं च द्विविधं पारमार्थिकं सांव्यवहारिकं च । तत्र द्वितीयं भेद्यभेदकप्रस्तावेन गुणसमुद्देशे वक्ष्यति वस्तूपलक्षणं यत्रेत्यादिना । अनेन च द्रव्येण व्याडिदर्शने सर्वे शब्दा द्रव्याभिधायिनो भवन्ति। इह तु पारमार्थिकं द्रव्यं निरूप्यते। तथा हि। आत्मा।अद्वैतवादिभिरात्मशब्देन तद् द्रव्यमुक्तमात्मैव ह्युपाधिभिन्नं प्रतिभासमानं द्रव्यं पदानामर्थ इति तेषां दर्शनमिहैव वक्ष्यमाणं वस्तु स्वलक्षणमर्थक्रियाकारि द्रव्यमिति शाक्यैरुक्तम् । स्वभावइति । सत्ता । द्वैतवादिभिः स्वभाव आत्मभूता सत्तेति कृता । तथा हि । क्रमरूपोपसंहारे सत्तैव सत्वमिति स्वसम्बन्धिभिरुपाधिभिरुपाहितभेदा सैव द्रव्यम् । प्रकृतेरेकदेशः चेतनः पुरुषस्तद्द्वारेण शरीरशरीरिणोरव्यतिरेकात् शरीरं द्रव्यं प्रधानमेवेति प्राकृतिकैः शरीरमेवैक आत्मा येषां तैः शरीरात्मभिरुच्यते। तत्वमिति। चतुर्भूततत्ववादिभिश्चार्वाकैर्द्रव्यमुच्यते। पृथिव्यप्तेजोवायुरिति तत्वानि तत्समुदाये शरीरेन्द्रियविषयसंज्ञा इति वचनात्। तदेवमेतैः परमार्थ एकमेव वस्तूच्यते । द्रव्यमित्यस्येति । द्रव्यं नाम यः पदार्थः, तस्यैत एव पर्यायाः। एतेषामेव पारमार्थिकरूपाभिधायित्वात् । नान्ये घटादिशब्दाः। सत्यपि तदभिधायित्वे वक्ष्यमाणनयेनात्मादिशब्दानामेव सर्वत्र घटादावव्याहतप्रसरत्वम् । तथा च भाष्यम्। एको ऽयमात्मा उदकं नामेति। अत्रात्मशब्द उदके प्रयुज्यमानो द्रव्यवचनः। आकृतिद्वारेण चान्ये शब्दा द्रव्ये वर्त्तते। इमे तु तत्परित्यागेन मुख्यया वृत्येति विशेषः। सिद्धे शब्दार्थसम्बन्ध इत्यत्र द्रव्यं नित्यमाकृतिरन्या चान्या च भवतीति वदता भाष्यका-

रेण नित्यं द्रव्यं स्मृतम् । सङ्ग्रहोक्तस्य तस्यार्थस्यानुवादात्स्मृतमित्याह । यद्यपि शाक्यादिदर्शने नित्यं न भवति द्रव्यं तथाऽपि तन्मतस्यानभ्युपगमाददोषः । केवलं यदस्माकं द्रव्यं तदन्यैरेवमभिधीयत इत्येवमत्रोपन्यासः, यच्च भाष्यानुसारेण स्वरूपान्यथात्वानापत्तिः। विकारभेदेऽपि नित्यत्वं विवक्षितमेवेति सर्वत्र तत्सिद्धिः ॥ १ ॥

परं दर्शनान्तराश्रयणेनोद्दिष्टेष्वपि भेदेषु स्वसिद्धान्ताश्रयेण सार्वत्रिकीं द्रव्यपदार्थव्यवस्थां कर्तुमाह ।

सत्यं वस्तु तदाकारैरसत्यैरवधार्यते ।
असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते ॥ २ ॥

इह सर्वशब्दानां पारमार्थिकं तत्वं साक्षात्स्प्रष्टुमशक्तानां अनेकोपाधिविषयनिहितपदानां तद्रूपालिङ्गनं व्यवहारे समालक्ष्यते । उपाधीनां चागमापायवशविधुरितनिजस्वरूपाणामर्थिसार्थसमाशापूरणप्रतिहतशक्तित्वान्न तावत्येवपर्यवसानमित्युपलक्षितरूपपृष्ठपातिनः शब्दा व्यवस्थाप्यन्ते । अवधृतरूपनिवेशित्वाच्च शब्दानामवधारणानुसारमर्थे प्रकृतिरवधृतिश्चाकारद्वारेण । निराकारस्य बुध्युपारोहायोगात् यथाप्रत्ययं भेदावसायस्य बाध्यमानत्वादनुयाय्यभिन्नमेव रूपं परमार्थतः । तदेव ब्रह्मरूपं सत्यम् ॥ २ ॥

स्यादेतत् । उपाधिषु शब्दानां विश्रान्त्यभावे शब्दार्थोपाधित्वं तेषां न स्यात् अवाच्यस्य तदुपाधित्वायोगात् इत्येतद्विचारयितुमाह।

अध्रुवेण निमित्तेन देवदत्तगृहं यथा ।
गृहीतं गृहशब्देन शुद्धमेवाभिधीयते ॥ ३ ॥

अदो देवदत्तस्य गृहं यत्रासौ काकः प्रतिवसतीत्यत्रानियतस्वामिकगृहोपलक्षणायोपलक्षणाभूतस्य काकस्य उत्पतितेऽपि तस्मिन्नुपलक्षणस्य कृतत्वादध्रुवत्वमनित्यत्वमिति तदनादरेणैव तदुपलक्षितं गृहमभिधीयते गृहशब्देन यथा तथा प्रकृतिसम्बन्धादसत्योपाध्युपलक्षितं सत्यमुपाधिरूपानादरेण शब्दैरभिधीयमानस्याप्यभिधानविषयनियामकत्वादुपलक्षणत्वे सत्युपाधित्वनिदर्शनेन समर्थितम् । तथा हि । क्तवतू निष्ठेत्यनुबन्धस्य प्रयोगसमवायित्वादध्रुवस्योपलक्षणत्वे तद्रहितस्य शुद्धस्य प्रत्ययरूपस्य संज्ञाप्रसङ्ग इत्य-

त्रेदं भाष्ये दर्शनमुक्तम् । ननु काको ऽस्ति विलक्षणाद् गृहात् भेदेनावधार्यमाणो मा भूद् गृहशब्दाभिधेयः। घटादयस्त्वाकाराः पृथगनुपलभ्यमानतत्वाः कथमिव तच्छब्दैर्नाभिधीयेरन् । अन्यो ऽप्युपाधिरुपलक्षणभूतः सामानाधिकरण्येनावच्छेदकः । तद्यथा । इति हरिरित्यत्र पशुः। अन्यत्तु विशेषणमपृथक् शब्दवाच्यमुपरञ्जकम्। तद्यथा वानेयमुदकमिति । वनसम्बन्धोपाधीयमानरूपविशेषणम् । अभिधीयत इति । वचनशरीरसम्बन्धे विशेषणमुपरञ्जकतया ऽभिधेयकमापद्यत इति। तथा चोक्तं अर्थविशेष उपाधिस्तदनुवाच्यः स आर्यामानशब्दो यः । अनुपाधिरतो ऽन्यः स्यात् ॥ ३ ॥

श्लाघादिविशेषणं यद्वदित्याशङ्क्य सदृशतरमत्र निदर्शनमाह ।

सुवर्णादि यथा भिन्नं स्वैराकारैरपायिभिः ।
रुचकाद्यभिधानानां शुद्धमेवैति वाच्यताम् ॥ ४ ॥

रुचककुण्डलाद्याकारविशेषोपाधीयमानरूपाभेदमपि सुवर्णमित्येव सर्वत्रोपाधिरूपं सत्यमित्युपाधिभिः आकारविशेषैस्तत्साध्यार्थक्रियाकरणाच्च तत्रैव रुचकादिशब्दाः कृतपदसम्बन्धाः किंतु तदतिरिच्यमानमर्थवस्त्वमभिधायकत्वेन समाविशन्ति तद्वत्प्रकृतिसम्बन्धादारोपाहितनानात्वमपि परतत्वं शब्दगोचर इत्यर्थः । तत्र चापायिभिरिति हेतुनिर्देशः शाक्यसमकक्ष्यतया कृतः । ततश्चोपाधीनामवाच्यत्वमसत्यत्वं च सिध्यति । असत्यत्वादेवार्थक्रियाकरणात्तदर्थं च शब्दव्यवहारादवाच्यत्वं तेषामित्यर्थः । ननु च कार्यादौ प्रकृत्यन्वयो ऽवधार्यत एव इहापि वस्तूनां जायमानत्वेन सत्वात् । ज्ञानस्य वैकल्पिकाकारानवस्थानान्निराकारशुद्धसंविन्मात्रानुगम्यस्य स्वसंवित्सिद्धत्वाददोषः । ननु विशेषणोपरक्तं विशेष्याभिधानमित्युपसर्जनीभूतस्याभिधाने का क्षतिः । न काचित्केवलमुपाधिष्वेवात्र तात्पर्यदृष्ट्या पदबन्धो निवार्यते । गुणत्वेन त्वभिधानमस्तु न तावत्येव विश्रान्तिरिति द्रव्यनिष्ठतासिद्धिः ॥ ४ ॥

अत एव विशेषणोपरागात्साङ्कर्यदोषं परिहर्तुमाह ॥

आकारैश्च व्यवच्छेदात्सार्वार्थ्यमनुरुध्यते ।

यथैव चक्षुरादीनां सामर्थ्यं नाडिकादिभिः ॥ ५ ॥

सर्वभावेषु ब्रह्मणो द्रव्यलक्षणस्याभेदात्तदभिधायित्वे शब्दानां सर्वत्र तस्य भावात्सार्वार्थ्यं शब्दान्तराभिधीयमानार्थत्वं साङ्कर्यं प्रसज्यतेत्यत्रेदमुच्यते । प्रतिनियताकारपरिच्छिन्नवृत्तित्वात्सर्वार्थस्याप्रतिबन्धादसङ्कर इत्यर्थः । घटाकारोपधानपुरस्सरं घटशब्देन ब्रह्मद्रव्यमभिमुखीक्रियते पटाकारोपधानेन तु पटशब्देनेत्याद्युपाधिरूपोपहितविवेकित्वमभिधानीयम् । तद्यथा नाडिकाशुषिरवर्त्मनिहितनयनास्तदवकाशावस्थितमेवार्थभागं पश्यन्ति तथाऽविद्यावच्छिन्नपृथक्शक्तिभिराकारभेदैरेव वस्तूपलक्ष्यते । तथैव च यथाध्यवसायं शब्दनिवेशाच्छब्दैरभिधीयत इत्यर्थः । यथाऽऽवरणादिनेन्द्रियस्यैव प्रकाशशक्तिः प्रतिबध्यते न विषयो विक्रियते तथा ऽनाद्यविद्यावच्छेदप्रकल्पितविभागानां जीवानामेव संवेदनशक्तिर्नियम्यते । येन विच्छिन्नार्थाभिधानेन भेदविषयाण्यभिधानानि प्रयुज्यन्ते न तु तत्वमविद्यया ऽऽविलीक्रियत इति नाडिकानिदर्शनेन सूचयति । नाडिकादिभिरित्यादिग्रहणादवघातप्रतिघातमूर्त्यभिजनाद्यवरोधः । यत्रैव ह्यवधानं तदेव ह्यवधार्यते । मूर्त्यभिजना रूपसौन्दर्यं तेनापहतो ऽन्यं न पश्यति ॥ ५ ॥

ये तर्ह्याकारमात्रनिर्देशतः सन्निवेशादिशब्दाः ते धर्ममात्रमभिदध्युः इति सार्वत्रिकी द्रव्यपदार्थव्यवस्था विशीर्येतेत्याशङ्क्याह॥

तेष्वाकारेषु यः शब्दस्तथाभूतेषु वर्तते ।
तत्त्वात्मकत्वात्तेनापि नित्यमेवाभिधीयते ॥ ६ ॥

उपाधिमात्रस्वभावेष्वपि सन्निवेशाद्याकारेषु सन्निवेशादिशब्दा वर्त्तमानाः । परमार्थतस्तत्वादव्यतिरेकादुपाधीनां तन्निष्कर्षे स्वरूपस्यास्वरूपत्वादात्मनैव सत्वात्तदेव नित्यमुपाधिमलीनता तदा, द्रव्यमेवमप्यभिधाने ऽभिहितं भवति । तत्वमात्मा ह्युपाधीनां न तु केवलस्यात्मन इति व्यापकत्वात्सर्वं एवोपाधयस्तदात्मनां सन्तस्तथैवाभिधीयन्ते । यदा ह्युपाधिमलीनता तदोपाधेय उपाधयो न भवन्ति । ततस्तु निष्कर्षे धर्मान्तराश्रयतया स्वातन्त्र्यादुपाधिमत्त्वमेव नोपाधित्वमित्याशयः ॥ ६ ॥

यद्येवं धर्माणामवस्थान्तरे धर्मिरूपत्वान्नित्यत्वे सत्यत्वे चाकाराणामसत्यत्वं द्रव्यस्य तु सत्यत्वमित्येतस्य नियमस्यानुपपत्तिरित्याशङ्क्याह ॥

न तत्त्वातत्त्वयोर्भेद इति वृद्धेभ्य आगमः ।
अतत्त्वमिति मन्यन्ते तत्त्वमेवाऽविचारितम् ॥ ७ ॥

अयमत्रार्थः । नेह अद्वैतनये सत्यासत्ये द्वे रूपे स्तः, अद्वैतहानिप्रसङ्गात् । किं तु पारमार्थिकमेकमेवाद्वयमात्मतत्त्वमनादिसिद्धाविद्याविलसितसहं प्रमातृविषयतया यथातत्त्वमनवभासमानमनेकविकल्पपरिघटिताकाररूपतया व्यवहारमवतरति । तथा च तदेवाकारनानात्वोन्नीयमानस्वरूपभेदं चकास्ति, नान्यत् । तद्व्यतिरिक्तस्यान्यस्याभावात् । तत्र च यो ऽयं प्रकाशः स विद्या । अप्रकाशस्तु तमो ऽविद्या । न च प्रकाशाभावो ऽप्रकाशो नाम कश्चित्प्रमाणसिद्धो निरूप्यः । ततश्च यो ऽयं भेदप्रकाशः सैवैकघनप्रकाशाभावः प्रकाशविच्छेदो ऽविद्या । तत्र च विच्छिन्नान्वयो ऽवच्छेदो ऽवधार्यते इति विच्छिन्नप्रकाशः सत्या विद्यैव । विच्छेदमात्रं त्वप्रधानस्वभावं न किंचिदविद्येति परमार्थतत्त्वविचारे किंचिदतत्त्वं व्यवतिष्ठते । तत्त्वमेव यथाप्रतिभासं भेदेन चकासदविचारितरमणीयं प्रपञ्चोऽतत्त्वमिति व्यवह्रियत इति ब्रह्मविदः । तथा चाविचारितरमणीयं परीक्षया व्यवस्थितं तत्त्वमेवाभिन्नं तीर्थिका भेददर्शनव्यवस्थिता भेदात्मकमतत्त्वं मन्यन्त इति विचारेणाविद्याविलये ब्रह्मैकनिष्ठतादर्शनम् । तदुक्तम् । सत्या विशुद्धिस्तत्रोक्ता विद्यैवेत्यादि ॥ ७ ॥

एवं तेन तेन रूपेण ब्रह्मैव विकल्पितं भवतीति सर्वविद्यानां तदुपाधिसुखं, तदेव विषयः सिद्ध इत्याह ।

विकल्परूपं भजते तत्त्वमेवाविकल्पितम् ।
न चात्र कालभेदो ऽस्ति कालभेदश्च गृह्यते ॥ ८ ॥

परमार्थतो ऽविकल्पितं विकल्पानामविषयो यत्तत्त्वं तदेव व्यवहारे ऽन्यस्याभावाद्विकल्पमानं, विकल्परूपं नानाविधभेदावभासमनादिसिद्धाविद्यावशात्समवलम्बते । जीवात्मभेदेनावतिष्ठमानं तत्तदात्मनेति मूर्तिविवर्त्ताश्रयदिक्शक्तिविभक्तदेशनानात्वं निमित्तपौर्वा-

पर्यायावलम्बनसहम् । एवमकालकलितमपि तत्त्वमनादिनिधनं कालाख्यस्वतन्त्रशक्तिविनिवेशितप्रतिबन्धाभ्यनुज्ञावशाज्जन्मादिभावविकाराभिधीयमानपौर्वापर्यं चकास्तीत्यर्थः ॥ ८ ॥

नन्वविद्यमानस्य तत्त्वे प्रतिभानमयुक्तमित्याशङ्क्य दृष्टान्तेनोपपादयति ।

यथा विषयधर्माणां ज्ञाने ऽत्यन्तमसम्भवः ।
तदात्मेव च तेषां भावमत्यन्तमतदात्मकम् ॥ ९ ॥

विज्ञानवादे विषयाकारस्य तावतो ऽसत्यत्वान्नीलादिस्तद्गतो धर्मो जडो ऽजडे ज्ञाने ऽसम्भवो ऽत्यन्तमिति जडाजडयोर्न केन चिदंशेन सारूप्यमित्याह । तथा चोक्तम् । एकदेशेन सारूप्ये सर्वं स्यात्सर्ववेदनम् । सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेदिति ॥ ९ ॥

अथ वा सम्भविधर्मक्षुरितं विज्ञानं विशुद्धबोधस्वभावमप्यनुज्ञाया व्यवहारे ऽवभासत इति इत्थं निदर्शनान्तरमाह ।

तथा विकाररूपाणां तत्त्वे ऽत्यन्तमसम्भवः ।
तदात्मेव च तत्तत्त्वमत्यन्तमतदात्मकम् ॥ १० ॥

साङ्ख्याभिमतमविकृतं प्रधानतत्त्वं सर्वविकारग्रन्थिबीजावस्थमभिन्नमनुपसृष्टमेव महदादिविकाररूपैः परमार्थतः । तद्धि महदादिविकारस्य शक्तियुक्तं गुणसाम्यावस्थात्मकं गुणवैषम्यविमर्दवशोपजायमानविकारनानात्वाद्विलक्षणमेव । अयं च व्यवहारे महदादिविकाररूपावधारणेन विना तदुपलम्भासम्भव इति सर्वदेशेष्वविद्यान्वयिनी। एवमसत्याकारो ऽप्रधानेन तत्त्वप्रतिभासः सिद्ध इति साध्यान्वयो गृहीतः ॥ १० ॥

कथं पुनरेतदवगम्यते आकारा असत्यास्ततो ऽन्यत्सत्यमित्याह ।

सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते ।
तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते ॥ ११ ॥

तदेव हि नित्यं यस्मिंस्तत्वं न विहन्यत इति भाष्यानुसारेणैतदुच्यते । तथा ह्युक्तं कनकमित्येव सत्यं पुनरपरया ऽऽकृत्या युक्तं खादिराङ्गारसदृशे सुवर्णकुण्डले भवत इत्यनेनैव दृष्टान्तेन विकारापेक्षया

भिन्नस्य ब्रह्मणः सत्यतोच्यते । तथा हि । तत्र रुचकाद्याकारोपमर्दे-न सुवर्णमित्येव सत्यम् । एवमनन्तविकारग्रामापाये सर्वान्ते ऽवतिष्ठ-मानमनपायि ब्रह्मरूपं सत्यं तदेव च भावतो नित्यम् । आपेक्ष्यं तु जात्या-दीनां सर्वव्यवहारे नित्यत्वमुच्यते । तथा हि । व्यक्त्यपाये जातिरव-तिष्ठमाना गोत्वादिका नित्या । तत्राप्यश्वत्वादिभेदत्यागे पृथिवीत्येव सत्यम् । तत्राप्यप्त्वादिभेदापाये वस्त्वित्येव सत्यं सर्वनामप्रत्याख्यम् । तत्रापि संविद्रूपस्यानपायिनो ऽनुगमादविषयाकारविवेके तदेव पार-मार्थिकं सत्यमिति नेति नेत्युपासीतेति भावनया चोद्यते । संविच्च पश्यन्तीरूपा परा वाक् शब्दब्रह्ममयीति ब्रह्मतत्त्वं शब्दात्पारमार्थिका-न्न भिद्यते । विवर्तदशायां तु वैखर्यात्मना भेदः । तत्र च तदेव नित्यं जात्यादिरूपेण शब्दवाच्यम् । तत्रान्तरे उपादानविश्रान्त्या वाचक-त्वस्य व्यवस्थापनात्स्वरूपान्तर्गतस्यार्थस्य वाच्यत्वाद्वाच्यवाचकयोर-विभागः सिद्ध इति प्रथमकाण्डे निर्णीतम् । अत एवानन्तरमिहाभिधा-स्यति । तस्य शब्दार्थसम्बन्धं रूपमेकस्य दृश्यत इति ॥ ११ ॥

यदुक्तं तदात्मैव च तत्त्वमत्यन्तमतदात्मकमिति । तत्रा-त्यन्तमतदात्मतां तावद्व्याचष्टे ॥

न तदस्ति न तन्नास्ति न तदेकं न तत्पृथक् ।
न संसृष्टं विभक्तं वा विकृतं न च नान्यथा ॥ १२ ॥

वैकारिकसर्वव्यवहारातीतत्वात्पारमार्थिकेन रूपेण विकारा-त्मकं तत्त्वं न भवति । तथा हि । अस्तीति न शक्यते व्यवहर्तुं, सत्त्वो-पाधिकस्य स्वरूपस्य तत्त्वस्य भावयोगात्तेनात्मना व्यवहारानवता-रात् । नापि नास्तीत्यभावोपाधिकस्याप्यतथात्वात्प्रमाणेन भावात्म-कस्य तत्त्वस्याचोदितत्वादेकसङ्ख्योपाधीयमानस्वरूपविशेषं तत्त्वं न भवति । निरुपाधितः तत्त्वस्य वस्तुनो ऽभिन्नत्वात्तथा चैकमित्यप्र-तीतेः । नापि पृथक्त्वाहितविशेषं तद्भिन्नस्यासत्वात् । नापि ससंसर्गो-पाधिकम् विभागोपाधिकं वा । ततो द्वितीयस्य प्रमाणानानुपपत्तेः । कुतो ऽभिन्नं विभक्तं च केन वा संसृष्टं स्यात् । परिणामनिषेधेन विव-र्ताभ्युपगमान्न विकृतम् । अनेकभावग्रामरूपतया चाद्भुतया वृत्त्या विवर्तनादविकृतमित्यपि न शक्यते व्यवहर्तुमिति सर्वव्यपदेशातीतं तत्त्वम्परं ब्रह्म ॥ १२ ॥

अथ च तदात्मैवाविद्यायामवधार्यत इत्याह ॥

तन्नास्ति विद्यते तच्च तदेकं तत्पृथक् पृथक्।
संसृष्टं च विभक्तं च विकृतं तत्तदन्यथा ॥ १३ ॥

भावाभावविकारावभासनजननशक्ति तदेवास्ति च सत्तासत्तोपाधिकव्यवहारमहम्भावस्तु निःसत्तासत्त्वं निःसदसत्परं ब्रह्म। व्यावहारिकं चैकानेकव्यवहारं जातिव्यक्त्यात्मना तदेव वर्त्तयति। सङ्ख्योपाधिकमपि च एवं संयोगोपाधिकमपि। अन्यसंसर्गितया ऽवभासनात्। एवं विवेकावसायस्तत्र। तथा समस्तविकारात्मना तन्यमानमिवाकाशाद्यात्मना कूटस्थतया तदेवावभासत इति तदात्मैव तत्त्वमित्युक्तम् ॥ १३ ॥

एवं च कृत्वा सर्वस्य तन्मयत्वाद्विरोधिनो ऽपि व्यवहारास्तत्रैवोपलीयन्त इत्याह ॥

तस्य शब्दार्थसम्बन्धरूपमेकस्य दृश्यते।
तद् दृश्यं दर्शनं द्रष्टा दर्शने च प्रयोजनम् ॥ १४ ॥

वाच्यवाचकसम्बन्धानां भावतो ऽद्वयरूपता। तत्र ह्यान्तरे तत्त्वश्रुत्यर्थशक्ती संसृज्येते इति विवर्त्तदशायां श्रुत्यर्थशक्त्यात्मना तस्यैव विकासाद्वाच्यवाचकरूपतया भेदावभासौ, ज्ञानज्ञेयवाविद्येति ब्रह्मकाण्डे एव प्रपञ्चेनायमर्थो ऽस्माभिर्निर्णीत इति तत एवावधार्यम्। दृश्यरूपतया च तस्यैव विवर्त्तः। तथा हि। दृश्यं तावद्भावजातं संविदुपारूढम्। वेद्यत्वादेव चेदमनेकवेद्यमानम्। अपरार्थप्रकाशस्य प्रकाशमानतायोगादिति पूर्वकाण्डे द्वितीयसिद्धौ च वितत्य विचारितम्। द्रष्टा ऽपि जीवात्मा अविद्याकृतावच्छेदो नियतः स त्वसंसारी भोक्ता ब्रह्मैव चेतनत्वाद्भावतो भेदानुपपत्तेरिति तत्रैवावेदितम्। अनेन च प्रधानकर्तृकर्मरूपकारकनिश्चयेन कारकान्तरस्यापेक्षणात्सिद्धरूपो विवर्त्तः प्रतिपादितः। दर्शनशब्देन च प्रधानक्रियानिर्देशकेन क्रियान्तरस्यापेक्षणात्साध्यस्वभावक्रियाविवर्त्तो ऽप्युक्तः। कालशक्त्यवच्छिन्ना हि क्रिया विवर्त्तः। दिक्शक्त्यवच्छिन्नस्य मूर्त्तिविवर्त्त इति मूर्त्तिक्रियाविवर्त्तरूपं विश्वं प्रतिपादितम्। प्रयोजनशब्देन च सम्मतिक्रियाफल इति निर्देश इति साध्यसाधनफलरूपतया

विश्वसङ्कलनायामशेषविवर्त्तानुगुण्यं ब्रह्मणः प्रतिपादितम् । एकस्य सर्वबीजस्य चेयमनेकधा भोक्तृभोक्तव्यरूपेण स्थितिरिति ब्रह्मकाण्डे प्रतिपादितं । तत्रैव च सतत्त्वनिर्णयोऽस्माभिरभ्यधायि । प्राख्योपाख्यात्मकत्वात् च व्यवहारस्य, द्वित्वे शब्दार्थसम्बन्धरूपं तद् दृश्यदर्शनं चेति भेदेनात्र निर्देशः । एतच्चाविद्यामयं रूपं कथ्यते। पारमार्थिकं तु प्रकाशितप्रपञ्चरूपं वक्ष्यति । यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम । तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिन इति। युक्तमिदं, आकृतिसंहारेऽन्ते यदवतिष्ठते तत्सत्यमिति ॥१४॥

तत्रैतत्स्यादन्ते न किञ्चिदवतिष्ठते। असदन्यपदमेवैतद्विभ्रमाद्विभेवतीत्याशङ्क्यापि हेतुनाऽभिन्नकारणपूर्वकत्वमन्वयमुखेन दृष्टान्तोपक्रमं साधयितुमाह ॥

> विकारापगमे सत्यं सुवर्णं कुण्डले यथा ।
> विकारापगमे सत्यां तथाहुः प्रकृतिं पराम् ॥ १५ ॥

कुण्डलस्वात्मकविकारापाये द्वे कुण्डले सुवर्णमेकं सत्यमवतिष्ठते यथा तथा पृथिव्यादिविकारविगमेऽन्वयिनी प्रकृतिरभिन्ना सत्यवतिष्ठत इत्युपेयम्।आहुरित्यागमप्रमाणसिद्धतां ध्वनयति ब्रह्मणः। तथा चोक्तम्। एकमेव यदाम्नातमिति।आत्मैवेदं सत्यमिति हि श्रुतिः । उपोद्बलनमात्रं चानुमानम्।तथा हि।निरुपाख्यादसतोऽपरात्प्रादुर्भावो न युक्तः। अभावस्य भावरूपत्वविरोधान्न हि शशशृङ्गात्कस्य चिदुद्भवो दृश्यते । अस्ति च विज्ञानरूपतया जगत्यन्वय इति तत्पूर्वमेवैतत्। तथा च वक्ष्यति। नाभावो जायते भावो नैति भावोऽनुपाख्यतामिति। तस्य चिद्रूपस्य चिच्छक्तिरपरिणामिनीति विकाराभावान्नेदं साङ्ख्यनयवत्परिणामदर्शनमपि तु विवर्त्तपक्षः । विशेषश्चानयोर्वाक्यप्रदीपेऽस्माभिर्व्याख्यात इति तत एवावधार्यम्। इहापि सम्बन्धसमुद्देशे वक्ष्यते । कारणान्तरव्युदासश्चाद्वयसिद्धावभिहित इति सत्यर्थित्वे तत एवावगन्तव्यः ॥ १५ ॥

तदेवमात्मशब्दाभिधेयस्य ब्रह्मणः पदार्थपरमार्थरूपत्वादद्वयरूपत्वमुपपाद्य सर्वशब्दवाच्यत्वं तस्यैव निगमयितुमाह ।

> विद्या सा सर्वशब्दानां शब्दाश्च न पृथक् ततः ।
> अपृथक्त्वे च सम्बन्धस्तयोर्नानात्मनोरिव ॥ १६ ॥

तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्यापि विद्याभूयस्त्वे प्रतिनियताकारोऽस्थीयमानरूपभेदं ब्रह्मैव सर्वशब्दविषय इत्युक्तोऽर्थः। आत्मा ब्रह्मतत्त्वमित्यादयोऽपि हि शब्दाः समवलम्बितोपाधयोऽध्यात्मानमनु परिवर्त्तन्ते। निरुपाधिनो वाग्विषयातीतत्वाद्वाङ्मनसातीतं हि तत्त्वमित्युपदिशन्ति ब्रह्मविदः। यदि शब्दापेक्षया त्वात्मादिशब्दाः प्रत्यासन्नाः सर्वस्य च तन्मयत्वाच्छब्दा अपि तदात्मकाः। यथाविभक्तं प्राक् अभेदेऽपि च पारमार्थिकसंवृतो लोकयात्रायां भेदोऽसत्य इतीवशब्दः। अत एव द्विष्ठसम्बन्धोपपत्तिः ॥१६॥

ननु चेन्द्रजालमिदं यदवधूतरूपभेदानामपि भावानामनावृत्य तत्त्वमवसीयमानापरमार्थतोपदेशनमित्याशङ्क्य दृष्टान्तेनैतत्साधयितुमाह।

आत्मा परः प्रियो द्वेष्यो वक्ता वाच्यं प्रयोजनम्।
विरुद्धानि यथैकस्य स्वप्ने रूपाणि चेतसः ॥ १७ ॥
अजन्मनि तथा नित्ये पौर्वापर्यविवर्जिते।
तत्त्वे जन्मादिरूपत्वं विरुद्धमुपलभ्यते ॥ १८ ॥

स्वप्नावस्थागतः प्रपञ्चो जागरया बाध्यमानत्वादसत्य इति सर्वेषामभ्युपगमः। तेनैव दृष्टान्तेन जागरायामपि भावभेदस्तुरीयदशायामननुवृत्तेरसत्योऽवस्थाप्यते। यत्किल सर्वावस्थास्वनुगतं तदेव सत्यम्। तच्च संविन्मात्रं रूपमबाध्यमानम्। अवस्थाभेदस्त्वागमापायित्वाद् बाधितः तत्सुखदुःखादिवत्। तथा हि रागादयः सुखादयश्चास्वभावत्वात्संविन्मात्रं रूपं न विकुर्वन्ति। तथाऽवस्थाभेदोऽप्यनेकाकारबुद्ध्योपहतः। तत्र स्वप्नं विरुद्धाकारोल्लेखी। वैकल्पिकी दृष्टिः प्रतिमातृनियता वैकल्पिकीति कोऽभिमानः। व्यापारानुसारी संसारी भोक्ता स च भावत्वाच्चेतनत्वात् ब्रह्मैव। तथा च तावति स्वातन्त्र्यानिमित्तापीश्वरेऽनन्योपादानाभावात् नाभास्यापि तु प्रियाप्रियरूपतया रागद्वेषादिभयेन संसारमोहेन परविभागानुसारी परसङ्कथादिषु। तदाहुः वेदान्ततत्त्वनिपुणाः। प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान्। सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्त्तत इति। भोक्तेति प्रत्यगात्मसृष्टिरियमुक्ता। तस्य च सर्वेश्वरत्वात्, ब्रह्मरूपत्वे सृष्टिसामर्थ्यमुक्तम्। सर्वमयत्वाच्चानन्योपादानं विचित्रभावस्वभावानामात्मोपक्षा-

नामाहुः। अत एव प्रविभज्यात्मनात्मानमिति। कर्तृकर्मभेदाभावाच्च वैकल्पिकत्वमस्य सृष्टेः स्फुटमुक्तम्. बाह्योपादाना तु जागरायामैश्वरी सृष्टिर्विश्वशब्दवाच्या सर्वप्रमातृसाधारणी। स्थिरत्वास्थिरत्वग्रहावेदा- निमित्तस्तु भेदः। अविद्याप्रवृत्तिरूपत्वात् पुनरसत्यता समानैव। केवलं सत्यामविद्यायामपरो मोहश्चित्तकेराकारको निद्रा नाम। तद्दशा दत्रैव मतत्त्वाभिमाने ऽर्वाग्दृशाम्, परमार्थदृशां तु जननमरणरहितैः प्रविभक्तं कूटस्थे परस्मिन्ब्रह्मणि चिदानन्दरूपे सर्वमेव जगज्जाग्रत्स्वप्नाद्यवस्थागतं मूर्तिक्रियाविवर्तरूपं सत्तामात्रमन्वयि, चित्सामान्यमात्रं तु परमार्थ इति सिद्धिविरुद्धमुपलभ्यत इति वदन्नविद्यायां विरोधमभ्युपैति। एतदेव ह्यविद्यायाः स्वरूपं यदनुपपद्यमानमप्यात्मोपगमं नयति उपलब्धे विद्यैव स्यात्। तस्मादसत्यप्रपञ्चप्रकाशनशक्तिर्ब्रह्मणो ऽनादिसिद्धा ग्राह्यग्राहकयुगलस्वानुरूपमुपरचय्य जगदिदमातनोतीत्यविचारितरमणीयामिमामपनयन्ति तत्त्वदृशः ॥ १८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
द्रव्यसमुद्देशो द्वितीयः ॥



समुद्देशद्वये जातिद्रव्यदर्शनभेदेन शब्दार्थं व्यवस्थाप्य शब्देनार्थस्याभिधाने सम्बन्धो हेतुः, अन्यथा सर्वं सर्वेण प्रत्याय्येतेति तत्र सम्बन्धं प्रतिपादयितुमाह ॥

ज्ञानं प्रयोक्तुर्बाह्यो ऽर्थः स्वरूपं च प्रतीयते।
शब्दैरुच्चरितैस्तेषां सम्बन्धः समवस्थितः ॥ १ ॥

प्रयोगेणाभिज्वलितैः शब्दैस्त्रितयमवगम्यते । आत्मीयं रूपमर्थश्च फलसाधनः प्रयोक्तुरभिप्रायश्च। न चैतदसति सम्बन्धे नियमेन घटत इति वास्तवः सम्बन्धावसायो न सामयिकः शब्दार्थयोः सम्बन्धः अभिधाननियमादनादेः। अत एव समवस्थित इत्याह। स्वभावत एव निरूढो न तु पुरुषेण निवेशित इत्यर्थः । तत्र स्वरूपमन्तरङ्गमभिधेये इति तेन मुख्यसम्बन्धो ऽभिधानं नियमः। अत एवान्यथा ऽपि पाठक्रमे सामर्थ्यात्स्वरूपे प्रथमं प्रतिपत्तिर्विवर्जनीया। ततो ऽन्यसत्स्वरूपे ऽर्थक्रियाकारिणी। ताभ्यामर्थस्वरूपाभ्यां शब्दस्य वाच्यवाचकसम्बन्धः।प्रयोक्त्रभिप्रायेण तु सह कार्यकारणभावः। ननु च वाच्यवाचकभावलक्षणः सम्बन्धः प्रस्तुतः। तत्र कः प्रसङ्गो ज्ञानस्वरूपयोः।सत्यम्। सर्वपार्षदं पुनरिदं शास्त्रमिति ये बाह्यस्यार्थस्य शब्दवाच्यत्वं नेच्छन्ति तन्मतोपस्कारार्थं वक्त्रभिप्रायारूढस्यैव शब्दार्थत्वे तत्र कार्यकारणसम्बन्धमाह। यथा वक्तृव्यापारविशेषे यो ऽर्थो बुद्धौ प्रकाशते, प्रामाण्यं तत्र शब्दानामर्थत्वनिबन्धनमिति। अत एव द्विविधः सम्बन्धः पदार्थे व्यवतिष्ठते। योग्यता कार्यकारणभावश्च परस्परमध्यासश्च। द्वयोरपि परमार्थ एव न पृथग्रूपम् ॥ १ ॥

यथा चोपचारसत्तांशमाविष्टस्य शब्दार्थत्वं वक्ष्यति तथा कार्यकारणभावो ऽपि स्वरूपः, सम्बन्धमुख्यमेववाच्यत्वमित्याह ॥

प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित्।
स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते ॥ २ ॥

अयं गौरयमर्थ इति शब्दार्थयोरभेदेनावभासनात् स्वरूपमभिन्नवदेव शब्दार्थमभिधत्त इति निश्चीयते। स्वरूपाविवेकेनैव घटपरामर्शो ऽभिधानमुच्यते। वृद्धव्यवहारात्तत्रैव सम्बन्धव्युत्पत्तेः। तथा ह्ययं गौरिति सङ्केतः क्रियते, भेदेनैव घटशब्दस्यायमर्थ इति। मुख्यातु-

भूमिर्न व्यवहारदशा। अत्रापि चायमिति शब्दात्तद् यदा गौरित्युच्यते तदा ऽयं सास्नादिमानर्थो बोद्धव्य इति अर्थभेदेनैव परामर्शो सङ्केतप्रवृत्तिः। व्यवहारफलो हि सङ्केतः। यथा च लौकिके व्यवहारे प्रतीतिः तथासौ न्यायः। अभेदेन च तत्र प्रतीतिः। प्रतीतौ हि किञ्चित्तटस्थमेव तामननुप्रविशदेवोपायमात्रं दृष्टं यथेन्द्रिये, किंचित्पुनश्चानुप्रविशदेव प्रतीतिं जनयद्व्यधिकरणं भवति, दहन इव यथा धूमादि लिङ्गम्। शब्दस्तु जनकमात्रेण नार्थप्रतीतौ सम्बन्धमनुभवति अपि तु तत्रार्थः शब्द्यमानः शब्दरूप एव चाभाति, तादृश एव प्रतीतिस्वभावः। रूढत्वाच्च न क्रमः। ननु न वर्णमालाऽर्थे समुपलभ्यते दर्शनानभिज्ञो देवानां प्रियः। इह शब्दो नाम वाचकः स उच्यते, यो ऽयं चिच्छक्तेर्वागात्मा व्यापारः शब्दनापरपर्यायो ऽश्रूयमाणो ऽप्युपांशुप्रयोगे शब्द इति व्यवह्रियते। यतः तस्य च प्रथममुद्भिद्यमानावस्थस्याविभागो ऽयं न शब्दार्थमयस्वभावस्य परावागात्मना स्वरूपेणावस्थानम्। परतस्तु प्राणवृत्त्यनुप्राणितमनोभूमिसमवलम्बितनिजस्वभावस्य वाच्यवाचकरूपभिन्नशाखाद्वयावलम्बिनः समवस्थानम्। अस्यां च मध्यमावस्थायां परामर्शनात्मा वाचकः शब्दो भिन्नचैतन्योद्रेकात्मिकां परवागवस्थामभजन्नेव स्वरूपवाच्यमुखेन तत्संभिन्नमर्थं परामृशति सामानाधिकरण्येन, गौरयमर्थ इति। तथा च स वाच्यो ऽर्थो वाचकाध्यासवानुच्यते। ननु च स एव परामर्शकः शब्दः पूर्वावस्थावष्टम्भेनैव करणीति हननात्मनस्युपारूढः श्रवणविषयतायोगेनात्मना विभिन्नवाच्यवाचकरूपतया व्यक्तिमासादयन् श्रव्यो भवतीत्येतावती शब्दव्याप्तिः। ततश्च परवागुपानिष्पन्दात्मकस्यास्मच्छब्दस्य तद्रूपानुगमात् शब्दनात्मनैकव्यापाररूपस्य स्वसामानाधिकरण्येनार्थरूपशब्दनाभेदेनैवैकया वृत्त्या स्वरूपविशेषेण विशिष्टमर्थाभिधानमवतिष्ठते। तद्यथा शुक्लः पटो ऽयमिति। शुक्लगुणस्फुरणया सकृदेव विशेष्यपरप्रत्यवमर्शः। न ह्यस्य शुक्लगुणस्य पृथक् परामर्शः। एवं घटो ऽयमिति प्रधानभूतविशेष्यानुप्रवेशेनैव घटस्य रूपपरामर्शशब्दस्यैकैवेयं शब्दनात्मिका प्रतीतिः। शब्दार्थयोः क्वचित्तु स्वरूप एव विश्रान्तिः। तद्यथा अग्निमन्त्रोदात्तमधीष्व, अग्नेर्ढगित्यादौ। अत्र न ह्यनुकार्यं स्वरूपमेव प्राधान्येनावस्थितम्। बाह्यार्थप्रतिपिपादयिषायां तु स्वरूपार्थयोः सम्भेदो नावभासत इति न पृथक्स्वरूपं विमर्शः अपि तु स एव

तत्स्थायित्वस्तदभेदभाजो ऽर्थस्य घटक इति हि घटशब्देनार्थवत्स्वरूपमभिप्रायैव विषयीक्रियते। ज्ञानशब्दप्रदीपाख्यो हि प्रकाशो येनैव प्रकारेण परं प्रकाशयन्ति तेनैवात्मानमपि। तथा च ज्ञानमर्थः प्रकाशयति प्रथयति तथैवात्मानमपि प्रकाशयति। एवं प्रदीपो रूपमाभासयन् आत्मानमप्याभासविषयभावोपगमनेन प्रकाशयति। तथा शब्दो ऽपि वाचको ऽर्थमभिधीयमानतया प्रकाशयन्नात्मानमभिधेयतयैव प्रकाशयतीत्युचितम्। न तु श्रोत्रेन्द्रियविषयभावोपगमनेन। अर्थसामानाधिकरण्यापन्नं च स्वभावरूपमर्थमर्थवत्परामृश्य मनःशब्दस्याभिधानविषयो ऽभिधेयम्। ननु वाचकतायामभिधीयमानतास्ति, परामर्शस्य परवागात्मनः कर्तृमत्युपारूढस्य प्रकाशस्य वाचकत्वात्तत्र च परामृश्यमानतात्मकवाच्यताविरोधात्तथा चाह। न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यतेति। एवं च कृत्वा सर्वघटशब्दसाधारणं सामान्यरूपमर्थपक्षनिक्षिप्तमर्थसमानाधिकरणं स्वरूपमस्य वाच्यम्। अर्थवत्तत्सामानाधिकरण्यात्तत्रापि तथा प्रतीतेः। सामान्यरूप एव च सङ्केतोपपत्तेः। तेनैवार्थस्य सामानाधिकरण्यात्तथैव च व्यवहारे श्रोत्रा प्रतीतेः। तदनुसारेणैव प्रतिपाद्यप्रतिपादकभावार्थमेकपरामर्शावस्थितौ सङ्केतोपपत्तेः। अत एव च स्वाभिप्रायानुसारेण श्रोत्रा वक्तृज्ञानस्यानुमानात्स्वयं शब्दस्वरूपाध्यस्तमर्थमवबुध्य तथैव वक्तर्यनुमानमुचितमित्यभेदेनैव घटशब्दाध्यस्तप्रयोक्तृज्ञानमवसीयते। तथा ज्ञानमप्यध्यासेनैव शब्दः प्रतिपादयति वक्तृगतमिति तत्रापि परमार्थदशाध्यास एव सम्बन्धः। लोलीभूतानि शब्दार्थज्ञानानि घट इत्येवमवगम्यन्ते। यथोक्तम्। न सो ऽस्ति प्रत्यय इत्यादि। अत एव गौरित्यत्र कः शब्द इति प्रश्नः। तदहर्जातस्याप्ययमस्त्येव शब्दसम्भेदः। सङ्केतसहत्वात्। एवं च कृत्वा तात्पर्याध्यास एव योग्यतायाः कार्यकारणभावफलतः सम्बन्धो ऽवतिष्ठत इति। एवं च मुख्यो ज्ञानस्यैव च परस्परसङ्क्रान्तव्यवहार इति शब्देन स्वरूपाध्यस्तं ज्ञानमपि प्रतिपाद्यते। परन्त्वेतदपि तस्याभिधेयतयैव प्रतिपाद्यमुपपद्यते। घटमानयेति नियुक्तो घटानयने ऽहमनेन प्रेषित इति शब्दपूर्वकमेव प्रतिपद्यते। तदाह वार्त्तिककारः। न वा शब्दपूर्वो ह्यर्थे सम्प्रत्यय इति। तदेव शब्दनात्मकेन व्यापारेण परवागात्मनो व्यवहारे प्रवृत्ते प्रकाशस्य तज्जीवितत्वादेकशब्दानुप्रवेशाच्छब्दार्थयोः सामानाधिकरण्याद-

भेदाध्यासात्मकः सम्बन्धो विषयता सिद्धा । अविभागदशायां तु पश्यन्त्यभिधानायां वाच्यवाचकभेदानुल्लासान्नाध्यासं विना का चित् । इत्थं च कृत्वा शब्दैकजीवितत्वाद्व्यवहारेऽप्यर्थस्य तदवियोगात्तद्विवर्त्तरूपं विश्वं सिद्धमित्यास्तामेतत्पूर्वमेव सप्रपञ्चमस्यार्थस्य निरूपितत्वात् । तत्रान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च स्वरूपं मुख्यमभिधेयम् । तत्र हि शब्दस्य सङ्केतात् शब्दानपेक्षा शब्दस्य वृत्तिः । तच्च जात्यादिभेदेन ब्रह्मकाण्डे निरूपितम् । अभिधानाभिधेयनिमित्तभेदाच्च भिन्नरूपाणि स्वरूपेष्वित्याह । तथा हि कारणसन्निवेशि वाचकस्वरूपमर्थपक्षनिक्षिप्तं वागभेदेन सञ्चेत्यमानं वाच्यं, सम्बन्धसम्वेदनसमयानुभूतमभिन्नश्रुतिविषयं नियामकत्वादर्थप्रवृत्तिनिमित्तमिति त्रितयं सर्वत्राव्यभिचारि । व्यवहाराभ्यासाच्छ्रुतिसाम्याच्च नैतत्त्रितयं विवेकेनावधार्यते । श्रुत्यविशेषाच्च तत्स्वरूपमिति व्यवह्रियते । न तु सर्वथैवापि भेदादप्रवृत्तसङ्केतस्यार्थे । तद्विषये च ज्ञाने सन्देहो जायते न तु श्रुते स्वरूपे अर्थापरिज्ञानाच्च किमयं चेद्वक्तेत्ययमपि वक्तृज्ञानविषयः सन्देहो जायत एव । प्रवृत्तसङ्केतस्याप्यक्षादिसामान्यशब्दादेव चाक्षादौ सन्देहो न तु स्वरूप इति सिद्धम् ॥ २ ॥

सम्बन्धः समवस्थितः स्वभावत एव निरूढः न तु सामयिक इत्युक्तं तस्य सद्भावे लिङ्गमाह ॥

अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते ।
योगः शब्दार्थयोस्तत्त्वमप्यतो व्यपदिश्यते ॥ ३ ॥

अस्यार्थस्यायं शब्दो वाचकोऽस्य शब्दस्यायमर्थो वाच्य इति षष्ठ्यन्यथानुपपत्त्याऽस्त्येव स्वाभाविकः शब्दार्थयोर्योग इत्यवसीयते । असम्बन्धानां घटपटादीनां एवमन्योन्यपारतन्त्र्येण व्यवहारायोगात् । अत एव स्वाभाविकात्सम्बन्धाच्छब्दार्थयोस्तत्त्वं गौरयमर्थ इत्यभेदेन व्यवह्रियत इत्यर्थः ॥ ३ ॥

यदि वात्र षष्ठ्याः सकाशात्तत्त्वं स्वरूपसम्बन्धस्योच्यते नतु षष्ठीसम्बन्धस्य कार्यत्वं, स्वरूपनिवेशि तु लक्षणमुच्यतामित्याशङ्क्याह ॥

नाभिधानं स्वधर्मेण सम्बन्धस्यास्ति वाचकम् ।
अत्यन्तपरतन्त्रत्वाद्रूपं नास्यापदिश्यते ॥ ४ ॥

इह पदार्थानां स्वरूपमवधार्य तदनुगामिशब्दनिवेशेन लक्षणं क्रियते। तत्र स्वेनासाधारणेन धर्मेण स्वभावेनोपलक्षितस्य सम्बन्धस्य वाचकं प्रत्यायनमभिधानं षष्ठीव्यतिरिक्तं नास्ति, इदंतया स्वरूपानवधारणात् । गुणा द्रव्याधीना अपि प्राधान्येन शुक्लादिशब्देन कदा चिदुच्यन्ते नैवं सम्बन्ध इत्यत्यन्तग्रहणम् । नित्यपरतन्त्रो हि सम्बन्धः परोपाधिस्वरूपसम्बन्धिनोः परस्परौन्मुख्यस्वभावो धर्ममात्रलक्षणः । ततो निष्कृष्य सम्बन्धशब्देन स्वप्रधानः सम्बन्धिरूपतया ऽभिधीयमानो न साक्षात्स्प्रष्टुं शक्यते इत्यसंविज्ञातपदः कार्यैकगम्यः ॥ ४ ॥

तदाह ॥

उपकारः स यत्रास्ति धर्मस्तत्रानुगम्यते ।
शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः ॥ ५ ॥

उपकार्योपकारकयोरुपकारकः स्वभावतः सम्बन्धो ऽसम्बन्धानामुपकाराभावात् । धर्म इति तु नित्यपारतन्त्र्यमाह । धर्मत्वे स्वातन्त्र्याद्धर्मान्तरप्राप्तेरनवस्थापातात् । न च शक्तिरेव सम्बन्धः शक्तीनामप्याधारपारतन्त्र्ये नियतकार्यजनने च सम्बन्ध एव नियामको यतः गुणानामपि च द्रव्याश्रितत्वावस्थापकः सम्बन्ध एवेति परतन्त्राणामप्युपकारकत्वात्सर्वत्रानुमानस्वरूपो नित्यपरतन्त्रः ॥ ५ ॥

ननूक्त एव संयोगसमवायलक्षणः सम्बन्धः परैरिति को ऽतिशयस्तत्प्रतिपादन इत्याशङ्क्याह ॥

तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः ।
तयोरप्युपकारार्था नियतास्तदुपाश्रयः ॥ ६ ॥

पारतन्त्र्यं संयोगलक्षणमिति संयोगसमवाययोर्द्रव्यगुणादिषु नत्वात्सम्बन्धिशब्दप्रवृत्तिः । तस्य सम्बन्धस्यैव धर्मः पारतन्त्र्यलक्षणो ययोस्तौ तद्धर्माणौ। स्वरूपमात्रेण हि तौ सम्बन्धमनुकुरुतः।तथा च तत्सम्बन्धस्यैव धर्मशब्दः । तयोर्गौणः सम्बन्धशब्दः संयोगसमवाययोर्न तु मुख्यतस्तावेव सम्बन्धः। तथा हि यदा स्वतन्त्रपदार्थान्तरवत्तयोरपि स्वगतोपाधिविवक्षा तदा तदुपक्रियमाणत्वात्स्वातन्त्र्ये सति पारतन्त्र्याभावात्स्वतन्त्रपदार्थवत्सम्बन्धरूपतात्वा-

पत्तिः। उपकारार्थी उपकारप्रयोजनाः। नियता असाधारणाः। तदुपाधय इति। सम्बन्धस्य उपर्येषां सम्बन्धानां नियामकत्वात्। इत्थं चोपाधिमन्तौ स्वतन्त्रौ चोभयोश्चोपाध्यवच्छेदे सम्बन्ध उपयोगी। तेन संयोगसमवायौ कथमुपाधिरूपेण पारतन्त्र्येण सम्बन्धेनैकात्म्यं भजेतामिति स्वाश्रये सम्बन्धप्रतीतिहेतुत्वात्सम्बन्धसधर्माणौ तौ॥६॥

तत्र संयोगस्य तावदुपाधयः॥

का चिदेव हि सावस्था कार्यप्रसवसूचिता।
कस्य चित्केन चिद्यस्यां संयोग उपजायते॥ ७॥

परस्परसंयोगेनावयवानामुपसर्पणप्रत्ययाहितेनावयवि द्रव्यं जायते इत्यसमवायिकारणं संयोगो ऽवयव्यन्यथानुपपत्त्या ऽवसीयते। तथा च द्रव्यैकनियतत्वं गुणत्वेन सत्तासम्बन्धः संयोगस्योपाधिरिति तत्रोपकारः सम्बन्धेन तस्यावच्छिद्यते। यत्परतन्त्रः संयोगः तेनोपाधिना सम्बन्धानुगृहीतेनावच्छिद्यत इति पारतन्त्र्यं नाम सम्बन्धसामान्यरूपमस्यान्वयि न तु तदेकजीवितं पारतन्त्र्यम्। अस्य गुणकर्मसामान्यादावपि भावादस्य च द्रव्यैकनियतत्वात्। किं च संयोगस्य गुणत्वात्सत्तासम्बन्धो गुणत्वसंयोगत्वं सम्बन्धश्च, न पदार्थसम्बन्धस्य सर्वपदार्थसम्बन्धावधर्मस्य सर्वपदार्थोपकारस्य तद्योगो द्रव्यगुणकर्मभ्यो ऽन्यत्वाद्वस्तुभूतकार्यकारित्वं च संयोगस्य। योजनामात्रहेतुस्तु सम्बन्ध इति भेदः॥ ७॥

समवायादपि सम्बन्धस्य भेदे नियतोपाधिनियमितसमवायं स्वरूपानुवादेनाह॥

निरात्मकानामुत्पत्तौ नियमः क चिदेव यः।
तेनैवाऽपवर्गश्च प्राप्त्यभेवे स यत्कृतः॥ ८॥
आत्मान्तरस्य येनात्मा तदात्मेवावधार्यते।
यतश्चैकस्य नानात्वं तत्त्वं नाध्यवसीयते॥ ९॥
तां शक्तिं समवायाख्यां शक्तीनामुपकारिणीम्।
भेदाभेदावतिक्रान्तामन्यथैव व्यवस्थिताम्॥ १०॥
धर्मः सर्वपदार्थानामतीतः सर्वलक्षणः।
अनुगृह्णाति सम्बन्ध इति पूर्वेभ्य आगमः॥ ११॥

सत्कार्यवादे कारणमेवकार्यं भवतीति प्रतिनियतैः शब्दैस्तत्र-न्यत इति तत्रैव तदुपलम्भो युक्तः । असत्कार्यनये तु नियतेष्वेव कारणेषु कार्यं, तन्तुष्वेव पटः, कपालेष्वेव घट इत्यादिबुद्धिहेतुः समवायो ऽभ्युपगन्तव्यः । सत्यपि च भेदे कार्यकारणयोस्तेनैव नियमविषयेण कारणेनैव कार्यस्याविभागो, देशकालभेदात्प्राप्ते सम्बन्धरूपतायाः संयोगेन सहाविशेषो ऽपि समवायकृतः । तथा च संयोगात्समवायस्य भेदः । अत एव च कार्यकारणयोरवयवावयविनोर्धर्मधर्मिणोश्चैकत्वं केचिदिच्छन्ति केचिन्नानात्वमिति समवायव्यामोहादपि परमार्थतो न व्यवतिष्ठते । अनेनायुतसिद्धिः समवायस्योपाधिरुक्तः । एव मयुतसिद्धानामिह प्रत्ययहेतुः समवायो नान्येषामित्ययं नियमः सम्बन्धेन समवायस्यावेद्यते । यत्रैव हि पारतन्त्र्यस्य तत्रैव बुद्धिमभेदमिव च प्रकल्पयति । द्रव्यगुणकर्मसामान्येषु शक्तयो ऽपि वाधारपारतन्त्र्येण न नियम्यन्ते । समवायिष्विव च समवायस्यापि भेदः, तेभ्यो नावधार्यते । संमूर्छितरूपत्वेनावभासात् । इह प्रत्ययकार्यवशात्तदनुमितसत्त्वतः सम्बन्धिव्यतिरेकेणत्येवं परप्रसिद्धम् । येनेति समवायमनूद्य तां शक्तिमिति शक्तित्वमस्य विधत्ते । अनुग्राहकत्वेन पदानामस्य तैस्तुल्यकक्षतया निर्देशानुपपत्तिरित्यर्थः । शक्तित्वादेव च भेदाभेदावतिक्रान्तत्वम् । तत्त्वान्यत्वाभ्यामनिर्वाच्या हि शक्तयः । तथोक्तं "शक्तीनां वस्तुरूपत्वे तत्त्वान्यत्वविचारणा । युज्यते कल्पितानां तु युक्ताद्वयविकल्पितेति" । तथा हि समवायिसम्मूर्च्छितत्वेनावभासाच्च ततो भिन्नाप्यभिन्ना । आश्रयासमवायिसम्भविनः कार्यस्येह प्रत्ययलक्षणस्य जननादिति तत्त्वान्यत्वाभ्यामनिर्वाच्यता । अतश्चान्यथैव पदार्थवैलक्षण्येनेयमवस्थिता । यदि चेह प्रत्ययस्याभेदात्स्वतो ऽभिन्ना तस्यैव तु समवायिप्रकल्पितभेदत्वाद्भिन्नेत्येवमेकापि सती सम्बन्धनानात्वात्कल्पितभेदे ऽन्वयान्यथानवस्थिता साधनादिशक्तीनां चेयमत्रोपस्थाने योपकारिणी । तदेवंभूतानामपि समवायाख्यां शक्तिं सर्वपदार्थगतस्वाधीनत्वलक्षणं धर्ममतिक्रान्तो नित्यपारतन्त्र्यलक्षणतयैवोपकारापेक्षत्वं सर्ववस्तुलक्षणं ज्ञापकमस्य न समवायस्यैव प्रतिनियतसम्बन्धिरूपमेवेत्येकं रूपमसम्बन्धो ऽनुगृह्णाति । नियमितपरतन्त्रे एवायुतसिद्धं व्यापयति पारतन्त्र्यसामान्यात् व्यपदेशं च निवेदयतीत्यागमज्ञाः । सम्बन्धलक्षणं पारतन्त्र्यमाह । एवं वि-

धकार्यकारी सम्बन्धो नाम पदार्थलक्षण इत्यागमेन द्रढयति ॥ ११॥
एवं च कृत्वा संयोगसमवायाविव नेह सम्बन्धो यथान्येषां च दर्शनमित्याह ॥

अपदार्थीकृत एवान्यैः सर्वत्राभ्युपगम्यते ।
सम्बन्धस्तेन शब्दार्थः प्रविभक्तुं न शक्यते ॥ १२ ॥

षट्पदार्थवादिभिर्वैशेषिकैर्गुणपदार्थे संयोगः प्रक्षिप्तः। समवायस्तु स्वतन्त्रः पदार्थ इत्युक्तेन नयेन पारतन्त्र्याच्छक्तिरूपो ऽप्यर्थो ऽपि पदार्थः कृत एव तद्रूपसमारोपासम्बन्धः । नचेहास्य शब्दस्यायमर्थ इत्यतिनियमेन प्रविभागं शब्दार्थयोः सो ऽभ्युपगन्तुं पार्यत इति तद्व्यतिरिक्तस्तयोरस्ति सम्बन्ध इत्यव्याप्तिपदार्थसंग्रहे वैशेषिकाणाम्। तथा हि। समवायात्स्व आधारः सा च जातिः प्रतीयते। एकार्थसमवायात्तु गुणाः स्वाधार एव ते। यं वा ऽऽकाशगगनादयः शब्दाः स्वार्थमाकाशाख्यं तत्र समवायात्प्रतिपादयन्ति स्वसमवेतां जातिं स्वरूपलक्षणां सर्वे शब्दाः समवायसम्बन्धात्प्रत्याययन्ति तस्याः शब्दव्यक्तिषु समवायात् । ये त्वाकाशगुणाः महत्त्वादयः तानेकार्थसमवायाच्छब्दाः प्रत्याययन्ति, महत्त्वादिशब्दानामसाधारणानां महत्त्वादिविशेषगुणानां वाकाशे एकत्र समवायात्। एवं शब्दव्यक्तिलक्षणा गर्जितकूजितभणितहेषितादयो गगनस्यासाधारणाः तदभिधायका अपि गर्जितादयः शब्दाः तदेकार्थसमवायादेव ॥ १२ ॥

तथा ॥

द्रव्यत्वसत्तासंयोगाः स्वाधारोपनिबन्धनाः ।
तत्प्रदेशविभागश्च गुणा द्वित्वादयश्च ये ॥१३॥

द्रव्यत्वमपरसामान्यमेकार्थसमवायाद् द्रव्यत्वादिशब्दैः प्रत्याय्येत। सत्ताद्रव्यत्वे हि द्रव्यत्वादिशब्दस्य यःस्व आधार आकाशः तत्रान्यत्र पृथिव्यादौ वर्तेत इति स्वान्याधाराभ्यामुपबध्यते स्वात्मनि नियम्येते। तथा च स्वान्याधारवर्तिनी, स्वाश्रयपरिसमाप्तत्वात्सामान्यानामाश्रयान्तरसमवाये ऽप्येकैकत्र समवायाविरोधात्तथा चाकाशेन पदार्थान्तराणां ये प्रदेशशब्दे त्रयः संयोगविभागद्वित्वपृथक्त्वादयश्च ते ऽपि संयोगादिशब्दैरेकार्थसमवायादेव प्रमाप्यन्ते द्विष्ठत्वात्, संयोगादीनामाकाशे ऽपि समवायात् । तथा।

"केचित्स्वाश्रयसंयुक्ताः केचिच्च समवायिनः । संयुक्तसमवेतेषु समवेतास्तथा परं" । स्वः शब्दानामाश्रय आकाशः तेन संयुक्ता रथघटादयो रथघटादिशब्दैः समवेतसंयोगात्प्रत्याय्यन्ते।घटादिसमवेतरूपादिसमवेतास्तु रूपत्वादयो रूपादयो गुणा उत्क्षेपणादयश्च कर्मविशेषाः स्वाश्रयसंयुक्तसमवायाद्रूपादिशब्दैः प्रत्याय्यन्ते।घटादिसमवेतरूपादिसमवेतास्तु रूपत्वादयो रूपत्वादिशब्दैः स्वाश्रयसंयुक्तसमवेतसमवायादभिधीयन्ते ॥ १ ॥

तथा ॥

स्वाश्रयेण तु संयुक्तैः संयुक्तं विभु गम्यते ।
समवायस्य सम्बन्धो नापरस्तत्र दृश्यते ॥१३॥

दिक्कालात्मनां विभुत्वमाकाशेन सहाप्राप्तिपूर्विकायाः प्राप्तेरसम्भवात्साक्षात्सम्बन्धाभावाद्दिक्कालादिशब्दैःस्वाश्रयसंयुक्तसंयोगात्ते प्रतिपाद्यन्ते। आकाशेन हि संयुक्ताः पृथिव्यादयः। तैः संयुक्ता हि दिक्कालात्मानः। एवं पूर्वानुसारेण विभुद्रव्यसमवेताः गुणाः तत्समवेताश्च सामान्यविशेषाः स्वशब्दैः स्वाश्रयसंयुक्तसमवायात्स्वाश्रयसंयुक्तसमवेतस्य स्वाश्रयसंयुक्तसमवायात्स्वशब्देनाभिधानम् आकाशसमवेतस्य वेदार्थसमवायाद्दिक्कालात्मसमवेतस्य स्वाश्रयसंयुक्तसमवायापेक्षया प्रतीतिरुक्ता । एवमत्र यथायोगं विभजने ऽपि समवायशब्दस्य स्वार्थस्य प्रतिपादनेन क चित्सम्बन्धः स्यात्समवायस्याद्रव्यत्वात् केन चित्संयोगाभावात्स्वरूपवृत्तित्वात् समवायान्तराभावाच्च स्यादेतत्समवायशब्द आकाशे समवेतो घटादयश्चाकाशेन संयुक्तास्तेषु च समवायास्थितिरिति स्वाश्रयसंयुक्तसम्बन्धात्तमभिधास्यति । नैतद्युक्तम् । समवायान्तराभावात्समवायस्य घटादिषु कालकल्पना न युज्यते ॥ १३ ॥

तथा हि ॥

सम्बन्धस्याविशिष्टत्वान्न चात्र नियमो भवेत् ।
तस्माच्छब्दार्थयोर्नैव सम्बन्धः परिकल्पते ॥ १४ ॥

यदा ऽयमर्थो विशिष्टसम्बन्धस्याभावादिति तदा तस्य सम्बन्धस्याविशिष्टत्वात्सर्वमर्थं प्रत्यापयेत् । यदा तु सम्बन्धस्याविशिष्टत्वात्तुल्यत्वादनेन साधारणत्वादित्यर्थस्तदेयं व्याख्या।आकाशशब्देन

समवायात्स्वाश्रयाभिधाने घटादयोऽपि शब्दा गगनाभिधायिनः स्युः, आकाशसमवायस्याविशेषात् । एवं स्वसमवेतजात्यभिधाने शब्दस्य गुणत्वं सत्ता च प्रतिपाद्या स्यात् । घटादिशब्दैश्च स्वाश्रयसंयोगाविशेषाद् घटादयोऽपि प्रत्याय्येरन्निति समव्याप्त्यभिव्याप्तिभ्यां व्यवस्था शब्दार्थसम्बन्धे विशीर्येते यतः, तस्मात्संयोगसमवायरूपतया नात्र सम्बन्धपदार्थपरिकल्पनम् ॥ १७ ॥

प्रौढवादितया वैशेषिकदर्शने समर्थयितुमेतदाह ॥

अदृष्टवृत्तिलाभेन यथा संयोग आत्मनः ।
क्वचित्स्वस्वामियोगाख्यो भेदेऽन्यत्रापि सङ्क्रमः ॥ १८ ॥

व्यापकस्यात्मनः सर्वद्रव्यैः संयोगस्याविशेषेऽपि धर्माधर्मवशाच्छरीरादावेव स्वस्वामिभावलक्षणः सम्बन्धो यथा, एवमिहाप्यविशिष्टस्यापि स्वाश्रयसमवाये स्वाश्रयसंयोगे चादृष्टवशादेव प्रतिनियतः शब्दार्थो व्यवस्थास्यतीत्यतिव्याप्त्यभावः । अदृष्टस्य धर्माधर्मलक्षणस्यात्मगुणस्य वृत्तिः फलदानं प्रति व्यापारः, तस्या लाभो देशकालादिसहकारिवशात्प्राप्तिः । तुच्छोऽयं परिहारो हेयत्वादस्य पक्षस्याभिहितः । भोगस्य स्वसुखदुःखसाधनभूतस्य युक्तं कर्माक्षिप्तत्वं, न तु सर्वस्य तथा भावो युक्तः । अथ शब्देनार्थप्रतिपादननियमे सति, तस्य भोगत्वमित्येतदपि कर्माक्षिप्तमेवेत्युच्यते, तदा सर्वस्य जगतः तथाभावाददृष्टहेतुप्रत्याख्यानं सर्वत्रायातम् । अथायमत्राशयः । यथा संयोगे संयोगे समानेऽपि न सर्वस्वमात्मनः, नापि सर्वेषामात्मनां प्रत्यात्मगता, दृष्टनियमात्तथा सम्बन्धाभेदेऽपि न सर्वं सर्ववाच्यम्, प्रयोगदर्शनाभ्यासजसंस्कारपारतन्त्र्यादिति तदा सर्व एव प्रतिनियतविषयः प्रयोगदर्शनाभ्यासात्सङ्केतादवसीयमानस्वरूपः संस्कारो योग्यतारूपः सम्बन्धोऽस्तु, किमन्येन निबन्धनेन संयोगसमवायलक्षणेन नान्तरीयकेण कृत्यम् ॥ १८ ॥

समवायस्य त्ववाच्यत्वमेवाभ्युपैति ॥

प्राप्तिं तु समवायाख्यां वाच्यधर्मातिवर्तिनीम् ।
प्रयोक्ता प्रतिपत्ता वा न शब्दैरनुगच्छति ॥ १९ ॥

शब्दप्रतिपाद्यानां वाच्यानां गवादीनामर्थानां धर्मसंसर्गिरूपा-

च्छुरितत्वं, निरुपाधीनां शब्दविषयतायोगात् । समवायस्तु, निरुपाधिर्न हि तस्य गुणाः सामान्यादिश्च कश्चिदुपाधिः परैरङ्गीक्रियत इति, वाच्यधर्ममतिक्रान्तः । तथेदं तदिति प्रत्यवमर्शयोग्यत्वं वाच्यधर्ममतिक्रान्तः।नित्यपरतन्त्ररूपत्वाच्चासौ समवायशब्दादपि अवधार्यते प्रयोक्तृप्रतिपत्तृभ्यामिति न तत्स्वरूपनिवेशिसंविज्ञानं पदं किं चनास्ति। एवं भावतो ऽयं,सम्बन्धिरूपतया तु स्वतन्त्रः समवायशब्दादवगम्यते। तथा च धर्मितया प्रतीते धर्मान्तरयोगसहत्वादस्त्येव स्वाश्रयसंयोगः, तदभिधानसमवायशब्दस्य सम्बन्ध इति न कश्चिद्दोषः । अर्थान्तरे समानादौ च प्रयोगदर्शनात्समवायशब्दो नाम साधारणं संविज्ञानपदमस्य । लौकिकं किं तर्हि वैशेषिकसमवाय एव रूढम् । वाच्यमर्थं प्रयोक्ता विवक्षितत्वायोग्यं शब्दं प्रयुङ्क्ते । समवायस्य तु पारतन्त्र्यात्मनो वाच्यत्वाभावात्प्रयोक्तुर्यो ऽयं शब्दोदाहारे व्यापाराभावः तदभावात् प्रतिपत्तापि न तत्र कश्चिदित्युभयोपादानम् ॥ १९ ॥

अत्रावाच्यत्वे समवायस्योक्ते तथापि को वा कं छलमुद्भावयति॥

अवाच्यमिति यद्वाच्यं तदवाच्यतया यदा ।
वाच्यमित्यवसीयेत वाच्यमेव तदा भवेत् ॥ २० ॥

अवाच्यमित्यनेन शब्देन यद्वाच्यं वक्तुमभिप्रेतं तद्यदैवावाच्यतया अवाच्यशब्दे वाच्यं व्यवहर्त्तव्यं इति प्रतीयते तदैव वाच्यं भवति प्रतिपादनकाले एव वाच्यतामुपैति इत्यर्थः । तथा च वाच्यमित्युक्तं ऽवाच्यशब्दस्यैव वाच्यमित्यवाच्यत्वं विरुध्यते ॥ २० ॥

अथाप्यवाच्यमित्येवं न तद्वाच्यं प्रतीयते ।
विवक्षितास्य यावस्था सेयं नाध्यवसीयते ॥ २१ ॥

अवाच्यशब्दस्याप्यवाच्यत्वे प्रतिपिपादयिषितं शब्दानभिधेयत्वं समवायस्य न, गम्यते त्वस्य वाच्यत्व एव तथा च विरोध इत्यर्थः॥२१॥

अथ पारतन्त्र्यात्मना वाच्यो न सर्वथेत्याशङ्क्याह ।

अथान्यथा सर्वथा च यस्यावाच्यत्वमुच्यते ।
तत्रापि नैव सावस्था तैः शब्दैः प्रतिषिध्यते ॥२२॥

पारतन्त्र्यात्मना न वाच्य इत्यपि प्रकारप्रतिषेधे प्रकारवत

एव प्रतिषेधः कृतो भवति। न हि तेनान्येनान्येन सर्वेण वा प्रकारेणा-वाच्य इति प्रकारमात्रस्यावस्थालक्षणस्यैतैः शब्दैः प्रतिषेधः। धर्म्यप्रतिषेधे तदाश्रितधर्मप्रतिषेधानुपपत्तेः। तस्माद्विशिष्टनिषेधे ऽपि प्रतिषिद्धमेव वाच्यत्वं समवायस्येति कथमवाच्यशब्दस्यायं वाच्यः स्यादिति चोद्यमेव यदि वा, तथा ऽपोह्यान्यथेत्यादिना निषेधे ऽपि तथैवावस्था निषेद्धुं शक्या यावदवस्था ता न निषिध्यन्त इति नान्तरीयको ऽस्य निषेधः। शब्दविषयताप्रत्यवमर्शमन्तरेणाकारविशेषः प्रतिषेद्धुं न शक्यत इति शब्दविषयत्वेन तस्य वाच्यत्वोपपत्तेरवाच्यत्वेन न विरोध इति ॥ २२ ॥

पूर्वे व्याचक्षते अस्य वक्तुरभिप्रेतादर्थादर्थान्तराध्यारोपेण वाक्यच्छलस्योत्तरं वक्तुमेतत्सदृशं निदर्शनमाह ॥

न हि संशयरूपे ऽर्थे शेषत्वेन व्यवस्थिते ।
अव्युदासे स्वरूपस्य संशयो ऽन्यः प्रवर्त्तते ॥ २३ ॥

समानधर्मोपलम्भाद्विशेषानवधारणात् विशेषस्य तेष्वर्थे संशयिते स्थाण्वादौ स्थाणुर्वा स्यात्पुरुषो वेति, यदिदं संशयज्ञानं न जायते तत्र संशयरूपे ज्ञाने संशयिते ऽर्थे स्वविषये शेषत्वेन तद्विषयव्यवस्थापनाङ्गत्वेन स्थितम्। तदुपरि तदैवान्यसंशयज्ञानं नोत्पद्यते, अस्यार्थपरतन्त्रस्यापरित्यक्तपारतन्त्र्यस्वरूपस्य स्वविषयविज्ञानं प्रति विषयभावोपगमविरोधाद्यदि हि स्वविषयस्य संशयरूपस्य ज्ञानस्येदं विषयाभावमुपेयात्, तदा स्वरूपेणैव सन्दिग्धत्वादलब्धप्रतिष्ठः स्वस्मिन्यो ह्यविनश्यं स्वभावे स संशयात्मनि स्वरूपे नावतिष्ठते। तथा च बाह्यार्थस्य प्रडोलायमानत्वान्न परिच्छेद्यते, युगपद्विषयविषयिभावस्यानुपपत्तेः। नैव चार्थप्रवृत्तेन संशयेन विषयवस्तुरूपस्यापि संशय्यमानतायोगो व्यापारस्यैकत्वात्। तदेवं यथा-संशयमात्मरूपं वर्जयत् विषयं सन्देहयति तथा अवाच्यशब्द आत्मानं वर्जयन् विषयीकृतं वाचयतीति साधर्म्यसंशयरूपे ऽर्थसंशयाभिधाने स ज्ञानवस्तुनि वेत्यार्थः, शेषत्वेन व्यवस्थितिरर्थावस्तुविषया ॥ २३ ॥

उदाहरणान्तरमप्याह ॥

एवं च निर्णयज्ञाने निर्णयत्वेन निर्णयः ।

प्रक्रम्यते तदा ज्ञानं स्वधर्मेणावतिष्ठते ॥ २४ ॥

विशेषावधारणरूपे निर्णीयमानार्थस्य विषये निर्णयज्ञाने तदैवार्थपरिच्छेदे व्यापृते अपरस्वगतो निर्णयो न प्रवर्त्तते । ज्ञानस्य ह्यर्थपारतन्त्र्यं धर्मः । ततस्तु निष्कृष्टस्वरूपविचारे स्वधर्माछिप्रकृष्येत स्वातन्त्र्येण विषय एव । अत एव ज्ञानान्तरग्राह्यत्वं न भवतीति घटज्ञानमिति प्रागेव प्रतिपादितम् । ज्ञानान्तरविषयित्वत्यागात्स्वधर्मस्याहानिः । तदेवमन्यत्र व्यापृतस्य तदैव स्वविषयव्यापाराभावाद्यथा ज्ञानस्य ज्ञेयत्वं नास्त्येकस्यां संवित्तौ तथा वाचकस्य वाच्यत्वं नास्तीत्यवाच्यशब्दः प्रतिपादनावस्थो नात्मन एव वाच्यतामर्थस्य निषेधति, स्वात्मनि क्रियाविरोधात् । न च शब्दान्तरं तदानीं तद्वाच्यतानिषेधकमस्तीत्यवाच्यशब्दस्याभिधाविषयभाव अत्रोपपन्न इत्यर्थः । तथा हि शब्दान्तरस्य समवायशब्दस्य समवायस्वरूपेण वाच्य इत्येतद्वक्तुर्विवक्षितं प्रतीयत एव ॥ २४ ॥

तद्यथा ॥

सर्वं मिथ्या ब्रवीमीति नैतद्वाक्यं विवक्ष्यते ।
तस्य मिथ्याभिधाने हि प्रक्रान्तो ऽर्थो न गम्यते ॥ २५ ॥

स्ववाक्यानामसत्यार्थताप्रतिपादनाय सर्वमहं मिथ्या ब्रवीमीत्युक्ते ऽस्यापि वाक्यत्वान्मिथ्याभिधाने व्यर्थता न प्रसञ्जनीया । एवं हि प्रक्रान्तं विवक्षितस्ववाक्यान्तराणि मिथ्यात्वं न प्रतीयेरन् । अथ सत्यमपि मिथ्यार्थप्रतिपादकत्वे सत्यवाक्यस्य, वाक्यान्तराणामपि तथैव स्यादिति तेषां मिथ्यार्थप्रतिपादनं प्रक्रान्तमफलमित्यपरो ऽत्रार्थः ॥ २५ ॥

अत्रैव युक्तिमाह ॥

न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता ।
प्रतिपाद्यं न तत्तत्र येनान्यत्प्रतिपाद्यते ॥ २६ ॥

करणसन्निवेशिनस्तदैवाभिधेयान्ता विरुद्धा अन्यप्रतिपादनप्रवृत्तस्य तदेव प्रत्युदाहृत्यात्मनि व्यापाराभावात् । वस्तुस्वभावो ऽयं यत्कर्तृशक्तियुक्तं न तत्कर्मशक्तेरधिकरणं तदैव भवति, स्वातन्त्र्यपारतन्त्र्ये व्यापारे एकत्रैकदा विरोधादित्यर्थः । प्रतिपाद्यं न तत्त

न्नेत्यादिना सर्वदर्शनसाध्यमन्ते निगमितत्वाद्यत्प्रतिपादकं न तत्प्रतिपाद्यम् । यथा संशयज्ञानं वा प्रतिपादकं वाभिधानमतो नैतत्प्रतिपाद्यमिति प्रयोगः ॥ २६ ॥

ननु मा भूद्वाचकावाच्यं विरोधादात्मकर्तृकसामान्यानुप्रवेशत्वस्य मिथ्यात्मता केन वार्यते इत्येतदाशङ्क्यैतदेव निदर्शनान्तरेणोपपादयति ॥

असाधिका प्रतिज्ञेति नेयमेवाभिधीयते ।
यथा तथा ऽस्य धर्मो ऽपि नैव कश्चित्प्रतीयते ॥ २७ ॥
व्यापारस्यापरो यस्मान्न व्यापारो ऽस्ति कश्चन ।
विरोधमनवस्थां वा तस्मात्सर्वत्र नाश्रयेत् ॥ २८ ॥

साध्यनिर्देशः प्रतिज्ञा साधनाङ्गं न भवतीत्युक्ते नेयमेव सौगतस्य प्रतिज्ञात्वाविशेषात्तथा भवति, अनर्थकत्वे विवक्षितार्थासिद्धेः । अपि त्वेतद्वर्जप्रतिज्ञान्तराणां सत्ता। एवं सर्वं मिथ्या ब्रवीमीत्यस्यायथार्थताप्रतिपादने यो व्यापारो ऽभिधालक्षणः, तस्यान्यो व्यापारः, स्वविषयस्तदानीमेव नास्ति येनैकेन व्यापारेण शब्दान्तराभिधेयतां निषेधत्यपरेणान्यतो ऽप्यभिधेयतामित्यवाच्यशब्दस्याप्यसावर्थो न वाच्यः स्यादिति विवक्षितं शब्दान्तराणामवाच्यत्वं प्रतीयेतेति विरोधः स्यात्।निमित्ते व्यापारान्तरानुगमे वा ऽनवस्था स्यात् । तथा हि, यद्यवाच्यशब्दस्यापि विषयभावनिषेधाद्व्यापारान्तरं सम्भवेत्, तदा तस्यापि व्यापारान्तरस्य स्वविषये प्रवृत्तिनिषेधाय व्यापारान्तरं तदेवेत्यवस्थानादप्रतिपत्तिः स्यादित्यर्थः । व्यापारान्तराभावात्तु नैष प्रसङ्गः सर्वत्रेति । तन्न केवलं वाच्यतायामेव, अपि तु सम्बन्धिभ्यां सहान्वस्य सम्बन्धस्याभावे तयोरपि सम्बन्धिनोः शब्दार्थयोः सम्बन्धो मा भूत् । न सम्बन्धान्तराकल्पने वानवस्थेत्येषानवस्था भासयितव्या । सम्बन्धस्य स्वयं सम्बन्धरूपत्वादन्यस्यापि दोषस्यायोगादित्यर्थः । अथ वा सर्वत्रेति । सर्वमिदं मिथ्याब्रवीमीत्यसाधिका प्रतिज्ञेत्यादावित्यर्थः । तदेवं परप्रसिद्धसंयोगसमवायलक्षणसम्बन्धाश्रयेण शब्दार्थप्रविभागे ऽतिव्याप्तिरदृष्टवशात्परिहृता अव्याप्तिरपि । साक्षात्समवायस्यावाच्यत्वे विकल्पितेन रूपेण सम्बन्धितया वाच्यत्वेन तटस्थस्य समवायशब्देनामुखीकृतस्य समवा-

यस्यावाच्यत्वाविधानं विरोधीभावादिति प्रौढवादितया शास्त्रान्तर-सिद्धसम्बन्धाश्रयेणापि शब्दार्थनियमो व्यवस्थापितः ॥ २७ ॥ २८ ॥

इदानीं स्वनिकायसिद्धं सबन्धमुपपादयितुमाह ॥

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ २९ ॥

समवायादिनिमित्तानपेक्षयैवोच्चरितमात्राच्छब्दादर्थप्रत्ययोत्पत्तेरकृत्रिमा शक्तिरवसीयते। अर्थभङ्गत्वेन हि शब्दमात्रस्यापि योगमप्रवृत्तसत्ता अपि प्रतिपद्यन्ते। तथा योग्यता स्वाभाविकी सिद्धा, सङ्केतास्तु तामेव द्योतयन्ति। तद्यथा चक्षुरादीनां रूपादिविषये पुरुषप्रयत्नानपेक्षा ग्राहकता। न हि यत्नेनापि रूपे रसननिवेशः शक्यक्रियः। एवं गवार्थे घटशब्दनिवेशोऽसाधुः। तथा हि भाष्यम्–यो हि गामश्व इति ब्रूयान्न जातु चित्सम्प्रत्ययः स्यादिति। यथारुचि सङ्केते हि न वाचकशक्तिपुरःसरीकारेणान्यविषये शब्दाः प्रवर्त्तन्ते। प्रसिद्धा अपि समयमात्रं तत्। संज्ञाशब्दानां तु सर्वसंज्ञिप्रत्यापनशक्तियुक्तत्वेऽपि विसृष्टे संज्ञिनि शक्त्यवच्छेदः सामयिकः। इयं च योग्यता शब्दानामर्थप्रतीत्यनुसारेणैव व्यवस्थापयितव्ये अभेदे,न शब्दार्थयोः प्रत्ययादध्यासफले वावस्थितेति स एव मुख्यसम्बन्धः। अत एव प्रतीतावर्थस्यापि विषयभावेनापेक्षणात्पारन्तर्यसामान्यात्सम्बन्ध इति व्यपदिश्यते। यद्यपि चेन्द्रियाणि कारकत्वादज्ञातान्येव ज्ञानं जनयन्ति, शब्दस्तु ज्ञापकत्वात्स्वज्ञानेनान्यधीहेतुः, तथाऽपि पुरुषप्रयत्नानपेक्षा शक्तिः साधारणीति साम्यम् ॥ २६ ॥

इहार्थगत्यर्थः शब्दप्रयोगः। साधोश्चार्थगतिरपशब्देभ्य इति तेषामपि सम्बन्धोऽर्थेन प्रसक्त इत्याशङ्क्याह ॥

असाधुरनुमानेन वाचकः कैश्चिदिष्यते।
वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ॥ ३० ॥

पुण्यपापयोः। विवागशक्तव्यक्तीनां बालवदन्धादिवदनुमिता कृतिर्विदुषां वाचिका। न हि विद्वांसोऽर्थमपशब्दात्साक्षादेव पश्यन्तीति नापशब्दानामर्थेन कश्चित्सम्बन्धः।अत एव हि पुरा कल्पेऽनृतादिभिरिव शब्दैरपि रक्षितासीदिति ब्रह्मकाण्डे उक्तम्।अवाचका-

एवापभ्रंशाः। ते तु सादृश्यात् साधुशब्दमनुमापयन्ति। तेभ्यो ऽर्थसम्प्रत्यय इति। तथा च संग्रहकारकः शब्दप्रकृतिरपभ्रंश इति। अद्यत्वे त्वधर्मबाहुल्यादनृतादिवद् बालानां रूढिः। तथा चावाच्यावधानेनैवापशब्देभ्यो ऽर्थप्रतीतौ न म्लेच्छितवै नापभाषितवै साधुभिर्भाषितव्यमिति शास्त्रप्रामाण्यात्साधूनामेव धर्माङ्गत्वमिति तदनुसृतिः शास्त्रेण। तथा च भेदस्याभेदपूर्वकत्वात्पुरुषविकल्पो नियमेनानन्त्यादपशब्दानामभिन्नसाधुशब्दपूर्वकत्वमेव निश्चीयत इति शब्दप्रकृतिरपशब्दः सिद्ध इति शब्द एव विद्या। तदेवम्। यथा विद्यावस्था भिन्नब्रह्मात्मिका तथा साधुशब्दावस्था विद्या। यथा वा विद्याया भेदो वितथः, तथा ऽपभ्रंशावस्था वाप्यलंरूपेति परमार्थत इति तदितरापेक्षो विकल्पः। अविद्यादशापेक्षमेव च समानायामर्थगतौ शब्देन चेति भाष्यम्। अर्थगताविति वचनात्। अर्थाभिधानमिति शब्दानामेव कर्मपतित (?) विद्यायां भूयसा ऽपशब्दे व्यवहारादर्थप्रतीतिमात्रं भवत्येवेत्यर्थः। रूढत्वात्तु व्यवहारस्याविशेषं ग्रन्थकार आह। तत्र च शास्त्रं नियामकं साधुशब्दैरेवार्थो वक्तव्यो नापशब्दैरेवं क्रियमाणमभ्युदयकारि भवतीति। पुण्यपापयोः, पुण्यं पापानिमित्तम्। नियमः क्रियते। साधूनामज्ञानाच्छास्त्रपूर्वकत्वात्प्रयोगाभ्युदय इति। असाधुप्रयोगे तु धर्माभाव एव पापत्वेनोपचर्यते। न म्लेच्छितवै इत्येतस्य निषेधस्यापि क्रमात्पापत्वमेव के चिदिच्छन्ति॥ ३०॥

समवाये सम्बन्धान्तराभावः पूर्वमुक्तः अस्मिंस्तु दर्शने स न प्रसजतीत्याह॥

सम्बन्धशब्दे सम्बन्धो योग्यतां प्रति योग्यता

सम्बन्धशब्दो योग्यतालक्षणं सम्बन्धं योग्यतयैव प्रतिपादयति। एवं समवायशब्दो ऽपि योग्यतयैवानादिसिद्धया स्वार्थप्रतिपादकः। तथा योग्यता सिद्धापीति सर्वत्रास्य सम्बन्धस्य व्याप्तिः॥

सङ्केतस्य तर्हि नोपयोग इत्याह॥

समयाद् योग्यता सम्बिन्मातापुत्रादियोगवत्॥ ३१॥

अनादिसिद्धार्थविषयव्यापारस्य शब्दस्य वृद्धव्यवहारस्य परम्परापरपर्यायात्समयात्स्वाभाविक्येव योग्यता निश्चीयते न तु स-

मयमात्राद्तथाभूते तथाभावः समुचितः । न हीयमस्य पुत्रस्य मातेति जन्यजनकभावः सामयिको वस्तुसिद्धस्यैवैवं प्रतिपादनात् । अथ प्रत्यक्षपूर्वकं संज्ञाकर्मेत्यस्मद्विशिष्टानामर्थे शब्दनियोगः सामयिक एव । नैतत् । तैरपि योग्यतानुसारेण पूर्वाभ्यासाद्यनिवेशात् । तदुक्तम् । अन्यगतः साभ्यासः समयः कैश्चिदिष्यत इति । किं भवानाहेति वार्थमत्राविनाभावमवगत्य विशेषप्रश्नादवधार्यते । कैश्चिदिति नकेनापि प्रतिशब्दस्य योग्यता पुरुषेणान्यत्र सङ्केतेपि प्ररूढेऽर्थे गवादिशब्दादिति प्रतिपत्तिः । न च पुरुषे नियोगः शक्यक्रिय इति वक्ष्यति ॥ ३१ ॥

इदानीं कार्यकारणभावं शब्दार्थयोः सम्बन्धमाह ॥

शब्दः कारणमर्थस्य स हि तेनोपजन्यते ।
तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ॥ ३२ ॥

श्रोतृबुद्ध्युपारूढस्यार्थस्य शब्दः कारणं जनकत्वात् । शब्दार्थो ह्यर्थो बहीरूपतया ऽवस्थीयमानः । तथा चान्यद्वक्तृबुद्धिनिवेशिनो ऽर्थत्वात्कारणभूताच्छब्दः श्रुतिविषयमनुप्राप्तः प्रतीयते इत्यर्थो ऽपि शब्दकारण एवोभयथा कार्यकारणभाववर्णसाधुतादिर्विलक्षणयेन शब्दार्थयोरभेदेन सम्बन्धो ऽध्यासलक्षणः प्रतिपादितो भवति । यथा हि बुद्धौ शब्दार्थयोः पूर्वमभेदेनावस्थानम् । न हि विवक्षितो ऽर्थः शब्दसम्भेदशून्यः सङ्कल्परूपस्य तस्य प्रतिभानादनादिशब्दभावनमनु विद्यते हि तिरश्चामपि च ज्ञानम् । अत एव स्थानकरणव्यापारादिभिर्व्यक्तो ऽर्थरूपः शब्द इति शब्दश्रोतृभिरवधारितः, तथैव स्वरूपाच्छुरणयार्थमेव गमयति । प्रतिपाद्यप्रतिपादकयोर्हि परस्पराभिप्रायसंक्रान्तिर्व्यवहार इति अन्तः स्थितमर्थं मूलावस्थायामप्यपरित्यक्तं वक्तृबुद्धिसमाविष्टं श्रोतृनर्पयति । शब्दश्रोतापि च तथैव स्वाभाविकानुसारेण प्रतिपद्यते समाविष्टभावनः, तेन चोद्बोधितशब्दभावनः प्रवर्त्तत इति निर्णीतं वाक्यपदीये । एतदेवमेकीभावपक्षीभाव एवैकवाक्यतया सम्बन्धः स्थितः सिद्धान्तानुगुणः । यथाविवक्षं च शब्दार्थमवगमयति नियतस्वरवर्णानुपूर्वीक इति स्वरविपर्ययविवक्षान्तरमिदं शत्रुशब्दे न मन्तव्यम् । परस्परभेदेनान्यत्वादस्य कारणमेव गमयति शब्द इत्यन्तरा विवक्षान्तरं लाघवादस्फुटप्रतिभासम् । प्रथमवर्णोच्चारणात्-

न्तरं द्वितीयवर्णोच्चारणवदनुमीयते ॥ ३२ ॥

ननु बुद्ध्युपारूढे शब्दार्थे कथमोदनं भुङ्क्त इत्यादिव्यवहार इत्याशङ्कयाह ॥

भोजनाद्यभिमन्यन्ते बुद्ध्यर्थे यदसम्भवि ।

बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ॥ ३३ ॥

बुद्धिपरिवर्त्तिनं क्रियाकारकयोर्विज्ञाननये साध्यसाधकभावसिद्धः प्रतिभासभावः।तथा हि।बुद्ध्यर्थे बुद्धौ शब्दार्थो भोजनं भोक्ता तत्सम्बन्धश्च । यदसम्भवित्वेनाभिमतं तदपि सम्भवत्येव । कदेत्याह, बुद्ध्यर्थादेवौदनादिप्रतिभासादपरस्मिन्ननुयुज्यमानाकारज्ञानसंवेदने जाते सति। वाक्यवादिनः पदमात्रात्प्रतीतेरपरिसमाप्तेः। अभ्युपगमवादश्चायम्।बाह्यनये ऽपि हि शब्दार्थस्य बुद्धिपरिवर्त्तिनः प्रतीतेः।क्रियाकारकभावे दृश्यविकल्पयोरभेदाध्यवसायाद्व्यवहारसिद्धिर्भवत्येव । तथा हि बाह्यार्थे सति दर्शनं, दर्शनादर्थनिर्भासः, तस्मिन्सति वक्तुमीहा, ततः प्रतिभादेः शब्दोच्चारणमिति परम्परया बाह्य एव वाच्यं तत्र प्रवृत्तिरिति विनापि तु बाह्यार्थं, शक्यते विज्ञानमात्रदर्शने ऽपि तन्निर्भासवशेन क्रियाकारकसम्बन्धो मेलयितुमित्येवोपन्यस्तम् ॥ ३३ ॥

इतश्च बुद्धिपरिवर्त्ती शब्दार्थः, ततः शब्दार्थसम्बन्धो नित्य उपपद्यत इत्याह ॥

अनित्येष्वपि नित्यत्वमभिधेयात्मना स्थितम् ।

घटादिशब्दादुच्चारितादर्थाकारत्वग्रहस्य प्रत्ययस्य सदैवोपजननात्, बाह्येन रूपेण प्रध्वंसित्वे ऽप्यभिधेयत्वेन शब्दार्थस्य नित्यत्वान्नित्यो ह्यर्थवतामर्थैरभिसम्बन्ध इति प्रवाहनित्यताश्रयेण पस्पशायामुक्तम् ॥

कूटस्थनित्यताश्रयेणाप्याह ॥

अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न भिद्यते ॥ ३४ ॥

पदार्थानां सतामसत्त्वविरोधादतीतानागतयोरर्थयोर्नास्ति प्रत्ययजननमद्वयस्य तत्त्वस्य सर्वस्यात्मनो ब्रह्मणो द्रव्यलक्षणस्य सामर्थ्यमेव तत्रानित्यत्वमिति,तस्य नित्याद्द्रव्यरूपात्तस्माद्भेदाभावादनित्यशब्देनोपाधिभेदभिन्नस्य सामर्थ्यं, पूर्वोक्तेनैव न्यायेन तस्यैव प्रतिपादना-

स्य (भावानामभावनो भावेषु) ? कश्चिदित्यर्थः । ततश्च घटादिशब्दैः सर्वावस्थमुपाधिविशिष्टं ब्रह्मद्रव्यमेव नित्यं प्रतिपाद्यत इति नित्यः शब्दार्थसम्बन्धः सिद्धः । तदुक्तं द्रव्ये ऽपि पदार्थे एष एव विग्रहोऽन्यायः, सिद्धे शब्दे ऽर्थे सम्बन्धे चेतीति ॥ ३४ ॥

एवं सम्बन्धं स्वाभाविकमवस्थाप्य तत्रैवोपोद्बलकं परमतेनाह ॥

शब्देनार्थस्य संस्कारो दृष्टादृष्टप्रयोजनः ।
क्रियते सो ऽभिसम्बन्धमन्तरेण कथं भवेत् ॥ ३५ ॥

इहार्थे कं चनाप्यनभिदधतीनां शाबरादिविद्यानां विषादिशमने सामर्थ्यं दृष्टं,प्रतितन्त्रं प्रसिद्धानां च बीजाक्षराणां अप्यमानानामदृष्टहेतुत्वमत एवोन्नीयत इति ॥ ३५ ॥

अवाचकेष्वपि शब्देषु, अर्थेन सह संस्काराम्यथानुपपत्त्या सम्बन्धभावात्सर्वत्र सम्बन्धोऽवश्य इति कश्चित्तं निवारयति ॥

नावश्यमभिधेयेषु संस्कारः स तथाविधः ।
दृश्यते न च सम्बन्धस्तथाभूतो विवक्षितः ॥ ३६ ॥

घटादिशब्देभ्यो ऽर्थस्य घटादेर्दृष्टादृष्टप्रयोजनस्य संस्कारस्य च दर्शनादत्र सम्बन्धो न स्यादिति नेदृशसंस्कारनिमित्तमसौ विवक्षितः ॥ ३६ ॥

अपि तु ॥

सति प्रत्ययहेतुत्वे सम्बन्ध उपपद्यते ।
शब्दस्यार्थे यतस्तत्र सम्बन्धो ऽस्तीति गम्यते ॥ ३७ ॥

प्रतिनियतार्थप्रत्यायनान्यथानुपपत्त्या शब्दार्थयोः सम्बन्धो योग्यतालक्षणश्चक्षूरूपादिकमिवत्य(कावुपक्षमिव) ? ज्ञाय इत्यर्थः अर्थे नियते नियतस्य प्रतीतिहेतुत्वं सम्बन्धे युज्यते नान्यथाति यतस्तस्मादर्थप्रत्यायनात्कार्यादस्ति सम्बन्धः शब्दार्थयोरिति निश्चीयते, नार्थविशेषरूपः संस्कारो ऽत्र सम्बन्धावेदकः । तत्रानुपूर्वीमात्राद्विशिष्टेन प्रभावनाविनानोदयादपरतः प्रत्यायकत्वानपेक्षणादस्य गः । प्रतीतिनिगमहेतुः शब्दार्थयोः सम्बन्धः प्रतीतिक्रतो न प्रतिलक्षणादुपकारात्तत्सिद्धिः । यदपि मीमांसकैः कार्याच्छब्दं विज्ञा

ऽर्थो विज्ञायते सम्बन्ध इत्युक्तं, तदप्यनेनैव दर्शनेन व्याख्याने। ततः कारणाच्छब्दश्रवणानन्तरमर्थज्ञानं भवति । सम्बन्ध इति सति । प्रत्य ये हेतुत्वमित्येवोक्तं भवति, अन्यथा शब्दार्थयोः कार्यकारणभाववर्णननिमित्तं नियमोक्तं स्यात् ॥ ३७ ॥

सामयिकस्तु सम्बन्धो न युज्यत इत्याह ॥

नित्ये ऽनित्ये ऽपि बाह्ये ऽर्थे पुरुषेण कथं चन ।
सम्बन्धो ऽकृतसम्बन्धैः शब्दैः कर्त्तुं न शक्यते ॥ ३८ ॥

नित्ये तावदर्थे जात्यादौ नित्यशब्दार्थदर्शने वा सर्वस्मिन्पुरुषेणेदम्प्रथमतया शब्दस्य सङ्केतः कर्त्तुं न पार्यते। नित्यत्वादेवेदानीमुपजातस्य पुरुषस्य तद्व्यापारात्पूर्वमपि । तस्मादाकाशकालदिगादिदर्शने वा ब्रह्मणः शब्दवाच्यत्वात्सर्वेषामर्थादिसम्बन्धादादिपुरुषेणापि कृतौ अशक्त्यनुसारेऽणास्य प्रतिपादितत्वादादिशब्दार्थात्प्रभृति च प्रकृतवृत्तौ किमन्यन्नित्यत्वात्स्यात् । अनित्ये ऽप्यर्थे घटादौ कार्यशब्ददर्शने वा प्रत्यक्षेण सर्वग्रहणायोगाज्जातिद्वारेणापि ग्रहणे जातीनामेकास्मन्नर्थे भूयसीनां भवे विवेचनानुपपत्तेरनुमानेनापि शब्दाभेदेनार्थस्य प्रतिपत्तेः, शब्दार्थौ सङ्केतस्यायोगात् । पारिशेष्याच्छब्दैरेव निरूप्य प्रियार्थसङ्केतः क्रियते। तथा च निरूपकाणामपि शब्दानां सङ्केतः स्वशक्तिरिति तत्रापि शब्दान्ते निरूपणे ऽनवस्था, प्रकृतसमयैर्निरूपणस्यानुपपत्तेरिति सुदूरमपि गत्वा कस्य चिच्छब्दस्य स्वाभाविकी योग्यतैषणीया। तथा चाविशेषात्सर्वेषामपि तत्प्रसङ्ग इति सिद्धः स्वाभाविकः शब्दार्थयोः सम्बन्धः समयवशादभिव्यज्यमानस्वरूपः ॥ ३८ ॥

इदानीं यत्सम्मतुवार्तिके भाष्ये ऽभिहितं सम्प्रतिसत्तायां यथा स्यात् भूतभविष्यत्सत्तायां मा भूदिति । तत्र भूतभविष्यतोः सत्ताव्यवच्छेदार्थमिषेण प्रकृतसम्बन्धनित्यत्वं निर्वाहयितुमाह ॥

व्यपदेशे पदार्थानामन्या सत्तौपचारिकी ।
सर्वावस्थां तु सर्वेषामात्मरूपस्य दर्शिका ॥ ३९ ॥

व्यपदेशे व्यपदेशनिमित्ते शब्देन प्रत्यायने पदप्रत्याय्यानामर्थानां बाह्यानां वस्तूनां बाह्यविलक्षणा सत्ता बुद्ध्योपचारिता, बाह्यार्थस-

त्तया शून्या । प्राक् तत्संविदो ऽप्रामाणिकत्वात्सत्तामात्रगम्या सा। तत्र च प्रहतसत्ताभिमान इति तदनुरोधेनोपचारसत्ता वाचोयुक्तिः सुतरां व्यवहार इति शब्देष्वव्यवहार इतीयमपि व्याख्या । तत्र चेयमेव शरणमस्यापि बाह्यार्थानामात्मनाम इव शब्दपरामर्शमन्तरेणैव रूपासंस्पर्शस्याभावात् ॥ ३९ ॥

एवं चानयैव सत्तया पूरिते व्यवहारे यद्यत्क्रियाकारणादिना (काष्ठनुसप्राणकेन चिलिबन्धनेना) ? न्यासत्वात्कल्प्यते तद्धर्मता सा, न तत्र विनास्माकं व्यवहारे तस्यात्रास्त्यनुप्रवेशो, यदि परमस्यामेव सा प्रतिबिम्बिना व्यवह्रियत इत्येतत्प्रतिपादयितुं निदर्शनोपक्रममाह ॥

स्फटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः ।
स्वशक्तियोगात्सम्बन्धस्ताद्रूप्यमुपगच्छति ॥ ४० ॥
तद्वच्छब्दो ऽपि सत्तायामस्यां पूर्वं व्यवस्थितः ।
धर्मैरुपैति सम्बन्धमविरोधिविरोधिभिः ॥ ४१ ॥

बाह्यस्य वस्तुनो नियतरूपत्वाद्भावाभावसाधारण्यानुपपत्तेर्घट इत्युक्ते ऽस्ति नास्तीति शब्दान्तरोपधीयमानरूपसंसर्गविरोधः स्यादिति उपचारसत्तासमाविष्टः शब्दार्थः । तथा हि सर्वसाधारण्यात्पदान्तरोपधीयमानरूपविशेषसहः कालाभ्रस्फटिकादिवत्सो ऽर्थ इति यथायथमस्ति नास्तीति भावाभावसमन्वयवशेन नियतः प्रतीयते। तथा हि स्वच्छत्वात् स्फटिकादिद्रव्यतो वाऽऽदिसंसर्गो ऽपरित्यक्तस्वरूपं तद्रूपमिवाभासते। तथोपचारसत्तापि स्फटिकमणिस्थानीया सद्रूपमत्यजन्ती प्रतिषेधादिभिरुपादानैरभिसम्बध्यमाना ताद्रूप्यमिवायाति प्रतिषेधात्मिकेवाभाति। स्वशक्तिरच्छत्वं स्फटिकादेर्नानाकारेण ग्रहणयोग्यत्वं सर्वविषये स्वीकारयोग्यत्वं । सामान्यात्मकत्वाच्छब्दो ऽपीति शब्दार्थः, शब्द्यत इति कृत्वा। यद्वा शब्दोऽस्याः प्रत्यायकत्वेनावस्थितो ऽर्थद्वारेण स शब्दान्तरवाच्यैर्धर्मैः सम्बध्यते । विरोधिवचनं साकल्यप्रतिपादनार्थम् । सत्तायामस्यामिति । ज्ञानाकाररूपायां, पूर्वमित्याभासावस्थायां पदात्प्रतीत्यवसरे सम्बन्धं याति । व्यवहारकाले वाक्यावस्थायामादिग्रहणे कालाद्यविरोधः। अविरोधिनो धर्मा भावात्मकाः। ते चोपचारसत्तायामनुगुणाः । यथा स्फटिकस्य मल्लिकाकुसुमादय इति न ते

रूपतिरस्क्रियाहेतवः। अत एव तत्सन्निधीयते तदात्मनोपचारसत्तया विश्रान्तिवत्त्वाद्विरुद्धा हि बाह्या सत्ता तस्य पूर्वरूपतया प्रत्यासन्ना। तथा चोच्यते यत्रान्या क्रियापदं न श्रूयते तत्रास्ति र्भवन्तीपर इत्यादि। वर्तमानावस्था वर्णपूर्णत्वात्करणानि भवन्तीपर इत्युक्तं। सत्ता वा विरुद्धधर्मसामान्यमिति यथायथं विशेषैस्तस्यास्तत्त्वपरिपूरणं। कृतविरोधिनस्तु धर्मा अभावात्मकाः। ते हि प्रतिषेधात्मकाः रूपतिरोधानमुपचारसत्तया जपाकुसुमादय इव स्फटिकस्य कुर्वन्ति। यद्यपि चोपचारसत्तायामुभयेषामपि समन्वयाद्विरोधाभावः। तथापि बाह्यापेक्षयैतदुक्तम्। बाह्यस्य नीलोत्पलादेरभिन्नस्य विशिष्टत्वान्नीलमुत्पलमित्युपचारसत्तायामेकविवेकाद्द्रव्यात्मा गुणसंसर्गभेदादाश्रीयते। पृथगित्यादिविशेषणविशेष्यभावे च वक्ष्यमाणा प्रतिक्रियोपपद्यते। स्फटिकं विमलं द्रव्यैर्यथा युक्तं पृथक् पृथक्। नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यत इति अपरोऽत्रागमपाठः॥ ४१॥

तमेव विरोध्यविरोधिधर्मसम्बन्धं क्रमेण व्याचष्टे॥

एवं च प्रतिषेध्येषु प्रतिषेधप्रकल्पने।
आश्रितेषूपचारेण प्रतिषेधः प्रवर्तते॥ ४२॥

बुद्ध्याकारस्य नानाविधधर्मसमन्वययोग्यत्वे अब्राह्मणादिषु यथोपपत्तिः। तथा हि। सत्ताविरोधान्निषेधायोगान्न ब्राह्मणोऽत्र सन्। असत्त्वे तु कथं तत्र शब्दप्रवृत्तिर्बाह्यशब्दार्थवादिनाम्। तथा च पुनरपि निषेधोऽनुपपन्नः। तदुक्तं, न सतां च निषेधोऽस्ति सोऽसत्सु च न विद्यते। जगत्यनेन न्यायेन नञर्थः प्रलयं गत इति। यदा तूपचारसत्तासमाविष्टः शब्दार्थः तदा सामान्येन भावाभावसाधारणतया ब्राह्मणशब्देन क्षत्रियादिषु सादृश्याध्यारोपितो ब्राह्मणार्थः समुल्लिखित इति प्रतिषेधविषये दर्शिते नेति निषेधः प्रवर्तते। निर्विषयस्य निषेधस्याप्रवृत्तेः। तस्यापि च बुद्ध्याकारभावस्य भावैकनियतत्वाद् बुद्धिसत्तयैव सत्ता, नास्ति साधारणत्वेन योग इति। तस्य येयं बहीरूपता व्यावहारिकैर्दृश्यविकल्पैराकारादध्यवसिता तत्रैव निषेधः फलति। तथा हि यो ऽयं ब्राह्मणार्थः स बहिरसन् केवलं भ्रान्त्या क्षत्रिये ऽध्यवसित इति स्वाभाविकं, ब्राह्मणार्थनिवृत्तिरेव च द्योत्यते। तदुक्तं भाष्ये, यदि पुनरयं निवृत्तपदार्थको ब्राह्म-

णशब्दः किमर्थं प्रयुज्यते, एवं यथा विज्ञायेत, नेति ह्युक्ते सन्देहः स्यात् कस्य पदार्थो निवर्तेत इति । अत्र सर्वथा निवृत्तपदार्थकत्वे प्रयोग एव न स्यादिति बाह्यापेक्षयैव निवृत्तपदार्थकत्वम् । उपचारसत्तापेक्षया तु प्रयोग इति स्फुटमुक्तं भवति । प्रतिषेधविषयप्रकल्पना च प्रयोग इति तदेवोपचारफलम् ॥ ४२ ॥

अविरोधिधर्मसम्बन्धमुपचारसत्ताविशिष्टस्यैव प्रतिपादयितुं मुख्यसत्तायां तावदसम्भवमाह ॥

आत्मलाभस्य जन्माख्या सत्ता लभ्या च लभ्यते ।
यदि सज्जायते कस्मादथा ऽसज्जायते कथम् ॥ ४३ ॥

आत्मलाभो वस्तुस्वरूपप्राप्तिः जन्म कथ्यते । तत्र च त्रितयमन्वयि, लब्धा कर्ता, लभ्यं कर्म, लाभश्च क्रिया. एतच्च त्रितयम् । तथा च जन्मविरोधः सत आत्मलाभायोगात् । लब्धात्मा हि स उच्यते । कारणे शक्तिरूपतया ऽवस्थाने ऽपि सर्वथा ऽजन्मनो जन्मायोगादवश्यं कस्य चिदंशस्य लाभो ऽभ्युपगन्तव्य इति येन रूपेण सत् न तेन जन्म, येन च जन्म न तेनास्तीति जायते ऽङ्कुर इति प्रयोगानुपपत्तिः । जन्मानुरोधादसत्त्वाभ्युपगमे धात्वर्थे कर्तृत्वानुपपत्तेः प्रत्ययार्थविरोधः । तदनुरोधात्सत्त्वाभ्युपगमे जन्मलक्षणधात्वर्थविरोध इत्यर्थः ॥ ४३ ॥

अत्रैवार्थे सदृशं दृष्टान्तमाह ॥

सतो हि गन्तुर्गमनं सति गम्ये प्रवर्तते ।
गन्तृवच्चेन्न जन्मार्थो न चेत्तद्वन्न जायते ॥ ४४ ॥

स्वरूपप्रसारणलक्षणा गमिक्रिया जनिक्रियासदृशी । तत्र च सत एव गमनं गन्तुर्दृश्यते व्यतिरिक्तसद्रूपकर्मविषयं । एवमिहापि प्रादुर्भवितृगन्तृवत्सत्त्वे जन्मानुपपत्तिः । अथ जन्मानुरोधः तदा सत्त्वाज्जायते क इति कर्तृत्वायोगः । गम्यवच्च लब्धव्योऽप्यन्वयव्यतिरिक्तो नास्तीति बाह्यशब्दार्थाभ्युपगमेऽनुपपत्तिः ॥ ४० ॥

उपचारसत्ताश्रयेण तूपपत्तिरित्याह ॥

उपचर्यं तु कर्त्तारमभिधानप्रवृत्तये ।
पुनश्च कर्मभावेन तां क्रियां च तदाश्रयाम् ॥ ४५ ॥

**अथोपचारसत्तैवं विधेयास्त्वतलादयः।**
**जन्मना तु विरोधित्वात् मुख्या सत्ता न विद्यते ॥४६॥**

तु शब्दो (बाह्यसत्तादयो विशेष)? मुपचारसत्तायाः सर्वसत्त्वेन सम्बन्धं द्योतयति। इह सर्वात्मना परिनिष्ठितं जायत इति न व्यपदिश्यते। नापि सर्वात्मना ऽसद्रूपमाश्रितपूर्व परावस्थ सत्तासादनोन्मुखे वस्तु जायते शब्दविषयः। तथा च तत्रोत्तरसद्रूपमनस्थाविशेषं पूर्वावस्थाकारणानां कार्योन्मुखलक्षणायामुपचर्या ऽङ्कुर इति अभिधानस्य प्रवृत्तौ जायत इति कर्तृत्वोपपत्तिः। आश्रितपूर्वावस्थत्वात्तत्र जन्मार्थोपपत्तिः। एवं च कृत्वा ऽऽश्रितपूर्वावस्थ उपचरितोत्तरावस्थश्च सम्मूर्छितार्थात्मा जायत इत्यभिधानस्य विषयः। पूर्वावस्थाश्रयणावलम्ब्यत्वेन कर्त्रैवोपचरितः कर्म नान्यदिति बुद्ध्याविवेचनमाश्रित्य तदाश्रयतया साधनयोः कर्तृकर्मणोराश्रयणास्पदं क्रियापेक्षत्वात्साधनभावस्य तन्निबन्धनं, तेनाकर्तृकर्मणी आश्रयो यस्याः साधनाधीनजन्मत्वादित्युभयथा ऽपि पाठे तां जनिक्रियां पूर्वापरीभूतावयवसमाहारात्मिकामध्यारोप्य जायते ऽङ्कुर इति प्रयोगसमर्थने अर्थत्यभ्युपगमद्योतनाय। एवं च सत्युपचारसत्तैवमाश्रिता भवति। तथा च तत्रैव कर्त्तर्ययं जायत इति लकारो जायत इति चोक्तम्। जातवानिति च क्तवतुः, जन्माङ्कुरस्येति षष्ठी। यद्वा कर्तृकल्पनया लकारः कर्त्तरि प्रत्ययः, क्रियाकल्पनया धातुः प्रकृतिः, कर्मकल्पनया कर्मकर्तृव्याख्याने वाक्यमङ्कुर आत्मानं लभत इति द्वितीया कर्मणि। एवमात्मानमात्मना बिभ्रदस्तीत्यादावपि वाच्यमेवं विधो वा सर्वः परिकर उपचारसत्तनि निबन्धनत्वादद्वयमभेदेन व्यपदेशः। मुख्या तु सत्ता पूर्वोक्तादिविधा पूर्वोक्ताद्विरोधान्न सङ्गच्छते। अत आत्मलाभस्य जन्माख्येति पूर्वपक्षीयसिद्धान्त आत्मलाभोन्मुखताजन्य.। तथा च वक्ष्यति। पूर्वस्मात्प्रच्युतो धर्मादप्राप्तो चोत्तरं पदम्। तदन्तराले भेदानामाश्रयाज्जन्म कथ्यत इति। यथा पूर्वामवस्थामजहत्संस्पृशन्धर्ममुत्तरम्। सम्मूर्च्छित इवार्थात्मा जायमानो ऽभिधीयते इति। पुनश्च कर्मभावेन तमिति क्वचित्पाठः। तत्र तं कर्त्तारमेव पुन कर्मभावेनोपचर्येति योजना ॥ ४६ ॥

इदानीं जन्मोत्तरकालभाविनमस्तित्वं भावविवक्षामङ्कुरोऽस्तीत्ययं शब्द उपचारसत्तासमाविष्टमेव प्रतिपादयति अन्यथा ऽयांगादित्याह ॥

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते ।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ ४७ ॥

आत्मनात्मानं धारयतीत्यस्तेरर्थः । तथा च निरुक्तकारः । अस्तीत्युत्पन्नस्यात्मधारणमुच्यते इति । व्यतिरिक्तकर्तृप्रतिषेधार्थमात्मनेति वचनम् । तथा च वास्तवस्य कर्तृकर्मक्रियाभेदस्याभावो भिन्नरूपत्वाद्वस्तुन इत्यर्थः । आत्मना सकर्मकत्वात्तर्ह्यस्तेः प्रतिषिद्धकर्मत्वमपावृत्तमित्यत्राह । अन्तर्भावादित्यादि । असावित्यसिधातुः तदर्थो वा । धात्वर्थेन कर्मणा उपसंग्रहादकर्मको ऽयं धात्वर्थ इति प्रसङ्गाद्व्युत्पादयति । जीवतावपि प्राणानामप्यात्मलक्षणस्य कर्मणो धातुवाच्यत्वात्क्रियान्तरमेवेदमात्मानं धारयतीति व्याख्यायते । तत्र भावतः कर्मयोग इत्यर्थः । यथा वक्ष्यति । न तत्र (धारिणि) ? प्राणा जीवतिस्तु क्रियान्तरमिति । एवं जायत इत्यत्राप्यात्मानं लभत इत्यर्थः । निर्वचनेन भूतत्वकर्मत्वं द्रष्टव्यम् । यो हि धात्वर्थाद् बहिर्भूतः कर्मार्थः स कर्मव्यपदेशहेतुः । धातोरर्थपूरणे हि सम्पन्ने ऽस्माद् बाह्यस्य तेन सम्बन्धभेदाधिष्ठाने सति या कर्मता गामानयति शब्दात्, प्रविशपिण्डीमित्यादौ च सामर्थ्यलब्धा, सा च सकर्मकव्यपदेशनिबन्धनमिह तु क्रियाकारकसंसर्गपर्यन्तो दीर्घो धात्वर्थ इति भेदाभावः ॥ ४३ ॥

एवं भेदाभावात् अयं वस्तुनो व्यवहारो युज्यत इति प्रतिपाद्याधुना जायत इति वत्कर्तृयोगात्स्वरूपाभावादप्यसंमुक्तोपचारसत्तायामेवोपपत्तिं प्रतिपादयति ॥

प्राक्च सत्ताभिसम्बन्धान्मुख्या सत्ता कथं भवेत् ।
असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववत् ॥ ४८ ॥

अस्तीति पूर्वापरीभूता साध्यमनावस्था प्रतीयते । अन्यस्यां चावस्थायां निष्पन्नरूपः कर्ता नास्ति । साधनसम्बन्धात्पूर्वमपि सद्भावं नास्ति । न चान्यस्तद्व्यतिरिक्तो ऽर्थसाधनमात्रप्रज्ञापन इति सैव सत्ता साध्यं च मुख्यतो न सम्भवति । तथा हि सिद्धरूपेण सा-

धनैन भवितव्यम् । न च सत्तामनुभवन्नेव सिद्धतया प्रज्ञायते, अनुभूतसत्तासम्बन्धश्च न साध्य इति, लब्धात्मलाभस्यात्मधारणलक्षणा सत्ता, बुद्ध्या पूर्वापरीभूतयैवाभिधीयते । तत्र चोपचारसत्तारूढस्य पूर्वभागः कर्ता, अपरस्तु साध्यः कर्मेत्युभयाश्रयक्रियास्वरूपान्तर्भावपूर्वं जायत इति वस्तुपचारसत्तायाः कर्तृत्वमाश्रित्यास्तीति प्रयोगोपपत्तिः । तदेवमस्ति, नास्ति, जायत इति प्रयोगत्रयमुपचारसत्तासमाश्रयणेन समर्थितम् । एते च त्रयो भावविकाराः । एतेष्वेव चान्ये त्रयो ऽन्तर्भवन्ति । तथा हि, जन्मनि वृद्धिरवयवोपचयात्मकाऽन्तर्भूतेति पूर्वं जायत इति वद्धर्धन इत्ययमपि प्रयोगः समर्थनीयः । एवं परिणामो धर्मान्तराविर्भावलक्षणो ऽत्रैवान्तर्भूत इति परिणमत इत्यनेनैव न्यायेन प्रयोग इति सार्वत्रिकमवगन्तव्यम् । परिक्षयस्तु नास्तीति विनाशे ऽन्तर्भवति, तत्राप्युपचारसत्ताश्रयेण परिक्षीयत इति प्रयोगः समर्थनीय इति षड्भावविकारयोनित्वात्सर्वस्य क्रियाप्रपञ्चस्य वस्तुसत्ताश्रयेण (अ) प्रयोगः ॥ ४८ ॥

क्रियाभिः साधनानामाक्षेपात्तद्वाचिनामपि तथैव प्रयोग इति सार्वत्रिकीमुपचारसत्तायाः शब्दार्थत्वे व्याप्तिं निगमयितुमाह ॥

तस्माद्भिन्नेषु धर्मेषु विरोधिष्वविरोधिनीम् ।
विरोधिख्यापनायैव शब्दैस्तैस्तैरुपाश्रिताम् ॥ ४९ ॥
अभिन्नकालामर्थेषु भिन्नकालेष्ववस्थिताम् ।
प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम् ॥ ५० ॥
एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते ।
सा च सम्प्रति सत्तायाः पृथग्भाष्ये निदर्शिता ॥ ५१ ॥

बाह्या येषां विरोधो भावनादीनां धर्माणां तैरुपचारसत्ताया अविरोधो यथोक्तन्यायेन अन्तराकाङ्क्षया । विरोधिख्यापनायैवेति । विरोधिनां प्रकाशनाय तैस्तैर्ब्राह्मणादिशब्दैरुपगृहीता । एतैर्हि शब्दैर्विषय उपकल्प्यते धर्मोणाम् । न च धर्मबाह्याद्वस्तुनो भिन्ना, शब्देनैव भेदस्य परिकल्पनात् । नीलोत्पलादौ विरोधाधानं विरोधिनां वा भिन्ना वर्तमानाद्वस्तुनो ऽतीतानागतादयः । विशेषणविशेष्यभावविषयनीलोत्पलादिशब्दैरप्युपाश्रितामित्याह । तत्रापि प्रविभज्य मेलनमुपचार-

सत्तायां युज्यते । अन्यथा संसक्तवस्तुनि नेयं कल्पना घटत इत्युक्तम् । अतीतानागतकालव्याप्तत्वाच्च नियतकालेष्वपि बाह्येष्वर्थेषु इयमभिन्नकाला सार्वत्रिकी । अत एव सर्वेषामपि शब्दानां प्रवृत्तिहेतुरयं चैत्रो ऽभूद्भविष्यतीति बुद्ध्यार्थं निरूप्य तत्र शब्दप्रवृत्तेरर्थेऽनिरूपिते ऽर्थे तदयोगात् । तथा हि, विद्यमानो ऽपि वर्तमानो ऽपि वर्त्तमानकालोऽपि सोऽर्थो यावद् बुद्ध्या नावधृतस्तावदविषयः । शब्दानामपि सर्वत्रोपचारसत्तारूढ एव शब्दार्थ इत्युक्तं भवति । क्रियाकारणभाव इत्यपि चार्थानां निरूपणं बौद्धमेव । तथा हि, भाव्यमानत्वादेव क्रिया सम्प्रति नास्ति । तदभावात्तदपेक्षं साधनत्वमपि कुत इति आख्यातशब्दस्य क्रियावाचिनः सुबन्तस्य च कारकवाचिनः सर्वस्यैव बुद्धिपरिगृहीत उपचारसत्तासमाविष्टो वाच्यो ऽर्थो ऽवतिष्ठत इति सर्वेषां मितिव्याप्तिसिद्धिः । अभावस्य च जायमानत्वेन सत्त्वादेतामुपचारसत्तां सर्वे एव पदार्था नातिक्रामन्तीति सर्वेषामेव तद्विषयत्वादभावादिशब्दानामप्यर्थे नित्यमपि (अ)वियोगः सिद्धः । अस्याश्चोपचारसत्ताया न निर्मूलत्वमपि तु भाष्यकाराभ्युपगतत्वमेव । मतुवार्त्तिके न सत्तां पदार्थो व्यभिचरतीति अस्ति शब्दाक्षिप्तमर्थनाय, सम्प्रति सत्तायां यथा स्यात् भूतभविष्यत्सत्तायां माभूत्, गावो ऽस्यासन्, गावोऽस्य भवितार इति भाष्यवचनादुपचारसत्ता ऽस्तीति गम्यते । प्रमाणभूतत्वादस्य वचनस्य । न हि भूता भविष्यन्ती वा काचित्सत्ता या अस्तीत्यनेन निवार्येत । भूतभविष्यदुपाख्यत्वान्न काचिन्मुख्या सत्ता, अतीतस्यानुभूतत्वादनागतस्य प्रगुणकारकासांमुख्यात् । बुद्ध्या तु परामर्शे, प्रत्ययपरिवर्त्ते व्यर्थे, शब्दप्रयोग इत्युपचारसत्ता भूतभविष्यतोरुपपद्यते । तथा च तद्व्युदासाय वाक्यसत्तापरिग्रहार्थमस्तीति विशेषणं युक्तम् । बाह्यादिसत्ता सम्प्रति वर्त्तमाने काले भवतीत्यन्या ततो भूतभविष्यतोः प्रत्ययात्मना सत्तेयम् । यद्यपि वर्त्तमानावस्था ऽद्यापि बाह्यस्य प्रतीतिग्राह्यत्वेनैव व्यवहार्या सत्ता, तथापि सैव बहिरभावादस्तीत्यनेन विशेषणेन विवक्षितवर्त्तमानकालेन गृह्यते । प्रतीतिमात्रशरणान्वितं तद्व्युदस्यते । तदेवमुपचारसत्तायां समर्पितस्वभावानां बाह्यानामेवार्थानामतीतादिभावेन प्रत्यायनाद्यर्थं एव शाब्दो व्यवहार इति सम्बन्धनित्यत्वमुपपादितम् ॥ ५१ ॥

इदानीं सर्वस्यैव शाब्दस्य व्यवहारस्य यथातत्त्वमप्रवृत्तेर्विप्लुतत्वे गवादिशब्दानामविचारसिद्धा ऽर्थवत्ता ऽभ्युपगन्तव्या । तथा च सत्तातीताद्यभावविषयाणामपि शब्दानां भावाभिमतवस्तुविषयैर्घटादिशब्दैः तुल्यतां प्रतिपादयितुमुपक्रमते ॥

प्रदेशस्यैकदेशं वा परतो वा निरूपणाम् ।
विपर्ययमभावं वा व्यवहारो ऽनुवर्त्तते ॥ ५२ ॥

इह शाब्दो व्यवहारो यथातत्त्वमप्रवृत्तो ऽर्वाग्दृशाम् । तथा हि पूर्णस्य तत्त्वस्य साक्षाच्छब्दैर्द्रष्टुमशक्यत्वादविद्यापरिकल्पितप्रतिनियतघटादिप्रदेशगतः शाब्दो व्यवहारः । प्रदेशशब्देन घटादेर्ब्रह्मैकदेशत्वोदभिधानं कृत्स्नार्थपरिग्रहासामर्थ्यं शब्दानां प्रतिपादयितुम् । तत्रापि च मात्राकालात्मको न प्रदेशः समस्तः शब्देनाभिधीयते अपि तु तदेकदेशघटशब्देन हि घटत्वजातिरुच्यते । तत्रैव रक्तशब्देन गुणः । एवं शब्दान्तरैरपि प्रतिनियतभावाभिधानमुदाहार्यं परेण जात्यादिभावनिरूपायम् । संसर्गदर्शने स्वतो गौर्न गौः गोत्वादिसम्बन्धाद् गौरिति ब्रह्मकल्पं साक्षादव्यवहार्यमेव द्रव्यं परोपधीयमानरूपविशेषं व्यवहारमनुपतति । विषययोर्भिन्नस्य ब्रह्मणो नानोपाधिवशेन भेदः । विज्ञाननये वा ? (श्रवणीभूतस्य) बहीरूपस्य बहीरूपतया भानविपरीताव्याप्तिभावः । शून्यवादिमते व्यावहारिकबाह्यस्य सर्वथैव निषेधात्, विज्ञानभावस्यमाकारान्यतात्वयोगादसंवेद्यं गन्धर्वनगरतुल्यमाभासत इत्यसत्ख्यातिः । ब्रह्मण एव वा सत्यस्य वाक्पथातीतत्वादविद्याया असदेवेदम्भेदजातं शब्दविषयः । नन्वेषु वपुर्षु दर्शनेषु शब्दानामर्थसम्बन्धो न भाविकः । तथा हि, आद्ये दर्शने ऽर्थो ऽस्ति गवादिशब्दानां, तत्रोपपद्यते सम्बन्धो, यदि सोऽर्थभावादेव सम्बन्धासिद्धिः । तथा हि परतो निरूपणे धीयमानरूपमेव निरूप्यते ऽभिधीयते चेति असत्यवस्तुविषयः सम्बन्धः । एवं विपर्ययाभावपक्षयोरपि वाच्यम ॥ ५२ ॥

एतदेव दृष्टान्तेन साधयति ॥

यथेन्द्रियस्य वैगुण्यात्सत्ताध्यारोपवानिव ।
जायते प्रत्ययो ऽर्थेभ्यः, तथैवोद्देशजा मतिः ॥ ५३ ॥

तिमिरोपहतनयनश्चन्द्रमेकमनेकं पश्यति, कामिली च शुक्लमपीतं शङ्खं पीतमिति, इन्द्रियदोषादाकारान्तरकल्पितार्थावयासी प्रत्ययो ऽर्थेभ्यो जायते । अर्थानां नञ्भावकत्वान्नियतविषयत्वाद्भित्तीनां प्रत्ययधर्माध्यारोपो न, वस्तुप्रविमोषीति च शब्दः एवमुद्दिश्यते प्रतिपद्यते येनेत्युद्देशशब्दः । तत्प्रत्ययन्ता च बुद्धिरसदाकाराध्यारोपवती भवति॥५३॥

इन्द्रियवत्किं शब्दवैगुण्यमित्याह ॥

अकृत्स्नविषयाभासं शब्दः प्रत्ययगाश्रितः ।
अर्थमाहात्म्यरूपेण स्वरूपेणानिरूपितम् ॥ ५४ ॥

इह कारणानुरूपं कार्यं भवति । शब्दस्य च निरूपितार्थविषयत्वान्निरूपणाप्रत्ययः कारणम् । तदुक्तम् । यदा च बुद्धिविषयादर्थाच्छब्दः प्रतीयत इति । निरूपणाप्रत्ययश्च विपर्ययैकैकव्यावृत्तिनिष्ठत्वाद्विकल्पतामकृत्स्नविषयाभासः । न हि विकल्पेन यथातत्त्वं वस्तु स्पृश्यते, प्रदेशैकदेशादिना संस्पर्शादित्युक्तम् । अतश्चाकृत्स्नमेवार्थमध्यारोपितरूपभेदं शब्दः प्रतिपादयति । कार्यकारणसम्बन्धवशाद्विकल्पात्मको हि प्रत्ययः शब्दाज्जायते । तदुक्तम् । "विकल्पयोनयः शब्दा विकल्पाः शब्दयोनय" इति । तथा कार्योपादानविकल्पपरिगृहीतः शब्दार्थ इति । एवमविद्याया विकल्पानामितो यथातत्त्वमवसायपाटवात्समारोपितरूपेणावसायस्य सर्ववादिभिरभ्युपगतत्वात्त्वदुपदर्शितविषयविषयाः प्रत्ययोपारूढरूपाभिधायिनः सिद्धा इत्यतीताद्यभावादिशब्दानामप्यर्थसम्बन्धे न विप्रतिपत्तव्यमिति स्थितम् ॥ ५४ ॥

तथैतत्स्यात् निरावरणव्यातानां भावतत्त्वसाक्षात्कर्यं यथार्थ एव शाब्दो व्यवहारः, ते चास्माकमुपदेष्टार इति नायथार्थः स इत्याशङ्क्याह ॥

रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ ।
ज्ञानं प्रत्यभिलाषश्च सदृशौ बालपण्डितौ ॥ ५५ ॥

परस्पराभिप्रायमलनामयत्वाद्व्यवहारस्याविदितदर्शनाभासत्वदृशोऽपि व्यवहरन्ति लोके यथा वनम् । सदृशैरन्यै रतादृग्दर्शनं रूपणम् । वनमालातलशब्देन यद्रूपणं स व्यपदेशः आभ्यां व्यवहरन्तो लौकिकमार्गे तुल्याः । क्व विषय इत्याह । ज्ञानं प्रतीत्यादि ।

बालस्य विचार्यासितमनेरर्थज्ञानमर्थसंविकल्पं, अभिलाषो व्यपदेशरूपं च। तं प्रति तद्विषयं यथा बालो विकल्पयति अर्थमभिधत्ते च एवं परमार्थदर्शनाविद्वांसोऽपि। तथा विद्वांसोऽपि निरूप्य विवक्षितत्वाद्विषयं यथाविवक्षमेव व्यपदिशन्तः पराभिप्रायमलनमारभन्त इति यथा पराभिप्रायमेव पूर्वं निरूपयन्ति। तथा विनिरूप्य च तेषामपि रूपणाज्ञानं विकल्पः तत्पूर्वकश्चाभिधायाः शब्दो लौकिकसदृशः ॥ ५५ ॥

या तु तेषां व्यवहारातीता दशा तस्यां शुद्धज्ञानं पारमार्थमनिरूपकं, प्रतिनियतविषयग्राहकमेव ज्ञानं सदैवेति कास्य शुद्धिरित्याह ॥

सर्वार्थरूपता शुद्धिः ज्ञानस्य निरुपाश्रया।
ततोऽप्यस्य परां शुद्धिमेके प्राहुररूपिकाम् ॥ ५६ ॥

द्वे दशे शुद्धेरुपक्रमपरिसमाप्तिरूपे। इन्द्रियसन्निकर्षादिरूपोपाश्रयानिरपेक्षतयाशेषार्थविभासनाच्चेतं सर्वज्ञज्ञानमुपक्रमे शुद्धमित्युच्यते। इन्द्रियाद्यपेक्षारूपाया अविषयग्रहणे शुद्धेरन्तगमाभिप्रायां चाकारकालुष्यापगमात् प्रभास्वरं प्रशान्तकल्लोलसंविन्मात्रमेकघनं शुद्धग्राह्यग्राहकशून्यं परं ब्रह्म ॥ ५६ ॥

नियताकारावग्रहोह्या शुद्धिरित्याह ॥

उपप्लवो हि ज्ञानस्य बाह्याकारानुपातिता।
कालुष्यमिव तत्रास्य संसर्गे व्यतिभेदजम् ॥ ५७ ॥

स्वच्छज्ञानस्यार्थेन संसर्गे सति यस्तेनैवार्थेन व्यतिभेदः प्रतिबिम्बवशादभेदो व्यामिश्रीभावः, ततो जातोऽयमुपप्लवो बाह्यविषयप्रावण्यं उदकस्येव सरजस्कत्वम्। एवं वशादभिधीभावात्तदपगमे क्रमेण स्वस्मिन्नेव च्छेदरूपे ज्ञानं परा शुद्धिः सर्वदर्शनाभ्युपगता। तदुक्तम्। तदा द्रष्टुः स्वरूपे ऽवस्थानमिति। इवशब्देनार्थरूपसम्भेदेऽपि स्वप्रकाशं ज्ञानरूपमनवगतमित्याह ॥ ५७ ॥

अर्थस्यापि व्यवहारे शुद्धिमाह ॥

यथा च ज्ञानमालेख्यादशुद्धौ व्यवतिष्ठते।

तथोपाश्रयवानर्थः स्वरूपाद्विप्रकृष्यते ॥ ५८ ॥

आलेख्यो विषयरूपोपरागः । ततोऽशुद्धं ज्ञानमिति प्रसाधितमर्थमर्थाशुद्धौ साध्यायाम तत्तु दृष्टान्तयति । उपाश्रयो जात्यादिरूपाधानं, तेन च द्वारेण यथादर्शनमार्थो व्यवहारः प्रथममवतरति । निरुपाधेस्तस्याव्यवहार्यत्वादुपाधिसंसर्गप्रातत्त्वमित्यर्थः । सेयमशुद्धिर्जात्याद्युपाधिरूपेण समवेतेन शबलितमर्थवस्तु प्रतीयते ऽभिधीयते चेति तथा तद्व्यवहारमवतरति । ननु सर्वथा अव्यपदेश्यं द्रव्यं एव । बहिस्तस्यरूपं यदुपाधिसंसृष्टं सदैव तत्संसृष्टस्य प्रत्ययात् ॥ ५८ ॥

उक्तमर्थं प्रकृते योजयति ॥

एवमर्थस्य शब्दस्य ज्ञानस्य च विपर्यये ।
भावाभावावभेदेन व्यवहारानुपातिनौ ॥ ५९ ॥

जात्यादिसंसर्गरूपोपरागो ऽर्थस्याशुद्धिः शब्दस्याप्याकृत्यार्थाभिधानं तदुपाधिरूपेणाभिधानमशुद्धिर्ज्ञानस्य बाह्याकारोपरागः । एवं त्रितयमपि पर्यस्तम । तथा च भावस्यापि शब्देनाभिधीयमानस्य ज्ञायमानस्य वा परोपाधिरूपतया अभावसकक्षता । अभावो ऽपि हि घटाभावः पटाभाव इति परोपाधिरेव शब्दप्रत्ययावनुपतीति साम्यम् । बुद्ध्या निरूप्यमाणो ह्यभावो भावस्वरूपेणावच्छिद्यते । यत्तु परमं रूपं तन्नैव व्यवहारास्पदम । तत्तु च विपर्यस्तः प्रतिपत्तृधर्मः । तेन प्रतिपन्ने च विपर्यस्नः कथ्यतां, अर्थस्तु कथं विपर्यस्त. उच्यते । विपर्यासविषयत्वात्स्वरूपेण चाप्रतिभासनादर्थो ऽपि तथा शब्दोऽपि विपर्यासहेतुत्वात्तथोच्यते । कथमभेदेन व्यवहारानुपात इत्याह । यथाभावमुपाश्रित्य तद्भावो ऽप्यनुगम्यते । निरुपाधेरभावस्याविशिष्टत्वात् भावोपाधेर्व्यवहारावतारः । भावस्यापि मध्यावस्थायामेव सत्त्वात् प्रागभावावच्छिन्नमेव व्यवहारे तत्त्वम् । नित्यानामप्यभिव्यञ्जककालात्प्रागनभिव्यक्तेरसत्तया व्यवहारो न विरुध्यते ॥ ५९ ॥

एव मन्यापेक्षित्वे भावाभावयोर्व्यवहारे साम्यं, भेदमभ्युपगम्य प्रतिपादितं, इदानीं भावव्यतिरिक्तमभावं निगमयितुमाह ॥

नाभावो जायते भावो नैति भावो ऽनुपाख्यताम् ।
एकस्मादात्मनो ऽनन्यौ भावाभावौ विकल्पितौ ॥ ६० ॥

द्वैतनये प्रागभावोपमर्देन भावनिष्पत्तिः । भावोपमर्देन प्रध्वंससम्भवः । इयमपि चैतदयुक्तम् । भावाभावयोरन्योन्यस्वभावोपगमसम्भवात् स्वभावस्यानपायात् । अतश्चात्यन्तविवेके भावोपाधितया अभावस्याभावोपाधितया च भावस्य प्रतीतिर्न स्यात्तस्मादेकमेवाद्वयं तत्त्वमात्मशब्दवाच्यं व्यवहारे विकल्पदशायां भावाभावोपाधिरूपप्रविभक्तं चकास्ति । प्रकाशरूपस्य हि परस्य तत्त्वस्य सर्वत्राविभिन्नस्वभावस्य महासत्तात्मनो भावप्रतियोगिनो विद्यावशात्सावृतलोकयात्रानिर्वर्त्तनसमर्थस्य बहिरिदन्तया प्रतिभाने वर्त्तमानकालोपाधितया ऽर्थक्रियाकारिणो भावरूपता अतीतानागतकालोपपादितनिवर्त्तनसमर्थनान्तरे च संस्काररूपतया ऽनुवर्त्ततात्वबाह्येन्द्रियविषयतानुपगमात्सर्वत्र मातृसाधारणार्थक्रियाकरणादभावरूपतया व्यवहारः । न च सर्वथा तदानीमसत्, स्मर्य्यमाणत्वादुत्प्रेक्ष्यमाणत्वाच्च । तथा च यदास्य संस्काररूपास्ते भावाद्यस्य समुत्प्रेक्षागताः कल्पयन्त्येव काममर्थक्रियाम् । अत एव च मध्यावस्थास्य भावस्यैव प्रागभावः स्फुटेन रूपेणेन्द्रियापरिच्छेद्यावस्था प्रध्वंसश्चोत्तरकालमभावो व्यवह्रियते ॥ ६० ॥

ननु सर्वथा भावसंस्कारनिवृत्तावभावः कश्चित् सर्वशक्तिविरहलक्षणश्चकास्ति चेतसि । अत एव त्र्यधिकाः पदार्थाः समुच्चीयन्त इति वा भावो नाम कश्चित्तद्वैतत्स्यात्कथं भावाभावौ विकल्पावित्युच्येते, कारणभेदात्सत्यभूतौ यथाऽवभासं कस्मान्न भवत इत्याशङ्क्य सदसत्पक्षभेदेन कार्यकारणभावानुपपत्तिप्रतिपादनपूर्वकम् द्वैतदर्शनमर्थोपनिवर्त्ताश्रयेणाद्वैतनयं स्वमतेन सिद्धान्तयितुमुपक्रमते ॥

अभावस्यानुपाख्यत्वात्कारणं न प्रसाधकम् ।
सोपाख्यस्य तु भावस्य कारणं किं करिष्यति ॥६१॥

आह, कार्यस्यात्मलाभमुद्दिश्य कारणानि प्रवर्त्तन्ते । तत्रासत्स्वभावस्योद्देशत्वायोगात्किमवलम्ब्य कारणस्य पदसम्बन्धः स्याज्ञा-

स्यात्मना सत्त्वेनास्य नित्यत्वात्कार्यतानुपपत्तेः । पुन रपि कारणं क्व वर्त्तेत । कथं चिदभेदो जातिव्यक्त्योरिति चेत् । व्यक्त्यात्मना तर्हि कार्यतेति तदवस्थो दोषः । नियतकारणपरिग्रहश्च न [illegible] । असत्त्वस्याविशेषात्सिकताभ्यो ऽपि तैलं स्रवेत् । नियतशक्ति कारणमिति चेत् कुतो ऽत्रासिन्नेतस्मिन्सति सद्भावादिति चेत् तदेवेदं पर्यनुयुज्यते, कथमत्यन्तासतस्तस्मिन्सतीति प्रतीतत्वात् अदोष इति चेत् । प्रतीतिमात्रमस्तु किमयुक्तिजनककार्यकारणभावोपवर्णनेन । तथा च सिद्धान्तयिष्यति । “भावानां प्रागभूतानामात्मतत्वं प्रकाशयेत् ।” अथ सत्कार्यं कारण इति नैते दोषाः । अत्रापि कृतस्य कारणायोगादकिञ्चित्करं कारणम् । तत्वेनघुज्यते । न चापूर्वं किं चित्प्राप्यत इति । अथापि व्यक्तिः कारणेन कार्यस्य क्रियते सा ऽपि ततोऽन्या ऽनन्या वा । अन्यत्वे सती वा स्यादसती वा । सत्त्वे प्रागिव करणानुपपत्तिः । अभिव्यक्त्यन्तरकरणे त्वेतदेव पुनरावर्त्तते ऽनवस्था च । असत्त्वे प्राप्तमसतो जन्म । तथा च कार्ये को विद्वेषः । अभिव्यक्तौ च कारणव्यापारात्कार्यस्य कार्यता न स्यात् । वस्त्वन्तरोत्पत्तौ च किं तस्य येनामात्रशङ्कितमेवोद्भवो भवेत् । सत्सम्बन्धाभिव्यक्तिकारणादिति चेत्, को ऽयमजन्यजनकयोः सम्बन्धः । तत्त्वे ऽप्यभिव्यक्तौ तज्जन्यायां तद्विषयः कारणव्यापारो न स्यात् । कारणेनैवास्यजननात्तथा कार्यस्य जनने तद्विषयो ऽपि कारणव्यापारो न स्यात् । तथा च तस्यामसतो भवने असत्कार्यप्रसङ्गात्सतो ह्यभिव्यक्तौ पुनरप्येतदेव चावर्त्तते । उपकार्योपकारकभावः सम्बन्धो ऽभिव्यक्तिकार्ययोरिति चेत्, केन कस्योपकारः । स च किं व्यतिरिक्तः उताव्यतिरिक्त । व्यतिरेके तस्येति कः षष्ठ्यर्थः । उपकारान्तरकल्पने ऽप्येतदेव चोदनीयमनवस्था च । अव्यतिरेके तु जन्यजनकभाव एव पर्यवस्यति । तत्र चोक्तो दोषः । अनन्यत्वे ऽभिव्यक्तेः कार्यात्तदेव कृतं स्यादित्यसत्कार्यतयाश्रयः । तत्र चाऽनुपपत्तिरावेदितेति सङ्कटो ऽयं पन्थाः ॥६१॥

इत्थं च कार्यतानिबन्धात् प्रागभावप्रध्वंसाभावावपि कृतवस्तुविषयौ न स्त इति पूर्वोक्तमेवावस्थाभेदेन विकल्पितत्वं भावाभावयोर्निगमयति ॥

तस्मात्सर्वमभावो वा भावो वा सर्वमिष्यते ।

न त्ववस्थान्तरं किं चिदेकस्मात्सत्यतः स्थितम् ॥६२॥

कार्यकारणभावाभावान्मध्ये जातो ऽभिव्यक्तो वा सन्, पूर्वोत्तरयोरवस्थयोरजातो ऽनभिव्यक्तो विनाशकारणायोगात् विनष्टश्च भावो नोपपद्यत इति भावाभावौ नैकस्यावस्थातुः परिणामदर्शनाश्रयेण सत्यभूतावस्थात्मकौ, अपि तु व्यवहारदशायामविद्याप्रवृत्तिरूपायाम् । सत्यस्याभिन्नसच्चिन्मात्रस्य तत्त्वस्य यथायथमनवभासात् परमार्थतः सर्वं प्रपञ्चजातमभाव एवापरमार्थ एव । स च नीरूपो न कश्चिदिति भावाव्यतिरेकं न सहते । किञ्चायं हि न कुतश्चिद्व्यतिरिच्यते । भेदमात्रस्य चाभिन्नतत्त्वाग्रहणरूपस्य शून्यत्वात् । भावत्वेन तु रूपेण सर्वभावात्मकत्वम् । प्रथमानस्य वस्तुत्वादवस्तुनः प्रथा ऽयोगात् । भावानां हि ज्ञायमानत्वेन ज्ञानोपरूप्यतया सत्त्वमेव । भावादेरध्यवसानाच्चापि सत्त्वम् । केवलं यो ऽयं भेदो ऽवच्छेदो ग्रहणमसौ न किं चिदविद्या । तत्र वा मनःप्रकाशो ऽनुगत इति विद्याऽवस्थितैव । तथा च विद्याऽविद्याप्रविभागमप्रविभागं ब्रह्मेति ब्रह्मकाण्ड उक्तम् ॥ ६२ ॥

यतश्चैवं सर्वं संवृतिमत्तः प्रचारिता दर्शनविकल्पाः, तत्राभिमानमात्रमित्याह ॥

तस्मान्नाभावमिच्छन्ति ये लोके भाववादिनः ।
अभाववादिनो वापि न भावं तत्त्वलक्षणम् ॥ ६३ ॥

आविर्भावतिरोभावमात्रं जन्मनाशौ सत एवेति वदन्तो भाववादिनः परमर्षयः । तेषामभावो नाम भावपृथग्भूतो न कश्चिद्भावस्यैव पूर्वोत्तरयोरवस्थयोरभावव्यवहारात् । तथा हि । मृदवस्था घटस्य प्रागभावः, कपालावस्था च प्रध्वंसाभाव इति वाच्यम् । सर्वं शून्यं जगदित्यभाववादिनामभावः पारमार्थिको न भावः कश्चिदिति ते भावं तत्त्वलक्षणं परमार्थरूपं नेच्छन्ति । एवमपि व्रजन्तो व्यवहारे भावोच्चावचभेदमर्थक्रियाकरण(मार्थिकोरक) ? निमित्तं नापह्नुवन्ति । ततश्च संवृत्या सर्वमुपपद्यते । साम्येत्यभिनिवेशो न त्याज्यः ॥ ६३ ॥

अभावप्रतिक्षेपे तर्हि निर्निबन्धनो भावाभेद इत्यत आह ॥

अद्वये चैव सर्वस्मिन् स्वभावादेकलक्षणे ।

परिकल्पेषु मर्यादा विचित्रैवोपलभ्यते ॥ ६४ ॥

सर्वस्मिन्परिदृश्यमानभेदजाते स्वभावात्परमार्थरूपात् सामान्यसमावेशवशादेकस्वभावे ब्रह्ममये चित्रेषु विकल्पेषु भावधाविनानात्वेनानादिनियतिशक्तिनियमितेयमविद्यावशान्मर्यादा व्यवस्था नानारूपा दृश्यते । असत्यपि वास्तवे भेदे ऽविद्यानिमित्तोऽयं भेदो व्यवहारे रूढ इत्यविचारितसिद्धो ऽवगन्तव्य इत्यर्थः ॥ ६४ ॥

ननु सत्पथोत्पन्नो भावाभेद इति निदर्शनेन व्युत्पादयति ॥

चतस्रोपि यथा ऽवस्था नीरूपाख्ये प्रकल्पिताः ।
एवं द्वैविध्यमप्येतद्भावाभावव्यपाश्रयम् ॥ ६५ ॥

प्राक्प्रध्वंसात्यन्तेतरेतरलक्षणोपाधिवशेन नीरूपस्य रूपभेदायोगाद्यथा ऽभावस्य चतुर्धा भेदः काल्पनिकः, तथैव भावाभावलक्षणो ऽपि भेदः काल्पनिक एवावगन्तव्य इत्यर्थः । बहिरिन्द्रियगोचरार्थक्रियोपाधिवशेन एव कल्पितो भावः, बहिरर्थक्रियाशून्यस्त्वभाव इति सङ्केतः ॥ ६५ ॥

वस्तुतः सर्वव्यवहारातीतौ न पृथक् भावाभावावात्मतत्त्वमुद्दर्शयत इत्याह ॥

अविरोधी विरोधी वा सन्नसन्वापि तत्त्वतः ।
क्रमवानक्रमो वापि नाभाव उपपद्यते ॥ ६६ ॥

नीरूपत्वादभावस्य भावेन सह विरोधाविरोधौ युक्त्या न सङ्गच्छेते । न हि भावमभावः समुच्छिनत्ति अनुगृह्णाति वा येन तद्विरोधी अविरोधी वा यथासंख्यं भवेत्सतोऽसत्त्वायोगाल्लब्धरूपस्यातिशयायोगाच्च सत्त्वमभावस्यात्मविरुद्धम् । असत्त्वमस्यातद्रूपत्वादेव व्यतिरिक्ताभावत्वेनोपपद्यते । एवं हि तावन्नाप्रसङ्गः । क्रमो ऽपि भावधर्मो नाभावस्य युज्यते ऽभावस्योच्छेत्तुमशक्यत्वात् । भिन्नतदपेक्षो भावस्य क्रमो नाप्यभावनिरपेक्षः । तस्यैवासिद्धत्वान्नीरूपस्य भेदाभावादेवाक्रमो ऽपि । यौगपद्यमर्थान्तरापेक्षत्वादस्य अस्ति, अन्येन सहासमानकालत्वादिति युक्तितो नोपपद्यते । अभावो नामैवंधर्मो यत, एवं अविरोधी विरोधी वा, सन्नसन्नापि तत्त्वतः, क्रमवानक-

ऽपि वापि । तेन भावेन सह विरोधिता च न युक्ता । एवं क्रमाक्रमावपि । अथाभावान्तरेण सह विरोधितादि विचिन्त्यते तत्रापि स्वतो ऽनुच्छेद्यस्य निरतिशयं केन चिदुच्छेत्तुमनुगृहीतुं वा शक्तेस्तदनुपपत्तिरेवं क्रमाक्रमावपि भेदाभावाच्च । पारमार्थिकासत्त्वमपि नियतार्थक्रियानिमित्तसमर्थक्रियान्तराकरणाच्च तत्त्वतो व्यवतिष्ठते । सत्तासम्बन्धस्य चानुपलब्धेर्न तन्निमित्तप्रतिभासनाद्यसत्त्वमप्यपारमार्थिकम् । इत्थं सर्वे व्यवहारा विकल्पपरिघटिता एवेति भावाभावावपि तथा विज्ञेयौ । कल्पना वा ऽविद्याशक्तिः । सा च विद्यातत्त्वान्यत्वाभ्यामनिर्वाच्येति ब्रह्मकाण्डे निर्णीतम् ॥ ६६ ॥

कालनिमित्तो ऽप्यत्र भेदो न पारमार्थिक इत्याह ॥

अभावे त्रिषु कालेषु न भेदस्यास्ति सम्भवः ।
तस्मिन्नसति भावे ऽपि त्रैकाल्यं नावतिष्ठते ॥ ६७ ॥

त्रिषु कालेष्विति । कालत्रयनिमित्तको ऽप्यभेदो भावविषयो नास्ति । तथा हि नीरूपत्वादभावस्य वर्त्तमानकृतस्तावत्परिच्छेदो नास्ति । तदभावात्तदपेक्षो ऽतीतानागतकालयोगो ऽपि न भाविकः । एवं च भावस्याप्यभावाद्वर्त्तमानत्वमपि नास्ति । नापि स्वापेक्षं, पूर्वापरकोट्योरभावात् । भावस्य कालत्रयमुक्तम् । भावे तु संख्यानां पूर्वापरकोट्योर्भावस्यैकत्वमेवाभिन्नरसामिति पुनरपि कालत्रयायोगः । अवस्थास्ततो न व्यतिरिच्यन्त इति तासामपि तदभावः । व्यतिरेके ऽपि वा तद्बहुलः कालभेदो न भावस्य शक्यते कल्पयितुमित्यसत्यो भेदः ॥ ६७ ॥

भवतीति भावो न भावो ऽभाव इति लक्षणमनयोर्नोपपद्यत इत्याह ॥

आत्मतत्त्वपरित्यागः परतो नोपपद्यते ।
आत्मतत्त्वन्तु परतः स्वतो वा नोपकल्पते ॥ ६८ ॥

कारणाद्भावस्य सतो विनाशो नोपपद्यते । नीरूपस्य कारणसामर्थ्येन जन्यमानतायां नाशस्य रूपवत्त्वं, प्रागभावेन सम्बन्धे प्रागिव नष्टोपलब्धिः स्यात् । तेन तस्य विनाशे तत्रापि तथैवेत्यनवस्थापातात् । भावनस्वभावस्य भावनावरोधाच्च स्वतो ऽपि

विनाशाभाव इत्यभावशब्दार्थो न कश्चिदवतिष्ठते । भवनमपि भावस्वभावस्य परिनिष्ठितस्य कारणाज्ञोपपद्यते । स्वतो ऽपि भवतो भवनायोगः । अभवे न खल्वस्य भावना विरुद्धेति भाववाच्योऽपि न कश्चित ॥ ६८ ॥

न चैवमपि भावाभावादेकं तत्त्वत इत्याह ॥

तत्त्वे विरोधनानात्व उपकारो न कश्चन ।
तत्त्वान्यत्वपरित्यागे व्यवहारो निवर्त्तते ॥ ६९ ॥

विधिप्रतिषेधयोरेकत्वं विरुद्धम् । नानात्वे तु भावाभावयोः परस्परापेक्षया निरुपकारिणोः व्यवहारो न स्यात्तदैतद्व्यतिरेकेण विकल्पासम्भवो राश्यन्तराभावादिति सर्वव्यवहारातीतत्वं भावाभावादिरूपतया प्रतिभासमानं जडात्सांवृतेन रूपेणाविचारितसिद्धमिति स्थितम् ॥ ६९ ॥

परमार्थस्त्वयमत्येत्याह ॥

यत्र द्रष्टा च दृश्यं च दर्शनं वा विकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः ॥ ७० ॥

ग्राह्यग्राहकादिप्रपञ्चस्य विकल्पपरिघटितस्यासत्यत्वात्सर्वप्रपञ्चसमतिक्रान्तं वाङ्मनसातीतं तत्त्वमविकल्पं परं ब्रह्मानादिनिधनं सत्यमिति ब्रह्मविदः प्राहुः । ऋग्यजुःसामात्मको वेदस्त्रयी तस्या अन्तः सारभूतार्थनिर्णयमय उपनिषद्भागः । तत्र हि भागे संक्षिप्यशास्त्रार्थसतत्त्वमाख्याय, तज्जायते तत्तज्जलायते, एवमभेदं परमार्थरूपमाहुः । नाकर्मानुष्ठानाक्षिप्तो भेदोऽविद्यापरिकल्पितो ऽक्षिभेदावितथो वैकल्पिकः । अविद्या ऽपि सतत्त्वान्यताभ्यां परस्याविनिर्वाच्या ऽनादिसिद्धजीवात्मगतभेदप्रतिभासकारिणीत्युपपादितं ब्रह्मकाण्डे विस्तरत इति तत एवावधार्यम् ॥ ७० ॥

तत्तदेव यथावभासमसत्यार्थानिष्ठः शाब्दो व्यवहार इत्यलब्धाभिधानतत्त्वविश्रान्तिर्भेदष्वत्रोपप्लवत इत्याह ॥

सामान्यं वा विशेषं वा यस्मादाहुर्विशेषवत् ।
शब्दास्तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः ॥७१॥

सामान्यमपि सामान्यान्तराद्व्यावृत्तं शब्दैरुच्यते । तथा

विशेषो विशेषान्तराद्व्यावृत्त इत्यसत्येषु भेदेष्वेव शब्दाः कृतसम्बन्धाः, नाभिन्नसद्रूपं तत्त्वं स्प्रष्टुं शक्ता इति वितथ एव शाब्दो व्यवहारः । सदित्यपि व्यवहारो भावप्रतियोगी । एवं ज्ञेयः प्रमेय इत्यादयोऽपि शब्दाः समपरिकल्पिता ज्ञेयादिव्यावृत्तविषया इति सर्वं भेदोपनिपाति शब्दजातम् । तदुक्तं भाष्ये । सामान्यमपि यथा, विशेषस्तद्वदिति । विशेषवदित्यर्हार्थे वतिः । विशेषमर्हति यदभिधानं तद्विशेषो वा यत्रास्तीति मत्वर्थीयः । सामान्योपहितस्य विशेषस्तद्वदिति । विशेषवदित्यर्हार्थस्याभिधानं सम्भाव्येतेति तन्निवृत्तये विशेषणमेतदिति विशेषेणापि सम्बन्ध्यते ॥ ७१ ॥

एवं तावन्नीरूपमवस्त्वभावमाश्रित्य भावाभावयोर्विरोधाद्युक्तम् । इदानीं वैशेषिकनयेन सप्तमं पदार्थमभावमाश्रित्याह ॥

नह्यभावस्य सद्भावे भावस्यात्मा प्रहीयते ।
न चाऽभावस्य नास्तित्वे भावस्यात्मा प्रसूयते ॥ ७२ ॥

भावादर्थान्तरमभाव इति प्रध्वंसस्योपजने किमिति भावो विनश्यति । प्रागभावस्य च व्यावृत्तौ किमिति भावो जायते ॥ ७२ ॥

एतदेव दृष्टान्तेन द्रढयति ॥

न शाबलेयस्यास्तित्वं बाहुलेयस्य बाधकम् ।
न शाबलेयो नास्तीति बाहुलेयः प्रकल्प्यते ॥ ७३ ॥

पृथक् सूतयोर्भावयोरसम्बन्धयोर्यथा परस्परस्य सत्तासत्ते न प्रयोजिके तथा भावाभावयोरपि तथाभूतयोः स्यादित्यर्थः ॥ ७३ ॥

तदेतद्भावादर्थान्तरस्याभावस्यावस्तुत्वेऽभ्युपगम्यमाने दोषजातमित्युपसंहरति ॥

अभावो यदि वस्तु स्यात्तत्रेयं स्याद्विचारणा ।
ततश्च तदभावेऽपि स्याद्विचार्यमिदं पुनः ॥ ७४ ॥

सप्तमपदार्थरूपे भावस्य वस्तुत्वेऽभ्युपगम्यमाने तत्सन्निधानासन्निधानाभ्यां भावस्य सन्निधानासन्निधाने न युज्येते इतीयं चिन्ता युज्यते । तथा च वस्तुत्वे भावस्य, तत्राप्यभावान्तरस्य व्यतिरिक्तस्योदयास्तमययोरभावस्य यथायोगं तौ न स्यातां, तत्राप्यभावान्तरमित्यनवस्था च स्यादित्यपि वाच्यम् ॥ ७४ ॥

यदा पुनर्भावप्रच्युतीनां रूपमेवाभावो बौद्धदृष्ट्याऽभ्युपगम्यते ॥

अवस्तुत्वादतीतं यद्व्यवहारस्य गोचरम् ।
तत्र वस्तुगतो भेदो न निर्वचनमर्हति ॥ ७५ ॥

भवति भावो न त्वभावो नाम कश्चिद्व्यतिरिक्तो ज्ञायत इति नये नेदं विचारणीयम । न ह्यभावस्य सद्भाव इत्यादि भावप्रच्युतिरूपत्वादभावस्य कथमवतिष्ठते। न भावत इति भेदो दूषणमवतरति। प्रागभाववृत्तौ न भावो जायते, अपि तु भवितृरूपत्वादिति तुच्छरूपाभावो वास्तवनानात्वं नार्हति। इत्थं च सर्वव्यवहारातीतो ऽसत्त्वात्रीरूपत्वादभावो वास्तवभेदादिनिरूपणासह इति प्रागेवोक्तमुपसंहृतम॥७५॥

इदानीं कार्यकारणभावानुपपत्तिं पूर्वोक्तामनूद्य स्वदर्शने विवर्त्ते सिद्धान्तयितुमाह ॥

अपदे ऽर्थे पदन्यासः कारणस्य न विद्यते ।
अथ च प्रागसद्भावः कारणे सति दृश्यते ॥ ७६ ॥

उत्पत्तेः पूर्वं कार्यलक्षणो ऽर्थो ऽपदोऽविद्यमानप्रत्यायको ऽसत्त्वादिति तत्र कारणस्य पदन्यासो व्यापारो नोपपद्यते। जननक्रियावेशयोग्यवस्तुभूतकार्यनिष्ठो हि कारणानां व्यापारः पदन्यासः। स चासति कार्ये नास्ति । न ह्यकिञ्चिद्रूपमुद्दिश्य कारणानि प्रवर्तितुमुत्सहन्ते । असत उद्देश्यायोगात्सत्त्वे तु कारणानुपपत्तिरित्युक्तम । अथ नियोक्तृबुद्ध्यनुसन्धानकार्यस्य पदन्यासः सोऽप्यसत्यसम्भवी । जडस्य च कारणस्य सुतरां कार्ये पदन्यासो ऽयं नास्ति । दृश्यते कस्मिंश्चिद्धेतौ सति कार्यमिति । तत्र (यदेव) ? तत्त्वमेव प्रतिभासमानं न तु वास्तवो हेतुफलभावः कश्चिदित्यर्थः ॥ ७६ ॥

अथोत्पत्तेः पूर्वं प्रागवस्था भावस्येति नापदस्तदानीमसावर्थ इत्युच्यते तत्राप्याह ॥

कालस्य प्रागवस्थेति वस्त्वाश्रितमिदं पुनः ।
प्रागवस्थेति न ह्येतद् द्वयमप्यस्त्यवस्तुनि ॥ ७७ ॥

उत्पत्तेः पूर्वम, कार्यस्य का प्रागवस्थेति इदं चोद्यं वस्त्वाश्रितं वस्त्वालम्बनमेतत्पर्यनुयोगरूपमित्यर्थः । तथा हि प्रागिति चावस्थेति

चैतद्द्वयमत्र पर्य्यनुयोगे। न चैतद्द्वयमप्यवस्तुन्यस्ति। देशतः कालतो वा युतत्वस्याभावे नीरूपे देशकालयोगायोगित्यसम्भवाद्वस्थेति वावस्थाश्रये ऽत्र। न चावस्थानां कश्चिदन्वयो विद्यते पूर्वमित्यसत्यतैव। तत एवमसत्कार्यनये प्रागसत्वादेतन्न युज्यते। सत्कार्यनये ऽपि प्रागर्थानुपपत्तिः इदानीमपि सत्वाद्भावस्य। अत एव च जन्मायोगादवस्थातृरूपो भावः। केन चिद्रूपेण जननेनापेक्षया प्राप्तप्रसवो जन्म। तथा चात्राप्यपदो ऽर्थः॥ ७७॥

विनाशे ऽप्यसत्त्वमेव नीरूपमगोचरो वाचो भावस्येत्याह॥

नचोर्ध्वमस्ति नास्तीति वचनायानिबन्धनम्।
अलं स्याद्वादस्थानमेतद्वाचः प्रचक्षते॥ ७८॥

प्रच्युतेरूर्ध्वम् निरन्वयध्वंसादसति भावमार्गे ऽस्ति नास्तीत्यभिधानाय न समर्थं वस्तु संख्यादि तदानीमप्यस्तीति व्यवहरन्ति। तच्च न युक्तम्। कुत अनिबन्धनं यतः। वचने निबन्धनमुपलभ्यमानता। सा च तस्य नास्ति। शब्दागोचरमनिबन्धनमसत्यमिति पूर्वापरावस्थयोरव्यवहार्यम्॥ ७८॥

भावो मध्यावस्थायामेव केवलं दृश्यत इत्याह॥

अत्यद्भुता त्वियं वृत्तिः, यदभागं यदक्रमम्।
भावानां भागभूतानामात्मतत्त्वं प्रकाशते॥ ७९॥

सदसत्पक्षभेदेन वा तस्य कार्यकारणभावस्य निराकृतत्वादुपपत्तिशून्यया ऽऽश्चर्यभूतया वृत्त्या व्यापारेण कार्यं प्रागदृष्टं निरंशं सदित्येवाक्रमम्। कस्मिंश्चिन्नियमे सति दृश्यत इति प्रतिभासमात्रसारः कार्यकारणभावो ऽपि तथा वैकल्पिको ऽविद्यानेत्रैर्यथायथं विकल्पनादेकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहिणो रूपविवर्त्तः परमार्थ इत्यर्थः। अत्यद्भुतेयं वृत्तिः। का ऽसावित्याह। यदभागमित्यादि। इत्येवं पदसमन्वयः। यद्वा यस्यां वृत्तौ सत्यामभागं निरंशमत एवाक्रमं तत्त्वं भावानां प्रकाशत इति सम्बन्धः। सांशत्वे सति क्रमेणोपजनो विवर्त्तव्यावृत्तः। कारणसामर्थ्यावधारणाच्चाश्चर्यमिदं भवेद्यतस्तु तादित्यपदक्रममत्र सर्ववादिमते ऽपि कार्यमाजायते। अतः कारणव्यापारस्य विचार्यता-

नुपपत्तेः, तथा प्रकाशो विद्यावशादाश्चर्यभूतो रूढः ॥ ७९ ॥

तथापि ॥

विकल्पोत्थापितेनैव सर्वो भावेन लौकिकः ।
मुख्येनैव पदार्थेन व्यवहारो विधीयते ॥ ८० ॥

मध्यावस्थाभावि दृश्यमानं रूपमपेक्ष्य पूर्वापरावस्थापरिकल्पनया क्रमिकत्वम् । सति कार्यकारणाभावे न भावाभावरूपनया वा ऽविचारितसिद्धो लोकव्यवहारो रूढः । एवमन्योऽपि यः कश्चित् व्यवहारः स सर्वो वास्तवतो बहिर्विद्यमानस्य वस्तुनो भिन्नस्य नावदनादिमिथ्याभ्यासवासनावशोपजात एव सांवृतस्तदध्यवसायाद् सांवृत इवाविद्याप्रवृत्तिरूपे जगति प्ररूढः ॥ ८० ॥

परमार्थतस्तु न भेदो नाम परिदृश्यमानः सत्यः, अपि त्वद्वयमेव तत्त्वं अविद्यानेत्रैरेवमविद्याख्यतच्छक्तिवशादवधार्यत इत्याह ॥

भावशक्तिमतश्चैनां मन्यन्ते नित्यवादिनः ।
भावमेव क्रमं प्राहुः, न भावादपरः क्रमः ॥ ८१ ॥

नित्यमद्वयं ब्रह्मतत्त्वं ये वदन्ति ते भावस्याद्वयस्य ब्रह्मण एवैवंविधानादिजीवात्मगतां शक्तिं मन्यन्ते । यद्वशात्तिरोधाय तत्त्वमभेदेन व्यवहारः क्रमिकः । क्रमे ऽपि ब्रह्मणा भेदावभासनमविद्याकृतम् । तत्रैव क्रमाभासनं कालाख्यस्वातन्त्र्यशक्तिकृतमेव । शक्तिः न ब्रह्मणो भावात्परमार्थसतो भिन्नेति सैव तद्रूपेण एव वा चकास्ति । अन्यस्य तदतिरेकिणो भासमानतानुपपत्तेः । भासमानस्य च प्रकाशाव्यतिरेकादप्रकाशस्य तदयोगादित्यन्यत्र निर्णीतम् । तथा च ब्रह्ममयभावोपधानेन क्रमस्यावभासनात् व्यवहारे भावव्यतिरिक्तम् । तस्य च किंक्रममिति हेतुहेतुमद्भावेन योजनादपौनरुक्त्यम् ॥ ८१ ॥

अत्र क्रमप्रतियोगियौगपद्यमिति तथा प्रतिभासनमात्रमित्याह ॥

क्रमान्न यौगपद्यस्य कश्चिद्भेदो ऽस्ति तत्त्वतः ।
यथैव भावान्नाभावः कश्चिदन्यो ऽवसीयते ॥ ८२ ॥

एकमेव तत्त्वमविद्यानेत्राणामपारमनवच्छिन्नमशक्यप्रतिभासमिति स्वगतदेशकालपौर्वापर्याध्यारोपेण सक्रममाभाति । एवा-

र्थान्तरसाहित्येन चाक्रममिति भावतः क्रमाक्रमौ न स्तः । यथा भावाभावावित्युक्तम् । क्रमाभावो यौगपद्यम् । क्रमश्चोक्तदृशा नान्यो भावादित्यभावस्य पूर्वं भावाङ्गस्य वस्तुतत्त्वस्य च निषेधाद्यौगपद्यमपि तदात्मकं न किंचिदित्यभावदृष्टान्तेन ध्वनयति । भावोपधानेन च प्रतीयमानत्वाद्भावान्तरसाहित्यं भावस्यात्मैव, तन्न्यायत्वम् । न हि साहित्यं नाम सहितादन्यद्विवेकेनावधार्यते ॥ ८२ ॥

ननु च क्रमेण कृतं युगपत्कृतमिति भेदेन प्रतीयेते क्रमाक्रमावित्याशङ्क्याह ॥

कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः
न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥ ८३ ॥

अद्य भवोऽद्यतनः कालः, श्वो भवः श्वस्तनः काल इति लोके भेदव्यपदेशादविद्यमानोऽद्यतनोऽनद्यतनोऽस्तीति तद्विधौ भावो वचनादित्थैवं समुदायावयवभेदे, परिकल्पनया कालतत्त्वस्यैकस्यैवाधाराधेयभेदेन निर्देशो दृष्टः । न चैतावता वस्तुतः कालो भिद्यते, वैकल्पिकत्वाद्भेदस्य । एवं क्रमाक्रमयोर्व्यतिरेकेण निर्देशेऽपि न तत्त्वतो भावात्परस्परतश्च भेद इत्यर्थः ॥ ८३ ॥

एतदेव योजयति ॥

आधारं कल्पयन्बुद्ध्या नाभावे व्यवतिष्ठते ।
अवस्तुष्वपि नोत्प्रेक्षा कस्य चित्प्रतिबध्यते ॥ ८४ ॥

शत्रोरभावे सुखं, सुहृदभावे दुःखमरातिवर्गस्य, रागादिक्लेशाभावादुत्साहः, आत्मभावे निर्वाणं मोक्ष इत्येवमादौ व्यवहारे सम्बन्धान्यथानुपपत्त्याऽभावे परिकल्प्याऽऽधारशक्तिं सुखाद्युपेयम् । न कश्चिदवतिष्ठते । अन्तर्भावितण्यर्थत्वात् कश्चिदवस्थापयितुमुत्सहत इत्यर्थः । कल्पयन्नपि वाऽऽधारभावं न कश्चिदभावेऽधिकरणभूते स्थितिमानाधेयत्वं लभते । न तत्रास्य पदबन्धं वस्तुतोऽवकल्पयतीत्यर्थः । नीरूपस्य सर्वसामर्थ्यविरहलक्षणस्याभावस्याधेयं प्रति स्थित्याधारभावायोगात् । उत्प्रेक्ष्य त्वाधारभावं व्यपदेशः प्रवर्त्तते । एवं अङ्गुल्यग्रे करियूथशतमास्त इत्यादि नोत्प्रेक्षयाभिधानं दृश्यत इति नास्ति विकल्पानामभूमिरित्यत एवं सामर्थ्यम् ॥ ८४ ॥

तस्माच्छक्तिविभागेन नित्यः सदसदात्मकः ।
एको ऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते ॥ ८५ ॥

सर्वपरिकल्पातीतं तत्त्वं समाविष्टं सर्वाभिः शक्तिभिर्ब्रह्म यथायथं व्यवहारे भावाभावरूपतया तत्तदुपाधिसंभिन्नं शब्दाः प्रतिपादयन्तीत्यभावाभिधायिनामपि भावशब्दैस्तुल्यः सम्बन्धो ऽविशेषाच्छब्दानामिति प्रकरणतात्पर्यमुपसंहृतम् । एक इति । भेदस्य भावान्तरात्मना प्रतिषिद्धत्वादत एव नित्यो भावाभावात्कार्यकारणभावस्य निषेधात् । शब्दवाच्य इति । शब्दव्यवहारार्थं निमित्तसप्तम्या प्रयोजनकथनात् । बहुरूप इति । क्रमाक्रमादिरूपतया प्रागुक्तस्याद्वयस्यैव तत्त्वस्य प्रकाशनात् । इत्थं च सांवृतो ऽयं लोकयात्रासु पदार्थो यांगरूढ इति तथैवास्मिञ्छास्त्रे ऽनुगम्यत इत्यविषयाम्नानेन किम् ॥८५॥

को विकल्प इत्याह ॥

व्यवहारश्च लोकस्य पदार्थैः परिकल्पितैः ।
शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते ॥ ८६ ॥

विचारितमपि तर्कविकल्पैर्भावतत्त्वं न यथाविचारं लोके व्यवहारमवतरति । नहि दर्शनान्तरव्यवस्थितविरुद्धभावरूपतानुगमो व्यवहारः । यद्वा विचारेण यथातत्त्वं पार्थक्यं, निश्चयः कर्तुं । रूपणव्यपदेशाभ्यां च सदृशौ बालपण्डितौ परस्पराभिप्रायमेलने प्रवर्तेते इति गजनिमीलितेनावधार्य पदार्थयाथातथ्यं व्यवहरन्तो लौकिका दृश्यन्ते । इदं च लौकिकानामेव शब्दानामनुशासनं शास्त्रं तदर्थं लोकप्रसिद्धैव पदार्थक्रिया समाश्रयणीयेत्यखण्डाद्वाक्यार्थात् क्रियावचनो धातुः, सत्त्वप्रधानानि नामानि, प्रत्याययतीति प्रत्यय इत्यादिशास्त्रकार्यप्रतिसिद्ध्यर्थं लौकिक एव क्रियाद्रव्यगुणादिलक्षणो ऽपोद्धारपदार्थः प्रविभज्यत इति लोकयात्रायामेकयोगक्षेमाः सर्वे शब्दा भावाभिमतार्थविषया इत्यर्थस्य प्रवाहनित्यत्वाच्छब्दोदाहरणमात्राच्च प्रतीतेर्नित्यः शब्दार्थसम्बन्ध इति सिद्धम् ॥ ८६ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
सम्बन्धसमुद्देशस्तृतीयः ।

---

तदेवं ब्रह्मशब्दार्थयोः सम्बन्धमुक्त्वा व्याख्यानोपयोगी पदार्थः शास्त्रे कार्यार्थे लौकिकः प्रविभज्यत इत्युपक्षिप्तः । जातिद्रव्ये हि सर्वशब्दानामर्थ इति सिद्धे शब्दार्थसम्बन्ध इत्यत्रार्थनित्यतासमर्थनार्थं पूर्वमुक्तः । इदानीमन्वाख्यानाङ्गमपोद्धारपदार्थो-द्रव्यगुणादिकः समुद्देष्टव्य इति प्रविभज्यत इत्युक्ते तस्य कुतः प्रविभाग इत्याह ॥

संसर्गरूपात्सम्भूताः संविद्रूपादपोद्धृताः ।
शास्त्रे विभक्ता वाक्यार्थात्प्रकृतिप्रत्ययार्थवत् ॥ १ ॥
निमित्तभूताः साधुत्वे शास्त्रादनुमितात्मकाः ।
केचित्पदार्था वक्ष्यन्ते संक्षेपेण यथागमम् ॥ २ ॥

निरंशस्य वाक्यस्यैव वाचकत्वात्तदर्थात्पृथक्त्वेन पदार्था व्यवस्थाप्यन्ते । स च वाक्यार्थसंसर्ग एव रूपमात्मा यस्य । तथा क्रियाकारकतद्विशेषणं संसर्गो वाक्यार्थः । एतेन च प्रविभागबीजमाह । सर्वथा निरंशे वाक्यार्थे प्रविभजनीयरूपाभावसंसर्गे तु युक्तं संसृष्टार्थप्रविभजनम् । अत एव सम्भूता इत्याह । संसर्गावस्थायां सम्भवन्तो विद्यमाना इत्यर्थः । तेन संसृष्टा विद्यमाना अपोद्धर्तुं शक्यन्ते । असतामियं शलाकाकल्पानां च परस्पराश्रयेणापोद्धाराभावात्संवित्संवेदनम् । अपोद्धारबुद्धिस्तस्या रूपमात्मा । ततो हेतोरपोद्धृताः पृथक् कृताः । एतदुक्तं भवति । यद्यपि वाक्यार्थे पदार्थाः कदाचिदपि विवेकेन नावधार्यन्ते, तथा च कीदृशः संसर्गः, तस्य भेदपूर्वकत्वादिति । तथापि प्रतिपत्तृभिरनंशस्य युगपत्प्रत्येतुमशक्यत्वात्क्रमेणांशांशिकया संवेदने भेदपूर्वकं संसर्गव्यवहारात्तदभिप्रायेण तथैवापोद्धारबुद्ध्या हि विविच्यन्तेऽर्थाः । तद्यथा पानकद्रव्ये गुणादिमात्रा विवेकशून्या । अथास्वादयितृभी रसनविज्ञानं विवेकेन पृथक्कृत्य व्यवह्रियते । यद्वाऽनुरूपशब्दाकारपर्यायाः तदेयं लब्ध्योपाया । लब्ध्योपाया च सा संविद् कल्पनायुक्तं रूपमाकारमाश्रयतीत्यर्थः । वाक्यार्थस्यानंशस्य झटिति प्रत्येतुमशक्तेरन्तरा पदार्थाकारबुद्धयो भ्रमास्तत्र दृशाच्छतरीतिः, इति तद्बुद्धिनिविष्ट एव त्वाकारो द्वारमित्यध्यवसायात्पदार्थत्वेन पार-

कल्प्यते पूर्वकक्षायामुपायभूतायां । प्रतिपत्ते तु समस्ते वाक्यार्थे सामान्यमात्रस्य भिन्नेन सत्यभूतेन बाधः । किमपोद्धारे प्रयोजनमित्याह । शास्त्रे विभक्ता इति । प्रत्यासत्त्या व्याकरणशास्त्र इत्यवगन्तव्यम् । अत्र हि लक्षणवाक्यानामुपायभावेन द्रव्यगुणादयोऽर्थाविषयभागेनोपात्ता इति । वाक्यार्थादपोद्धार एतत्प्रयोजनम् । लक्षणं यथाविभागं नियतविषयमवतिष्ठतामिति । तथा ह्युपलक्षणत्वेनार्थानामङ्गभावः शास्त्रे समाम्नातो न विधेयत्वेनार्थानादेशादिति लोकप्रसिद्धमर्थमनूद्य स्वरादिसंस्कारायोपदेशः । प्रकृतिप्रत्ययार्थवदिति । प्रकृतिप्रत्ययोर्नामाख्यातविषययोः स्वार्थो ऽत्र काल्पनिकः । तेन यथा निरंशात्पदार्थात् प्रकृत्यर्थः प्रत्ययश्चान्वयव्यतिरेकाभ्यां पदवादिभिरपोद्ध्रियते तथा वाक्यवादिभिरखण्डाद्वाक्यार्थात् पदार्थ इत्युभयाशयापोद्धारः समान इत्यर्थः । निमित्तभूता इति । यस्तेषां निमित्तभावः शब्दसाधुत्वविषयो ऽतो विभक्ता इत्यर्थः । ते चार्था द्विविधा लोकप्रसिद्धा वैशेषिकादिशास्त्रपरिभाषिताश्च । तत्र लोकप्रसिद्धाः पशुरपत्यं देवतेत्यादयः । ते चेह प्रसिद्धत्वादेव न परिभाष्यन्ते । ये तु शास्त्रान्तरे परिभाषिताः तेऽपि कार्यव्यवस्थया लक्ष्यन्त इत्याह । के चिदेव शास्त्रादनुमितात्मका इति । शास्त्रादस्मादेव । प्रत्यासत्तेः व्याकरणाख्यान्न वैशेषिकादेः । अनुमानेनाभिगत आत्मा स्वभावो लक्षणं येषामित्यर्थः । तथा ह्येकशेषारम्भाद्भेद्यत्वं द्रव्यलक्षणमनुमितं द्रव्याणाम् । प्राधान्येन वाच्यत्वे शब्दभेदप्रसक्तेस्तदारम्भस्यार्थवत्त्वाद्यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति वाक्यकारवचनाद्वाश्रितत्वं गुणलक्षणमनुमितम् । जातिरपि भावप्रत्ययाभिधेयेति गुणो ऽभावेवमुपपद्यते । तथा वोतो गुणवचनादिति । गुणयुक्तवान्गुणवचन इति गुणस्य भूतपूर्वत्वेन द्रव्ये प्रत्यार्थाभिधानं विशेषणत्वे सति कल्पते । कालस्यापि क्रियात्मकत्वलक्षणं भूते वर्तमाने भविष्यतीति येषां धात्वर्थोपाधित्वेन विज्ञायते । संख्यायाश्च भेदात्मकत्वं जात्याख्यायामेकस्मिन्निति वचनादवसीयते । वैशेषिकप्रसिद्धाया गुणत्वेन द्रव्यं प्रति नियमात्स्त्रियाः पुंवत् नपुंसकमिति सामान्येन शब्दाख्याने ऽर्थस्याङ्गभावोपादानात्संख्याविशेषणयोर्लिङ्गलक्षणमनुमीयते । न हि खट्वादीनां लौकिकं स्त्रीत्वं गण्डादीनां च पुंस्त्वं कुण्डादीनां च नपुंसकत्वं सम्भ-

वति । शक्तिः साधनं द्रव्यमिति शास्त्रव्यवहारात्कर्मकर्तृत्वोपगमाद्वि-भक्त्यर्थेऽव्ययीभाववचनाच्चानुमीयते । द्रव्यस्य ह्येकस्वभावत्वा-त्साधनत्वे शेषभावः कर्तृभावश्च नोपपद्यते । विभक्त्यर्थे च द्रव्यस्यैव वृत्तेरधिस्त्रीति स्त्रीशब्दप्रयोगाभावात्कस्य केन समासः । उपसर्गा-च्छन्दसि धात्वर्थे इत्यत्रार्थग्रहणं लिङ्गसंख्यानतो द्रव्यस्य प्रतिपत्त्य-र्थम् । तस्यावेदने तत्त्वमावेद्यते । अन्यथा स धन इत्यनोच्येत किमनेन । धातुकृतोऽर्थो धात्वर्थ इति । पुरुषोपग्रहयोस्तु पूर्वाचार्यव्यवहारादेव लक्षणप्रसिद्धिश्च । क्रिये तु लोकप्रसिद्ध एव । शास्त्रेऽपि पूर्वादीनां व्यवस्थायामिति विशेषणात्पदार्थोपाधित्वं तल्लक्षणमनुमीयते । क्रि-याभिर्भूवादिवार्त्तिके भाष्ये पूर्वापरीभूता साध्यस्वभावानुमानगम्या आलक्षिताः पदार्था इति यद्यपि संसृष्टानामेव सर्वथा भावस्तथा-प्यपोद्धृताः । अथैकैकस्य पदस्य गुणप्रधानभूता पदार्थाः । तद्यथा ख्यातस्य क्रियाकालसाधनसंख्यापुरुषोपग्रहा नामपदस्यापि द्रव्य-लिङ्गसंख्याः साधनानि क्रिया काल इत्यादिपदवाच्यत्वेन वा पदार्थतोपपत्तिः । केवलानां पचत्यादिपदवाच्यत्वाभावात् । यथा गममिति । यादृशो वैयाकरणानामागमः तमनुल्लंघ्य । व्याख्यातॄ-णामुपदेशपारम्पर्यातिक्रमेण यस्य पदार्थस्य यस्मिन् व्याख्यानेऽङ्ग-भावः स कथ्यत इत्यर्थः ॥ १ ॥ २ ॥

तत्र गुणादीनां द्रव्यपरतन्त्रत्वात्प्रथमं तदाश्रयं द्रव्यं लक्षयति ॥

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥ ३ ॥

इह सर्वनाम्नां द्वयी गतिः । वस्तुमात्राभिधायिनः केचिद्य-था सर्वादयः । विशिष्टवस्तुवाचकाश्चान्ये यथाऽन्यतरादयः । तत्र पूर्वैर्द्रव्यं लक्ष्यते । तथा हीदं तदिति सर्वनामप्रत्यवमर्शयोग्यं द्रव्यम् । इदमिति प्रत्यक्षार्थवाचकं, तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधानं, तेन प्रत्यक्षपरोक्षार्थाकारपरामर्शेन वस्तुमात्रवाचित्वं इदन्तदोरुपा-दानेन सर्वनाम्नामुक्तं भवति । तथा च प्रत्यक्षपरोक्षाकारभेदावधार-णेन वस्तुमात्रं तद्वाच्यं द्रव्यं लक्षितं भवति । प्रतिपिण्डस्वभावरूपतया स्वभावो द्रव्याणामशक्यो लक्षयितुमिति सर्वद्रव्यसाधारणलक्षणा-मेवमुच्यते वस्तुरूपतायाः सर्वत्र भावादेतदेव निरुक्तकारेणाप्युक्तम् ।

अन इति यत्प्रतीयते तद् द्रव्यमिति । द्वितीयमपि विशेषलक्षणमाह । भेद्यत्वेन विवक्षित इति । सामान्यादिभिरुपाधिभिरवच्छेद्यत्वेन विशेष्यत्वेन वस्तु अभिप्रेतं इत्यर्थः।विवक्षितग्रहणेन च नार्थस्येदं लक्षणमपि तु शब्दार्थस्येत्याह । तथा च जात्यादिरपि विशेष्यत्वेन चेद्विवक्षितः तदा द्रव्यमिति तीर्थान्तरीयद्रव्यलक्षणानादराद्यास्मिद्दर्शनेन सार्वत्रिकी द्रव्यपदार्थव्यवस्था सिद्ध्यति। यथा वाजप्यायनदर्शने जातिरन्वितप्रत्ययनिमित्तमपशब्दानामप्यर्थः । क्रियास्वप्यन्वितावभासप्रत्ययान्यथानुपपत्त्या जातिसिद्धिः । कथमन्यथा प्राप्त्यवस्थायां पचत्यर्थाभिन्नः प्रत्ययः स्याद्विक्लृत्त्यैव पचत्यर्थत्वे ऽधिश्रयणादीनां सामर्थ्यं गम्यते। शब्दार्थत्वाभावाद्देवदत्तकर्तृत्वं न स्यान्न हि तद्व्यापारोऽधिश्रयणादिर्धातुवाच्यः । सामर्थ्यगम्यं च लकारवाच्यस्य कर्तृव्यापारं समन्वयाभावः । इत्थं विक्लृत्तेरेव धातुवाच्यत्वात्तत्रौदनः कर्मकर्तृवत्कर्त्ता स्यान्न कदाचिदपि कर्म । स चापि विक्लेदोऽन्यलक्षणरूपोऽक्रमो नापि। निराश्रितपौर्वापर्यस्यैवार्थस्य क्रियात्वादित्थमधिश्रयणादिरपि तत्रानुप्रविशत्येव। तावन्मात्रे ऽपि च पचतीति प्रत्ययोत्पत्तेरिति प्रतिलक्षणं भिन्नप्रत्ययावसेया क्रियाजातिरङ्गीकार्या । एवं भ्रम्यादिक्रियालक्षणव्यङ्ग्या भ्रमणत्वादिजातिरपि ग्राह्या । तत्राप्युपक्रम एव विशिष्टेच्छादि कारणजन्यकर्मक्षणवैलक्षण्यात्साहश्याद् दुरवधारमिति तत्सामान्याभिव्यक्तिः।तथा हि, क्रमवतामपि लक्षणानां स्पष्टास्पष्टत्वेन जातेरभिषञ्जकत्वम् । व्यक्तिद्वारकश्च साधनसम्बन्धः।तस्याः साध्यत्वाज्जातेर्नित्यत्वे ऽपि क्रियाजातेर्देहाभावे व्यक्तिद्वारः क्रियासम्बन्धो गौर्दुह्यतामिति। अस्तिक्रियायाश्च साधनभेदात्कालभेदाच्च भेदाभिन्नप्रत्ययनिमित्तमपरं सामान्यं न विरुध्यते। नित्यत्वे ऽपि च सामान्यस्य प्रतिव्यक्ति निष्पत्तौ फलदानसामर्थ्यमिति, यजेतेति व्यक्तिनिष्पादनार्थां चोदनार्थवती।विनश्यत्यपक्षीयत इत्यत्र तिरोधानमपक्षयश्च क्रियाजातेराश्रयो ऽस्तु। तथैव शब्दनात्तस्य वाच्यत्वापगमादन्यथा क्रमपेक्षं प्राधान्यं स्यात्तथा च व्यापाराविष्टं तदेव वाच्यमस्तु। दर्शनान्तरे ऽपि हि न सर्वथा गुणभूतत्वेन तिरोभावो ऽस्य वृत्तावपि चोपसर्जनपदार्थस्यादेवदत्तः भवतीति सामानाधिकारण्याभावप्रसङ्गादिति परं प्राधान्यमेव सामानाधिकरण्यान्यथानुपपत्त्या ऽस्तु। सर्वनामप्रत्यवमर्शयोग्यत्वं च संशयः पचतीत्येवं दृश्यत एव । भेद्यत्वमपि

(साकुत्वा)?दिस्वविशेषेणापेक्षया सममस्त्येव। लक्षणानां च साम्प्रतिकव्यापारानपेक्षणाद्भेदयोग्यता भेद्यत्वमत्र। एवमास्यते शीयत इति, क्रिमादिभिः परामर्शान्मुखमित्येवमादिभिश्च विशेष्यत्वात् द्रव्यमित्याख्यातार्थोऽपि व्याडिदर्शने द्रव्यम्। ननु च क्रियारूपस्यैव भाव्यमानस्य प्रतीतेर्निष्पन्नानिष्पन्नयोश्च विरोधाद्भावनावचनात्तिबर्थसामर्थ्याद् द्रव्यप्रतिपत्तिः सामर्थ्यलभ्या, न शब्दार्थ इति मीमांसकाः। अमदेतदन्वयव्यतिरेकाभ्यां धातोरेव भावनावचनत्वात्प्रत्ययस्य च साधनाभिधायित्वात्साध्यसाधनभावेन च सिद्धासिद्धयोरप्यस्ति समन्वयः। तथा च प्रकृतिप्रत्यययोः समभिव्याहारः। अन्यथा सामर्थ्येन लभ्ये कः समन्वयः। प्रतीयते च क्रियाविशिष्टः कर्त्तेति कथं सामर्थ्यलभ्य इति वैयाकरणानां साधनाभिधानं पर्यवसितविवादमेव। साधनं च शक्तं द्रव्यं न केवला शक्तिरिति द्रव्यार्थतासिद्धौ वादयोऽपि द्रव्यक्रियात्मभूतसमुच्चयादिद्योतना द्रव्यवचनाः क्रियावचना वा। तेन पदार्थस्यापि तथैव व्यक्ताव्यक्तनिर्विकल्पः गुणोऽपि सामान्यविशिष्ट उच्यमानो द्रव्यपदार्थ इत्येकशेषरूपादयो लक्ष्यन्ते। तथा समानाधिकरणेन समानेन द्रव्येणेति व्याख्यातम्। समानेन गुणेनापि समासो भवति सर्वगन्धएकरस इति। नन्वेवं विप्रतिषिद्धं चानधिकरणवाचीत्यत्राप्यधिकरणं द्रव्यमिति शीतोष्णं सुखदुःखमित्येकवद्भावः कथमुदाहृतः। शीतादीनामनेन लक्षणेन द्रव्यवचनत्वादनधिकरणवाचीति पर्युदासो न प्राप्नोति। अत्रोच्यते सुबन्तावयवस्य द्वन्द्वस्यैव विधानात्सुबन्तस्य च सर्वस्य जात्युपहितद्रव्यवचनत्वेन अधिकरणवाचीति प्रतिषेधः सार्वत्रिकः स्यादिति विधेर्निर्विषयत्वमायातमिति विधिसामर्थ्यात्प्रतिषेधः प्रसिद्धद्रव्यविषयो विज्ञायते। शीतोष्णे उदके स्त इति। प्रसिद्धं हि लोके क्रियावद् गुणवत्समवायिकारणं द्रव्यमिति तद्वाच्ये च पर्युदस्यते। तथा च शीतोष्णादेरुदकादिद्रव्यवाचित्वे न भवत्येकवद्भावः। शैत्यादिगुणवाचित्व एव भवति। एवं समर्थवार्त्तिके, अथ हि गुणः पदार्थो भवति। सामर्थ्ये हि वीरत्वं गुणोऽन्यः पुरुषत्वमिति वीरशब्दस्यानेन लक्षणेन द्रव्याभिधायित्वेऽपि द्रव्योपसर्जनभूतस्य परतन्त्रस्य स्वार्थस्य सामर्थ्यविषयस्याभिधानात्संसर्गादिलक्षणलाश्रितगुणाश्रयेणाभिधा। तथा हि पुरुषत्वमप्येवम्। तत्र गुणमाह। लौकिकप्रक्रियया जातिरूपमपि, तस्य भाव इत्यत्राभिप्रायाद्वातिप्रसङ्गपरिहा-

रार्थं यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इत्युक्ते द्रव्यगुणयोरव्यतिरेकं मन्यमानः प्रकृतिप्रत्ययार्थयोर्भेदं नावगच्छेदित्यन्यच्छब्दानिश्चयो न भवतीति भ्रमितव्यम्। तथा ह्यस्मिन् द्रव्यलक्षणे रूपादीनामपि द्रव्यत्वाद्द्रव्यप्रकर्ष इत्यामुप्रत्ययभावः, समयान्तरं शीतं उपांशुतरः शब्द उच्चैस्तरां ध्वनिरिति ॥ ३ ॥

ति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
द्रव्यसमुद्देशश्चतुर्थः ॥



इदानीं गुणस्य शास्त्रीयलिङ्गानुमितं लक्षणमाह ॥

संसर्गि भेदकं यद्यत्सव्यापारं प्रतीयते ।
गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ॥ १ ॥

संसर्गि, आधारेण संसृष्टरूपसम्भेदेन वर्तमानं न सम्बन्धिमात्रेण। भेदकं, परमाश्रयान्तराद्व्यवच्छेदमाधारस्य करोति शुक्लोऽयं नील इति। एवं गौरयं नाश्व इत्यत्राश्रयान्तराद्व्यवच्छेदे गोत्वमपि गुणो भवति। तथा यद्यदिति वीप्सापदेन सर्वस्यैवं प्रकारस्य सामान्यादेरपि गुणत्वमिति परिभाषां कथयन्, नेदं वस्तुरूपावस्थितमिति सूचयति। अनेन चावच्छेदकस्य गुणस्य विशेषमाह। सव्यापारम्। अवच्छेदकरूपेण प्रतीयमानं गुणव्यपदेश्यं न रूपान्तरेणेत्यर्थः। यदेवंगुणं तस्य गुणत्वमिति सम्बन्धः। ननु किमयं परिभाषैव गुण इति, अथ निबन्धनमात्रास्तीत्याह। परतन्त्रत्वादिति। लोके हि परतन्त्रो गुण इत्युच्यते। प्रतीतिरियं न परिभाषामात्रमित्यर्थः। तथा च लौकिकस्यैवायं लक्षणस्य वैशेषिकप्रसिद्ध्युपकरणायानुवाद इत्युक्तं भवति। इत्थं च वीप्सा सफला। शास्त्र उदाहृतमिति। व्याकरणे व्याख्यानवाक्यानां लौकिक एव गुणो गृहीत इत्यर्थः। तथा हि, समर्थवार्त्तिके समानाधिकरणेषूपसङ्ख्यानम्। समर्थत्वाद् द्रव्यं पदार्थ इति वदन्ति, वीरपुरुषः। द्रव्ययोरत्यन्तभेदात्सामर्थ्याभावे द्रव्यपदार्थपक्षे समासाभावश्चोदितः। अथ हि गुणः पदार्थो, भवति सामर्थ्यम्। अन्यो हि वीरत्वं गुणः, अन्यः पुरुषत्वमिति। जातेरपि पारतन्त्र्याद् द्रव्ये समवायाद् गुणत्वमुक्तम्। तथा च गुणभेदात्प्रतीयमानद्रव्यैकत्वाश्रयं सामर्थ्यमिति सिद्धः समासस्तथा यस्य गुणस्य भावाद् द्रव्ये निवेश इति भेदको गुणो भेद्यं द्रव्यमित्येतदेव लक्षणमनुसृतम्। तथा हि। विशेष्यमात्रवचनाद्विशेषणमात्रवचने गुणे भावप्रत्ययः। गोशब्दस्य जात्यवच्छिन्नद्रव्यवाचित्वे जातौ गोत्वमिति, जातिमात्रवचनत्वे तु शब्दस्वरूपे व्यभिचारिणि प्रवृत्तिनिमित्ते, तस्य च वाच्यत्वं च सर्वमेवोपपादितम्। स्वरूपेण हि परमुपरञ्जयद्विशेषणम्। यथा जात्यादिगुणः। तथा स्वरूपावेशेनार्थं प्रत्याययतः शब्दस्य स्वरूपमुपरञ्जकत्वाद् गुणः प्रवृत्तिनिमित्तमर्थे तत्र रूपाध्यासेन वार्थप्रतीतिः। अभिधाव्यापारविशिष्टस्यैव न वाच्यत्वमपि तु साधारणस्य प्रयोगगतस्य। यथा रक्ते गुणे तत्त्वमित्यादिना च सम्बन्ध उपपा-

रितः। शुक्लादीनां गुणावच्छिन्नद्रव्यवाचित्वे शुक्लत्वमिति गुणे भावप्रत्ययः। गुणाभिधायित्वे जातौ, तद्वाचित्वे पूर्ववत्स्वरूपे। एवं चाद्यायां शब्दप्रवृत्तौ डित्थादीनामपि स्वरूप एव भावप्रत्ययः। स्वरूपाध्यासेन संज्ञया संज्ञिप्रत्यायनात्सदेव तत्र प्रवृत्तिनिमित्तम्। तदेतत्स्याड्डित्थत्वमिति तु क्रियागुणाध्यासादन्यत्र प्रवृत्तौ डित्थत्वसहचारितयोः क्रियागुणयोर्भावप्रत्ययः। तथा क्रियागुणयोरभेदाध्यासाभिप्रायं डित्थत्वम्। तदेतदिति भाष्यं यद्वोत्पत्तिप्रभृत्याविनाशात्पिण्डस्यावस्थान्तरेऽपि। प्रत्यभिज्ञाप्रत्ययनिमित्तं जातिरेव भावप्रत्ययवाच्या, आद्यायां शब्दप्रवृत्तौ। राजपुरुषत्वं पाचकत्वमौपगवत्वमित्यादौ तु सम्बन्धो यथायथं स्वरूपेणोपरञ्जकं प्रवृत्तिनिमित्तं भावप्रत्ययाभिधेयम्। विशिष्टसम्बन्धावच्छिन्नो हि सम्बन्धी प्रतीयते। तन्त्रेति। सम्बन्धस्यैवोपरञ्जकत्वाद् गुणत्वं भावप्रत्ययवाच्यता। न हि राजादिसम्बन्धानवच्छिन्नः पुरुषादिः प्रतीयते, अपि तु तत्सम्बन्धावच्छिन्नः। भेदस्य चोद्भूतत्वाद्भेदाधिष्ठानः सम्बन्ध एव प्रवृत्तिनिमित्तमभिहितोऽन्तर्भूतः। यत्र तु सम्बन्धानुरक्ता प्रतीतिः भेदस्य च तिरोधानं तत्र सम्बन्ध एव जात्यादिप्रवृत्तिनिमित्तं गुणो, गोत्वं शुक्लत्वमित्यादौ भावप्रत्ययवाच्यः। अत्र हि न समवायोपरक्ता प्रतीतिः, अपि तु जातिगुणोच्छुरिता। द्रव्ये समवायशक्तितिरोहितभेदे, सम्बन्धस्तु जातिगुणयोराधाराविच्छेदकः। हस्तित्वमित्यादौ रूढिविषये जातिरेव वाच्या। एवं कुम्भकारत्वमित्यादौ। अत्र हि शब्दव्युत्पत्तिनिबन्धनं सम्बन्धो जातिरेव शब्दवाच्या। सत्तेत्यत्रापि सतासतोः सम्बन्धस्याव्यभिचारादनवच्छेदकत्वं जातिरेव भावप्रत्ययवाच्या। तदुक्तम्। समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नयोगाव्यभिचरितसम्बन्धेभ्य इति। इत्थमत्र विशेषणं स्वरूपेण परमुपरञ्जयत्सूत्रे भावशब्देन प्रतिपादितम्। भवत्यस्मात्तदाकारेण द्रव्यमिति भावः। तथा हि यत्तदाकारेण द्रव्यं प्रतीयते शुक्लादिगुणास्तदाकारेणेति परोपाधिमन्तरेणार्थानामव्यवहार्यत्वेनासत्कल्पत्वात्तेन च विशेषणेनाभेदमापादितं शब्दोऽभिधत्त इति शब्दप्रवृत्तिकारणमपि भवत्यर्थरूपसम्बन्धि। तेन यस्य गुणस्य भावादित्यत्र पक्षेऽर्थवाचिनी प्रकृतिः, गोर्भावो गोत्वमिति। यस्मात् सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भाव इत्यत्र पक्षे शब्दवाचिनी प्रकृतिः, गो-

शब्दस्य भावो गोत्वमिति । तथा हि सर्वे भावाः सर्वे शब्दाः स्वेन भावेन भवन्त्यस्मादिति व्युत्पत्त्या प्रवृत्तिनिमित्तलक्षणेनार्थेन भवन्ति । अनेकार्थत्वाञ्जातूनां भवतेः प्रयोगवचनत्वात्प्रयुज्यन्त इति । स प्रवृत्तिनिमित्तलक्षणो भावस्तेषां शब्दानां प्रत्ययवाच्य इति तच्छब्दवाच्या शब्दात्मिका प्रकृतिरत्र पक्षे भवति । तदेवं गुणलक्षणमात्रं शास्त्र उदाहृतम् । यत्र त्वस्य गुणस्य न ग्रहणं शास्त्रे, तत्र युक्तिर्वक्तव्या । तथा हि । वोतो गुणवचनादित्यत्र नायं गुणः प्रातिपदिकाधिकारात् । स्त्रीत्वस्य च धर्मत्वाद् द्रव्याभिधाय्येव किं चित्प्रातिपदिकं गुणवचनाद् गृह्यते । गुणयुक्तवान्गुणवचन इति पट्वादिभ्यो गुणोपसर्जनद्रव्यवचनेभ्यः प्रत्ययः । गुणश्चात्रोपसर्जनभूतो न संसर्गादिलक्षणो, जातिशब्देभ्यो ऽपि प्रसङ्गादिति परिभाषितो ऽसौ गृह्यते सत्वे निविशते चेतीत्यादिः । नन्वेवं वैशेषिकप्रणीतस्यैव गुणस्य ग्रहणं स्यादिति पट्वी मृद्वीत्यादावीकारो न स्यान्नैष दोषः । पाटवादीनामन्यस्य लक्षणस्य सम्भवादेतदर्थमेव हीयं परिभाषा ऽऽरब्धा । अन्यथा प्रतीतिबलादेव रूपादीनां गुणत्वमितीयमनर्थिका स्यात् । गुणवचनब्राह्मणादिभ्य इत्यत्रापि पारिभाषिक एव गुणो गृह्यते । तथा हि वाक्यकारेण अर्थवत्प्रातिपदिकगुणवचनसंज्ञाया हि बाधिकाः समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिरेकद्रव्योपदेशिनीसंज्ञादिरिति समासादिसंज्ञाः समारब्धाः । तथा च समासाद्यविविक्तं प्रातिपदिकं ष्यञमुत्पादयति । अत एव च ब्राह्मणादिग्रहणमभ्युपपद्यते । ब्राह्मणशब्दस्य तद्धितान्तत्वाद् गुणवचनसंज्ञाभावान्माणवशब्दो ऽपि तद्धितान्तो मनोरपत्यमिति । तथा वाडवशब्दो ऽपि वडवाया वृषे वाच्य इति । अर्हतो नुमिति तु, कृदन्तत्वात् । एवमन्यदपि ब्राह्मणादिगणे गुणवचनसंज्ञासाधकं योज्यमिति । तत्रापि ष्यञ्यथास्यादिति ब्राह्मणादिग्रहणम् । ये चाप्यमी बाधकाः प्रत्ययाः तानपि बाधित्वा ष्यञ्यथास्यादित्यपि ब्राह्मणादिग्रहणमुपपद्यते । तथा हि ब्राह्मणशब्दस्याव्युत्पत्तिपक्षे प्राणभृज्जातीत्यण् प्राप्तः । माणववाडवयोर्गोत्रत्वाद् गोत्रचरणादिति वुञ् प्राप्नोतीत्येवमन्यत्राप्यूह्यम् । येषां तु च तद्धितादिसमाश्रयी कश्चिदपवादः तेषामत्र प्रपञ्चार्थः पाठः । सूत्रकारमते तु गुणमुक्तवान्गुणवचन इति गुणोपसर्जनद्रव्यवचनो वचनग्रहणादत्र गृह्यते । तृतीया तत्कृतार्थेन गुणवचनेनेत्यत्रापि खण्डादिस्तृतीया-

र्थकृतः कश्चिदेव गुणोपसर्जनो द्रव्यविशेषो गृह्यते । खण्डनगुणयोगाद्धि द्रव्यं खण्डशब्देनाभिधीयते । संख्याया गुणस्य निमान इत्यत्र समभागो गुणो ग्राह्यः । न यथोक्तलक्षणः नापि सत्त्वे निविशत इत्यादिलक्षणः । द्विमयमुदश्विदिति द्वौ समौ भागौ यवानां निमानमेकस्योदश्वितः क्रीयमाणस्येत्यर्थः । साऽपेक्षत्वे ऽपि गमकत्वाद्वृत्तिः । दृष्टश्च समवायवचनो गुणशब्दः । यथा त्रिगुणा रज्जुरिति । गुणवचनेभ्यो मतुपो लुगित्यत्र मत्वभिन्नरूपां गुणमभिधाय तद्वति वर्तन्ते शब्दशक्तिस्वाभाव्यात् । गृह्यन्ते शुक्लादयः । तथा चाव्यतिरेकात् सिद्धमिति प्रकृत्याख्यानमभेदादाचारयोग्यताश्रयेण । तेन रूपादयस्तद्योग्या निवर्त्तिता भवन्तीति मत्वर्थीयोपात्ता एव तद्वति ते साधवो रूपवान् घट इत्यादि । प्रकारे गुणवचनस्येत्यत्र सर्वस्यैव पदस्य द्विर्वचनमिति स्वतन्त्रगुणोपसर्जनं द्रव्यं पट्वादि गृह्यते । पूरणगुणेत्यत्र गुणशब्देनार्थग्रहणाभिसम्बन्धादेतेषां तावत्प्रत्ययनं नास्ति । आश्रितमात्रस्या ऽपि धर्मस्य संसर्ग्यादिलक्षणस्य परिग्रहे द्रव्यसामर्थ्यादसिद्धिः । तस्मात्सत्त्वे निविशत इत्यादिलक्षणो गुणो गृह्यते । स च वैशेषिकशास्त्रप्रसिद्धः । तथा हि पार्थिवादीनां रूपादीनामपि संयोगादुपजनापायौ द्रव्ये स्तः । कालाकाशात्मसु परममहत्त्वादीनां चाक्रियाजन्यत्वमस्तीति, व्याप्यते तेन लक्षणपदार्थः । तथा च रूपादिभिरपि प्रतिषेधः प्राप्तः, तत्स्थैश्च गुणैरिति प्रतिप्रसव आरभ्यते । तदर्थेन सह विधेरसमवायभेदेनायं शब्दस्य व्यपदेशः । तस्मिन्गुणात्मभि ये गुणा व्यवस्थिताः तद्वाचिभिरिति । द्रव्यपारतन्त्र्याच्च गुणानां वास्तवस्वात्मन्यवच्छिन्नत्वं नोपपद्यते इत्यभिधाव्यापाराश्रयो ऽयं व्यवहारः । शब्देन केषां चिदु गुणानां स्वात्मप्रतिनिष्ठानां प्रत्यायनात् । स चायं रूपादिशब्दानां द्रव्यशब्दैरसमानाधिकरणानां प्रकारो घटते, द्रव्यं प्रति गुणभावाप्रतिपत्तेः । इत्थं घटरूपं कापित्थरसः चन्दनगन्धः यवनस्पर्शः कन्याज्ञन इत्यादिसमासः साधुः । ये तद्द्रव्योपसर्जनत्वेनोच्यमाना दृष्टाः ते तस्यविशेषणेन व्यवच्छिद्यन्ते शुक्लादयः । शुक्लः पट इति हि द्रव्यसामानाधिकरण्येन प्रयोगो ऽस्ति । ततश्च ते प्रतिषेधविषयाः । पटस्य शुक्ल इति षष्ठ्या विशेष्यमाणस्य सर्वस्यैव गुणस्य स्वात्मन्यवस्थितत्वेन गाढ्ग्रान्यात्सर्वावस्थासु न समाश्रयणीयम । शुक्लादयश्च क चित्तत्स्था इति विधेरपाकृताः प्रतिषेधभाजः । एवं पौष्कल्यादयो

ऽपि। शुक्लशब्दाद् गुणे भावप्रत्ययोत्पादाद् द्रव्योपसर्जनशुक्लगुणाभिधानात्। यो हि कस्यांचिदवस्थायां द्रव्योपसर्जनो गुणः सोऽत्र तद्विशेषणेनापाक्रियते। तथा च शुक्लगुण इति शौक्ल्यशब्देनापि तस्य प्रत्यायने व्यवच्छेद एवमुपलक्षणे शब्दभेदस्यानङ्गत्वादयमेवं रूपवान्घट इत्यापि द्रव्यसामानाधिकरण्यात्। रूपादयो न तत्स्थाः। नैतदस्ति। न रूपमात्राद् द्रव्यविशेषणं किंतु सम्बन्धो भेदविवक्षायां मत्वर्थमपेक्ष्य तद्विशेषं नयन्नपि सामानाधिकरण्येन गुणो, द्रव्यात्मनि अनध्यासात् न स्वात्मनि स्थितिं संहरति। न हि राजपुरुष इति राजपुरुषमवच्छिन्दन्नपि तन्मयतां भजते। तस्मात्तदस्य रूपमस्यास्तीति प्रतीत्योरभेदात्सर्वदैव तत्स्था रूपादयः। सूत्रेण वचनशब्दस्यानुपादानात् ये गुणमुक्त्वा तद्वति न वर्त्तन्ते अपि तु गुणमात्रमभिदधति ते सम्प्रति स्वातन्त्र्याद्गुणा अपि वृत्त्यन्तरे दृष्टगुणभावा गृह्यन्ते इति। शुक्लादय एवैवंप्रकारा गृह्यन्ते न रूपादय इति सूत्रार्थः एवं वाक्यतात्पर्यव्याख्यानः। अत एव ब्राह्मणस्य शुक्ला इति प्रकरणापेक्षस्यैव निर्ज्ञातत्वात्सति सामर्थ्ये समासप्राप्तौ नेदं साम्प्रतिकगुणरूपं प्रतिषेधोदाहरणम्। गुणमात्रवृत्तेर्गृहीतत्वात्तत्र भूतपूर्वगत्याश्रयणमेव युक्तम्। घृतस्य तीव्रश्चन्दनस्य मृदुरिति प्रकरणादिवशात्तीव्रादेर्गन्धादिविशेषणत्वे निर्ज्ञाते गन्धादेर्विशेष्यस्य तत्त्वात्तत्र तद्विशेषणस्यापि तथात्वाशङ्कायाम्। ननु तद्विशेषणैरित्यपरं वाक्यं तीव्रादयस्तीव्रं घृतमित्यादौ वृत्त्यन्तरे द्रव्यसामानाधिकरण्यात्तत्स्थत्वाभावस्फुटीकरणाः। तेन शुक्लादि तीव्रादि सौत्रप्रतिषेधविषय एवेति स्फुटीकृतं। ईषदकृतेत्यत्र वाक्यमीषद् गुणवचनेनेति। तत्र प्रसिद्ध एव गुणो ग्राह्यः सूत्रार्थप्रदर्शनं हीदम्। तथा हि ईषच्छब्दोऽपहासवचन इति तद्वदभिधायिना तस्य समासः। अपहासयोगी च क्रियागुणलक्षणोऽर्थः। जातिद्रव्ययोस्तदभावाज्जातेर्नित्यत्वाद् द्रव्यस्य सिद्धस्वभावत्वात्तत्राकृतेति पर्युदासाभावात्क्रियावाचिनां ग्रहणमिति गुणवचनपरिग्रहः सूत्रार्थ एव। यद्येवमीषद्गार्ग्य इत्यत्र नैवास्ति प्रसङ्गोऽपत्यजातेरपहासायोगादितीह मा भूदीषद् गार्ग्य इति भाष्ये व्यवच्छेद्यं कथमुक्तम्। यथा कथंचित्समर्थनीयमेतत्तथा हि। यथा गार्ग्यतर इति प्रकर्षस्य जातेरयोगादेकार्थसमवेतक्रियागुणनिमित्तत्वमवस्थाप्यते तथाऽपहासोऽपि सम्भाव्यतेति युक्तमेतत् व्यवच्छेद्यम्। एतत्तु न सम्यक् प्रकर्षस्य

श्रूयमाणार्थगतत्वेनासम्भवाद्युक्तं, यत्प्रतीयमानक्रियागुणनिमित्तत्वम् । समासस्त्वीषत्पिङ्गल इत्यादौ सावकाश इति कथमत्र प्रसजेत् । यदपि भाष्यम्, अक्रियेति ह्युच्यमाने इह न स्यात्समासः ईषत्कडार इति तदपि कथम् । मात्रभावादेवात्र क्रियाकारकसम्बन्धः प्रतीयत इत्यव्युत्पन्न एवायम् । केवलं स्वरवर्णानुपूर्वीज्ञापनाय गडेः कडचेत्येवमसत्येव व्युत्पत्तिराश्रिता । तस्मात्सूत्रार्थदर्शनपरत्वेनैवैतद् भाष्यं व्याख्येयम् । गुणवचनत्वादत्र समास इति । अजादिगुणवचनादेवेत्यत्र सत्त्वे निविशत इत्येवं लक्षणो गुणो गृह्यते न तु संसर्गादिलक्षणः । एवं हि सर्वस्य उपाधिविशिष्टार्थाभिधायकत्वात्प्रातिपदिकमात्रात्प्रत्यये गुणवचनग्रहणमनर्थकं स्यात् । नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता इत्यत्र संसर्गादिरूप एव गुण आश्रीयते । तथा हि नञ उत्तराणि सम्पाद्यर्हाद्यर्थतद्धितप्रत्ययान्तानि गुणप्रतिषेधे नोदात्तानि भवन्तीति सूत्रार्थः । अत्र प्रतिषेधभाजश्चत्वारः, प्रकृत्यर्थः, प्रत्ययार्थः, तदुपाधिः सम्बन्धो, वाक्यार्थरूप इति । तत्र गुणप्रतिषेध इति वचनादकार्णवेष्टकिकं मुखमित्यत्र कर्तृकर्णवेष्टकादन्यदाश्रीयते नापि तदभावः किं तर्हि कर्णवेष्टकाभ्यां न सम्पद्यते मुखमित्येवं रूपस्य प्रतिषेधो नञा क्रियत इत्यस्य वाक्यार्थतया सौमुख्यस्य सम्पद्यमानस्यावच्छेदिका सम्पत्तिरुपसर्जनमुपाधिभूता सा प्रतिषिध्यते । सदा च प्रकृत्या कर्णवेष्टकशब्देन तस्यासम्बन्धादसमर्थसमासोऽस्मादेव ज्ञापकादवसेयः । सत्यपि च प्रतिषेधे आद्यविधिपदोपात्तार्थनिबन्धनत्वात्तद्धितो भवत्येव । तदुत्तरकालं तु पदान्तरगा नञा प्रतिषेधो वाक्यवाचकः शब्दसंस्कारस्यान्तर्गतस्य । तथा च ग्रामं न गच्छतीत्यादौ क्रियाप्रतिषेधेऽपि कर्मादौ द्वितीयादयो भवन्त्येव । वाक्यार्थस्य कर्णवेष्टकाभ्यां सम्पद्यते मुखमित्येवं रूपस्य प्रतिषेधो नञा क्रियत इत्युक्तं । वाक्यार्थश्च सामान्ये वर्त्तमानानां पदानां विशेषेऽवस्थापकः सम्बन्धः । स च पदार्थविच्छेदकत्वादुपसर्जनं गुण इत्युच्यते । सम्बन्धेन निवर्त्तमाने प्रकृतिप्रत्ययार्थेऽपि सम्बन्धिनो निवृत्तिप्रतीतिः । अत्रापि पक्षे प्रकृत्यर्थासम्बन्धेन न समासोऽस्मादेव ज्ञापकाद्विज्ञेयः । असामर्थ्यं च प्रकृतेः प्रत्ययार्थसापेक्षतया । सापेक्षत्वादसामर्थ्यात्प्रत्ययार्थसम्बन्धेत्यनेन दोषः । प्रधानं हि तदा प्रत्ययार्थः प्रधानस्य सापेक्षस्यापि भवत्येव वृत्तिः । अन्ये त्वाहुः । प्रकृत्यर्थो ऽत्र

प्रत्ययार्थं प्रत्युपसर्जनत्वाद् गुण इति भाष्यकारमतमुन्नीयते । तथा हि, न नञ्पूर्वात्तत्पुरुषादित्यत्र भाष्यकारेणोक्तम् । आचार्यप्रवृत्तिर्ज्ञापयति सर्व एव तद्धितः सापेक्षाद्भवतीति यदयं नञो गुणप्रतिषेधे सम्पाद्यर्हेत्यादिकमाहेति । तथा हि, न पृथोर्भावो ऽपार्थिवमपृथिमिति प्रकृत्यर्थः प्रतिषिध्यते तत्र । तथा चासामर्थ्यात्तद्धितो नैव स्यात्समर्थानां प्रथमाद्वेति वचनात् । अतो ज्ञापकेनायमर्थ उक्तः । तत्र च यथा प्रतिषिद्धस्य पृथोर्भावः पृथोर्वा ऽन्यस्य भावः इत्ययमर्थः । तथा प्रतिषिद्धाभ्यां कर्णवेष्टकाभ्यां संपादि मुखं ततो वान्येन सम्पादीत्येवं प्रकृत्यर्थेन नञः सम्बन्धादिदमवसीयते प्रकृत्यर्थो गुणत्वेन भाष्यकारस्याभिमत इति । एतच्च न युक्तम् । प्रधानाप्रधानसंनिधौ प्रधान एव कार्ययोग इति संपद्यमानार्थविषयः प्रतिषेधः सम्पत्तेर्युक्तो नाप्रधाने प्रकृत्यर्थे । एकपदोपात्तो ह्यर्थो ऽन्तरङ्गः संसर्गी भवतीत्यतो ऽपि सम्पत्तेरेव गुणो युक्तो न पदान्तरोपात्तः प्रकृत्यर्थो विप्रकृष्टः । ज्ञापकं च न्यायानुवर्तकं न ज्ञापनकारकम् । ततश्च प्रधानाभिसम्बन्धे प्रकृत्या न स्यात्समासो ऽसामर्थ्यादिति ज्ञापकेन प्रकृतेराश्रितसमासायाः प्रत्ययो ज्ञापितो भाष्यकारेण । तदेवं पूर्वदर्शित एव सूत्रार्थो युक्तः । अर्हतिकमित्यत्राह्यार्थे तद्धितो वोदाहार्यः । अवसीयते ईहितार्थे । असाम्परायिकमित्यत्र मत्वर्थे सम्परायाय प्रभवतीति तद्धितः । अनया दिशा अन्यत्रापि गुणप्रदेशे सूत्रवार्तिकेषु गुणस्वरूपं व्याख्येयमिति दिङ्मात्रमिह प्रदर्शितम् । अतिशायनसूत्रे भाष्यं, प्रातिपदिकार्थो वै द्रव्यं न च द्रव्यस्य प्रकर्षो ऽस्ति । एवं तर्हि गुणः प्रातिपदिकार्थः ॥ १ ॥

ननु यद्ययमपि प्रकृत्यर्थस्तत्र कुतः । एतस्य गुणस्य प्रकर्ष इति तन्नैतदुक्तम् । यस्यास्ति प्रकर्षः तत्प्रातिकर्षे भविष्यतीति अयं वै प्रातिपदिकार्थ इति यल्लिङ्गसंसर्ग्यादिलक्षणो गुणो गृह्यते स हि द्रव्योपसर्जनभूतः शुक्लादिप्रातिपदिकेन प्रत्याय्यते । तत्र च गुणस्यैव प्रकर्षो ऽस्ति न द्रव्यस्येत्यत्र कारणं च वक्तव्यम् । शब्देन विस्पष्टरूपस्य द्रव्यवद् गुणस्यापि प्रतिपादनात्करणापन्नगुणाश्रयत्वगुणवत्कार्यद्रव्यमपि कथं न प्रकृष्येत तथा गुणतः प्रतीयमानः कश्चिदभिधीयगुणानपेक्ष एव द्रव्यस्य प्रकर्ष इत्यत्रापि कारणं वक्तव्यम् । एकस्मिन्नप्यर्थे बहुतरोपाधीनां सम्भवान्नियमेनैकस्योपादानमयुक्तम् । सत्येव द्रव्यातिशायनात्स्पन्दं स गुणः सम्बन्धिनियत इत्ये-

तत्कथम् । न हि गुणो निर्गुण इति वचनात्सामान्येषु वा ऽवच्छेदको नास्ति । नि: सामान्यानीति सिद्धान्तात्तथा कर्मादिष्वपि नास्ति गुण इति तत्र किंनिबन्धनः प्रकर्षो भवेत्कथं वाऽन्यस्मिन्प्रकृष्यमाणे ऽन्यस्य प्रकर्षो युक्त इत्येतदपि वक्तव्यम् । न अर्जुने शौर्येणेव चैत्रः । तथा द्रव्यं च प्रकृष्यमाणं लोकः प्रत्येति शब्दादित्येतान्विकल्पान् क्रमेण निवारयितुमाह ॥

द्रव्यस्याऽव्यपदेशस्य य उपादीयते गुणः ।
भेदको व्यपदेशाय तत्प्रकर्षो ऽभिधीयते ॥ २ ॥

इहोपाधिविवेकेन निरूपयितुमेव न पार्यते द्रव्यं । न हि सामान्यादिपदार्थं विनाव्यवस्थापयितुमिदन्तया शक्यते । यद्रूस्त्वेतेन रूपेण निरूपयितुमपि न शक्यते तत्कथं स्वतः प्रकर्षेण युज्यते अतो ऽव्यपदेशस्येति । स्वतः प्रकर्षाभावे सामानाधिकरण्यच्छलेन हेतुरूपात्तु । तदित्थं संसर्गिधर्मनिमित्तः प्रकर्षः । गुणादिभिरेव संसर्गिभिर्विशेष्यमाणं द्रव्यं जातीयात्प्रकृष्यते । तत्र संसर्गिणो गुणादयो बहवः सन्निहिता इति किङ्कृतो ऽतिशय इत्याह । य उपादीयते गुणो भेदको व्यपदेशायेति । द्रव्यं व्यपदिष्टं व्यवच्छेदको ऽन्यस्माद्यो गुणादुपादीयते शब्देन गृह्यते तत्कृतः प्रकर्षः प्रत्ययवाच्यः । न त्वनभिधीयमानापरसन्निहितगुणादिनिमित्तः । तस्य प्रतीयमानस्यानेकत्वान्नियमकारणाभावात्प्रतीतेरुपप्लूयमानत्वाद् बहिरङ्गत्वाद्भिधीयमानस्तु गुणो ऽन्तरङ्गो नियतप्रतीतिः । यदावेशेन हि द्रव्यमभिधीयते तदात्मन एवातिशय्यमानता नान्यायाः प्रकृत्यर्थत्वोपाधित्वादतिशयस्य । अभिधीयमानस्यैव च प्रकृत्यर्थत्वाद् गुणो भेदक इति स्वशास्त्रलक्षितं गुणरूपमत्र गृह्यते इत्याह । संसर्गि भेदकं यद्यदिति हि लक्षणम् । भेदकत्वं चात्र मुख्यं गुणलक्षणम् । असमवेतस्यापि दण्डस्य दण्डिव्यवच्छेदेन । तदेवं शुक्लतरः पट इति शुक्लगुणनिमित्तो गन्धरसादिप्रतीयमानगुणनिमित्तः ॥ २ ॥

यथा च निरुपाधिता द्रव्यस्य प्रकर्षो नास्ति तथा द्रव्याश्रितस्य स्वतन्त्रस्य गुणस्यापि शुक्लतरं रूपमिति स्वतः प्रकर्षो नास्ति अपि तु तदवस्थायां द्रव्य.यमाणत्वाद् गुणस्यापरसम्बन्धनिमित्त एव प्रकर्ष इत्याह ॥

सर्वस्यैव प्रधानस्य न विना भेदहेतुना ।
प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम् ॥ ३ ॥

गुणो ऽपि प्रधानेन शब्देनाभिधीयमानो द्रव्यलक्षणमिदं तदिति सर्वनामप्रत्यवमर्शयोग्यस्वभावमनुपतनीति तस्य निरुपाधेर्व्यपदेशाविषयस्याद्यनुपाधिव्यपदेशः, तन्निमित्त एव प्रकर्षः । तत्र जातिर्व्यपदेशहेतुरपि नूनं तत्प्रकर्षे स व्यापारसमानजातीयाधिप्रकर्षः । तत्र जातेरभेदः । अत एवोक्तं भाष्ये जननेन प्राप्यत इति जातिः । न चैतस्यार्थस्य प्रतिकर्षापकर्षौ स्त इति जन्मकालसम्बन्धः । जातिशून्ये ऽतिजन्मकाले ऽपि तेनैव रूपेणासावस्थिता व्यक्तेरवियोगेन प्रवर्तमानतज्जातीयादेव व्यवच्छेदं प्रापयितुं शक्नोतीत्यर्थः । अतश्च जातेरतिशायकत्वासम्भवात्तदेकार्थसमवायि भासुरत्वं वैमल्यं रागान्तराव्यतिभिन्नतेत्येवमादयो विशेषाः प्रकर्षवृत्तिनिबन्धनम् । यद्यपि चाग्निसंयोगेन स्वत एव गुणस्य प्रकर्षो भवति । तथा च व्यपदेशः परोपाधेरेवेति तन्निमित्त एव प्रकर्षो न्याय्यः । न हि स्वगतो विशेषः शब्देन सर्वः शक्यते ऽभिधातुं, रूपादिशब्देन रूपत्वादिजातीयस्याविशेषेण सर्वस्याभिधानात् । एवं शुक्लादिविशेषशब्दे नापि शुक्लत्वादिजातीयस्याविशेषेण प्रतिपादनात् । अत एव च यदा भास्वरादयो ऽपि प्राधान्येन व्यपदिश्यन्ते तदा तदाश्रितधर्मद्वारक एव प्रकर्षो विज्ञेयो भासुरतर इति । तत्रापि धर्मान्तरस्य प्राधान्येन तद्गुणाश्रितनिमित्त एव प्रकर्ष इति यावत् सम्भवति शब्दव्यापारः तावदपर्यवसानमेव धर्माणामिति "गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते । तस्याश्रितगुणादेव प्रकृष्टत्वं प्रतीयत" इत्युक्तमेव । अत एवात्र सर्वस्यैव प्रधानस्येति व्याप्तिरुक्ता सर्वग्रहणेन । यदा तु शब्दव्यापारोपरमः तदा धर्मान्तरपर्येषणा पर्यवस्यति ॥ ३ ॥

ननु च भासुरत्वादयः शुक्लशब्दस्य न वाच्या इत्यशब्दवाच्यप्रतीयमानधर्मद्वारकः सन्निधानादनियमः प्रसज्यत एवेत्याशङ्क्याह ।

विद्यमानाः प्रधानेषु न सर्वे भेदहेतवः ।
विशेषशब्दैरुच्यन्ते व्यावृत्तार्थाभिधायिभिः ॥ ४ ॥

इह प्रधानेषु द्रव्येषु वस्तुसन्तो बहवो ऽस्मात्सजातीयविजाती-

याव्यवच्छेदादयो धर्माः। चैते न सर्वे केनावच्छेदेन शक्यन्ते ऽभिधातुम्। अनेकव्यावृत्तिनिवृत्त्यैकस्य शब्दस्याभावात्। एकैकव्यावृत्तिनिष्ठा हि बहवः शब्दा वस्तुनि प्रवर्तन्ते। तथा च तेऽवविशेषशब्दा इत्युच्यन्ते प्रतिनियतविशेषाभिधायित्वात्। यदि सर्वविशेषविशिष्टं द्रव्यमेकेन शब्देनाभिधीयेत, स्यादसावेकः शब्दः साधारणः। नचैवम्। तस्मात्प्रतिनियतव्यावृत्तिविशिष्टार्थाभिधायिभिः शब्दैः सर्वविशेषाणामसंस्पर्शादुपात्तावशेषहेतुक एव प्रकर्षः। सूक्ष्माणां च विशेषाणामसंविज्ञातपदानां भासुरत्वादीनामस्त्येवं शुक्लादिशब्दैर्वाच्यता तदुपाधिविविक्तस्य शुक्लस्य प्रधानस्य शब्दविषयाभावोपगमायोगात्। संसर्गिरूपोपहितत्वाच्छब्दवाच्यस्य जातिहेतुकप्रकर्षासम्भवात् शुक्लतरं रूपमित्यादिप्रयोगदर्शनाच्चात्र भासुरत्वादिहेतुकः प्रकर्षो निश्चीयते। न त्वाशब्दवाच्यधर्मनिमित्तं सः, अतिप्रसङ्गादिति भासुरत्वादीनामपि प्रयोगप्रामाण्यादत्र शब्दवाच्यत्वं निश्चीयताम् ॥४॥

ननु भवतु स्वतो ऽव्यपदेशस्य द्रव्यस्य संसर्गिधर्मनिमित्ता व्यपदेशप्रवृत्तिः। तत्रैव तु व्यपदेशे संसर्गिण उपक्षयापकर्षे ऽपि कथं तस्य व्यापारः कल्प्यत इत्याह ॥

वस्तूपलक्षणे तत्र विशेषे व्यापृतो यदि ।
प्रकर्षो नियमाभावात्स्यादविज्ञानहेतुकः ॥ ५ ॥

वस्तुनिर्देशमात्रचरितार्थत्वे विशेषस्योपाधिभूतस्य यः शुक्लो दृष्टः स गरिमादिना प्रकृष्टः शुक्लतर इति प्रतीयते। तथा च विशेषः प्रकर्षस्य निबन्धनं न ज्ञायेत। न चैवं प्रसिद्धिः शुक्लगुणनिमित्तस्यैव प्रकर्षस्यातो ऽवगमात्तथा यथा प्रतीतिः यथा च युक्तिः प्रकृत्यास्तत्तरत्वाच्छब्दवाच्यस्येति। तथा प्रकर्षे व्यपदेशहेतोरेव विशेषस्य व्यापारः कल्पयितुं न्याय्य इत्यर्थः ॥ ६ ॥

इह कथं प्रकर्षप्रत्ययः निकृष्टतरः प्रकृष्टतर इत्याशङ्क्याह ॥

सर्वं च सर्वतो ऽवश्यं नियमेन प्रकृष्यते ।
संसर्गिणा निमित्तेन निकृष्टेनाधिकेन वा ॥ ६ ॥

व्यपदेशहेतुप्रकर्षे ऽर्थप्रकर्षप्रत्यय इति निकृष्टोपाधेरभिधाने

निकर्षापेक्ष एव प्रकर्षो वाच्यः प्रकर्षोपाध्यभिधाने प्रकर्षापेक्ष इति सजातीयापेक्षायां सर्वस्य प्रकर्षसम्भवादेतदुपपद्यते । निकृष्टस्य निकृष्टत्वादेव प्रकृष्टस्य प्रकृष्टत्वादेवातिशयः सम्भवत्येव । एवं गुणप्राधान्ये ऽन्यपरधर्मनिमित्तः प्रकर्ष इत्यनवस्थां पूर्वप्रदर्शितामभ्यनेनाह । इह गौतरेति प्रयोगो दृश्यते तत्र च न जातिनिमित्तः प्रकर्ष इत्युक्तम् ॥ ७ ॥

न चान्यत्र निमित्तान्तरमत्र सव्यापारं प्रतीयत इति निमित्तप्रकर्षाद् द्रव्यस्य । एवं शुक्लतरादावपि भविष्यतीति किमिति गुणहेतुकः प्रकर्षः समुद्भाव्यत इत्याशङ्क्याह ॥

नापेक्षते निमित्तं च प्रकर्षे व्यापृतं यदि ।
द्रव्यस्य स्यादुपादानं प्रकर्षे प्रसनर्थकम् ॥ ७ ॥

द्रव्यं निर्ह्रासोपचयसम्बन्धायोग्यं स्वत इति न स्वनिमित्तं प्रकर्षमनुभवति । यद्युपाधिरूपनिमित्तं प्रकर्षे सव्यापारं नाङ्गीकरोति तदा प्रकर्षे प्रतिपाद्ये तस्योपादानं निष्प्रयोजनम् । शुक्लतर इत्यादिः प्रयोग एव न स्यादित्यर्थः । तस्मात्प्रयोगप्रामाण्याद्यथोपपत्ति प्रकर्षो ऽनुविधेय इति व्यपदेशहेतुः स्वसंसर्गिधर्मनिमित्तः स व्यवस्थाप्यः । सर्वत्र जातेश्च व्यपदेशहेतुभूतायास्तदसम्भवे यथा शुक्लतरं रूपमित्यत्रैकार्थसमवेतभासुरत्वादिधर्मद्वारकत्वात्प्रकर्षो व्यवस्थाप्यते तथा गौतरेत्यत्राप्येकार्थसमवेतावाहदोहादेर्धर्मादसौ व्यवस्थाप्यः । भासुरत्वादेरिव चात्र प्रयोगप्रामाण्याद्वाहदोहादेरपि शब्दार्थत्वमवसेयम् । ततश्च प्रकृष्टवाहदोहा गौर्गौतरेति भण्यत इति सर्वं सुस्थम् ॥ ७ ॥

प्रकरणार्थं समापयितुमाह ॥

सव्यापारो गुणस्तस्मात्स्वप्रकर्षनिबन्धनः ।
द्रव्यात्मानं भिनत्त्येव स्वप्रकर्षे निवेशयन् ॥ ८ ॥

द्रव्यस्य स्वतो निरतिशयत्वात्स्वनिमित्तभूः प्रकर्षः नोद्युक्तः । स सगुणः स्वातिशयहेतुकेन विशेषेणाश्रयान्तराद्व्यवच्छेदं विदधाति, कथमन्यस्य प्रकर्षो ऽन्यत्प्रकर्षमित्याशङ्क्याह ॥ ८ ॥

अरूपं गुणरूपेण द्रव्यमाख्यायते यथा ।
अप्रकर्षं प्रकर्षेण गुणस्याविश्यते तथा ॥ ९ ॥

निरूपस्य निरुपाधिनो द्रव्यस्य शाब्दव्यवहारोपगमायोगादुपाधिरूपावरितस्य तदुपगमे सर्वशब्दार्थपृष्ठपाती व्यवहारः कोपाधिनियमितशरीर इत्यर्थः । उपाध्युपाधिमतोऽत्र विवेकस्य दुःखभारत्वात्सकृर इति व्यवहारेण गुणप्रकर्षो गुणिनि विश्राम्यति, न गुणात्मन्येव निष्कृष्टगुणिनि व्यवतिष्ठते नापि गुणात्मन्येव निष्कृष्टगुण इति सिद्धम् । इति ॥ ९ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
गुणसमुद्देशः पञ्चमः ॥



सम्प्रत्येकयोगक्षेमात्पदार्थान् तन्त्रेणोद्दिश्य क्रमेण विचारयितुमाह ।

शक्तिरूपे पदार्थानामत्यन्तमनवस्थिताः ॥ १ ॥
दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः ।

दिगादिशब्दा अर्थसिद्धस्वभावद्रव्यधर्मतया स्वार्थं प्रतिपादयन्तो यथा तं लक्षितदिगाद्यर्थसंस्पर्शविकल्पाः तथा हि परोपाधिरूपाः शक्तयो दिगाद्याः पारतन्त्र्यं च शक्तिलक्षणमिति क्रिया ऽपि द्रव्यपरतन्त्रा शक्तिरिति व्यपदिश्यते । वैशेषिकनये च दिक् द्रव्यं नोपपद्यते । कार्यानुमेयत्वेन पदार्थोपकाररूपस्य शक्तित्वस्य न्याय्यत्वात् । एवं विधं शक्तिरूपं सिद्धस्वभाव एव वस्तुवाचकैः शब्दैः साक्षान्न स्पृश्यत इत्यसाधारणमेतत्पदार्थरूपं लक्षणेनावस्थापयितव्यम् । अस्ति ह्येषां शास्त्रे, ऽस्मिन्व्यवहारो दिक्शब्देभ्यो दिग्देशकालेत्यादिः ॥ १ ॥

तत्र साधनादीनां शास्त्रानुमितमेव लक्षणं विभजनीयम् । दिक्कालादीनां तु स्वरूपं वक्तव्यम् । तत्र दिशस्तावत्स्वरूपं लक्षयति ।

व्यतिरेकस्य यो हेतुरवधिप्रतिपाद्ययोः ।
ऋज्विदस्येव यतोऽन्येन विना बुद्धिः प्रवर्तते ॥ २ ॥
कर्मणो जातिभेदानामभिव्यक्तिर्यदाश्रया ।
सा स्वैरुपाधिभिर्भिन्ना शक्तिर्दिगिति कथ्यते ॥ ३ ॥

इदमस्मात्पूर्वं पश्चादित्येवमस्मादित्यवधेरिदमिति प्रतिपाद्यादवधिमतो व्यतिरेकः प्रातिपदिकार्थे भेदो ऽवध्यवधिमत्सम्बन्धोपलक्षणः स पदार्थस्वरूपादनुपपद्यमानो निमित्तान्तरमावेदयते । तन्निमित्तान्तरं दिगित्युच्यते । न हि जात्यादिनिमित्तो ऽयं प्रत्ययः । तदननुगमात्प्रतीतेः । परिशेषाद्दिग्निमित्तः । यदाहुर्वैशेषिकाः । इत इदमिति यतस्तद्दिशो लिङ्गमिति । कार्यकल्प्यत्वे च सदैव पदार्थोपाधितया प्रतीतेः । स्वतन्त्रा द्रव्यरूपता नास्ति दिग्दिशः । न हि पृथिव्यादिवद्दिगुपलभ्यते । अत एव कालो ऽपि शक्तिरिति वक्ष्यते । समवायश्च तां शक्तिमिति समवायशब्दो ऽप्युक्तः । तथा ऋज्वृजुपृष्ठयोः ऽ

वंश इति प्रत्ययोऽन्येन विना ऽवधेरप्यनपेक्षणात्पृथिव्यादिनिमित्तान्त-रोपकारमन्तरेण जायते । न चैकदिक्समवयवानां प्रसरणादिदिङ्-निमित्तरूढार्थस्योपलक्षणत्वाद् । वक्रादिबुद्धिरपि दिङ्निमित्ता व्या-ख्येया । तथा कर्मलक्षिका तिर्यगूर्ध्वमधश्च जायमानानां कर्मत्वमहासा-मान्यव्यतिरेकेण भ्रमणत्वोत्क्षेपणत्वाद्यपरजातिव्यक्तिर्दिङ्निमित्ता । तथा ह्यूर्ध्वादिदिक्संयोगविभागकार्याः कर्मलक्षणाविशिष्टाः सन्तो नियतजातिव्यञ्जने समर्था भवन्ति । कर्मण इति कर्मसामान्यस्यावा-न्तरजातिभेदादुत्क्षेपणत्वादयः । जातावेकवचनं भ्रमणादिक्षणानां ये जातिभेदा इत्यर्थः । दिग्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैका दिगिति काणादाः । एका ऽपि च दिक् निमित्तोपाधिप्रकल्पितत्वाद्दश-धा व्यवह्रियते । तथा च एवमाहुः । आदित्यसम्प्रयोगाद् भूतपू-र्वाद्भविष्यतो भूताच्च प्राचीति । सवितुरहरादौ येन प्रकल्पितदिक्-प्रदेशेन संयोगो ऽभूद्भवति भविष्यति वा तस्मादादित्यसम्प्रयोगात्प्रा-चीति व्यपदेशः । प्राच्युच्यत इति कृत्वा तथा दक्षिणाप्रतीच्युदीचीनां चेति सूत्रम् । तस्मादेवादित्यसंयोगाद्दक्षिणादिव्यपदेशः । तथा हि यत्र प्रतीपमञ्चत्यस्तगमनाद्रविः सा प्रतीची । मूर्त्तिपरिच्छिन्नेन ह्यादि-त्यमण्डलेन यः संयोगः स परिमितदेशव्यापातेन चातीतेन भविष्यता वर्त्तमानेन वावच्छिन्नो नियतदिशामव्यवस्थापको भवतीत्यदृश्य-मानगामिक्रिया या परिहरति पृष्ठकरणेन सा दक्षिणा । या न परिहरति सा उत्तरा । मध्यान्हे रविबिम्बमुदङ्मुखमञ्चत्यतो ऽसावुदीचीत्यपि भण्यते । अनेनैव च प्रकारेण पूर्वदक्षिणादीन्यन्तरालरूपाण्यपि दि-गन्तराणि व्याख्यातव्यानीत्युक्तं सूत्रम् । एतेन दिगन्तराणि व्याख्या-तव्यानीत्युक्तम् । तथा हि मेरुं प्रदक्षिणमावर्त्तमानस्य सवितुर्लोक-पालपरिगृहीतप्रदेशसंयोगापेक्षो दशधा विभाग इति शास्त्रान्तरे विस्तरेण निर्णीतं तत एवावधार्यम् । इह त्वेव ते परं दिगिति न विभ-ज्य कथ्यते । न चायमस्मादुपचरितो भेद एतदुपचारस्य प्रत्यय-धर्मत्वाद्द्यौर्न समाविशेत्सूर्यसंयोगादिविशेषं तु सहकारिणमपेक्ष्य विचित्रकार्यं प्रभावयतीति कल्पनया मेरावपि दिशो व्यपदिश्यन्ते । अत एव वास्तवे ऽपि भेदे ऽवश्यं सहकारिणो ऽभिव्यञ्जकत्वेनापेक्षा । अत एव कार्यभेदादपेक्षिष्यन्त इति तस्यान्यथोपपत्त्या दिश एकत्वमु-पेयते । एको हि प्रामाणिकः स कार्यस्य भेदमुपगच्छन् कारणनानात्व

प्रत्याचक्षीत । वास्तवे च दिशो नानात्वे सर्वत्र कार्यदर्शनात्साम्नां विभुत्वात् पूर्वापरादिप्रत्ययाः सङ्कीर्येरन् तस्माद्भावत एका दिक्कार्यवैचित्र्यं तु सहकारिभेदादित्येवमुक्तम् ॥ ३ ॥

न च सहकारिण एव दिगनपेक्षाकार्यं युक्तं तस्य स्वतोऽपूर्वापरादिरूपस्य तद्भावस्य दिक्सम्बन्धकत्वान्न च तदनुरूपकारणमिति दिगेव प्रत्याख्येया पूर्वापरादिप्रत्ययालिङ्गं कालश्चेति तयो रन्यत्वे लिङ्गस्य विशेषमाह ॥

परापरत्वे मूर्त्तानां देशभेदनिबन्धने ।
तत एव प्रकल्प्येते क्रमरूपेऽनुकल्पतः ॥ ४ ॥

मूर्त्तिः सर्वगतद्रव्यपरिमाणम् । अभेदाध्यवसायाच्च धर्मिणो ऽत्र निर्दिष्टाः । व्यापकादीनामाकाशादीनां परत्वापरत्वे न स्तः । पूर्वः पर इति भावेष्वव्यापकेषु पूर्वापरदेशसम्बन्धनिमित्तो व्यवहारः । देशस्यापि पूर्वापरत्वं दिङ्निमित्तमिति तत एव दिशः परत्वापरत्वे देशनिमित्ते तात्पर्यतः । पूर्वमभूद्भविष्यति परमिति तु क्रियापौर्वापर्ये कालशक्तिकृतप्रतिबन्धाभ्यनुज्ञावशाद्व्यवतिष्ठत इति नास्ति दिक्कालयोर्लिङ्गसंस्कार इत्याशयः ॥ ४ ॥

अमूर्त्तानामपि काल्पनिके परत्वापरत्वे स्त इत्याह ॥

आकाशस्य प्रदेशेन भागैश्चान्यैः पृथक् पृथक् ।
सा संयोगविभागानामुपाधित्वाय कल्पते ॥ ५ ॥

संयोगिधर्मिभेदेनाकाशस्य तेन सह मूर्त्तद्रव्यगतैर्भागैरव्यावृत्तत्वात् यथायथं ये संयोगविभागाः तेषां दिगवच्छेदाय पूर्वापरादिभिन्ना प्रभवतीति तदुपाधिः प्रदेशानामाकाशस्य कल्पितानां पूर्वापरादिव्यवहारस्तथा च पूर्वाकाशसंयुक्तः पर इत्यादिर्मूर्तेषु व्यवहारः सिध्यतीत्यमूर्त्तपूर्वको ऽसावित्यर्थः । इह देशानां दिक्कृता पूर्वापरादिव्यवस्था, दिशस्तु किंकृता अर्थान्तरनिमित्तत्वे तस्यापि कुत इत्यनवस्था दिशः ॥ ५ ॥

अत एव पूर्वादित्वं देशैरपि किमपराद्धमित्याशङ्क्याह ॥

दिशो व्यवस्था देशानां दिग्व्यवस्था न विद्यते ।
शक्तयः खलु भावानामुपकारप्रभाविताः ॥ ६ ॥

देशानामस्वतन्त्रं रूपमाधारादिस्वभावमभ्येत इति तत्र पूर्वापरादिभावस्य स्वरूपादेवाभावादन्यन्निमित्तं दिगाख्यं कल्प्यते नैवोपकारेण। तत्र परतन्त्रस्वभावाकल्पनान्नापरं पूर्वादि परादि तावत्स्वभावमवलम्बितुमुत्सहते । येन तत्रानाश्रितस्वभावे देशवत्पूर्वापरादिभावार्थं निमित्तान्तरमन्वेषणीयं स्यात । यादृग्भावा हि सा कार्यपरिकल्प्या तावदेव तत्त्वं नापरं तत्र शक्तीनां पारतन्त्र्यस्यैवोपपत्तेः। शक्त्यन्तरकल्पने शक्तिमत्त्वापत्तेः । शक्तिमतो ऽतिप्रसङ्गात्सूर्यसंयोगस्तु पूर्वापरादित्वं नापूर्वं तत्र धत्ते अपि तु स्वभाव एव शक्तिरित्यभिप्रायः ॥ ६ ॥

शक्तित्वमेवास्याः स्वतन्त्रं भावरूपतायाः कारणाय पोषयितुमाह॥

प्रत्यस्तरूपा भावेषु दिक् पूर्वेत्यभिधीयते ।
पूर्वबुद्धिर्यतो दिक् सा समाख्यामात्रमन्यथा ॥ ७ ॥

प्रत्यस्तमुपाधित्वेन भावेषु समारोपितं रूपमस्याः तथाभूता पूर्वा दिगिति व्यवह्रियते। तथा यस्याः सकाशात्पूर्वबुद्धिः पूर्वो ऽयमर्थ इति ज्ञानं, पूर्वत्वमुपलक्षणं परत्वादिरपि गृह्यते दिक् सा परोपाधिरूपेत्यर्थः । अन्यथा उपाधिरूपानपेक्षा अस्वातन्त्र्याश्रयणे भावता दिग् भवति अपि तु सा तदानीं समाख्यामात्रं दिगिति । नयति स्वतन्त्रद्रव्यं विषयं शब्दमात्रवस्तुसंस्पर्शि । तथा ह्युक्तं “ दिक् साधनं क्रिया काल इति वस्त्वभिधायिनः। शक्तिरूपे पदार्थानामत्यन्तमनवस्थिता” इति । तदेवं नित्यपारतन्त्र्याया दिशः कार्यैककल्प्यायाः स्वतन्त्रपदार्थगतविकल्पानवसर इति स्वतो नानास्वभावे सहकारिसूर्यसञ्चाराविशेषेण किमेकस्वभावं सेवासहकारिभेदो ऽपि न विचित्रं कार्यं कुर्यादित्येतदशक्यं वक्तुम्। यथा पूर्वापरादिप्रत्ययलक्षणेन कार्येणानुमितसत्त्वा तथाभ्युपगन्तव्या शक्तिरूपा दिक्॥७॥

ननु च पूर्वापरादिप्रत्ययः सम्मुखादिनिमित्तो भविष्यति तथा चोक्तं भारते यथा ऽभिमुखं सक्ता ताः प्रविशन्ति सा पूर्वा दिङ्मन्तव्येति तथा लोके ऽप्यभिमुखः पुरोवर्ती मन्यते पृष्ठतः

[illegible] इत्युच्यते । नैवह इलेदक्षिणः पन्था, इह इलेवाम [illegible] व्यवहारः [illegible], इति नास्ति दिक्कल्पनानिमित्तमि- [illegible] ॥

[illegible] व्यवस्था या लोके न तस्यां नियता दिशः ।
[illegible] यत्पश्चात्तत्पुरस्ताद्विपर्यये ॥ ८ ॥

[illegible] मुखादि इति; वा [illegible] या पूर्वादिव्यवस्था तत्र [illegible] न व्यवतिष्ठन्ते । पश्चान्मुखस्य यद्वस्तु हि पश्चादमु- [illegible] मुखत्वे तस्य पूर्वस्मिन्देशे भवतीति प्राङ्मुख उदङ्मुखो [illegible] व्यवस्था न स्यात् । तस्मादनादिरूढादिङ्निमित्तपूर्वा- [illegible] व्यवस्था ऽङ्गीकार्या ॥ ८ ॥

[illegible] विस्तु दिगनपेक्ष्याऽपि पूर्वापरादिता देशानां रूढेत्याह ॥

[illegible] व्यवस्थानियमो दिक्षु न व्यवतिष्ठते ।
[illegible] मप्यपरत्वेन पूर्वमित्यभिधीयते ॥ ९ ॥

[illegible] दिक्षु दिङ्निमित्तं, पूर्वदेशदक्षिणापथोत्तरापथादीनां निय- [illegible] र्यवस्थितः । तथा हि दिगपेक्षया पाश्चात्यो ऽपि पूर्वदेश इति [illegible] तथा च दक्षिणापथात्पूर्वदेशं गच्छन् पूर्वप्रदेशं गच्छामी- ति [illegible] दिग्व्यवस्थायां तु स न भवति।तस्मात्पूर्वत्वादि दिगनपेक्षं सं- [illegible] दिगनपेक्षया तु यथाद्रव्यं व्यवहारो ऽत्राप्युपपद्यते । तथा [illegible] मत्रामि पूर्वस्मिन्देशे वसतीति भाष्ये चोदयित्वा, नैष दोषो [illegible] मेनादिति परिहृतम् । नायं पूर्वशब्दो रूढित्वादवध्यपेक्षः [illegible] दिक्शब्दः सन् देशे वर्तते । देशसामान्यं तु देशशब्दाद- [illegible] तिनाद्धि । ततो दिक्शब्दाद्देशवृत्तेर्विधीयमानः प्रत्ययो [illegible] शब्दाद्भवतीति भाष्यार्थः ।के चित्तुव्याचक्षते नायं पूर्वश- [illegible] रूपेण कथयति देशशब्देनैव तस्याभिहितत्वात्। दे- [illegible] कश्चिद्विशेषो देशशब्दादप्रतीयमानः पूर्वशब्देनाभि- [illegible] विशेषावच्छेदनिबन्धन इति । एतदयुक्तम्। देशसामानाधिक- [illegible] प्रत्ययस्येष्टः । अवश्यं दिक्कालयोर्व्यवच्छेदार्थे देश- [illegible] इति तत्र प्रत्ययाभावे को विषयः स्यात् । तदेवं [illegible] दक्षिणापथ इत्यादावनन्यापेक्षरूढे ऽपि पूर्वादिशे

सहजे, दिङ्निमित्तमपरं रूपान्तरमपि भवति । यथा स्वाङ्गनिमित्तो ऽन्यथा व्यवहारो दिङ्निमित्तो ऽन्यथा व्यवहार इति मुख्यदिङ्निमित्तमेव पूर्वादित्वमित्युपपादितम, यथा च दिश्यपरोपाधिका पूर्वादीनां वृत्तिः इदं तद्दिक्सम्बन्धादिति भाष्येण॥ ९ ॥

सम्पादयति ॥

अतो भाषितपुंस्कत्वात्पुंवद्भावो न सिद्ध्यति ।
अस्मिन्नर्थे न शब्देन प्रसवः क्वचिदुच्यते ॥ १० ॥

दक्षिणोत्तराभ्यामतसुजित्यत्र भाष्यम् । अकारः किमर्थः । तसुरेव क्रियताम । एवं च स्वरार्थश्चकारो न करिष्यते प्रत्ययस्वरेणैव सिद्धेः । तत उक्तं लिङ्गविशिष्टपरिभाषया दाक्षिणाशब्दादप्ययं भवति। तत्रासत्यकार यस्येति लोपो न स्यादिति । अत्र प्रत्ययस्याकारमादिश्य लिङ्गविशिष्टपरिभाषया टाबन्ताभ्यां विधावसत्यकारे यस्येति लोपाभावाद्दक्षिणत उत्तरत इति रूपं न सिद्ध्येदिति। असत्यकारे आकारलोपो न । तयोरकारस्तु श्रूयत इति । तदुक्तम् । समानायामाकृतौ भाषितपुंस्कस्य पुंवद्भावःआकृत्यन्तरे चैतौ भाषितपुंस्कौ । दक्षिणोत्तरा इति दिक्शब्दा, दक्षिण उत्तर इति व्यवस्थाशब्दाविति । तदेतद्भाष्यं रूढशब्दत्वे दिशि पूर्वादीनां युज्यते नान्यथा। तथा हि अयमर्थः । भाषितः पुमान्यस्मिन्नित्यर्थे ऽन्यपदार्थः समाश्रीयते, स स र्वाभिधेयो नोपपद्यते । तस्य पदार्थ आत्मा स्वभाव इत्यन्ततो व्यपदेशेन भाषितपुंस्कं नाव्यभिचारात्मकमनेन व्यवच्छिद्येत। तत्तस्मात्प्रवृत्तिनिमित्तलक्षणो ऽर्थो ऽन्यपदार्थः । तत्रापि भिन्ने प्रवृत्तिनिमित्ते सर्वत्रैवं भाषितपुंस्कता । ततो ऽर्थस्वभावादिशब्दस्यैकस्मिन्प्रवृत्तिनिमित्ते सामर्थ्याद्भाषितपुंस्कता समाश्रीयते । अत्र च कार्यस्यासम्भवादभिधेयधर्मेण तद्वचनः शब्दो भाषितपुंस्क इत्युच्यते, इति प्रवृत्तिनिमित्तस्यान्यपदार्थत्वे समानायामाकृतौ यो भाषित पुंस्कः शब्दस्तस्य पुंवद्भाव इत्ययर्थो ऽवतिष्ठते । दिशिच दक्षिणोत्तरेति स्वाभाविकत्वादभिधानस्य, अस्मिन्दिग्लक्षणे ऽर्थे प्रसवः पुंस्त्वमाभ्यां शब्दाभ्यां न क्वचिद्विषयो ऽभिधीयते ऽपि तु दिङ्निमित्ता यदा देशे तयोर्वृत्तिस्तदा व्यवस्थाशब्दौ प्रसवमभिधत्तः । परस्प-

त्येषामव्यवस्थितिरर्थस्य । यथा दक्षिणशैलाभोग इत्युक्ते कुत इत्यवधिप्रतीतिः । तत्रैव तौ भाषितपुंस्काविव्याकृत्यन्तरं भाषितपुंस्कत्वादेकार्थेस्मिन्प्रवृत्तिनिमित्ते तदभावात्पुंवद्भावो न भवत्यत्रासौ । सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इत्यौपसंख्यानिकं पुंवद्भावमाश्रित्य भवतीत्यभिमत दक्षिणोत्तरशब्दाभ्यामतसुचोऽकारं विनापि सिद्धः । शश्वत् सर्वप्रत्ययो नेति विशेषणार्थो ऽकारो व्यवस्थापितः । अत्र तु चोदितम् । ननु च दक्षिणोत्तरेत्येतावपि व्यवस्थाशब्दाविति । अयमर्थः । उत्तरा पूर्वेति चोक्ते कुतश्चोत्तरेत्यवश्यमवधिरपेक्षणीयः । विना तेन स्वार्थासम्भवात्तथा च दिश्यप्यन्यव्यपेक्षत्वात्पूर्वादिशब्दानां प्रवृत्तेस्तत्रापि व्यवस्थाशब्दत्वमित्यस्यां व्यवस्थापकताऽस्त्येवेति भाषितपुंस्कत्वम् । केवलं च परापाश्रयत्वाद्दिशि वृत्तेरेषशब्देभ्यो दिक्शब्दा भिद्यन्ते । अतः परमुक्तम् । दिक्शब्दकार्याण्येव न प्राप्नुवन्तीति नामधेयत्वेन दिशामप्रवृत्तेस्ते न दिक्शब्दाः स्युरित्याशयः । तत्रोत्तरं दिशो यदा व्यवस्थां वक्ष्यति ॥ १० ॥

यदि तर्हि यो यो दिशि वर्त्तते स स दिक्शब्दो रमणीयादिष्वतिप्रसङ्ग इति । यथा हि पूर्वादयः शब्दा व्यवस्थानिमित्ता देशकालसाधारणा अपि यदा दिशि वर्त्तन्ते तदा दिक्शब्दा इत्युच्यन्ते । तथा रमणीयादयो ऽपि गुणनिमित्ता दिशि वर्त्तमाना दिक्शब्दाः स्युः । अत्र परिहार उक्तः । दिशि दृष्टः शब्दो दिक्शब्दः । दिशं यो न व्यभिचरतीति । तत्र देशकालयोरपि व्यवस्थाशब्दाः पूर्वादयो वर्त्तन्ते । तथा चाभेदेन दिक्शब्देभ्यो दिग्देशकालेषु वर्त्तमानेभ्य इत्युच्यत इति, कथं दिशं यो न व्यभिचरतीत्युक्तमित्येतद्भाष्यं समर्थयितुमाह ।

दिक्शक्तेरभिधानेन नियतं दिशि दर्शनम् ।
पूर्वादीनां यथा षष्ठेर्जीवितस्यावधारणे ॥ ११ ॥

दिक्प्रहणेन तत्रार्थान्तरानपेक्षरूढानां पूर्वादिशब्दानां प्रवृत्तिर्देशकालयोस्तु तदुपाधित्वाद्व्यवस्थानिमित्तेति सूचयति । तथा च दिक्ष्वव्यभिचारी दिशि शब्दानां प्रयोगः । देशकालयोस्तु व्यवस्थानिमित्तकः प्रयोगः । पूर्वा दिगित्युक्ते नामधेयत्वेनानवधिरूढप्रतीतिः । पूर्वो घट इति, कुत इत्यवधिमपेक्षते । घटशब्दाश्च स्वार्थे ऽवगते तदुपरि

व्यवस्थां गमयति पूर्वशब्दो न तु तस्य नामधेयम् । तथा दिक्शब्देभ्यो देशकालशब्दानामेषां भवति भेद एव, सादृश्यात्त्वभेदाध्यवसायः । न हि रूढानां नैमित्तिकैः सह भेदः सम्भवति । तथा च दिक्शब्देभ्यो दिग्देशकालेष्वित्यत्र पूर्वादिशब्दानां कार्यभावेन विवक्षितत्वात् शब्द-ग्रहणसामर्थ्याद् दिक्शब्द इव शब्दो येषामिति देशकालप्रवृत्तयो रू-पसाम्याद्विशेष्यन्ते । सदृशानां च शब्दानां क्वचिद्विषये स्वभावानिय-तेव शक्तिर्दृश्यते । तद्यथा षष्टिभूतः षष्टिक इति जीवितपरि-माणे प्रतिपाद्ये कालवाचिनियमेन संख्याशब्दः षष्टिशब्दः । तथा च कालाधिकारविहितं प्रत्ययमुत्पादयति तमधी-ष्टो भृतो भूतो भावीति । वृत्तिविषये न षष्टिशब्दो वाक्यसङ्ख्याशब्दे ऽपि नियतं कालसङ्ख्येयमुपादत्ते शब्दशक्तिप्रतिनियमादतो हि शब्द-(द्विषरिव्ययं)? च कालो जन्मनः परिमाणं प्रतीयते । न च वृत्तौ काल वचनः प्रयुज्यते येन तत्सामानाधिकरण्यात्कालवृत्तित्वं सङ्ख्याशब्द-स्यापि प्रक्रियेतेति, मासादिशब्दवत्पदान्तरानपेक्षः काले प्रपञ्चो ऽयं रूढः । तथा च तदस्य परिमाणमित्यत्र जीवितपरिमाणे चेत्यनर्थक-वचनं कालादिति सिद्धत्वादित्युक्तम् । यो हि षष्टिवर्षाणि भूतस्तस्य षष्टिर्जीवितपरिमाणं भवत्येवेत्युपसङ्ख्यानेन नार्थः । नचैवं रमणीया-दिष्वतिप्रसङ्गस्तेषाङ्काले नियतत्वस्याप्रतीतेः । प्रयुक्तानां चेदमन्वाख्या-नमिति लौकिकी प्रतीतिरनुसर्तव्या । तथा चोक्तं अनभिधानाद्रमणी-यादिषूत्पत्तिर्न भविष्यतीति । तदेवं यथा षष्टिशब्दः सङ्ख्याशब्दः स-ङ्ख्येयविषयो व्यवस्थास्वभावात्काले सङ्ख्येये रूढः । तथा च पूर्वादि-शब्दो यत्र देशे काले च व्यवस्थावचनो ऽपि दिशि स्वभावानियमेन रूढ इति युक्तं उक्तं दिशं यो न व्यभिचरतीत्यर्थः । इत्थं च दिशि नियतत्वात्प्रयोगस्य, समानायामाकृतौ भाषितपुंस्कत्वाभावात्सर्ववृ-त्तिमात्र इत्युक्तम् । व्यवस्थायामसंज्ञायामिति तु सर्वनामसंज्ञायामव-धिनियमानुगमाद्दिग्देशकालवचना अपि पूर्वादयो विशेषणविशेष्य-न्ते । तथा हि अवधिना ऽयं प्रतिपादितो रूपावच्छेदः पूर्वादित्वम् । त-स्यानुगमो ऽस्ति । देशकालयोरिव दिक्षु व्यवस्थितार्थाभिधानात्पूर्वश-ब्दादवधिभिन्नामेवावस्थितां दिशमाह । अवधिरुपाधित्वेन स्पृशति यथा शोणशब्दो लोहित एवार्थे वर्तते । अथ लौहित्यं प्रवृत्तिनिमित्त-त्वेन चापेक्षते । कृष्णशब्दश्च भगवति वासुदेवे वर्तते । न च कृष्णं गुणं

निमित्तत्वेनोपादत्ते। तदित्थमन्तर्भाविताविधयो दिक्शब्दाः पूर्वादयो रूढाः। देशकालयोस्तु शब्दोपात्तावध्यपेक्षा, इत्येतावान् विशेषः। अवधिनियमस्तु समान इति व्यवस्थायामित्यपि विशेषणाद्दिग्वाचिनां पूर्वादीनां सर्वनामसंज्ञाकार्यं प्रवर्तत एव ॥ ११ ॥

इदानीं कार्यान्तरमपि दिशः प्राह ॥

छायाभाभ्यां नगादीनां भागभेदः प्रकल्पते।
अतद्धर्मस्वभावेषु भागभेदो न कल्पते ॥ १२ ॥

छाया निरालोकः। आभा आलोकः। दिनकरकरोद्योजितः पर्वतशिखर एको, बहुलच्छायाच्छुरितश्चापर इत्यवयवविभागः, छायातपाभ्यामुपक्षितो ऽसत्यां दिशि न कल्पते पूर्वापरावधित्वाभावात्तदुपाधिकावयवनानात्वात्। तथा ह्यविषहमानः स दिगुपाधिको धर्मः पूर्वापरादित्वं येषां मूर्तानामर्थान्तरेष्वेवंविधावयवभेदाभावात्तदुपाधिकावयवनात्वाभाव इति दिक्सम्बन्धनिमित्तो ऽवयवभेदो ऽपि दिग्लिङ्गमित्यर्थः ॥ १२ ॥

तथा हि मूर्तानां प्रथमत एव भागभेदः प्रकल्पते दिगायत्त इत्याह ॥

परमाणोरभागस्य दिशा भागो विधीयते।
भागप्रकल्पनाशक्तिं प्रथमान्तां प्रचक्षते ॥ १३ ॥

अकृतक्षतानां नित्यानां निरवयवानामपि परमाणूनां पार्श्वचतुष्टयमूर्ध्वाधोभागरूपं च दिशा परिकल्प्यते। न हि परमाणोरभागस्य वास्तवो भागभेद इति दिगाहित एव सः। तथा च तत्रस्थैः षड्भिः परमाणुभिर्योगी भवति। सति च योगे द्व्यणुकादिक्रमेण कार्यमाजायते। ततश्च तत्रापि पूर्वापरादिव्यवहारः। असत्यां तु दिशि षड्भिर्योगे ऽपि निरवयवस्यापि तस्याणुमात्रक इति स्थूलावयवस्य व्युत्पत्तिर्न स्यात्तस्मादुत्पत्तिप्रकृतिभागसमारोपे प्रथमा दिशामेव शक्तिरिति त्रिविधाः सर्वे पदार्था मूर्ता भागभेदप्रकल्पनेनोपक्रियन्ते। अन्ये नगादीनां सावयवानां छायातपाभ्यां भागभेदः प्रकल्पते। येषां तु निरवयवानां छायातपनिमित्तः स न भवति तेषां परमाणूनां दिङ्निमित्त इति व्याख्याता तथा हि यत्र निमित्तान्तरं नास्ति तत्रातद्धर्मसु निर-

वयवेषु दिशां व्यापारो, यत्र त्वन्यन्निमित्तमस्ति भागभेदस्य ज्ञापकं छायातपादिकं सावयवादीनां पर्वतादीनां, तत्र तदेव भागभेदव्यवहारप्रवर्त्तकं, एतस्मिन्प्रथमश्लोकेनोक्तम्। दिग्व्यापारस्तु द्वितीयश्लोकेन कथितः। तथा हि यतो निरवयवत्वाच्छायाभावादिको भागभेदप्रकल्पको ऽतोऽत्र परमाणौ दिक्पदार्थेन भागो ऽभिधीयते । भागव्यवहारः पूर्वादिकः प्रवर्त्तत इत्यर्थः । यदि वा यथा हेत्वन्तरकृतो भागभेदव्यवहारः पर्वतादिषु, परमाणुष्वपि छायातपाभ्यां संयोगविभक्तेषु निमित्तान्तरमेषणीयम्। तद्वदिति दृष्टान्तो ऽयमुपन्यासो ऽयमहमहमिकया कृत इत्यपरे व्याचक्षते। तदेतत्सर्वमनुपपन्नम्। तथा हि ये घटस्यैकस्मिन् पार्श्वे सूर्यरश्मयः पतन्ति ते तद्देशैः कपालैरेव सम्बध्यन्ते । तदन्यपार्श्वे च छायया कपालानामेव संयोग इति घटस्य च्छायातपाभ्यामसम्बन्धः। अथ तद्देशत्वात्सन्निहितमवयवि द्रव्यमपि सम्बध्यते। तदभिन्नदेशत्वमवयविनो न स्यादातपेन संयुक्तत्वात्संयुक्तश्चेदवयवो ऽपि वावयवीति तत्रापि छायादिसम्बन्धो ऽवयवानामेवानेन न्यायेन। तत्राप्यवयवान्तराणामिति परमाणुपर्यन्तं न । ततश्च दिव्यसम्बन्धादेव परमाणुवत्स्थूलो ऽपि पदार्थः पूर्वापरादिभागमुच्चनीचत्वादित्वं च प्रतिपद्यते। तथा च निर्भागात्मकता तुल्या परमाणोर्घटस्य चेत्यादि वक्ष्यत्येव ॥ १३ ॥

ननु स्वत एव पदार्था विशिष्टसंस्थानाः प्रभवन्ति, क एषां दिक्कृत एकाकार इत्याशङ्क्याह ॥

अदेशाश्चाप्यभागाश्च निष्क्रमा निरुपाश्रयाः ।
भावाः संसर्गिरूपात्तु शक्तिभेदः प्रकल्पते ॥ १४ ॥

प्रकल्पते, विभूनामाकाशादीनां नास्ति देशः पृथिव्यादीनां तु मूर्त्तानामवयविनामात्मभूतदेशाभावः । उभयेषामपि च कल्पिता देशाः संयोगिनः समवायिनश्च। एवं स्वतः पदार्थानामवयवा न सन्ति, कल्पितास्त्वर्थान्तरभूताः संसर्गिणः। अवयवभेदाभावाच्च क्रमो ऽप्यमुख्यभेदाधिष्ठानत्वात् क्रमस्य । तथा अविद्यमान उपाश्रय उपाधित्वाभावान्यथात्वापादको येषां ते निरुपाश्रयाः । एवं भूता अपि च भावाः संसर्गिरूपोपहितेन शक्तिभेदेनासत्यपि स्वरूपान्यथात्वे न प्रतीयन्ते। तथा ह्यपरया दिशा योगासम्बन्धाविशेषे ऽपि कश्चिदाधा-

रत्तां च प्रदिश इति दिङ्निमित्तो देशव्यवहारश्च। एवं च देशः समवायवशेन तिरोहितभेद इति भागे ऽवयवभेदश्च व्यवह्रियते। तद्वशेन च क्रमेण चोत्पत्तेः। क्रमावभासो गुणादिभिश्च समवायाद्भेदापोहे विशिष्टावसाय इति संसर्गिनिमित्तो भावानां व्यवहारः। आत्मा तु तेषां तत्र योगात्स्वभावः॥ १४॥

तदेवं यथादेशादिकार्यमदेशाद्या अपि भावाः। संसर्गिभेदभिन्नः प्रतीयमानावयवो महापरिमाणो घटादिरवयवी दृश्यत इति कथं तत्रादेश इहाप्युपपद्यत इत्याशङ्क्याह॥

निर्भागात्मकता तुल्या परमाणोर्घटस्य च।
भागः शक्त्यन्तरन्तत्र परिमाणं च यत्तयोः॥ १५॥

स्वभावभूताऽवयवशून्यता घटपरमाण्वोः समाना। दिग्लक्षणेन शक्तिविशेषेण तु प्रकल्पितपौर्वापर्याः स्वाधारभूता एव समवायवशादविवेकेन भासमानाः शक्तिनिमित्तत्वाच्छक्तिव्यपदेशस्या भागा इति व्यवह्रियन्ते। स्वतो भागवत्त्व एकत्वायोगादर्थान्तरसम्बन्धनिमित्ता च भागवत्ता न मुख्या, परमाणोरपि प्रसङ्गात्तत्रापि परिणामकृतो मुख्यो भागभेदः परिमाणस्यापि तयोर्घटाण्वोर्महत्त्वाणुत्वलक्षणस्य भावादर्थान्तरत्वान्महदणुप्रत्ययहेतुर्हि शक्तिविशेषः परिमाणम्। अत एव परिमाणविशेषात् घटादेर्विशेषः॥ १५॥

नन्ववयवसम्बन्धासम्बन्धाभ्यामित्युपाधिसम्बन्धानपेक्षायामव्यादेशं वस्तु ब्रह्मकल्पं सर्वं समानम्। न चापि वस्तूनामुपाधिनिहितो भेदः स्वरूपसमवायीत्याह॥

यतः प्रकल्प्यते भेदो ऽभेदस्तत्रापि दृश्यते।
अदृष्टोपरतिं भेदमतो युक्ततरं विदुः॥ १६॥

अवयवैरवयविनां भेदः अवयवानामपि स्वावयवैः तेषामपि स्वावयवैरिति यावत्परमाणुपर्यन्तं प्राप्तिः। तत्रापि दिशा भागभेदप्रकल्पनम्। दिगाद्यनाश्रितभेदः कथं भेदायोपकल्पेत। दिग्भेदो ऽपि सूर्यसंयोगादाहितः। ते ऽपि सूर्यसंयोगा मेरुप्रदेशभेदात्तत्राप्यवयवभेदाभेदः। तत्राप्यवयवभेदाभेदः तत्राप्यवयव इति पुनर्दिग्भेदव्याख्यानम्। तत्राप्येवमिति चक्रतुल्यमिदमित्यदृष्टा उपरतिर्निष्ठा यस्य

दृष्टादृष्टफला व्यवहाराः प्राङ्मुखो ऽन्नानि भुञ्जीत, अपराह्णे श्राद्धं कुर्यादित्यादयः, प्रत्याख्याने दिक्कालयोर्न कल्पेरन् । प्रकृतेः स्वाभावरूपरूपतां प्राप्ताया दिक्कालकल्पनाया विपर्यये, वैपरीत्ये, अपूर्वापरादिनिमित्तत्वे ऽङ्गीक्रियमाणे मिश्रीभावो ऽनवस्थितत्वं प्रत्यक्षागमकृढानां सन्ध्योपासनादिरूपाणां व्यवहाराणां स्यात्समाद्यद्यप्यपूर्वापरं हीदं विश्वं, मूर्त्तिनः क्रिया न तत्र, तथा ऽपि विद्वान् व्यवहारपतितः व्यक्तप्रपञ्चावभासो ऽपि प्रपञ्चमवलम्बत एव, इमान् दिक्कालप्रकारानर्थान्बोधकानां सोपन्यासेन निराकुर्वन्नप्यवलम्बते । तदुपाधिप्रत्ययस्यानिवार्यत्वात् ॥ वृद्धवचनेन नावयव्यादिरित्यर्थो ऽशक्यपरित्यागो व्यवहारे इति दर्शयति । त्यजन्नवलम्बत इति । समानकालत्वेन त्यागावलम्बनयोरतिशयोक्त्या युगपद्विरुद्धाख्यार्थाभ्युपगमात्परस्य स्ववचनविरोधं ध्वनयति ॥ १९ ॥

यथा च कालो ब्रह्मणः शक्तिभावेषु प्रतिबन्धाभ्यनुज्ञाव्यापारो ऽध्यस्तनानात्वात्तथा दिगपि स्वोपाधिभिन्ना पूर्वापरादिभावभेदव्यवहारनिबन्धनीत्याह ॥

तस्यास्तु शक्तेः पूर्वादिर्भेदो भावान्तराश्रयः ।
भिन्ना विक्तेन भेदेन भेदायैवोपकल्पते ॥ २० ॥

सा स्वैरुपाधिभिर्भिन्नेति सामान्येनोक्ते ऽपि पूर्वादितया विशेषरूपेण भेदः पुनरिहोपात्तः । सूर्यसंयोगश्च भावान्तराख्यातः । भेदायैव तत्तद्विशेषणोपरक्तविशेष्यप्रत्ययजननायेत्यर्थः । अवधारणेन भिन्नविशेष्यप्रत्ययकाल एवौपाधिकं भेदं समवलम्बते नान्यदा स्वतो भिन्नादिमित्याह ॥ २० ॥

इदानीं दिङ्निमित्तं शास्त्रे कार्यमाह ॥

अवधित्वेन वापेक्षायोगे दिग्लक्षणो विधिः ।
पूर्वमस्येति षष्ठ्येव दृष्टा धर्मान्तराश्रये ॥ २१ ॥

इदमस्मात्पूर्वं परमिति मर्यादारूपेणापेक्षणं लौकिकं कार्यं, तत्रैव शास्त्रीयं दिग्योगलक्षणपञ्चमी विशेषविषया । कथं तर्ह्यत्र विषये षष्ठी दृश्यत इत्याह । पूर्वमस्येति षष्ठ्येव दृष्टेत्यादि । अवयव-

धिमत्सम्बन्ध ऽपाश्रत पञ्चमीति तथा षष्ठी तत्रैवाप- ते । धर्मान्तरस्यावयवत्वस्य त्वपेक्षायामवयविनि षष्ठ्येव भवति पूर्वं कायस्येति । न ह्यत्रावधित्वेनावयविनो ऽपेक्षेति दिग्योगपञ्चम्या अविषयो ऽयम् । अवयवावयविसम्बन्धे तु न पञ्चमी किं त्ववध्यवधिमत्सम्बन्धे । अत एव चावयवान्तरापेक्षा । अवयवान्तरस्य तु पूर्वतातिसम्बन्धिभेदादविरोधे विभक्तिद्वयोपपत्तिः । समासविधौ एकदेशिनेत्यवयविपरिग्रहे हि पूर्वता नाश्रीयते ॥ २१ ॥

शब्दव्यवहारे त्वपूर्वादिभावः पूर्वादिदिङ्निमित्तो ऽर्थानां, न स्थाननिमित्त इति नानवस्थित इत्याह ॥

पूर्वादीनां विपर्यासो दृष्टश्चावध्यसङ्करे ।
ऋज्वेतदस्येत्येतच्च लिङ्गं न व्यतिकीर्यते ॥ २२ ॥

अवधेरपेक्षणीयस्यासङ्करे अमा नियताभावे पूर्वादीनां विपर्यासो दृष्ट इति, व्यवस्थित एवायं व्यवहारस्तथा हि, यदपेक्ष्य पूर्वत्वं व्यवह्रियते तदेवापेक्ष्य तस्यैवापरत्वमिति परत्वापरत्वे दिक्कृते अनियते एव । अस्य वंशस्य ऋजु स्पष्टं मूलं इत्येतदपि दिशो लिङ्गं न व्यतिकीर्यते । अवधेरेवानपेक्षणादवध्यपेक्षायां हि साङ्कर्यं सम्भाव्येतापि । अवधेरनवस्थितत्वान्न चात्र लिङ्गे अवध्यपेक्षेत्यव्यतिकीर्णा एव दिशः । इत्थं च स्वाङ्गादपि व्यवस्थाने ऽवधिनियमासाङ्कर्यमेव । दृष्टादृष्टप्रयोजनस्तु व्यवहारो ऽनादिसिद्धादित्यसम्प्रयोगाख्यावधिनिबन्धनादिग्व्यवस्थानियत एवैषणीय इति न यः कश्चनावधिराश्रयणीयः ॥ २३ ॥

एवं तावद्बाह्यार्थनयेन दिक्समर्थिता । इदानीमन्तः क्षेपनयेनाह ॥

अन्तःकरणधर्मो वा बहिरेवं प्रकाशते ।
अस्यां त्वन्तर्बहिर्भावः प्रक्रियायां न विद्यते ॥ २३ ॥

अन्तरवस्थितं करणं व्यापारो यस्येति चैतन्यमेवेत्युच्यते । तस्य ह्यनाद्यविद्यावशात्स्वरूपानिष्कर्षेणेदमिति बहिराकारावभासे ऽपि परमार्थतो बाह्यस्यायोगात्स्वभावे च जगत्प्रत्यवभासत इत्य-

न्तरवस्थितस्यैव व्यापारस्तथा च वक्ष्यति "द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः । अन्तः करणतत्त्वस्य भागा बहिरवस्थिताः"। इतितस्यान्तः करणतत्त्वस्यायं धर्मो बाह्यार्थानपेक्षो ऽविद्यावशात्स्व-भावभूतो ऽवभासः, एवं पूर्वाद्याकारेण बहिरध्यवसीयते।असति बाह्ये कथं बहिरित्युच्यत इति चेदाह । अस्यामविद्यावशादवभासस्यैव बा-ह्यत्वावभासरूपायां कल्पनायामन्तारूपता बहीरूपता वचनमुख्या । परानुरोधेनानुप्रतिभासवशेनैवमुच्यत इत्यर्थः। असति हि बाह्ये तद-पेक्षमान्तरत्वमपि मुख्यमिति काल्पनिको ऽन्तर्बहिर्भावः।एवं च पूर्वाप-रत्वमविद्याध्यस्तं भावेषु अन्तारूपेषु अनादिमिथ्याभासवासनालक्ष-णान्तःकरणधर्मरूपं चकास्तीति न बाह्या काचिद्दिगस्ति ॥ २३ ॥

अतश्चैकत्वनानात्वविचारो ऽपि निष्फल एवेत्याह ।

एकत्वमासां शक्तीनां नानात्वं वेति कल्पने ।
अवस्तुपतिते ज्ञात्वा सत्यतो न परामृशेत् ॥ २४ ॥

नानोपाधिरूपाणां पूर्वादित्वेन भिन्नानां दिक्शक्तीनां मुख्यमेकत्वं, उपाधिभेदात्तु नानात्वममुख्यमेव वानादिसिद्धमेकत्वं, नानात्वं भि-न्नकार्यानुमेयमित्येते द्वे कल्पने अवस्तुपतिते।दिशः परमार्थतोऽवस्तु-त्वाद्विज्ञाननये व्यतिरिक्तवस्तुभावादित्यवस्तुविषये, बुद्ध्या परमार्थ-तो न विचारणीये इत्यर्थः । यथाप्रतीति व्यवहारसिद्धेः । अत एव सम्वेद्यमानत्वम् । प्रतीतिभेदात्तत्त्वं अभिप्रेत्यासामिति बहुत्वेन निर्देशः ॥ २४ ॥

न च पदार्थाविचारे किं चित्प्रयोजनमस्ति । तथा हि ॥

विकल्पातीततत्त्वेषु सङ्केतोपानिबन्धनाः ।
भावेषु व्यवहारा ये लोकस्तत्रानुगम्यते ॥ २५ ॥

इह पदार्थास्तीर्थिकपरिकल्पितनियतसङ्केतपरिघटितशरीरा-स्ते तीर्थिकपरिकल्पितान्विकल्पानतिक्रम्य भावतो वर्त्तन्ते। न हि प्र-तिदर्शनदर्शितविरुद्धरूपयोगवत्त्वं भावानाम्।तस्मादविचारितरमणी-या लोकसिद्धाः पदार्थाः समाश्रयणीया विद्वद्भिरपि । अतोऽलं प्रतिष्ठितानिमित्तैः तर्कविकल्पैस्तथा च लोके प्रसिद्धा दश दिशः सिद्धाः ॥ २५ ॥

तर्कविकल्पैस्तु भेदाभेदो ऽपि न व्यवतिष्ठत इत्याह ॥

नैकत्वमस्ति नानात्वं विनैकत्वेन नेतरत् ।
परमार्थे तयोरेष भेदो ऽसन्तं न विद्यते ॥ २६ ॥

अन्योन्याश्रयश्च रूपस्यैकासिद्धावितरासिद्धिप्रसङ्ग इति दिशामेकत्वनानात्वे न व्यवतिष्ठेते । व्यवहारे गजनिमिलतेन तु यथाभासं लौकिको व्यवहारो रूढः । परमार्थविचारे तु परस्परप्रतियोगिनोर्भेदाभेदयोरव्यवस्थना, मुख्याभिन्नस्य परस्यैव तत्त्वरूपत्वादित्यर्थः । किं च परोपाधितया शक्तिर्दिगित्युक्तम् ॥ २६ ॥

शक्तेश्च भेदाभेदविचारा न सन्तीत्याह ॥

न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः ।
न च लौकिकमेकत्वं तासामात्मसु विद्यते ॥ २७ ॥

शक्तिमतां स्वतन्त्राणां पदार्थानां पृथगेवावधारणाद्भेदो निश्चीयते न शक्तीनामाधारपारतन्त्र्येणावभासमानानामस्मादाधारात्परतश्च भेदः प्रत्यक्षसिद्धः । न चापि स्वतन्त्रस्याशक्तिमतो यथा भेदो, घटादेरेकत्वं लोकप्रसिद्धं भेदावभासात्तथा शक्तिमतां कार्यनानात्वोन्नीयमानभेदानां स्वत आधाराच्चाभेदो ऽस्तीत्यनिर्वाच्या एव भेदाभेदाभ्यां सर्वाः शक्तयः । अत एवाविद्याशक्तिब्रह्मणोर्भेदे न द्वैतापत्तिः ॥ २७ ॥

यदुक्तं नैकत्वमस्ति नानात्वमित्यादि तदेवाव्यवस्थितत्वेन,निश्चयस्तार्किकाणामेकवस्त्ववलम्बनं न युक्तमित्याह ॥

नैकत्वं व्यवतिष्ठेत नानात्वं चेन्न कल्पयेत् ।
नानात्वं चावहीयेत यद्येकत्वं न कल्पयेत् ॥ २८ ॥

प्रतियोगिभूतं नानात्वं यदि बुद्ध्या न कल्पयेत् नाश्रयेत एकत्वं कर्तुं, तदा न स्वरूपमनियतं लभेत । एवं नानात्वमपि यदि प्रतियोगिभूतं नाश्रयेत् तदा तदपि नावतिष्ठेतेति परस्परापेक्षत्वादनयोर्नैकत्वाद्यवस्थातुं पार्यते इत्यविचारितरमणीया दिगाश्रयणीया लौकिकीति सिद्धम् ॥ २८ ॥

इति श्रीभूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
दिक्समुद्देशः षष्ठः ॥

निरन्तराऽधस्तात् दिक् साधनमिति दिशो ऽनन्तरं साधनमुद्दिष्टं लक्षयितुमाह ॥

स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।
क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ॥ १ ॥

क्रियानिर्वृत्तौ द्रव्यस्य शक्तिः, साधनं साध्यते ऽनेन क्रियेति भाष्यकारप्रभृतयो विदुः । तथा हि गुणः साधनमिति भाष्य उक्तम् । शक्तिरेवाश्राधारपारतन्त्र्यादन्यस्मात्र स्वाश्रयस्य भेदकत्वाद् गुणशब्देनोक्ता कृदाख्यातानभिहितयोर्भावयोर्भेदाभिधानप्रसङ्गहेतुः । यद्भाष्यं क्रियाभिनिर्वृत्तिं प्रति साधनभावमुपैतीति तदन्यत्राह । नित्यद्रव्यस्य साधनत्वे (कदा सा)?च्छक्तिव्यधानाश्रयेण भवितव्यम् । शक्यं हि द्रव्यं साधनं, न तु निराधारा शक्तिः सम्भवति । परोक्षे लिडित्यत्रापि यदि गुणसमुदायः साधनं, साधनमप्यनुमानगम्यम् । अथान्यद् गुणेभ्यः साधनं, भवति प्रत्यक्षपरोक्षतायाः सम्भव इति यद्भाष्यं तदेवं नेतव्यं, शक्तेर्नित्यपरोक्षत्वात् । क्रियावद्विशेषणमव्यभिचारादयुक्तमिति परोक्षताविशेषणसामर्थ्यात् शक्त्या विशिष्टद्रव्यं साधनमुपन्यस्तम् । एवमुपसर्गाच्छन्दसि धात्वर्थ इति साधने यद्वद्बहिलिङ्गसङ्ख्याभ्यां शोभन इति भाष्ये साधनशक्तिविशिष्टं द्रव्य इति व्याख्येयम् । तथा हि धातावित्येवोक्ते शब्दे चुत्तयसम्भवात् क्रियाप्रतिपत्तौ सिद्धायामर्थग्रहणाद्धातुक्तो ऽर्थ इति समासप्रतिपत्त्यर्थं द्रव्यमाश्रितम् । वस्तुपर्यायो ऽर्थशब्दः । द्रव्यस्य च स्वरूपेण सिद्धस्वभावत्वात् क्रियायाः करणानुपपत्तेः, कर्मादिकारकरूपेणैव तस्य करणत्वम् । क्रिया हि कारकाणि करोति तदपेक्षत्वात्तद्व्यवहारस्येति साधनात्मना द्रव्यस्य क्रियया करणादेवमुक्तम् । धातुरर्थः प्रयोजनमस्येत्येतत्तु भाष्यव्याख्यानमयुक्तम् । एवं हि शक्तेरेव क्रियासाध्यत्वेन प्रयोजनामिति द्रव्यं न प्रत्याख्येत । यत्त साधनं वै द्रव्यं, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः । द्रव्य द्रव्यप्रकर्षव्याख्यानम् । भाष्ये द्रव्यस्य साधनत्वाभिधानं तच्छक्तिशक्तिमतोर्भेदाविवक्षयेत्यवगन्तव्यम् । तथा हि तिङन्तक्रियासाधनाभिधायिनः प्रकर्षे प्रत्यय इति, शक्तिः क्रियालक्षणकार्यानुमेया कार्यद्वारेणैव प्रकर्षकार्यम् । प्रकर्षे प्रत्ययस्य स्पष्टसङ्गहे द्र-

व्याधारत्वशक्तेः कार्यमुखवत्कारणभूतद्रव्यमुखेनापि कथं न प्रकर्ष इत्याशङ्क्य द्रव्यस्य तदभाव इत्येतदभिधातुमेतदुक्तमिति व्यतिरेको ऽनाहतः । तत्र कर्तृकर्मणोः क्रिया समवैतीति स्वाश्रयसमवेतक्रियानिष्पत्तौ तयोः, क्तादिकृतां करणादीनां तु पराश्रयसमवेतायां क्रियायां साधनभावः । न हि करणादिषु क्रिया समवैति । क्रियाणामिति व्यक्तिभेदापेक्षं बहुवचनम् । गुणक्रियापेक्षया वा सर्वेषां स्वाश्रयसमवेतक्रियापेक्षं साधनत्वम् । गुणक्रियायां हि कर्त्तारः सर्वे । अकिञ्चित्करस्य साधनत्वानुपपत्तेः । अत एव करणं कारकमित्यादिसाधनसामानाधिकरण्योपपत्तिः । इत्थं च क्रियाणामिति बहुवचनं सुष्ठु गमितं भवति । कर्तृकर्मस्था तु प्रधानक्रिया करणादीनामाश्रयान्तरसमवेता ॥१॥

कथं पुनरेतदवगम्यते शक्तिः साधनं न पुनर्द्रव्यमित्याशङ्क्याह ।

शक्तिमात्रासमूहस्य विश्वस्यानेकधर्म्मणः
सर्वदा सर्वथाभावात्क्वचित्किंचिद्विवक्ष्यते ॥ २ ॥

घटादयो भावा विश्वशब्दवाच्याः ते च तत्तदुदकाहरणादिकार्यसाधिकानां शक्तीनां समूहरूपाः । अत एव ताः शक्तयः तत्र मात्राभागा इति शक्तिसमाहारमात्रं घटादयः । ताश्च शक्तयो ऽनेकविधाः । काश्चित् स्वहेतोरेव दैवात् भवन्ति, आश्रयादिनाशं मत्वेव न च विनश्यन्ति । यथा बोधप्रदीपानां प्रकाशशक्तयः । काश्चित्पौरुषे ऽत्यन्तः स्थिता एवाश्रये निरुध्यन्ते । यथा बाधादिशक्तयः । ता हि समभ्यासेन दृष्टद्रव्योपयोगेन जायन्ते । अन्याः सत्यो वा अपरपुरुषप्रयत्नेन विध्वंस्यन्ते । यथा विषस्य मारणशक्तिः । बीजस्याङ्कुरजननशक्तिः । अन्याः प्रभावातिशयवता विपरिवर्त्यन्ते । यथा योगिना सर्वभावानां रूपपरिवृत्तिराधीयते । काश्चित्कालपरिवासेन व्यज्यन्ते । यथा धर्माधर्मशक्तिः फलदान इत्याद्यनेकविधमुन्नेयम् । एवमनेकस्वभावत्वे शक्तिसमुदायस्य विचित्रे कार्ये यथाशक्ति भेदविवक्षायां प्रतिनियतसाधनभावोपपत्तिः । द्रव्यस्य तु साधनत्वे तस्यैकरूपत्वात् कार्यवैचित्र्यं न स्यादित्यर्थः । तदुक्तं भाष्ये गुणसमुदायः साधनमिति । प्रधानक्रियाया एकैकशक्तिसाध्यत्वाभावात् समुदायग्रहणम् । गुणक्रियापेक्षया तु

प्रत्येकं शक्तेः साधनता । तस्याश्च प्रधानक्रियापेक्षया वैचित्र्यात् । कर्माकर्मादिविरूपताया वा प्रत्येकं साधनत्वेऽपि समुदायग्रहणं शक्तीनां साधनत्वेनासां भेदादेकस्य कार्यभेदोपपत्तिव्याख्यापनार्थम् । तेनानेकशक्तेरपि पदार्थस्य सत्येव तथा स्थानेऽपि काचिच्छक्तिः क्वचिदुद्भूता विवक्ष्यत इति घटं पश्य घटेनोदकमानय घटे उदकं निधेहीत्यादिकर्मकरणादिभावो नियमेनोपपद्यत इति न कारकसाङ्कर्यप्रसङ्गः । द्रव्यस्य त्वेकस्वभावत्वात् कर्मकरणादित्वं नोपपद्यत इति गर्भीकृतेयमत्र शक्तिः शक्तेः साधनत्वे बोद्धव्या ॥ २ ॥

ननु च यत्र सन्ति शक्तयः तत्र युक्तं यत् नियमेन विवक्षा । दृश्यन्ते पुनरसत्यस्तत्र कथं तासां विवक्षा । तद्यथा शक्तिमादधाति शक्त्या साधयति शक्त्या वर्तते शक्तेर्व्यभ्येतीति । न हि शक्तेः शक्त्यन्तरयोगः अनवस्थापातात् । तथा धनविनाशं करोति धनाभावो न युक्त इति निरूपाख्ये भावे का शक्तिः । स्थाल्यां पचति स्थाल्या पचति स्थाल्याः पचतीति च सम्भवनधारणोपकारा स्थाली करणाधिकरणभिन्ना कथमित्याशङ्क्याह ।

साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः ।
सत्रसन्वार्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते ॥ ३ ॥

विवक्षारूपाया बुद्धेः शब्दनिमित्ता येऽवस्थाविशेषाः प्रतिनियतशब्दनिबन्धनाः तदाश्रयः कर्त्रादिकारकव्यवहारस्तथा हि । निरूपिते ऽर्थे शब्दप्रयोगाद्यथानिरूपणं शब्दोपपत्तिः । निरूपणं चानपेक्ष्यापि बाह्यार्थं स्वातन्त्र्यपरिकल्पापतिनम् । ज्ञानार्थविशेषात् । तथा हि सत्यपि वस्तुनि यावद् बुध्या निरूपणं नास्ति तावदविषयः शब्दानामव्यवहार्य इति व्यवहारेषु बुद्धिरेव प्रभवतीति । सन्निति दर्शनगर्भमभिधानम् । तत्र शक्तेर्द्रव्यायमाणाया बुद्ध्याः स्वातन्त्र्येणानिरूपणाच्छब्देनाभिधाने शक्त्यन्तरयोगो विरुद्धः । न हि तदा शक्त्यवस्थायामेव तस्या योगो येनानवस्था स्यात् । अपि तु द्रव्यावस्थायामभावोऽपि बुध्या निरूपिताकारो द्रव्यायमाण एव शब्दापवाच्यः । एवं तनुनरकपालत्वात् स्थालीपाकोऽनपेक्षितकर्तृविनियोगास्वातन्त्र्येण विवक्षित इति कर्त्री इन्धनोपकारानपेक्षया तस्या एव

साधकतमत्वविवक्षायां तु करणं, वास्तवाधारविवक्षायां त्वधिकरणमिति सर्वमुपपद्यते । अत एव हन्त्यात्मानमात्मना, आत्मनः स्वात्मनि व्यवस्थितमित्यादयो ऽपि प्रयोगाः प्रथितसाधनाः । वक्ष्यति चैतत् । बुध्यैकं भिद्यते भिन्नमेकत्वं चापगच्छतीत्यादि । दृश्यविकल्पयोरभेदाध्यवसायेन व्यवहारोपपत्तेः बहिरन्यव्यावृत्तिपरतया समन्वयो ऽत्र समर्थनीयः । स्वात्मनि नान्यस्मिन् । स्वात्मन एव नापरस्यावस्थानमित्यादि । यथा शिलापुत्रकस्य शरीरमिति । इत्थं वाक्यादपोद्धृतस्यापि पदस्य संस्कारे प्रथमत एवाप्रयुक्तपदान्तरे विवक्षितस्यापि विशेषस्य रूपसामान्यादनवधारणे सम्भवत्येव, पदावधिकमन्वाख्यानम् । सम्बन्धिसामान्यापेक्षितोऽन्यथा बुद्ध्या नियतमर्थरूपं क्रियादिसम्बन्ध्यपेक्षं कथं निरूप्येत । अनपेक्षितसम्बन्धरूपस्यार्थसामान्यस्याभावादभ्युपगमने च पदावधिकमन्वाख्यानम् । शास्त्रे धातुसम्बन्धे प्रत्यया इत्येवमादीनामप्रत्याख्यानात् । यत्र च सर्वथाऽसङ्गतिः स्थालीमोदनेन काष्ठे पचतीत्यादौ, तद्वाक्यमेव न भवतीति कथं वाक्यादपोद्धृतानां पदानामन्वाख्यानप्रसङ्गः । अत एव चाक्षिणी मे दर्शनायेत्यादेर्विप्रयोगस्य निवृत्तये शास्त्रं सामर्थ्यवदेव । सामान्यमपि हि पदार्थरूपमर्थान्तरसंसर्गयोग्यमेव । संस्क्रियत्वेन त्वङ्गुल्यग्रे करिशतमास्त इत्याद्यसमुचितमेव । एवं च कृत्वा छन्दसि, चषालं ये अश्वयूपाय तक्षतीत्यादावसावेकत्वशङ्का । यत्तु तत्र व्यत्ययो ऽर्थवानेव नियतानुपूर्वीकस्य छन्दोवाक्यस्यासम्भवात्ततस्तथैव पदापोद्धारस्य न्याय्यत्वात् । लोके नावस्थितं नियतानुपूर्वीकमसङ्गतं वाक्यमिति न ततो ऽपोद्धारप्रसङ्गः । तस्माद्वाक्यादपोद्धृत्य पदानुशासने ऽपि निर्दोषमेव पदावधिकमन्वाख्यानम् । तत्र च समस्तविशेषणविशिष्टस्यार्थस्य निरन्तरत्वादपोद्धारे सामान्यमात्राधिकल्पितशरीरैव । उपक्रमे एव तु विशेषापेक्षायां वाक्यावधिकमन्वाख्यानं कथ्यते । न तु वाक्यस्यानन्त्यात् साक्षादन्वाख्यानं युज्यते । प्रकृतिप्रकृत्ययादिविभागकल्पनया हि पदस्यैवानुशासनमुपपद्यते । तस्य च केवलस्य च सम्भवाद्वाक्यस्थत्वे सम्बन्धिसामान्यापेक्षायां पदावधिकं तद्वाक्योपात्तसम्बन्धविशेषापेक्षायां तु वाक्यावधिकमन्वाख्यानमितीयाननयोः पक्षयोः विशेषः ॥ ३ ॥

बौद्धे साधनव्यवहारे भाष्यकाराभ्युपगमं संवादकमाह ।

बुद्ध्या समाहितैकत्वान्पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदा ऽपायः प्रतीयते ॥ ४ ॥

कुरुभ्यः पञ्चाला अभिरूपतरा इति पञ्चमी विभक्त इति पञ्चम्यर्थं सूत्रं भाष्ये प्रत्याख्यातं, बौद्धस्यापायस्य सम्भवादपादान इत्येव सिद्धेः। तथाह्याभिरूप्येण समानगुणेन कुरुभिः सह पञ्चालान् बुद्ध्यैकत्वं समुदायभावमापाद्य अतिशयाभिरूपतावशात् कुरुभ्यः पञ्चालाः पृथक् क्रियन्त इत्यस्ति संश्लेषपूर्वको विश्लेषो ऽपायः। तदुक्तं भाष्ये यस्तैः साम्यं गतवान् एवं प्रयुङ्क्त इति। तैः कुरुभिः पञ्चालानां सादृश्यसम्प्रधारणमर्थादाभिरूप्येण प्रथमं यो गतवानित्यर्थः। अनेन चैकबुद्धिनिवेशित्वेन कुरुपञ्चालानां देशप्रत्यासत्तिमाह भाष्यकारः। तत्पूर्ववस्तुनः सातिशयस्य निरतिशयाद्विभागात्पञ्चमीशब्दोऽपादानसंज्ञात्वान्नोक्तो भाष्यकृता। सूत्रारम्भवादिनामपि निर्धारणाश्रयत्वेनैषां बुद्ध्यैव समुदायभावो ऽसमानगुणात्वादाश्रयणीयः। अन्यथा निर्धारणाधिकारादेव विभागे लब्धे विभक्तग्रहणादत्यन्तविभागप्रतीतौ न वास्तवः समुदायभावो युज्येत। तदेवं बौद्धः साधनभावो यस्मादवसीयते, कारकप्रकरणे च तमप्ग्रहणात् प्रकर्षो न विवक्ष्यत इति गौणे ऽप्यत्रान्वये ऽपादानसंज्ञा भवति ॥ ४ ॥

अन्यमपि भाष्योक्तं संवादमाह।

शब्दोपहितरूपांश्च बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते ॥ ५ ॥

हेतुमति चेत्यत्राख्यानात्कृतस्तदाचष्ट इत्येवमाद्युपसङ्ख्यानेन वा सामान्यतोणिचः कृतत्वाद्धेतुमतीत्यविशिष्टमित्येवं प्रत्याख्यातम्। चित्रगुरित्यादौ हि प्रकृतिरूपस्य प्रयोज्यप्रयोजकभावाध्यवसायात्, कंसं घातयति, बलिं बन्धयतीति सिद्धम्। एवं कृतानुकरणेनाद्ये ऽपि(महानयनां)? कंसवासुदेवानुकारेण सादृश्यात्तद्रूपतोपपत्तिः। तत्र ग्रन्थिकेषु कथमिति चोदितम्। तत्र ग्रन्थिकाः कथकायत इति वृत्तिरूपेणैव कंसवधाद्याचक्षते। तत्र च प्रकृतिरूपस्याभावात् कथं प्रयोज्यप्रयोजकत्वमिति पर्यनुयोगः। तत्र परिहार उक्तः। ते ऽपि हि तेषामुत्पत्तिप्रभृत्याविनाशाद् बुद्धीर्व्याचक्षाणाः सन्तो बुद्धिविषयान्प्रकाशयन्ती-

ति चिरकालातीतत्वात् कंसादीनां बहिरसत्वात् बुद्धिगोचरतया सतो विद्यमानाँस्तान्प्रकाशयन्ति, शब्देनावभासयन्ति । बुद्धिप्रतिभास्यैव ह्याकारः शब्दार्थो न वस्त्वर्थः । तथा च कथकः श्रोतरि कंसाद्याकारप्रत्ययजननात् बुद्धिवासुदेवेन बुद्धिकंसं घातयतीति प्रयोजकत्वसमारोपात् प्रयोगोपपत्तिः । तथा हि कथको ऽतीतशब्दसामर्थ्योपक्षयात् रूपविशेषान् श्रोतृबुद्धिगोचरमापातितान् सव्यापाररूपान् कंसादीन् कर्मादिसाधनतया भाष्यकारो मन्यत इति बुद्ध्यवस्थानिबन्धनः साधनव्यवहारः सिद्धः । गौणे ऽपि च प्रयोजके कारकप्रकरणे प्रकर्षेणाश्रयाद्धेतुसंज्ञायां तद्व्यापारे ऽत्र णिचि सूत्राप्रत्यक्षमित्यव्ययीभावः। तत्र क्रियाविशेषणं चैतत् । इन्द्रियनिमित्तेन ज्ञानेन परिस्फुटार्थं नावधारयतीत्यर्थः । एतच्च बुद्धीर्व्याचक्षाणा इति भाष्यस्याभिप्रायाद्व्याख्यानम् । प्रभावातिशययुक्ते हि वस्तुन्यादरवशात् स्पष्टरूपः प्रत्ययः प्रस्तूयते । स्पष्टे च ज्ञाने ऽवभासमान आकारो बाह्यात्मको ऽवसीयते ॥ ५ ॥

तदेवं बुध्या साधनव्यवहारोपपत्तावेकस्यापि वस्तुनः शक्तिनानात्वं बौद्धं उपपद्यत इति निगमयति ।

बुद्धिप्रवृत्तिरूपं च समारोप्याभिधातृभिः ।
अर्थेषु शक्तेर्भेदानां क्रियते परिकल्पना ॥ ६ ॥

बुद्धेः प्रवृत्तिर्व्यापारः परिच्छेदलक्षणः तस्या रूपमाकारो विषय आभासमानस्तमर्थेषु बाह्येष्वध्यस्य तेषां शक्तिनानात्वं परिकल्प्यते वक्तृभिः।अयमर्थ ।दृश्यविकल्पयोरभेदाध्यवसायात् बौद्धः शक्तिभेदो बाह्य एवेत्यभिमानः । तत्र चित्रं साधानभावमभिमन्यते । बुद्धिप्रतिभासस्य स्वप्रतिष्ठत्वेनानवगमात्तत्तदृक्रियाभेदं प्रतिवक्तृव्यपेक्षां चानुवर्त्य वस्त्वेव नानाशक्तिकमवगम्यत इति बहिरर्थे शब्दः प्रमाणम् । क्रियाकारकसंसर्गस्य बाधकाभावात् सति संवादे च वाक्यस्य प्रामाण्यमुपयन्ति व्यवहर्त्तारः । सौगतानां तु विकल्पप्रतिबिम्बस्य भेदानध्यवसायात् बहिष्प्रवृत्तिः।भाष्यं तु वक्त्रभिप्राय एव । शब्दानां तु बाह्ये व्यभिचारशङ्कनादन्यव्यावृत्तिमात्रनिष्ठता तु बहिः । वैय्याकरणानां तु व्यावृत्तवस्तुविषयता तथाध्यवसायात्तत्रैव च प्रामाण्यमिति मिदर्शनभेदः । नियतोपाधिनियमत्वाच्च न साङ्कर्यम् । उपका-

रिकाश्च शक्तयः प्रत्युपाधिभिः संमूर्च्छितशरीरत्वाद्वस्तुनस्तत्त्वा-न्यत्वाभ्यामनिर्वाच्या इति नानोपाध्युपकाराङ्गत्वादेरप्रसङ्गः ॥ ६ ॥

बुद्ध्यवस्थासमाश्रये च साधनभावे सतीदमपि सिद्धं भवतीत्याह ।

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः ।
साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम् ॥ ७ ॥

जातौ पदार्थे तज्जातीयाभेदेनानागतं निरूप्य योग्यसाधन-विनियोगाज्जातिद्वारेण क्रियासिद्धावङ्गता, व्यक्तिद्वारेण तु निर्वर्त्य-मानता कर्मणो युज्यत इत्युक्तं, निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि सा-धनमिति। व्यक्तौ तु पदेन प्रत्याय्यायां शब्दं जनयति संयोगं करोती-त्यादौ जन्यमानस्य निर्वर्त्यस्य शब्दादेरेतत्कर्मणोऽनागतस्यापि वर्त्त-मानत्वम्। व्यक्तिसारूप्यादसत्यपि जातेः प्रत्यायने भेदाध्यवसायो बुद्ध्याकारमुल्लिख्य योग्यसाधनविनियोगात्। बौद्धस्यैव बहीरूपता चाध्यवसायात्। बाह्येन तु रूपेण निर्वर्त्यमानता। बौद्धो न तु साधन-भावो युज्यत इत्यर्थः । जन्यमानस्येत्येतेन विकार्यप्राप्ययोर्व्यव-च्छेदः ॥ ७ ॥

विकार्यं हि प्रकृतिरूपेण स्थितमेव । प्राप्यमपि स्थान एव क्रि-याद्वारा बुध्याऽन्वारोप्यत इति व्याप्तिमाह ।

स्वातन्त्र्यपरतन्त्रत्वे क्रमरूपं च दर्शितम् ।
निरीहेष्वपि भावेषु कल्पनोपनिबन्धनम् ॥ ८ ॥

सदसत्पक्षभेदेन कार्यकारणभावस्य निराकृतत्वात् सर्वभावाः क्रियारहिताश्चेष्टा अन्यास्तत्र क्रियायां स्वातन्त्र्यपारतन्त्र्यलक्षणं क-र्तृकरणादिरूपं कारकत्वं, क्रियारूपमेव च क्रमवत्त्वं यथाभासमनादि मिथ्याभ्यासवासनावशेन कल्पनाबुद्ध्युपचरितसतत्त्वम् । अपूर्वा-दस्यापि भावतो विश्वरूपपरतया स्वातन्त्र्यादिना ऽवभासनादिति मिथ्यावभासोऽयमर्थेषु क्रियाकारकभाव इत्यर्थः । अत्र द्वैतनये हि सर्वमुपप्लवते असत्यत्वादिति विकल्पपरिघटितः शाब्दो व्यवहारो यथाप्रतीत्यविचारितसिद्धोऽभ्युपगन्तव्य इति दिगादिपदार्थवत् साधनपदार्थसिद्धिः। दर्शितमित्यद्वैतनयावलम्बिभिर्भाष्यकारप्रभृ-

तिभिः कूलं पिपतिषतीत्यादिप्रयोगप्रसिद्ध्यर्थमाख्यातमित्यर्थः ॥८॥

एवं तावद् द्रव्यव्यतिरिक्तशक्तिदर्शनेन साधनं लक्षितं, अव्यतिरिक्तशक्तिदर्शनेनाप्याह।

शक्तयः शक्तिमन्तश्च सर्वे संसर्गवादिनाम्।
भावास्तेष्वस्वशब्देषु साधनत्वं निरूप्यते ॥ ९ ॥

समवायवशाद्धर्मधर्मिणोरभेदमिव भेदमपि ये वदन्ति संसर्गवादिनो वैशेषिकास्ते च स्वरूपं सहकारिणश्च भावनां स्वकार्यजनने शक्तिरिति प्रतिपद्यन्त इत्यसहकारिणः शक्तिः पदार्थव्यतिरिक्ता विद्यते।एवमपि साधनत्वं भावानामपादानादिशब्दैर्न प्रत्याय्यते, अपि तु विभक्तिभिरेव। तथा च प्रत्यायनयोग्यतामात्रेण त्वपादानादिशब्दप्रवृत्तिः।घटं पश्यतीत्यादावेव द्वितीयादिभिर्महत्वाधारनियतं प्रत्याय्यमानं शक्तिसाधनं भवति आधारानवच्छिन्नम्। स्वमहत्वादिः कर्मत्वादिशब्दवाच्यो न किं तव। नापि साधयतीति तद्भावो विभक्त्येकसमाधिगम्यः। प्रातिपदिकादाधारवाच्यस्य उत्पत्तेः। आधारसमवाये साधनत्वस्य संस्पर्शादुपकारावस्थायां च शक्तित्वं च उपकार्यावस्थायां तु शक्तिमत्त्वं प्रमाणदृष्टमिति न काचिदनुपपत्तिः। असत एव शक्त्यवस्थायां शक्त्यन्तरेणायोगादनवस्था ऽपि नास्ति। अभावस्यास्मिन्दर्शने सप्तमपदार्थरूपत्वेन भाव्यत्वात् अशक्तियोगो विरुद्धः ॥ ९ ॥

तत्र को भावः कस्य क्व शक्तिरित्युदाहरणमाह।

घटस्य दृशिकर्मत्वे महत्वादीनि साधनम्।
रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम् ॥ १० ॥

घटं पश्यतीति दर्शनक्रियाकर्मभावापन्नस्य घटस्य द्रव्यत्वरूपाणिशक्तिस्वसमवेतानि साधनं कर्मकारकं। तथा हि कणादसूत्रं। महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति।अस्यार्थ। अनेकद्रव्यं समवायिकारणं यस्य तदनेकद्रव्यं द्व्यणुकादि। तद्यस्यास्ति तदारब्धस्य तदनेकद्रव्यवत् तद्भावस्तत्त्वं तस्माद्धेतोरुपलब्धिर्महति द्रव्ये। तेन बहुव्रीहिणा मतुपा च द्वौ मत्वर्थावुक्तौ, तत्रैकेन परमाणोर्व्यवच्छेदान्महारूपवानप्यनेकस्य द्रव्यस्यारम्भकाभावान्नोपलभ्यते। अपरेण

तु मत्वर्थेन द्व्यणुकादेरर्थवच्छेदः। अत एव सूत्रान्तरमुक्तं, द्रव्यत्वात्परमाणावनुपलब्धिरिति । परमाणुग्रहणमत्र दृश्यमानस्योपलक्षणार्थम्। महति दृश्यमाने चानेकद्रव्यवत्त्वं दर्शनहेतुरिति त्र्यणुकस्य कारणबहुत्वप्रचयेभ्यो महत्वस्योत्पत्तिरिति त्रिभिर्द्व्यणुकैरारम्भान्महतोऽनेकद्रव्यवत्त्वेऽपि तदभावः। महतां हि दृश्यमानस्यानुवादेनेदं विधीयत इत्यदृश्येना(पवेरस्मौनास्या)? दृश्यताक्षतिः। न हि मत्वर्थेन दर्शने कारणं विधीयते । एवं ह्येकस्या आकृतेश्चरितः प्रयोग इति न्यायप्रक्रमाभेदार्थं पञ्चम्येव क्रियते । अनेकद्रव्यवतश्च महत्वाव्यभिचारान्महतीति न हेतुनिर्देशः, अपि तु विषयोपलक्षणमेव। रूपादिति च द्वितीयो दर्शनहेतुः। नीरूपस्य वायोर्महतोऽनेकद्रव्यवतश्चाप्यनुपलम्भात्तदुक्तं सूत्रं, रूपसंस्काराभावात्तु वायावनुपलब्धिरिति, हेतुत्वं न महत्त्वस्यापि। ततो द्वयोरेव व्यतिरेकाप्रदर्शनम्। महत्त्वस्याकारणत्वेऽपि च तद्विषयत्वाद्दर्शनस्य पारम्पर्येणोपयोगान्महत्त्वादीनि साधनमिति बहुवचनम्। यत्त्वद्रव्यत्वादीनां सामान्यविशेषाणामप्यादिशब्देन सङ्ग्रहणात् वहुवचनमत्र सामान्यम्, विशेषादि प्रधानं दर्शननिबधनं, तदुपाधिकत्वेनार्थानां, पररूपव्यावृत्तस्यात्मन उपलम्भात्। महतीत्येव तूक्ते व्यभिचार आकाशादिनेत्यनेकद्रव्यवत्वादिति मतुपाऽवयविद्रव्ये प्रतीतिरभिव्यज्यते। अनेकद्रव्यवत्वादिति पुनरुच्यमाने तत्पुरुषसम्भावनया द्रव्यप्रचयमात्रं गम्यते। तत् रूपं पश्यतीत्यत्र रूपस्य दर्शनक्रियायां रूपत्वं स्वसमवेतं सामान्यमनेकद्रव्ये च समवायः साधनं च। तथा सूत्रे अनेकद्रव्ये रोगसमवायाद्रूपविशेषाच्च रूपोपलब्धिरिति। अनेके यस्यावयवा अवयविद्रव्यस्य तदनेकद्रव्यं तेन समवायात् तत्र समवेतत्वाद्रूपस्य विशेषतद्भूतत्वम्। अतो न्यायेन अस्मिन् रूपं तेन सद्रव्येणाभिभूतमपोह्यते । अन्ये तु रूपं विशेष्यते व्यावर्त्यतेऽनेनान्यस्माद्रसादेरिति रूपत्वमेव सामान्यविशेष एवमपरिहार्यं, इति वर्णयन्ति। अनेकद्रव्यत्वाभावाच्च परमाणोस्तद्गतरूपस्यादृश्यतया योग्यदेशस्थादयोऽपि सामर्थ्यात्साधनमिति बहुवचननिर्देशः ॥ १० ॥

स्वैः सामान्यविशेषैश्च शक्तिमन्तो रसादयः ।
नियतग्रहणा लोके शक्तयस्तास्तदाश्रयैः ॥ ११ ॥

सामान्यविशेषाः समवेता रसादीनां रसनादिक्रियासाधनं । तथा हि ते स्वैर्नियतग्रहणाः । नियतं स्वजातिबलादेव दृश्यन्ते न तु द्रव्यत्वादनियतग्रहणाः । द्रव्यं हि कदाचित्सामान्योपाधिना गृह्यते। द्रव्यमिति, कदा चिद् गुणेन शुक्लमिति, कदा चित्कर्मणा गच्छतीति । रसत्वादीनां तु शक्तीनां स्वाधारा एवावच्छेदकाः स्वरूपग्रहणे शक्तिः । यथा हि रसोपलम्भे रसत्वमप्युपलभ्यते तद्विशिष्टस्य तस्योपलम्भादित्याधिनाक्षेपः । तथा रसत्वोपलम्भे ऽपि स्वाश्रयाक्षेपः । तथा रसस्योपलम्भे तदाश्रयद्रव्यमपि शक्तिरित्यपि क्षेयं । पूर्ववत्त्वनेकद्रव्ये समवायो गृह्यते परमाणुगतस्य रसादेरनुपलम्भात् । एवं शेषेष्वपि वाच्यं । इत्थं परस्परशक्तिमन्तो भावाः । तथा च न का चिन्नियता शक्तिः । संसर्गिणां परस्परं तत्त्वात् अन्यस्य च योग्यदेशादेः सहकारिणः ॥ ११ ॥

तथा चोदितम ॥

इन्द्रियार्थमनःकर्तृसम्बन्धः साधनं क चित् ।
यद्यदा यदनुग्राहि तत्तदा तस्य साधनम ॥ १२ ॥

आत्मेन्द्रियमनोऽर्थसन्निकर्षात् ज्ञानं निष्पद्यते रूपादाविति संयोग एव साधनम । सुखादौ त्वात्मान्तःकरणसंयोगाविति क चिदित्याह । किं च तत्र परिगणनया यद्यत्रोपकरोति तत्तत्र साधनमिति यथायोगं सर्वे भावाः शक्तिमन्तः । तथा हि । संख्याः परिमाणानि पृथक् संयोगविभागौ कर्म च रूपिद्रव्यसमवायात्तद्रूपाण्युक्तानि । अवयवानामवयविनिष्पत्तौ संयोगशक्तिर्गुणानिष्पन्नो ऽवयविसमवायः शक्तिरिति परोपकारि परतन्त्रं सर्वं शक्तिलक्षणमनुपतति ॥ १२ ॥

सा च स्वकीयपरतन्त्रावस्था साधनादिना सिद्धस्वभावार्थाभिधायिना शब्देन नाभिधातुं शक्यते, अपि तु यथायथं विभक्त्यादिरस्याः प्रत्यायने समर्थ इत्याह ॥

स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥ १३ ॥

स धर्मः क्रियां प्रति शेषभावः । कारकं साधनमपादानमित्य-

दिशब्दैः क्रियोपकारोपलक्षितं द्रव्यमभिधीयते। सामान्येन क्रियोपकारलक्षणसाधनभावः समुद्भूतोऽस्मात्प्रतीयते । तथा ऽन्यत्रापि द्रव्यरूपतया साधनममुखीकरोति। क्रियोपकारलक्षणो धर्मो द्वितीयां प्रतिपद्यत इति परिगृहीतक्रियोपकाराद्द्वितीयादिविभक्तिप्रतिपाद्यमस्त्विति शक्तिर्विभक्तिवाच्या । क्व चित्तद्धितवाच्या ।शतेन क्रीतः शत्यः शतिक इति क्रये साधकतमत्वं प्रत्ययवाच्यं । यत्र तत्रेत्याधारभावो वाच्यः । पयः पयो जरयति, मधु निरीक्षते, दधि अश्नातीति प्रातिपदिकादेव शक्तिः प्रतीयते । अन्तरा त्वां च मां च कमण्डलुरित्यन्तराशब्दो व्यपोधिकरणमाहेत्यादिग्रहणम् ॥ १३ ॥

कः पुनरासामुपकारलक्षणो धर्मः, साधनमित्याह ॥

निमित्तभावो भावानामुपकारार्थमाश्रितः ।
नातिरावर्जनेऽप्येवं सिद्धः साधनमिष्यते ॥ १४ ॥

साध्यस्वभावानां क्रियाणामुपकाराय सिद्धस्वभावानां भावानां निमित्तभावो हेतुभावः । नतिर्नमनमुपकाराभिमुख्यं, आवर्जनमङ्गभावेन स्वात्मनः प्रत्यर्पणं क्रियोपजननमतात्पर्यत, इति शब्दः प्रकार इत्येवमादिभिः शब्दैरभिधीयमानो ऽन्यो ऽपि सिद्धो निष्पन्नः तथा प्रतीयमानेन एवम्भूतेन वा धर्मेण निश्चितवस्तुसम्भवमात्रेण साधनमित्युच्यते ॥ १४ ॥

एवं मीमांसकवैशेषिकदर्शनेन शक्तिः साधनमित्युपपाद्य व्यतिरेकाव्यतिरेकग्रहं त्यजति ॥

स तेभ्यो व्यतिरिक्तो वा तेषामात्मैव वा तथा ।
व्यतिरिक्तमुपाश्रित्य साधनत्वेन कल्प्यते ॥ १५ ॥

स इति हेतुभावः शक्त्यपरपर्यायः। शक्तयः सर्वभावानां कार्योपलब्धिगोचरा इत्यतीन्द्रियाः । पदार्थाव्यतिरिक्ताः शक्तयः केषांचिद्भवन्तु । सहकारिसमवधानोपकृतो भावः स्वरूपेणैव कार्यजनकः, किमदृष्टशक्तिपरिकल्पनेनेत्यात्मैव भावानां शक्तिः । संसर्गिणः सहकारिणो वा ऽर्थान्तरभूताः ।स्वकारणपरम्परया हि पदार्थः समुपजायते विशिष्टो, यस्तत्सहकारिसम्पर्के तत्तत्कार्यजननशक्तिरिति किमदृष्टव्यतिरिक्तया शक्त्या । तत्कल्पने तस्या नियमहेतुर्भा-

वस्वभाव एव वक्तव्य इति परं स एवास्तु । तदत्राव्यतिरेकवादो वा ऽस्तु व्यतिरिक्ता वा शक्तयः सन्तु, नास्माकमत्र कश्चिद्ग्रहो व्यतिरेकवादे। शब्दप्रमाणका हि वयं यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च पदार्थानां व्यतिरिक्तमेव साधनभावं प्रत्याययति। घटस्य हानिक्रियायां कर्मभाव इत्यादाविति, व्यतिरेकोपाश्रयः शब्दनिबन्धनो व्यवहारः। तथा च प्रातिपदिकेन द्रव्ये ऽभिहिते शक्तौ कृतपदबन्धा विभक्तिः प्रवर्त्तते ॥ १६ ॥

यद्यदा यदनुगृहीतन्तदा तत्र तत् साधनमिति (व्यपिमुक्तां)? क्रियाया अपि साधनत्वं भाष्यकाराभिमतेन संवादयितुमाह ।

संदर्शनं प्रार्थनायां व्यवहारे त्वनन्तरा ।
व्यवसायस्तथारम्भे साधनत्वाय कल्पते ॥ १६ ॥
पूर्वस्मिन् या क्रिया सैव परस्मिन्साधनं मता ।
सन्दर्शने तु चैतन्यं विशिष्टं साधनं विदुः ॥ १७ ॥

सम्प्रदानसंज्ञायां क्रियाग्रहणं कर्तव्यमित्युक्तम् । इह कश्चित्कंचिदर्थं सम्पश्यति । स दृष्ट्वा प्रार्थयमानः, व्यवसायं करोति। अध्यवसाये प्रारम्भः प्रारम्भे फलप्राप्तिरिति सन्दर्शनादिभिराप्यमानत्वात् क्रिया ऽपि कृत्रिमं कर्मेति भाष्य उक्तम्। तत्र साध्यस्वभावाया अपि सन्दर्शनादिक्रियायाः साधनत्वमापेक्षिकम्। सम्यक् समन्ताद्वा दर्शनफलविषयःसङ्कल्पः, तत्प्रार्थनायां फलोपायविषये ऽभिलाषे साधनत्वाय कल्पते साधनं भवति। (अथ दर्शमाह सत्यांकिपि भावोत्पत्तिः)?। व्यवसायात् दृढमाहितक्रियाविशेषस्य फलसाधनत्वेन निश्चयः। तत्रानन्तरा प्रार्थना साधनं आभिलाषे सति निश्चयकरणात्। व्यवसायश्चारम्भक्रियायां (मानस्यां)? प्रवृत्तौ साधनं, व्यवसायभावेऽदार्थं क्रियाकरणारम्भात्। तया च क्रियया ऽऽप्यमानत्वात् भौतिकी क्रिया कर्म भवति सङ्क्षेपतः । पूर्वस्मिन् या परापेक्षिता या कर्मर्थत्वात, सैव पूर्वस्मान्निवृत्ता पूर्वकालभाविता क्रिया परस्मिन्नुत्तरोत्तरभाविनि साध्ये साधनं भवति। तदात्मलाभे सिद्धत्वोपयोगात्। तदयमर्थः । पूर्वस्मिन् दर्शने क्रिया या प्रार्थनादिका सैवोत्तरां प्रति साधनं मता। अथ दर्शनक्रियायां क्रिया साधनमित्याह। सन्दर्शनं तु चैतन्यमिति। तुर्विशेषद्योतकः। चिन्मैव अन्यायो भक्षभावान्विशेषोऽस्य

फलाभिलाषयोग्यता। यद्यपि च क्रिया साध्यस्वभावा निष्पन्ना, तथापि निष्ठावस्थायां सिद्धत्वात्साधनशब्देन च शक्तेस्तत्रासमवायो ऽपि व्यतिरेकेणाश्रयाद्युक्तः। साधनं निष्पादकं भवति। तदा हि कर्तुः क्रियानिष्पत्तौ कारणान्तरं नास्ति।भावानां नांशो, न तेनांशेनाप्यमानत्वात्कर्म भवति।कर्त्रा हि क्रियादीप्सितं, तत्कर्म विक्रियान्तर प्रवेक्ष्यते। अपरेण सिद्धेने क्रियांशेनेत्यारम्भेण मानसव्यापारेणाप्यमानत्वात् भौतिकी क्रिया कर्मेति तेनाभिप्रेयमाणस्य सम्प्रदानत्वं सिद्धम्।शुद्धाय संन्नयते, श्राद्धाय निगल्भत इति। गत्यर्थधातुविषये सन्दर्शनादीनां भेदाभेदविवक्षा, पव्यादावभेदविवक्षैव, श्राद्धाय निगल्भत इत्यादौ भेदाविवक्षैवेति च वक्ष्यते। तदेवम् "व्यतिरेकमुपाश्रित्य साधनत्वेन कल्पत" इति क्रियाया अपि साध्यसाधनभावो व्यतिरेकाश्रयेणोपकार्योपकारकभावेन भाष्योक्त उदाहृत इति स्थितमेतत्॥शक्तिव्यतिरेका क्रियोपकारार्थमाश्रिता साधनमिति सामान्येनोच्यत इति वार्त्तिककारमतमिति,संज्ञा संज्ञिनिर्देशेन कर्तव्या। अन्वर्थसंज्ञाविज्ञानात्साधकस्य लाभ इति ॥ १७ ॥

नन्वन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिरित्युक्तम्। तत्राकर्त्तरि करणादि कर्तृशब्दस्य कारक इत्यस्य चोपपत्तिं समर्थयितुमाह।

> निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके।
> व्यापारभेदापेक्षायां करणादित्वसम्भवः ॥ १८ ॥

सामग्रीसाध्यत्वात् सर्व एव कारकत्वं क्रियानिष्पत्तिविषयमभेदेन प्रतिपद्यन्त इति। यदा तु कः कथं पचतीति विवक्षा तदा प्रधानक्रियानिष्पादनात् विचित्रव्यापाराणि यथास्वं व्यापारातिशयवशेन करणादिसंज्ञाः प्रतिलभन्ते। तथा हि। साधनान्तरवियोगव्यापारः कर्ता निर्वृत्तिविकारप्राप्त्याहितसंस्कारः।कर्त्तुः क्रिययेप्सिततमं कर्म। हेतुतामनुभवत् कारकान्तरव्यापारैरव्यवहितव्यापारं करणम्। प्रेरणानुमननानिराकरणव्यापारकर्मणा सम्बन्ध्यमानं सम्प्रदानम्।अपायमवधिभावोपगमनेन साधयदपादानम्। कर्तृकर्मव्यवहितक्रियाऽऽधारकमधिकरणम्। स्वतन्त्रः प्रेषयन्हेतुरिति।सामान्यपूर्वकत्वाच्च विशेषस्यावान्तरव्यापारे ऽपि कारकत्वमनुवृत्तिकरणं कारकमिति करणं कारकमित्यादिसामानाधिकरण्योपपत्तिः। अकारकस्य च विशेषसं-

ज्ञाभावः। वृक्षस्य पर्णं पततीति। अनपेक्षिते च कर्तृव्यापारे, स्थाली पचति, एधाः पचन्ति, असिश्छिनत्तीति, प्रधानक्रियायामेवैषां कर्तृत्वम्। सम्प्रदानापादानयोः स्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति । द्वितीयस्याऽऽदातुरपगन्तुश्चापेक्षणात्। अत एव सिद्धं तु पचादीनां प्रतिकारकं क्रियाभेदादिति प्रधानक्रियार्थेषु यथास्वं कारकव्यापारेषु पचादीनामेव निर्वृत्तिर्वर्णिता। तदेतद्भाष्य उक्तं, "सामान्यभूता क्रिया या वर्त्तते तस्या निवर्तकं कारकमिति" ॥ १८ ॥

अत्रैव दृष्टान्तमाह ॥

पुत्रस्य जन्मनि यथा पित्रोः कर्तृत्वमुच्यते ।
अयमस्यामियं त्वस्मादिति भेदो विवक्षया ॥ १९ ॥

पितरौ पुत्रं जनयत इत्यविवक्षिते जननव्यापारभेदे जनिक्रियाकर्तृत्वमुभयोः प्रसिद्धं । कः कथं जनयतीति भेदविवक्षायामपि पिता बीजमादधदस्यां मातरि गर्भमाधत्ते । इयं तु माताऽस्मात्पितुः पतद् बीजं धारयतीति क्रियाकर्तृत्वमनुभवतीत्यधिकरणत्वं मातुः, पितुः कर्तृत्वमपादानत्वं च पितुः कर्त्तृत्वं मातुरिति भिद्यते प्रवृत्तिः । सामान्यपूर्वकत्वाच्च विशेषस्य, जनिः सामान्येनात्मलाभवचनो विशेषविषये पोषणबीजधारणबीजच्युतिवचनः । यद्वा प्रकृत्यर्थो ऽशिष्टः प्रत्ययार्थस्तु लर्थो जनयतीति प्रेषणा यत्रायं विभागः । साध्यपक्षक्षिप्तमपीदं प्रसिद्धत्वाद्दिदर्शनम् ॥ १९ ॥

तदेवं प्रधानक्रियायामेव सामान्यविशेषभावेन कारकं करणमित्यादि सामानाधिकरण्यमुपपादितम् । इदानीं गुणक्रियापेक्षया स्वातन्त्र्यं प्रधानक्रियापेक्षया पारतन्त्र्यं सत्यनपगतमिति प्रकारान्तरेण सामान्यभूता क्रिया वर्तते इत्येतद्भाष्यं गमयितुमाह ॥

गुणक्रियाणां कर्त्तारः कर्त्रा न्यक्कृतशक्तयः ।
त्यक्तायामपि सम्पूर्णैः स्वैर्व्यापारैः समन्विताः ॥ २० ॥
करणत्वादिभिर्ज्ञाताः क्रियाभेदानुपातिभिः ।
स्वातन्त्र्यमुत्तरं लब्ध्वा प्रधाने यान्ति कर्तृताम् ॥ २१ ॥

ज्वलनाद्यवान्तरव्यापाररूपाणां गुणक्रियाणां स्वातन्त्र्या-

स्मर्थे कर्त्तारः, प्रधानक्रियाविषये तु कर्त्रा, स्वतन्त्रेण विनियोक्त्रा न्यक्कृता तिरस्कृता शक्तिः स्वातन्त्र्यमेषामिति । तेन यथायथं न्यग्भावमस्वातन्त्र्यमापादिताः सन्तः, त्यक्तायां न्यग्भावेऽपि स्वव्यापारे स्वातन्त्र्यानपगमादकिञ्चित्करस्य क्रियासिद्धौ हेतुभावानुपपत्तेर्यथास्वं व्यापारानुष्ठानेन स्वभावक्रियाङ्गभावागमनात्कर्तृविनियोगेऽपि यथायथमात्मीयैः सम्बन्धैरेव ज्वलनादिव्यापारैरवियुक्तास्तत्क्रियाविशेषविषयैः करणादिसंज्ञारूपैरधिगताः सहायमर्थं जनयन्ति । योगोत्तरकालमपि स्वव्यापारानुष्ठानलक्षणं स्वाधीनत्वमासाद्य यस्मिन् क्रियाभेदे स्वतन्त्राः प्रधानक्रियायामेव कर्तृणां कारकत्वं भजन्त इति करणं कारकमित्याद्युपपत्तिरित्यर्थः । करणानि हि कर्तृप्रैषेऽन्यसूतानि स्वव्यापारमनुतिष्ठन्ति, तथा भवन्तीति, कर्त्रा स्वव्यापारे कर्तृत्वार्थमेवैषां नियोगानां नियुक्तानां सतां स्वव्यापारे स्वातन्त्र्यमनुभवतां करणादित्वे प्रधानक्रियानिष्पत्तिरिति, विरोधात् स्वातन्त्र्यपारतन्त्र्ययोः, यदेव हि स्वव्यापारे स्वातन्त्र्यं तदेव प्रधानक्रियायां पारतन्त्र्यं नान्यत्किञ्चित्। तच्च कर्तृविनियोगे सत्युत्तरकालमेव भवति। पूर्वतः कर्तृविनियोग्यतामात्रेण स्वातन्त्र्यमुच्यते। इत्थं च करणं कारकमिति विषयभेदोऽपि नास्ति । स्वव्यापारे स्वातन्त्र्यस्यैव प्रधानक्रियायां करणादित्वात्। तदेतदुक्तम्। सिद्धं प्रति कारकं क्रियाभेदात्। पचादीनां करणाधिकरणयोः कर्तृभाव इति "तत्राधिश्रयणादिकाले च ने"त्यादिना। कर्तृकरणाधिकरणादीनां गुणक्रियामुक्त्वाऽपादानानां त्वप्रसिद्धमिति पुनश्चोदितेन वा स्वतन्त्रपरतन्त्रात्तयोः पर्यायेण वचनं, वचनाश्रयात्, संज्ञेति पुनः सिद्धान्तितम्। तथा हि बलाहको विद्योतत इति विद्युदभेदविवक्षायां प्रयोगात् स्वव्यापारेऽस्त्येवापादनस्य स्वातन्त्र्यमित्याहुः॥ ग्राम आगच्छतीत्युक्तेऽर्थान्तरावगमादपादानव्यापारानवसायात्प्रयोगाभावः। अस्ति तु ग्रामस्यापादानस्य क्रियासिद्धौ कश्चिद्व्यापारोऽवधिभावापत्तिलक्षणः । अन्यथा ग्रामस्य समीपादागच्छतीतिवत् ग्रामादागच्छतीत्यत्रापि किं ग्रामस्य कारकत्वं स्यात् । सम्प्रदानस्याप्यनिराकरणात् कर्तुः प्रेरणानुमतिभ्यां च तत्त्वमित्यस्त्येव स्वव्यापारः। ब्राह्मणो ददातीति तु प्रयोगाभावः। सम्प्रदानत्वे ब्राह्मणस्यास्माद्विवक्षितार्थानवसायात्। अत एवापादानसम्प्रदानव्यापारे धातोर्न वृत्तिः, अपि तु कर्मकरणादिव्यापार एव, पच्यते

ओदनः स्वयमेव, असिश्छिनत्ति, स्थाली पचतीत्यादौ। तदेवं सर्वत्र क्रियाभेदसम्भव इति तत्र स्वातन्त्र्यात्करणादित्वे ऽपि कर्तृशब्दः प्रवर्त्तते । यद्येवं करणादित्वे ऽपि स्वातन्त्र्यात्कर्तृसंज्ञा स्यात् । नैतदस्ति । कारकाधिकारालुब्धे स्वातन्त्र्ये स्वतन्त्रः कर्त्तेति पुनश्श्रुतिः पारतन्त्र्यानाच्छुरितस्वातन्त्र्यप्रतिपत्त्यर्थेति, मुख्य एव स्वतन्त्रे कर्तृसंज्ञा ऽवतिष्ठते। एवमपि परत्वात् करणादीनां करणादिसंज्ञाबाधितत्वात् कर्तृसंज्ञा प्राप्नोति।नैष दोषः। करणादिसंज्ञानामनवकाशत्वात्,ताभिः कर्तृसंज्ञाया अत्र बाधनात् ।कारकाव्यपदेशस्त्वनुवृत्तिसामर्थ्यादेवेति।अथवा स्वातन्त्र्यनिमित्ता कारकसंज्ञेति नात्र बाध्यबाधकभावो निमित्तनिमित्तिनोः । अत्र हि स्वातन्त्र्यनिमित्तं पारतन्त्र्यमिति करणादिभावे ऽप्यनुमितस्वातन्त्र्यं निविशत एव । कारकसंज्ञेत्यपादानादिसंज्ञाभिः समावेश एवास्याः।अत्र तु पारतन्त्र्यविवक्षा नान्तरायिका स्वातन्त्र्यविवक्षायाः तत्र करणं पराणि बाधन्त इत्युच्यते।तद्यथा धनुर्विध्यतीति। तत्र हि धनुषः साधकतमत्वाविनाभाविनी भाविनी स्वातन्त्र्यविवक्षा । स्वतन्त्रः कर्त्तेत्यत्र च नैवमवधार्यते यत्सर्वास्ववस्थासु स्वतन्त्रमिति, अपि तु यत्स्वतन्त्रमेवेति स्थाली पचतीत्यादावपि कर्तृसंज्ञासिद्धिः । अधिकारसामर्थ्याच्च करणाद्यवस्थायामप्यनुमितस्वातन्त्र्यहेतुककारकशब्दप्रवृत्तिरविरुद्धेति सर्वं सुस्थम् । तदेवं पूर्वक्रियाया अभेदमाश्रित्य निष्पत्तिमात्रे कर्तृत्वमिति सामान्यभूता क्रिया निष्पत्तिमात्रस्वभावा ॥ २० ॥ २१ ॥

व्यापारे पारतन्त्र्ये दृष्टान्तमाह ॥

यथा राज्ञा नियुक्तेषु योद्धृत्वं योद्धृषु स्थितम् ।
तेषु वृत्तौ तु लभते राजा जयपराजयौ ॥ २२ ॥
तथा कर्तृनियुक्तेषु सर्वेष्वेकार्थकारिषु ।
कर्तृत्वं करणादित्वैरुत्तरं न विरुध्यते ॥ २३ ॥

यथा राज्ञा स्वामिना नियुक्तेषु प्रेषितेषु योद्धृत्वं व्यवस्थाविभागादिना योद्धृषु स्थितम् । तेषु युध्यमानेषु च या वृत्तिः शत्रुभङ्गदेशोत्सादनादिका, तस्यां कृतायां, राजा जयं पराजयं वा ऽपि पर्यायेण लभते । एतदाह । योद्धारो योद्धृत्वे कर्त्तारः । पूर्वं तद्व्यापारस्य

तत्र सत्त्वात् । पुनः अनियोगादस्वतन्त्राः । पुनश्च तन्नियोगनिरपेक्षाः स्वतन्त्रा एव कर्त्रा नियुक्तेषु सम्भूयार्थं पाकादिकं कुर्वत्सु भृत्येष्विव करणादिषु यत्स्वातन्त्र्यं ज्ञायते नियोगादुत्तरकालभवं तत्कारणत्वादिभिर्नियोगादुत्तरकालभावि निगमनं विद्यत इत्यर्थः। तदेवं कारक इति संज्ञानिर्देशस्येव संज्ञिनो ऽपि निर्देशः। इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्येत्यादिना साधकं वा निवर्तकं बोध्यम् । निर्देष्टव्यमिति चोदितं इत्यन्वर्थसंज्ञाविज्ञानाद्विशिष्टसंज्ञिसिद्ध्या परिहृते ऽधिकारेणोत्तरत्रानुवृत्तेः कारकसंज्ञायाः करणादिष्वनुपपन्नत्वात्तद्भावितायां निष्पत्तिमात्रापेक्षया कर्तृत्वाश्रयणेन प्रतिकारकं क्रियाभेदेन गुणक्रियाणां स्वातन्त्र्याश्रयणेन च परिहृतमिति प्रकरणार्थः ॥ २३ ॥

यत्त्वन्वर्थसंज्ञाश्रयेण क्रियानिर्वर्तकस्य साधकत्वे ऽभिहिते हेतुरपि क्रियानिर्वर्तक इति करण इत्येव सिद्धायां तृतीयस्यां किमर्थं हेताविति पुनर्विधानमित्याशङ्क्य हेतोः साधनाद्व्यतिरेकं दर्शयति ॥

अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते ।
आश्रितावधिभावं तु लक्षणे लक्षणं विदुः ॥ २४ ॥

व्यापारमनाश्रित्य विवक्षितत्वार्थसिद्धौ योग्यतामात्रेण निमित्तत्वेनाश्रीयते यः स हेतुः । स च कारकविभक्तेः शेषलक्षणाया विषयः, तृतीयस्याः सम्बन्धषष्ठीबाधिकायाः । तद्यथा अध्ययनेन वसतीति । अध्ययनहेतुर्वासो हेतुमान् । तयोः सम्बन्धे शेषषष्ठ्यां प्राप्तायां हेतौ तृतीया। नैयायिकास्त्वाचक्षते । गुणद्रव्ययोर्यन्निमित्तं स हेतुः। स च कारकविभक्तेर्विषयः। यत्तु क्रियापदोपात्तायाः क्रियाया निमित्तं तत्कारकमेव। यथा विद्यया वसतीत्यादाविति । अनुर्लक्षण इत्यत्र हेतोरपि लक्षणशब्देनाख्यानादविशेषमनयोः सम्भाव्यापाकरोत्याश्रितेत्यादिना। लक्षण इत्यत्र लक्षणशब्दो भावसाधनः। लक्षणं विदुरित्यत्र तु करणसाधनः। लक्षणे लक्ष्यमाणवस्तुप्रकाशने हेतुः। आश्रितावधिभावम्, आश्रितो ऽवधिभावो मर्यादारूपं यत्र, लक्ष्यते तेनेति लक्षणं ज्ञापकं विदुर्जानन्ति तज्ज्ञाः। यत्रा-

वधिर्न प्रज्ञायते तावपि तल्लक्षणं। अत एव तुर्विशेषावद्योतकः । अन्ये त्वाहुः। कार्योत्पत्तावुपयोगो हेतोः प्रत्ययोत्पत्तौ तु लक्षणस्येति तद्-सत्। हेतोरपि प्रत्ययोत्पत्तौ व्यापारदर्शनाच्छिद्यादेरपि हि वासादि-निश्चयो व्यापारालक्षणे वस्तूपजने योग्यतामनाहत्यावधित्वेनाश्रितो जनको भवतु मा वा भूदिति लक्षणम्। तद्यथा वृक्षमनु विद्योतते वि-द्युदिति।विद्युतो वृक्षो लक्षणं विद्योतनरूप।वृक्षं प्राप्य विद्योतत इत्यर्थः कथं तर्ह्यनुर्लक्षण इत्यत्र शाकल्यस्य संहितामनु प्रावर्षदित्युदाहरणम्। यावता संहिता नावधिमात्रेण वर्षणस्य परिच्छेदिका प्रतीयते । अपि तु जनकत्वेन । जनकश्च हेतुर्न लक्षणमिति हेतुरेवात्र ज्ञेयत्वसा-मान्याल्लक्षणशब्देनोक्तव्यविशेषः । ननु च धूमो ऽग्निना प्रसिद्ध-साहचर्यो ऽसकृद्दर्शनावधृतः । केवलो ऽप्यदृश्यमानमग्निं कारणान्त-रप्रभवं लक्षयतीत्येव लक्षणं स्यात्। संहिता तु प्रथममेव दृश्यमा-ना, न तस्या असकृद्दर्शनं दर्शनावृत्तिरस्तीति कथमसौ लक्षणं स्यात्। अत्रोच्यते । यद्यप्येतदस्ति लोके। येनासकृल्लक्ष्यते तल्लक्षणमिति तथापि प्रवर्त्तते कार्योदये शक्तिर्यस्य कारकस्य तथाविधमपि कारणं लक्षणं भवति। कार्यस्य हि यः परिच्छेदः तत्र हेतुभावेन कारणमपि लक्षणं कार्यपरिच्छेदकत्वात्। तथैव हि भूयो दर्शनेन गृहीताविना-भावो ऽन्यं गमयति । तथा हेतुरपि परानपेक्षो जननकार्यस्याव्यभि-चारात् परिच्छेदकत्वेन भवति लक्षणम्।यथा मेघोदयो वृष्टेः कारण-त्वेन नियतो ऽतो ऽसत्यामपि वृष्टौ तत्परिच्छेदक इति लक्षणं भवति। लोको मेघं दृष्ट्वा वृष्टिमनुमिनोति । एवं अन्वयव्यतिरेकबलाद्धेतुत्वं निश्चीयते यस्मिन्सति यद्भवति । अन्यस्मिंस्तु सत्यपि, विना वा तेन भवति स तस्य हेतुः । अन्वयव्यतिरेकौ सकृद्दर्शनाद्भवतः। सकृद्दर्शने अन्वयव्यतिरेकयोरनिश्चयात् । संहिताऽपि यद्यपि कारणं प्रवर्षणस्य तथा ऽपि सकृत्प्रधानैः निश्चीयते तत्र कारणम्। तत्काले संहि-तार्थान्तरादपि कदाचित्कार्योत्पत्तेः सद्भावात् । एवं च मेघोदय-वल्लक्षणमसौ युज्यते । अत्र ब्रूमः । सकृद्दर्शनादपि हेतुभावो ग-म्यते। यस्य हि यज्जनकं भवति तस्मात्सकृदपि तत् न दृश्यते। यथा शाल्यङ्कुरो यवानाम्। न च तत्कालभावो ऽन्यो जनको ऽन्यदा तस्माद्दृष्टः। तथा चाहुः। यस्मिन्सति भवत्येव यत्तेभ्यो ऽन्य-स्य कल्पनं। तद्धेतुत्वेन सर्वत्र हेतूनामनवस्थितिरिति॥न च काकताली-

ऽन्यायेन तदुत्पत्तिः । अतः स्वभावस्य सकृदव्यजननात् । संहिता च प्रत्यक्षेण दृश्यते घर्षं जनयन्तीति सकृज्ज्ञानादपि हेतुभावो ऽत्र निश्चीयते। किं चागमादपि हेतुत्वमत्र निश्चीयते संहितायाः प्रवर्षण इति हेतुरेवात्र ज्ञापकत्वसामान्याल्लक्षणमित्युक्तः । तदुक्तं भाष्ये लक्षणेन हेतुमपि व्याप्नोति । लक्षणस्य व्यापकत्वात् । कारणमपि हि कार्यं लक्षयति लक्षणं भवति यथा मेघोदयो वृष्टेः। न च व्यभिचारः।समग्रस्याविकलस्य जनकत्वात्।तथा विवेचने वा व्यभिचारात्।प्रायेण शक्तिश्च प्रामाण्यं न प्रमैवेति न्यायः।यदि तर्हि लक्षणशब्देन पदार्थान्तरपरिच्छेदहेतुभावो वर्ण्यते तदा श्रितावधिभावमित्येतत्कथम् । आश्रितावधिभावेन लक्षणे परिच्छेदहेतुत्वमेव लक्षणमन्यथा कथमलक्ष्यलक्षणं स्यात् ।इयांस्तु विशेषः।यद्वृक्षो ऽवधिभावेन परिच्छेदहेतुः, संहितादेस्त्ववधित्वस्यानाश्रये ऽपि ज्ञानत्वसामान्याल्लक्षणत्वम्।बहुधा हि लक्षणं भवति क्व चिदवधिभावेन। यथा विद्योतमानायां विद्युति॥ (वनस्पतिरसवसाय निबन्धनं)? । क्व चित्करणविच्छेदेन, यथा धूमो वन्हेः । क्व चित्कार्यपरिच्छेदहेतुतया यथा मेघोदयो वृष्टेः । संहिता ऽपि चोक्तेन प्रकारेण लक्षणं हेतुश्चेति । यद्येवं लक्षणेत्थम्भूताख्यानेत्यादिना सामान्यलक्षणेनैव सिद्धायां कर्मप्रवचनीयसंज्ञायामनुर्लक्षण इति पुनर्विधानमनर्थकं वः, सामान्यकृतत्वादिति । अत्रोत्तरं हेत्वर्थं तु वचनमित्युक्तम् । नायमभिधापर्यायो ऽर्थशब्दः किं तु निवृत्तिवचनः कार्ये तु कारणशब्दमुपचर्य हेतुशब्देन हेतुतृतीयोक्ता बाधा ऽपि बाध्या नान्येति हेतुरेवार्थो निवर्त्त्यो यस्येति समासः। तेन हेतुतृतीयाबाधनार्थं पुनः संज्ञाविधानमित्युक्तं भवति।ननु च पुनः संज्ञाविधानात् प्रदेशेषु संज्ञिप्रत्ययास्थिरत्वं भवेत्तृतीया तु कथं बाध्येत । परत्वेन हि बाधिका ऽसौ । नैतत् । असकृद्विधीयमाना संज्ञा कर्मप्रवचनीययुक्ते द्वितीयेत्यादिप्रदेशे द्विरुपतिष्ठते । तत्रैकमुपस्थानं द्वितीयार्थं । यत्तु द्वितीयमुपस्थानमनुर्लक्षण इति तदनर्थकं माभूदिति हेतुतृतीयां बाधित्वा द्वितीयामेव स्थिरयति । ननु च द्विरुपस्थानात् संज्ञिप्रत्ययो द्विर्भवेत्। न तु द्वितीयाविधिः (प्रचयमनुधिः)? । भवति कार्यार्था संज्ञा गुणभूता।कार्यं द्वितीयाख्यं प्रधानम्। ननु च गुणभेदे प्रधानभेदः किमर्थम् । न हि गुणो द्विरुक्तो निरर्थको भवति न द्वितीयां प्रधानमावर्त्तते । यद्यपि च प्रधानमात्मसंस्का-

रार्थे गुणदेशं गच्छति। यत्तां गत्वा तृतीयां बाधेत । ननु च प्रधानमन्तरेण गुणानां स्वरूपावहानप्रसङ्गाद्गुणान्तरमकृतार्थं प्रधानान्तरमाविर्भावयेत। यथा ऽमात्या राजाभावे स्वात्मनो गुणरूपमीहमाना राजान्तरं स्थापयन्ति । तत्स्थापने तेषामात्मरूपं सम्पद्यते । राजानमन्तरेण अमात्यादेरभावात्। नैतत्समानं, राजामात्ययोः परस्परोपकारकभावात् । गुणप्रधानभावादिप्रपञ्चस्यैव निश्चयात्।तथा हि राजा प्रकृतिं धर्मशास्त्रोक्तायां मर्यादायां स्थापयति। स्वयं ता अनुवर्तते ताः प्रकृतयोऽपि राजानं विनयन्तीति प्रधानभेदादेव तत्र गुणभेदः । एवं तद्युपायविधिरेवोपेयविधिर्भवति। तद्यथा अनीकस्था भवेत्युक्ते अनीकस्थता हस्त्यश्वयवसरक्षासम्पादनेन कृतेति अनीकस्थताविधानवदेव कार्यं भवति । एवं कर्मप्रवचनीयसंज्ञाविधानद्वारेण तत्कार्यं द्वितीयाख्यमेव विहितं भवति । तथा च पुनर्द्वितीया विधीयमाना बाधकबाधनार्था जायते, येन नाप्राप्तिन्यायेन । सम्बन्धेन षष्ठी प्राप्ता तस्या बाधिका कर्मप्रवचनीयद्वितीया तस्या अपि हेतुतृतीया तस्यां प्राप्तायामनुर्लक्षणा इति कर्मप्रवचनीयसंज्ञाविधानद्वारेण द्वितीया येन नाप्राप्तिन्यायेन । चतुर्थसंस्थानप्राप्तौ कष्टबला बाधिका। अत्र प्रवचनसामर्थ्यं निबन्धनम्।अन्यथा पुनः संज्ञाविधानमेव द्वितीयाविधानार्थं कथमुपपद्यते। इत्थं च कृत्वा कल्पनान्तरमप्युपपद्यते । गुणभेदे प्रधानभेद इति वचने न्यायस्य बाधनात् । तथा च भाष्यम् । दृष्टान्तस्यापि पुरुषारम्भो निवर्तको भवति। यद्वा संज्ञाभेदादनुशब्दः संज्ञा भिद्यते । ननु द्वितीयाविधिः प्रधानभूतः येनान्याय्यो गुणभेदात्प्रधानभेदो भवेत् । संज्ञिभेदाच्च बलातिशयो द्वितीयाविधिस्तृतीयाविधिं बाधते। यथोद्देशपक्षे च गुणदेशं गच्छत्प्रधानमेकेन गुणेन कृतार्थं भवति । तत्प्रकरणगतेन सर्वेणार्थित्वात् सम्बन्धस्य विशेषात् । अत एव प्रधानान्तरं गुणो ऽकृतार्थः कल्पयतु राजान्तरं यथा प्रकृतयः।न च वै सादृश्यं, प्रकृतीनां राजकृतोपकारापेक्षित्वे ऽपि सर्वथा गुणत्वात् तदङ्गभावपरिपोषार्थमेव हि तत्र कृतोपकारापेक्षणम् । ननु स्वप्रधानार्थे कार्यकालपक्षे ऽपि कार्यवाक्ये संज्ञाद्वयं, भेदेन च संज्ञिद्वयमुपस्थापयति । तस्मात्पुनः संज्ञाविधानलक्षणाद्वचनसामर्थ्यात् प्राप्तातिशयः कक्ष्यान्तरप्राप्तो द्वितीयाविधिः परमपि तृतीयाविधिमपसारयतीत्ययमुक्तम्।तथा च वक्ष्यति।हेतुमतोर्योगपरिच्छेदे ऽनुना कृते भार-

स्मादू बाध्यते प्राप्ता हेतुलक्षणा तृतीयेति । तदित्थमनुर्लक्षण इत्यत्र हेतुरेव लक्षणव्यापकत्वं कथयितुं लक्षणान्तरोपात्तः सत्यप्यवान्तरभेदे तयोः । तथाहि लक्षणहेत्वोः क्रियाया इत्यत्र लक्षणाद्भेदेन जनकत्वाविवक्षया हेतुरूपादेरत्र तदेव निमित्तसामान्यं त्रिधा विभक्तम् । स्वरूपपदेन क्रियानिर्वर्तकं कारकं, सामान्येन जनको हेतुः, ज्ञापकं लक्षणमिति ॥ २४ ॥

जनकत्वसाम्येऽपि हेतुसाधनयोर्विषयभेदात् भेदमाह ।

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् ।ऽऽ

द्रव्यगुणक्रियासाधनमर्थवस्तु द्रव्यादीनां हेतुः । तद्यथा बीजेनाङ्कुरः, धनेन कुलं, कन्यया शोकः, विद्यया यशः, शिल्पाभ्यासेन नैपुण्यं, अग्निना पाकक्रियासाधनमर्थवस्त्वनाश्रितव्यापारं हेतुरेवेति । पाकादयो यद्यपि क्रियाः, तथाऽप्यत्रोपरतव्यापाराणां सन्निधानमात्रोपकारितया तेजःप्रभृतीनां विवक्षितत्वादविद्यमानकरणभावा एते तु तृतीयया सम्बध्यन्ते । धनेन सह सम्पत्तिक्रियाप्रभावितः कुलस्य सम्बन्धः, कुलस्य हि धनेन प्रसिद्धिरुपजन्यते । तत्र चोपरतव्यापारं धनं योग्यतामाह कुलस्य । हेतुरिति शेषषष्ठीबाधिकया हेतुतृतीयया संयुज्यते । कन्यापि जनयितुः शोकस्य हेतुरिति प्राप्तिक्रियाजनितोऽत्र शेषसम्बन्धः । एवमन्यत्रापि यथायोगमभ्यूह्यम् । शिल्पाभ्यासेन नैपुण्यमध्ययनेन वसतीति गुणक्रियाविषयता हेतोः । क्रियासाधननियतं तु कारकम् । तत्र हि क्रियैव विषयभूता । विषयता व्यापाराविष्टत्वं च स्वरूपभेदः ।

कस्य चित्तु व्यापारविशिष्टस्यापि क्रियाविषयस्य शास्त्रीयं हेतुत्वमुक्तमित्याह ॥

कर्त्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते ॥ २५ ॥

कर्त्ता प्रयोजकः प्रयोज्ये कर्तृशक्तिव्यवधाने क्रियायामुपयुज्यमानः प्रयोज्यकर्त्तारं प्रेषयंस्तत्प्रयोजको हेतुरिति शास्त्रे हेतुत्वेनेष्यते । वचनात्कारकविशेषो ऽपि न त्वयं रूढो हेतुरित्यर्थः ॥ २५ ॥

इदानीं क्रियाविषयत्वे समाने ऽपि हेतुकारणयोर्विशेषमाह ।

क्रियायै करणान्तस्य दृष्टः प्रतिनिधिस्तथा ।
हेत्वर्था तु क्रिया तस्मान्न स प्रतिविधीयते ॥ २६ ॥

क्रियासाधनाय प्रकृष्टोपकारकं करणमप्रधानं क्रिया तु साध्यस्वभावा प्रधानम्। अत एव प्रधानानुरोधित्वाद् गुणाना, मसति श्रुते करणे शिष्टैः प्रतिनिधिराचरितः। प्रधानभूता हि क्रिया साध्यत्वात् योग्यसाधनापेक्षासमर्थेति साधनसामान्यस्याक्षेपे ऽध्यवसायार्थं श्रुतसाधनवियोग इति। तदसम्भवे ऽपि प्रधानेन क्रियास्वरूपेण यदाक्षिप्तं साधनसामान्यं तद्विशेषान्तरेणापि परिपोष्यमाणं न श्रौतार्थत्यागाय प्रभवति। सामान्यस्यापि श्रुतत्वात् तस्य च सर्वविशेषेषु स्वीकारयोग्यत्वादिति प्रतिनिध्युपपत्तिः। पूर्वमेव चर्चितो विस्तरः। अङ्गभ्रेषे ऽपि प्रधानानुच्छेदान्न प्रधानक्रियास्वरूपसंरक्षणाय। शिष्टैः सम्प्रदायपारम्पर्यावगतं सदृशमङ्गं मुख्यबुध्यैवोपाधीयत इति क्रियायाः प्राधान्यस्यैतत्फलम्। अत एव केचित्करणशब्दो ऽत्र सर्वकारकवचनो, जातौ चैकवचनमिति सर्वाणि कारकाणि गुणभूतानीति तस्य प्रतिनिधिरुपपद्यत इति व्याचक्षते। अध्ययनेन वसतीति तु वसतिक्रिया ऽऽख्याता तथा प्राधान्येनापि प्रतीयमाना वस्तुसामर्थ्याद्ध्ययनाख्यहेतुपरतन्त्रा। तथा ह्यध्ययनार्थो ममात्र वास इति वक्तारो भवन्ति। न च गुणान्तरो ऽप्रधानमित्यध्ययनाभावे वा समर्थमन्यत्किंचिदत्र प्रतिविधातुं युक्तम्। अन्यस्याप्युपादाने तादर्थ्यं क्रियायाः प्रतीयते, इदानीं स एव मुख्यो हेतुः स्यात्। तस्मादध्ययनमेव सम्पाद्यं प्रधानमिति निर्व्यापारं योग्यतामात्रेणोद्दिश्यमध्ययनं वासस्य हेतुस्तेन वासो न निर्वर्त्यते अपि तु वासस्याध्ययनमेव हेतुः। व्यापाराविशिष्टत्वे ऽध्ययनस्य, वासं प्रत्यानुकूल्यविवक्षायां भिक्षादिवत्तत्समर्थाचरणात् प्रयोजककर्तृत्वं, अध्ययनं वासयतीति। तदेव कारकविषये क्रियाप्रधानं कार्यपरकं गुणभूतम्। हेतुविषये तु स विपर्यय इत्यनेनापि विशेषेण कारकाद्धेतोर्व्यतिरेक उक्तः॥ २६ ॥

इदानीं चतुर्थीविषये तादर्थ्ये तृतीयविषयाद्धेतोर्व्यतिरेचयितुमाह।

प्रातिलोम्यानुकूल्याभ्यां हेतुरर्थस्य साधकम्।
तादर्थ्यमानुलोम्येन हेतुत्वानुगतं तु तत्॥ २७॥

अपचीयमानावस्थो हेतुरवितनमेव कार्यं जनयत्यप्रातिलोम्योपलक्षितः। तद्यथा जलमानय संसर्गवशोपजनाय पर्चातरूपमुत्तरो-

त्तरं पचतितरां, पचतितमाम्। लक्षणावस्थापरम्परासादनानुगुणमर्था-
न्तरसंसर्गोपचीयमानरूपविशेषं तु कार्यमुपचिततरमेव जनयत् कार-
णमानुकूल्योपलक्षितो हेतुः।तद्यथा बीजमुदकातपसंयोगाहितविशेषमु-
च्छूनतरतमावस्थमङ्कुरप्रसवसमर्थम्।इत्थं द्विप्रकारो हेतुः।तद्विशेषस्तु
तादर्थ्यम्।आनुकूल्यं कानियतमर्थसिद्धिनिमित्तमानुकूल्ये यद्धेतुजनक-
त्वं तदनुगतहेतुविशेषरूपम्।तादर्थ्यं कार्यकारणसम्बन्धस्याद्भुतं रूपमि-
त्यर्थः।अत्र चतुर्थी कुण्डलाय हिरण्यमिति।तस्मा इदं तदर्थमिति इदमो-
पकारस्य निर्देशः।तच्छब्देनोपकार्यस्य समासाद्भावप्रत्ययेन सम्बन्ध-
स्याद्भूतरूपमभिधानम्।तत्र चोत्तरपदार्थस्य कारणरूपस्य प्रज्ञापनी-
यत्वेन प्राधान्यात्तच्छब्दवाच्ये गुणोऽसम्बन्धःपदं बध्नाति।तत्र ह्यसा-
वुद्भूत इति तादर्थ्यकारणस्योपकारित्वे गम्यमाने कार्यकारणसम्ब-
न्धोद्भवे चतुर्थी विधीयमाना कार्यवाचिन एव भवति। तथैव कारण-
गतस्यापि सम्बन्धस्य निर्भागात्।कारणवचनात्तृतीया न भवति का-
र्यमेव प्रयोजकतया परिणतं तदर्थमित्युच्यत इत्युक्तमभिधानम्।उत्तर-
पदार्थप्रधानत्वात्तदर्थशब्दस्य कारणवचनता न्याय्या यतः, अत एव हे-
तुत्वानुगतं तादर्थ्यम्।कारणविशेषो न कार्यम्। यदर्थमस्य गमनं तद-
नेन साधितमित्यत्र उपसर्जनस्यैतच्छब्देनोच्छिष्टस्य सामानाधिक-
रण्ये शब्देन निर्देशात् सर्वनामार्थः कार्ययोगीत्युक्तः॥ नत्वेतावतेदं
सर्वनामार्थस्य प्राधान्यमुत्तरपदार्थे गुणत्वात्॥ २७ ॥

एवं कारकं हेतुत्वालक्षणं तादर्थ्यमिति निमित्तसाम्ये ऽपि प्र-
विभक्तस्वरूपविषयाः पदार्था इति न तत्र लक्षणसाङ्कर्यप्रसङ्ग इत्या-
नुषङ्गिकेऽर्थे निर्णीते प्रस्तुतमेव कारकविषयं विचारं प्रस्तावयति ॥

सर्वत्र सहजा शक्तिर्यावद्द्रव्यमवस्थिता ।
क्रियाकाले त्वभिव्यक्तेराश्रयादुपकारिणी ॥ २८ ॥

अनित्यानां पदार्थानां स्वतनोरेव शक्तानामुद्भव इति सहजता
शक्तेः। न ह्यनाधेयातिशयत्वात् भावानामशक्तस्योत्पत्त्यनन्तरमाधातुं
शक्यते शक्तिः । नित्यानां तु स्वाभाविकी शक्तिः ।
आश्रयसमवेतास्तु शक्तयः, तदपाये निराधारा नावस्थातुं पार-
यन्तीति यावद्द्रव्यभाविन्यः । एवमपि सहकारिसन्निधाने कार्योद्यु-
क्ताः शक्त्यभिव्यक्तिमाश्रयन्ते भावा इत्यभिव्यक्तिकाः । त एव कार्यो-

पकारित्वात् साधनमित्युच्यन्ते नान्यदा सत्त्वे ऽपि ॥ २८ ॥

तथा हि

कुड्यस्यावरणे शक्तिरस्त्रादीनां विदारणे ।
सर्वदा स तु सन् धर्मः क्रियाकाले निरूप्यते ॥ २९ ॥

आवारकं कुड्यं विदारकं च शस्त्रं, छेद्यावरीतव्यवस्तुसन्निधाने ज्ञाप्यत इति विद्यमानशक्तिविषयोपपन्नाऽभिव्यक्तिः । परिच्छिद्यते त्रिकाला ऽप्यर्वाग्दर्शने ऽपादाननियमाधिकार्थात् पूर्वमपि शक्ति(रतस्तं) ? पुनरपि कार्यकरणादुत्तरकालमपि ॥ २९ ॥

आगमेनाप्येतत्सम्वादयति ।

स्वाङ्गसंयोगिनः पाशा दैत्यानां वारुणा यथा ।
व्यज्यन्ते विजिगीषूणां द्रव्याणां शक्तयस्तथा ॥ ३० ॥

दैत्यानां स्वकर्मनिर्माणा वारुणाः पाशाः स्वहस्ततलावलिताः सदा सन्निहिताः शक्तिरूपेणेत्यागमहेतुपरसैन्यायत्तजयवेलायामभिव्यज्यन्त इति श्रूयते। एवं द्रव्याणां सदा सन्निहिताः शक्तयः स्वकार्यनिष्पादनकाले प्रकाशन्त इत्यपि युक्तम् ॥ ३० ॥

यदुक्तमस्त्रादीनां विदारणे शक्तिरिति तदेव प्रतन्यते ।

तैक्ष्ण्यगौरवकाठिन्यसंस्थानैः स्वैरसिर्यदा ।
छेद्यं प्रति व्याप्रियते शक्तिमान्गृह्यते तदा ॥ ३१ ॥

निबिडतरं संहनननामवयवानां क्रमेणाग्रे सूक्ष्मीभवतां तनुत्वप्रकर्षस्तैक्ष्ण्यं छेदनिमित्तो धर्मः, भिन्नजातीयावयवसंभेदविच्छेदे विच्छिन्नान्तराधीनामवयवानामुपचयात् गौरवं नियतं न हेतुधर्मः। पावकोत्तेजितानां लोहावयवानां निबिडत्वं काठिन्यं नाम धर्मो यतः प्रहारविशेषो निष्पद्यते।संनिवेशविशेषो मण्डलाग्रादिव्यपदेशनिबन्धनमस्यन्तरालविभागहेतुः संस्थानम्, यतः प्रहारविचित्रता जायते। तदेतैर्धर्मैरसिर्यदिच्छेद्यविपाटनमारभमाणा शक्तिमती निगद्यते।व्यापारशून्या तु सत्यप्येतेषु धर्मेषु न तथा व्यवसीयते । एवमन्येषामपि पदार्थानां यथायोगं वाच्यम्। असेरुपलक्षणत्वात् ॥ ३१ ॥

पक्षान्तराण्यत्र साधने सम्भवन्तीत्याह ।

प्राङ् निमित्तान्तरोद्भूतं क्रियायाः कैश्चिदिष्यते ।
साधनं सहजं कैश्चित् क्रियान्यैः पूर्वमिष्यते ॥ ३२ ॥

सिद्धिसत्त्वे व्यक्तिप्रतीक्षा साधनम् । सत्त्वमेव तु शक्तीनामर्थानुमेयत्वात् क्रियातः पूर्वमसिद्धमिति क्रियायाः पूर्वमपेक्षणीयनिमित्ताच्छक्तयो द्रव्याणां क्रियानुगुणा जायन्त एव । सत्त्वे ऽभ्यभिव्यक्तिनिमित्तमपेक्षणीयमिति तदेव जनकम् । तथा हि सहकारिसव्यपेक्षाणां भावानां जनकत्वात् परस्पराहितशक्तयस्ते स्वकार्ये हत व इत्युपनीयन्ते केवलानामजनकत्वात् । न तदा निःशक्ता इति न स्वाधारजनकादेव शक्तिजन्म अपि तु निमित्तान्तरादेव । प्रत्यभिज्ञायमानत्वाच्च शक्ताशक्तत्वे ऽपि न वस्तुभेद इति केचित् । अत एवोपादाननियमो ऽपि योग्यतावधारणात्सिद्धः । अन्ये तु शक्तिर्वस्तुनो ऽनन्यत्वात् स्वभावभेद एव । शक्तत्वं ह्यन्यैः सहजं कैश्चित्साधनं शक्तिद्रव्याणामिष्यत इति पूर्वप्रतिपादितपक्षानुवादः । केचित्तु येनैव कारणेन क्रिया जन्यते न तेनैव साधनं, अपि त्वन्येनैवेति क्रियापेक्षया निमित्तान्तरत्वं मन्यमानाः सहजत्वमपि क्रियापेक्षयैव व्याचक्षते । तथा च येभ्य एव क्रिया जायते तेभ्य एव शक्तय इति सहजत्वम् । तदुपजातशक्तयस्तु लक्षणान्तरे निवर्तका इति साध्यसाधनभावे नास्ति क्षतिः । न हि साध्यसाधनयोः सदसम्भवः प्रमाणोपपन्नः ॥ ३२ ॥

अभेदे तु साधनात्पूर्वप्रभाविनी क्रिया इत्याह ।

प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता ।
शक्तिरेकाधिकरणे स्रोतोवदपकर्षति ॥ ३३ ॥

अनपेक्षितत्वे तु सा क्रियाऽनपाश्रिता क्वचिदपि भण्यते । स्वाश्रये तु समवेतैव । अत एव तदाश्रयं सा न शक्तिराविर्भावयति प्रतिनियतस्वकार्यसम्पादिका । अन्ये त्वनाश्रितैवेत्याहुः । स्रोतोव्यापारप्रवहद्रूपा नदी प्रवाहवत्तृणपर्णलतादीन् साधनाशक्तीः प्रवृत्तिलक्षणा क्रियाऽपकर्षति वहन्तीति केषांचिज्जरन्मीमांसकानामागमः । इतो लक्षणा वा प्रवृत्तिर्नित्या सर्वभावेष्वनुयायिनी स्वकार्यप्रसवसमर्था कार्याणि जनयतीति साङ्ख्यनयः । व्यापाराविष्टस्य सर्वस्य कार्यजनकत्वाद्व्यापारः पूर्वभावी समवस्थितः, तेनैव च शक्त्याक्षेप इति युक्तम् ।

कथं प्रवृत्तिरनपाश्रया नित्येत्याह ।॥ ३३ ॥

इतो ग्रन्थपातसन्धानाय फुल्लराजकृतिर्लिख्यते। इदानीं मतान्तरानुसारेण साधनस्वरूपं वर्णयितुमाह ।

अपूर्वं कालशक्तिं वा क्रियां वा कालमेव वा ।
तमेव लक्षणं भावं केचिदाहुः कथंचन ॥ ३४ ॥

अपूर्वं धर्माधर्माख्यमदृष्टसंज्ञकं केचिदेवंरूपं सामर्थ्यलक्षणं भावमाहुः । अदृष्टवशाद्धि सर्वं भवति वा न वेत्यदृष्टमेव सर्वकार्याणां निमित्तं बोद्धव्यम् । केचित्तु वादिनः कालशक्तिमेव भगवतो ब्रह्मणः सम्बन्धिनः साधनमाहुः । कालशक्त्यनुप्राणितं हि सर्वं क्रियायै प्रभवति। क्रियां वा राजसीमन्तरांपवर्णितस्वरूपां साधनमाहुः । नतूत्तरकालभावि किं चन साधनं नाम शक्यं निरूपयितुम्।सर्वक्रियामूलं साधनं व्याख्यातम्। अधुना क्रियैव साधनमिति विशेषः।सैव हि स्वयं प्रतिभानाविशेषा भवतीति कालमेव वा नित्यमेकमित्यादिलक्षणलक्षितं द्रव्यकालवादिनः साधनमाहुः। कालवशाद्धि सर्वे भावाः प्रभवन्ति कार्यसम्पत्तये इति काल एव साधनम् । यद्वक्ष्यति, यदि न प्रतिबध्नीयादिति ॥ ३४ ॥

अथ शक्तेः सामर्थ्यादिलक्षणायाः साधनत्वेन पूर्वं निरूपितायाः सङ्ख्याविचारं कर्तुमाह ।

नित्याः षट् शक्तयो ऽन्येषां भेदाभेदसमन्विताः ।
क्रियासंसिद्धयेऽर्थेषु जातिवत्समवस्थिताः ॥ ३५ ॥

अन्येषां मते चार्थेषु नित्याः षट् शक्तयः पृथग्लक्षणलक्षिताः कर्माद्या व्यवस्थिता इति । ताः कीदृश्यो भेदाभेदसमन्विताः, एकान्तेन योऽर्थस्तद्भेदसमन्विताः अभिधीयेरन्। अर्थस्य शक्तिवैकल्यान्नीरूपता स्यात् । अथाभिन्नाः कथ्यन्ते तर्हि विभिन्नकार्योदया नावतिष्ठन्ते। तस्मात्कथं चित् भेदेनेति भेदाभेदाभ्यां समन्विताः शक्तयो ऽर्थजातिवदवस्थिताः यथा सद्द्रव्यत्वगोशाबलेयत्वादिजातयः सततं भेदाभेदसमन्वयेनार्थेष्वित्येके मन्यन्ते ॥ ३५ ॥

तासां च द्रव्यभेदेनानन्त्ये ऽपि षट्त्वमेव षड्विधत्वमेव तत्त्वं नातिवर्तत इत्याह ।

द्रव्याकारादिभेदेन ताश्चापरिमिता इव ।
दृश्यन्ते तत्त्वमासां तु षट् शक्तीर्नातिवर्तते ॥ ३६ ॥

द्रव्यभेदेन भिन्ना शक्तिः । यथा दात्रमन्यार्थे छिनत्ति खण्डोऽन्यथेति। आकारभेदेन खण्डा ऽन्यथा ऽवयवी ह्यन्यथेति। आदिग्रहणाद्देशकालभेदेन सैव दहनशक्तिरग्निवैचित्र्यमुपपादयन्ती वस्तुनः स्वरूपं नातिक्रामति ॥ ३६ ॥

अथैकैव शक्तिर्निमित्तभेदाद्विशेषरूपतया षोढात्वमापन्ना वा साधनमित्याह ।

निमित्तभेदादेकैव भिन्ना शक्तिः प्रतीयते ।
षोढा कर्तृत्वमेवाहुस्तत्प्रवृत्तेर्निबन्धनम् ॥ ३७ ॥

यस्मात्कर्तृत्वमेव निमित्तभेदेनैतनमत्वादिना, ज्वलनत्वादिभावः षोढा ऽवस्थितः सन् तत्प्रवृत्तेः शक्तिभेदप्रवृत्तेः कारकव्यवहारभेदस्य निबन्धनं निमित्तभूतं बोद्धव्यम्। यथोक्तं यथा पचन्तीं विक्लृप्त्यै, एधा ज्वलिष्यन्तीति ज्वलने क्रियाकरणस्य पाक इत्यादिन्यायेन कर्तृत्वमेवावान्तरव्यापारविवक्षया करणादिव्यपदेशरूपतां भजते ॥ ३७ ॥

तदेवमेकानेका वा शक्तिरुपपादिता । अथासौ व्यतिरिक्ताऽव्यतिरिक्ता वेत्याशङ्क्याह ।

तत्त्वे वा व्यतिरेके वा व्यतिरिक्तं तदुच्यते ।
शब्दप्रमाणको लोकः स शास्त्रेणानुगम्यते ॥ ३८ ॥

भेदाभेदाभ्यां तावदनिर्वाच्यासौ केवलं भेदाभेदसमन्विते त्युक्तम्। अथात्र (निष्टंकिणकां)? करोषि तत्त्वया सहास्माकं किं प्रयोजनम। सर्वथा शक्तिमतोरेकान्तेन तत्त्वमव्यतिरेको वा भेदः । एवं च वैय्याकरणनयानुसारिभिरस्माभिस्तत्सामर्थ्ये व्यतिरिक्तमेवोच्यते । यस्मात् शब्दप्रमाणको लोकः।शास्त्रेण चानेन स एवानुगम्यत इत्याह। शास्त्रेणानुगम्यते । लोकप्रतीत्यनुसारेण हि शब्दस्यार्थो वितन्यते । लोकश्च शब्दक्रियानिमित्तायाः शक्तेर्व्यतिरेकमेवानुगच्छति । अव्यतिरेके हि सततं क्रियानिष्पत्तिप्रसङ्ग इत्युक्तम् ॥ ३८ ॥

अथ परमार्थपर्यालोचनां विना निर्वृतिमुपलभन्ते ते तदोच्यते किं चिदित्याह ।

परमार्थे तु नैकत्वं पृथक्त्वाद्भिन्नलक्षणम् ।
पृथक्त्वैकत्वरूपेण तत्त्वमेव प्रकाशते ॥ ३९ ॥

पृथक्त्वाद्भिन्नलक्षणं पृथक्त्वव्यतिरिक्तं नैकत्वमस्ति पृथक्त्वैकत्वरूपेण हि तत्त्वमेव प्रकाशते । अविद्याव्यवहारदशायां पृथक्त्वेन प्रकाशते । अविद्याविलये त्वेकत्वेन प्रकाशत इति बोद्धव्यम् ॥ ३९ ॥

एतदेव व्याख्यातुमाह ।

यत्पृथक्त्वमसन्दिग्धं तदेकत्वान्न भिद्यते ।
यदेकत्वमसन्दिग्धं तत्पृथक्त्वान्न भिद्यते ॥ ४० ॥

असन्दिग्धं यथा तथाऽवगमात् सन्देहं विना कृतं पृथक्त्वं तदेकत्वान्न भिद्यते । यच्चैकत्वमसन्दिग्धं विगतभ्रमं तत पृथक्त्वान्नानात्वान्न भिद्यते ॥ ४० ॥

तथा च यदैकत्वं काष्ठामनुप्राप्तं तदा सर्वत्र तदेव प्रकार इत्याह ।

द्यौः क्षमावायुरादित्यः सागराः सरितो दिशः ।
अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः ॥ ४१ ॥

अथवाऽऽस्तां कतिपयवस्तुविषय एकत्वावैकत्वविचारः । चरमे द्यौश्चाकाशं पृथिवी च द्यावापृथिव्यौ महत्यौ महाभूतसंज्ञके जलद्युती तदन्तरे च वायुरपि तृतीयः । यदादित्यलक्षणमपि सकलतेजसां प्रधानं दिव्यतेजः, आपः सरितः समुद्रः गीर्वाचितरा, सर्वाश्रयेवैतानि महाभूतानि सकलजगज्जीवितभूतानि दिशो वा, लोकव्यवहारनियमनिमित्तभूतः कालश्च वक्ष्यमाणः तदेतत्सर्वमन्तःकरणतत्त्वस्येति। अन्तःकरणत्वेनान्तररूपतया प्रतिभासमानं यत्र तस्यैवैते भावाः प्रतिबिम्बकाः, आभासा बहिरवस्थिताः । परमार्थे तु कीदृशो ऽन्तर्बहिर्भावः। एकमेव सच्चिन्मयं परं शब्दब्रह्म यथातथावस्थितमिति कारिकार्थः ॥ ४१ ॥

महाभूतरूपत्वं दिग्रूपताञ्चाभिधाय कालरूपतां तस्यैव प्रतिपादयन्नाह ।

कालविच्छेदरूपेण तदेवैकमवस्थितम् ।
स ह्यपूर्वापरो भागः पररूपेण लक्ष्यते ॥ ४२ ॥

स ह्यपूर्वापरः परमार्थतः । अथ वा कालशक्तिवशात् चिरक्षिप्रादिक्रमेण लक्षितं तदेव पदार्थसामर्थ्यंलोकप्रसिद्धं वैय्याकरणमतेन साधनम् । अथ वा बुद्धिप्रकल्पनारूपं विज्ञानवादाभिप्रायेण, संसर्गिरूपं वा पदार्थान्तरभूतं संसर्गवादानुसारेण, अदृष्टलक्षणमपूर्वशब्दवाच्यं वा मीमांसकदृष्ट्या, ब्रह्मसम्बन्धिनी वा कालशक्तिरद्वैतदर्शनेन, क्रिया राजसी प्रकृतिरूपा वा साङ्ख्यदर्शनानुसारेण, नित्यमेकं द्रव्यलक्षणं वा कालरूपं द्रव्यकालवादिनां मतेन विज्ञेयम् । साधनप्रस्तावेन च कारकशब्दविचारस्तत्प्रसङ्गेन च हेतुलक्षणकारककरणतादर्थ्यानां भेदपूर्वं निरूपणम् । पूर्वकाले कृतः स्वरूपमुक्तम् । ततः शक्तेः किं सह प्रागुत्तरकालं वा भाव इति कालविकल्पः । सा च किं कर्मादिभेदेन भिन्नैवाहो स्विदेकैव सैव तथा परिकल्प्यत इति सङ्ख्याविकल्पः । सा च किं पदार्थस्वरूपाद्व्यतिरिक्ताऽव्यतिरिक्ता वेति व्यतिरेकाव्यतिरेकौ । व्यतिरेकं विना तत्प्रस्तावे तु ब्रह्मस्वरूपनिरूपणमिति प्रकरणसमुदायार्थः ॥४२॥

इदानीं प्रकृतं वैय्याकरणमतमेवानुबन्धयञ्छक्तेः व्यतिरेकमेवान्वयव्यतिरेकमुखेन परिघटयन् सद्भावमुपपादयितुमाह ।

दृष्टो ह्यव्यतिरेके ऽपि व्यतिरेको ऽन्वये सति ।
वृक्षाद्यर्थान्वयस्तस्माद्विभक्त्यर्थो ऽन्य इष्यते ॥ ४३ ॥

अव्यतिरेके अभेदे ऽपि प्रकृत्यर्थस्य वृक्षे वृक्षायेत्यादौ विभक्त्यर्थस्य साधनलक्षणस्य व्यतिरेकः । तथा तत्र च विभक्त्यर्थस्यासत्यत्वम् । येन प्रातिपदिकार्थे ऽस्यान्वये ऽनुगमो दृष्टः, ततो मन्यामहे ऽस्ति कश्चिद्व्यतिरिक्तः प्रत्ययार्थभूतो ऽनपह्नवनीयः साधनलक्षणशक्तिशब्दवाच्यो ऽर्थ इति साधनसिद्धिः ॥ ४३ ॥

इदानीं व्याख्यातस्योपसंहाराय व्याख्येयस्योपक्रमाय कारिकामाह ।

सामान्यं कारकं तस्य सप्ताद्या भेदयोनयः ।
षट् कर्माख्यादिभेदेन शेषभेदस्तु सप्तमी ॥ ४४ ॥

सामान्यं कारकमिति व्याख्यातार्थोपसंहारः। तस्य सप्ताद्या इत्यादिना व्याख्येयार्थोपोद्घातः। तत्राद्याः प्रधानभूताः सामान्यसाधनापेक्षया। भेदरूपाश्च ता योनयः स्वकानां भेदानामिति भेदयोनयः। अथान्याः सप्त भेदानां च स्वकानां योनयः कारणानि। कथमित्याह। षट् कर्माख्यादिभेदेनेत्यादि। कर्मादिव्यपदेशभेदेन सप्तप्रकारकशक्तयो लक्ष्यन्ते ऽधुनेति साधनसमुद्देशसङ्गतिः ॥ ४४ ॥

कर्मादिभेदेन सप्तभेदभिन्नं तावत्कारकमुद्दिष्टम्। अथ तदनुक्रमेण कर्म तावत् संख्याभेदप्रदर्शनपूर्वकं व्याख्यातुमाह।

निर्वर्त्यं च विकार्यं च प्राप्यं च त्रिविधं मतम् ।
तत्रेप्सिततमं कर्म चतुर्धा ऽन्यत्तु कल्पितम् ॥ ४५ ॥

कारकविशेषनिर्देशश्च विभक्त्यनुक्रमानुसारेणेह प्रदर्शितः। सूत्रेषु तु विप्रतिषेधपरिभाषामनुरुध्यापादानादिक्रमेणोक्तम्। तत्र विभक्तयः स्वौजसमाद्याः। कारकमभिहितमनभिहितं च भवति। तत्र प्रथमा ऽभिहितकारकविभक्तिः प्रातिपदिकार्थमात्र एव विधीयते। द्वितीयादयश्च सर्वा अनभिहितकारकविभक्तय इत्येकप्रक्रमत्वाद्विभक्त्यर्थानुसारेणैवोपक्रमन्ते। द्वितीयाद्यर्थश्च कर्मादिः। यदुक्तं कर्मणि द्वितीयेत्यादि। अतः कर्मण एवादौ व्याख्यावसरे सूत्राद्यनुसारेणात्र कर्तुः क्रियया यदीप्सिततममाप्तुमिष्यमाणतमं तदेव लक्षणम् प्रथमसूत्रनिर्दिष्टम्। कर्म त्रिभिः प्रकारैः निर्वर्त्यविकार्यप्राप्यरूपैर्भिन्नमनेकत्वावभिर्दिष्टं योद्धव्यम्। अथान्यत् सूत्रान्तरनिर्दिष्टमपि भेदमिममाह। चतुर्धा ऽन्यत्तु कल्पितमिति ॥ ४५ ॥

कथमित्याह।

औदासीन्येन यत् प्राप्तं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम् ॥ ४६ ॥

औदासीन्येन तातस्थ्येन यत्प्राप्तम्। यथा ग्रामं गच्छन् वृक्षं स्पृशति

तथा यच्च कर्तुरनीप्सितम् । चोरविषादि । एतत्तथायुक्तं चानीप्सितमिति द्वितीयसूत्रनिर्दिष्टम् । तच्च द्विविधम् । तथा च येनैव प्रकारेण कर्तुरीप्सितमेव चन्दनीप्सितमीप्सितादन्यद्यथा विषादि । इतरच्च यदौदासीन्येन प्राप्तं वृक्षमूलाद्युक्तम् । तथा संज्ञान्तरैरपादानादिसंज्ञाभिरनाख्यातमपि क्रियानिमित्तमेतदकथितमिति तृतीयसूत्रनिर्दिष्टं वेदितव्यम् । तथा यच्चान्यदन्यपूर्वकर्मेति । अन्यत्कारकं पूर्वं यस्य । यथा देवदत्तमभिक्रुध्यति देवदत्तमभिद्रुह्यतीति । अत्र हि क्रुधद्रुहोरुपसृष्टयोः उपसर्गसम्बद्धयोः यं प्रतिकोपः, तत्कारकं पूर्वसूत्रेण संप्रदानसंज्ञमपि कर्मसंज्ञमेव भवति । तथा ऽक्षान्दीव्यति इत्यत्र दिवः कर्म चेत्यनेन दिवः साधकतमं यत् पूर्वसूत्रेण तत्करणसंज्ञमपि कर्मसंज्ञं भवति ॥ ४६ ॥

अथ निर्वर्त्यं त्रिविधमुद्दिष्टं व्याख्यातुमाह ॥

सती वा विद्यमाना वा प्रकृतिः परिणामिनी
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ ४७ ॥

यस्य निर्वर्त्यस्य घटादेः प्रकृतिः सती वा यथा मृदादिका अविद्यमाना वा यथा शब्दसंयोगादेः ॥ परिणाममापादिता अभेदेन नाश्रीयते मृदो घटं करोतीत्याद्येवंरूपतया न विवक्षिता किं तर्हि मृदा घटं करोति इत्यादिभेदेनैव ॥ यदा प्रकृतेस्तु विवक्षायां विकार्यं प्रकृतिः । कारणस्य परिमाणामित्वेन यदा विवक्षा क्रियते मृदा घटं करोति, काष्ठैः कटं करोति, अङ्गारान् भस्म करोतीत्यादि । तदा विकार्यं कर्म प्रचक्षते ॥ ४७ ॥

अथापरथा मतान्तरोपन्यासच्छलेन प्रकारभेदकथनशङ्कया निर्वर्त्यविकार्ये निरूपयितुमाह ।

प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा ।
निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् ॥ ४८ ॥

कथमित्याह ॥

यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते ।
तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् ॥ ४९ ॥

यदसद् वैशेषिकाद्यनुसारेण जायते साङ्ख्यमतेन सदेव वा जायते तदुभयथापि जन्मना प्रकाश्यमानत्वात् निर्वर्त्यं कथ्यते। एतदुक्तं भवति सत्कार्यवादिनामस्माकं निर्वर्त्यं कर्मास्तीति वक्तव्यं पार्यते । सतीत्यस्य प्रकृतिर्भवत्वसती वा । सर्वथा जन्मना प्रकाश्यमाना। न वै निर्वर्त्यस्य न काचित् क्षतिः। सदसद्वा जन्मना यत्प्रकाश्यते तन्निर्वर्त्यं। असज्जायत इत्यविद्यमानप्रकृतेः कर्मणा निर्वर्त्यमानमित्यतः पूर्वोक्तेनैवान्तरितो ऽसज्जन्मना प्रकाश्यत इति। अयमत्र विशेषः। तद्यथा पुत्रं प्रसूते शब्दं प्रयुङ्क्ते इत्यत्र कुक्षिस्थस्य सत एव पुत्रस्य विवक्षितस्य च शब्दस्य प्रसवयोगाभ्यां प्रकाशनम्। सतः प्रकाशनाद्धि जन्मात्र विवक्षितम्।जन्मग्रहणेन प्रकृतिविवक्षायां विकार्यतामाह।अन्यथा ऽभिव्यज्यमानस्य निर्वर्त्यकर्मता स्यात्।तदभावमपि जन्मग्रहणेनाह।तेन वेदमधीत इत्यादौ वेदादेरध्ययनेन प्रकाश्यमानस्य निर्वर्त्यकर्मताभावात् कर्मणि निर्वर्त्यमानो विक्रियमाण इति चेच्छन्दोऽध्ययनादीनामुपसङ्ख्यानमित्युच्यते। इत्थं च प्रकृत्यर्थविवक्षायामेवैतान्निर्वर्त्यं कर्मोक्तमिति केश्चित् अन्यथेत्यसङ्गतम् । तस्मात्सदसत्कार्यवादिमतभेदेनैतद्व्याख्येयम्। पूर्वं लोकप्रतीत्यनुसारेणोक्तम् । इह तु तीर्थिकमताश्रयेणापीति विशेषः । त्रिकार्यं तु कर्म द्वेधा व्यवस्थितम्। प्रतिव्यक्ति लक्षणं प्रतिलक्षणं व्यक्तिभेदः ॥ ४९ ॥

पूर्वमुक्तं लक्षणमाह ।

प्रकृत्युच्छेदसम्भूतं किं चित्काष्ठादिभस्मवत् ।
किं चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ ५० ॥

निरन्वयविनाशात्प्रकृतेरुच्छेदः । यथा काष्ठादेर्भस्मादि । काष्ठानि भस्म करोति। पूर्ववत् प्रकृतिविकारयोः क्रियासम्बन्धो योज्यः। पूर्वेण तु लक्षणेन निर्वर्त्यमेतत्कर्म प्रकृतेरविवक्षया । विवक्षायां तु विकार्यम्। इह त्वविवक्षितायामपि प्रकृतौ भस्मादिकार्ये रूपविशेषादेव काष्ठादिकमुपमृद्योपजातमिति प्रतीतेर्विकार्यम्। पूर्ववत् प्रकृतिः साक्षाद्विकार्यकर्म, तदभेदे अविकारो ऽपि। इह तु साक्षाद्विकार एवेति विशेषः । काष्ठानि दहन्तीति तु प्रकृतिरेव शब्दवती सामर्थ्यगम्यस्तु विकारो भस्म । एवं काण्डानि लुनाति कर्म करोतीत्यादौ वेदितव्यम्। का चित्तु प्रकृतिरत्यजन्ती स्वरूपं संस्थानान्तरापत्त्या विकृतेत्युच्यते

इति गुणान्तरसन्निवेशादेर्धर्मस्योत्पत्त्योपलक्षितमपरं विकार्यं कर्म । तद्यथा सुवर्णं कुण्डले भवत इति। असत्कार्यतया यद्यप्यत्रापूर्वोत्पत्तिः तथापि प्रत्यभिज्ञानाल्लोके तत्त्वाध्यवसायात् गुणान्तरमात्रापत्तिरुच्यते । एतच्च प्रकृतिविवक्षायां पूर्वलक्षणेनापि सङ्गृहीतम् ॥ ५० ॥

इदानीं प्राप्यकर्मलक्षणमाह ।

> क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ।
> दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ ५१ ॥

निर्वर्त्यकर्मणि निर्वृत्तिरात्मलाभ एव क्रियाकृतो विशेषो दर्शनात्प्रत्यक्षादेवावधार्यते। विकार्येतु भस्मकुण्डलादौ विकारः क्रियाकृतो विशेषोऽवधार्यते प्रत्यक्षेण। क्वचित्पुनरनुमानाद्विशेषावसायो यथा प्रजनितानां सुखादीनां मुखप्रसादादिना लिङ्गेनावसायः। जलावसेकादिक्रियावेशितश्च वनस्पतीनां विशेषः प्रतिजलमवाप्य जन्मसूक्ष्मत्वादुत्पत्त्यनन्तरमवसीयमानश्चरमावस्थायां प्रचिततरविशेषदर्शनादवधार्यते । न ह्ययं प्रचिततरो विशेषो न वेक्षितक्रमो झटित्यशङ्कित एवोहितुं प्रभवतीति प्रतिक्षणमनुमीयमानः सूक्ष्मरूपस्तस्य हि सूक्ष्मरूपस्य दुःखाधारत्वम्। तथा षड्जादिस्वरविशेषयोरुपघोरातितारयोः । तदेवं विधो विशेष एव क्रियाकृतो न संदृश्यते। कर्तुः क्रियाविषयभावमात्रेणेप्सिततमत्वात्प्राप्यं कर्म। तद्यथा आदित्यं पश्यति, नगरमुपश्रयति, वेदमधीत इत्यादावादित्यादीनां हि सन्दर्शनक्रियया कश्चिदाहितो विशेषो नावधार्यते। प्रमाणाश्रयं क्रियासम्बन्धमात्रं तु लक्ष्यते। न च स एव विशेषः। धृते क्रियासम्बन्धे वस्तुगतस्य भेदस्य निर्वर्त्यविकार्ययोरिष्टत्वात्। नगरे तु गमनक्रियाजनितः संयोगो द्विष्ठो विशेष्यो भवन्नपि। नगरस्य महापरिमाणत्वात् अल्पपरिमाणेन देवदत्तेन हि भवदंगुलिसम्बन्धवदलक्ष्यः पृथिव्येकदेशश्च स्वावयवापेक्षया कल्पितो विशिष्टस्वाधाराधेयरूपो न प्राप्यशब्दवाच्यः प्रसिद्ध एव वेति न कदाचिदनुपपत्तिः ॥ ५१ ॥

नास्त्येव प्राप्यकर्म सर्वत्र क्रियाकृतविशेषावधारणादिति केचित् । तथा हि ।

विशेषलाभः सर्वत्र विद्यते दर्शनादिभिः ।
केषां चित्तदभिव्यक्तिसिद्धिर्दृष्टिविषादिषु ॥ ५२ ॥

दर्शनादिक्रियाहितविशेषाद्यो विकारः सर्वत्र विद्यते सौक्ष्म्यात्तु नावधार्यते। सर्वेति। केषां चिन्मतम्। तस्य विशेषस्य दृष्टौ विषं येषान्तेषु तद्विषयेऽभिव्यक्तेर्निश्चयस्य सिद्धिः। दृष्टिविषैरहिभिर्निरीक्षितो विषयो ज्वलनज्वालालीढो लक्ष्यते तत्साधर्म्यादन्यत्रापि दर्शनादिनाहितः कश्चिद्विशेषो विषये समुन्नेयः। तैजसं हि चक्षुः प्राप्यकारीति तेन युक्तो विषयोऽवश्यं क्रियते यथा दृष्टिविषदर्शनेन। इयांस्तु विशेषो दृष्टिविशेषः, तेजस्वदुत्कटविषसम्पर्काद्विषयं दहति अन्यत्र ननुनर्वास्थितिः। आदिशब्देनायस्कान्तादीनां ग्रहणं। तत्सन्निधौ लोहं भ्रमति। कतकफलसन्निधौ हि जलं प्रसन्नवतीयाँस्त्वेव क्रियाकृतो विकारः। एतच्च वाक्यकारकस्य मतम्। केषां चिदन्यतमत्वेनोपन्यासात् कचिद्विशेषदर्शनेऽपि हि न सर्वत्र तथाभावो दृश्यमानविशेषोऽपि युक्तः। किं च क्रियाफलेऽत्र विकारोऽभिप्रेतः। परिदृश्यमानस्तु विषयो दृशिक्रियाया हेतुर्न फलम्। दृष्टिविषादावपि तेजः संयोगाद्विषये विकारो न क्रियाबलात्। एवमयस्कान्तादेर्वस्तुस्वभावोऽयं न तु क्रियाकृतो विकारः कश्चित् (समादयेस्त्येवं)? प्राप्यं कर्म क्रियाकृतोपकारानपेक्षम् ॥ ५२ ॥

न चेद्विकारयोगः प्राप्यकर्मणः कथमस्य क्रियासिद्धावङ्गभावः साधनतासम्पत्त्यर्थः। उच्यते ॥

आभासोपगमो व्यक्तिः सोढत्वमिति कर्मणः ।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः ॥५३॥

योग्यदेशावस्थानेन दर्शनपथमवतरति विषय इति योग्यदेशतापत्तिराभासोपगमः। स्वभावदेशस्य दर्शनादुपकारः यो ऽन्यदेशस्थितस्यापि नीहारादिप्रकाशप्रतिबन्धकभानुप्रदीपादिनिमित्ता व्यक्तिरङ्गं विषयस्य। प्रकाशयोग्यदेशस्थितस्य सत्यव्यापारको ऽदृश्यस्वभावः पिशाचादिरिति सोढत्वम्। बाधक्षमतामदृश्यस्वभावताञ्च एतैरतिशयैर्दर्शनसाधनभावमनुभवति प्राप्यकर्म। एते च दर्शनक्रियाहेतवो न कृताः। ग्रामं गच्छतास्यादावपि यथायोगं सोढत्वा-

दयो ग्रामादेर्वाच्याः। सम्प्रदा विषयीकृता हि रामादयो ऽभ्यासेना गमनादिसहाः साधयन्ति गमनादिक्रियामेवमध्यीयमानं वेदादि अध्ययनसहम् । मातरं स्मरतीत्यपि माता कृतोपकारा क्रूरहृदयस्यापि स्मृतिपथमनुपतन्ती साधयति स्मृतिम् । ईप्सिततमत्वानपेक्षायां तु सम्बन्धित्वसामान्यविवक्षायां शेषषष्ठी मातुः स्मरतीति ॥६३॥

एवं तावद्यथाविभागं कर्म लक्षितम् । इदं तु वक्तव्यं, पूर्वमुक्तं गुणक्रियाणां कर्त्तारः सर्वे साधनविशेषा इति तत्कथं कर्मतासम्भव इति कर्मकर्तृविचारपातनिकां करोति ॥

निर्वर्त्त्यादिषु तत्पूर्वमनुभूय स्वतन्त्रताम् ।
कर्त्रन्तराणां व्यापारे कर्म सम्पद्यते ततः ॥ ५४ ॥

निर्वृत्तिः विक्रियाभासापत्तिः । क्रियासु यथासंख्यं निर्वर्त्यप्राप्यलक्षणं कर्म स्वातन्त्र्यकर्तृत्वमाश्रित्य तदपेक्षया तेषां निर्वर्त्यादिकर्मविषयत्वात् बहूनां कर्तृणां निर्वर्त्तनादिव्यापारे प्रैषलक्षणे कर्म जायते तेनाप्यमानत्वात्तथा हि निर्वर्त्तते विकुरुते आभासमुपैति प्रकाशत इति कर्त्तरि स्वव्यापारे कथं भेदाः प्रधानकर्तृव्यापारे विवक्षिते निर्वर्त्तयति विकारयति आभासादिविषयभावमापादयतीति कर्तृप्रैषे स्वामिसन्निधाविव भृत्या न्यग्भवन्तः कर्मभावमनुभवन्ति ॥ ५४ ॥

एवं तर्हि कर्मीभूत् कर्त्ता कथं भवतीति येन कर्मकर्तृसम्भव इत्यत आह ॥

तद्व्यापारविवेके ऽपि स्वव्यापारे व्यवस्थितम् ।
कर्मापदिष्टान् लभते कचिच्छास्त्राश्रयान्विधीन् ॥ ५५ ॥

भिद्यते कुसूलमित्यादौ यदा कर्तृप्रैषस्य निवृत्तिः कुसूलादेर्विशीर्णरूपतया स्वयमेव भिदा तु भवति । लूयते केदार इत्यादावपि शुष्कतरत्वात् कर्तृप्रयत्नानपेक्षणात् । पच्यते ओदनः स्वयमेवेत्यादावपि सौकर्यातिशयवशात् कर्तुरनपेक्षणात्तदा स्वव्यापारस्वातन्त्र्याश्रये कर्तृत्वे शास्त्रेण यत् कर्मकार्यप्राप्त्यर्थं कर्मवद्भावो विधीयत इति कर्मणि अपदिष्टान् विहितान्विधीन् कार्याणि कर्त्ता ऽपि सन् प्राप्नोति । कर्मवत्तत्र व्यापारफलतेन हि स्वव्यापारे कर्तृ-

त्वात् कर्मकार्याणि न स्युरिति शास्त्रारम्भः । क चिदिति । कर्मस्थ-भावानां कर्मस्थक्रियाणां च धातूनां विषय इत्यर्थः ॥ ५५ ॥

ननु च कर्तृप्रैषे निवृत्ते तदायत्तं कर्मत्वमत्र माभूत् कर्तृत्व न्तु कथं येन कर्मकर्त्तेति व्यपदेशः । तथा हि सति प्रधानकर्त्तरि कर्मणः स्वक्रियायां व्यापारो दृष्ट इति तदभावे कर्मत्ववत्ता । कर्तृत्वमपि कुत इत्याशङ्क्याह ॥

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वे ऽवतिष्ठते ॥ ५६ ॥

धात्वर्थानुकूल्येन चेष्टनं कर्तुः प्रेषणं स्वव्यापारः । कर्त्ता कारकविनियोगलक्षणः, तदनभिधीयमानकर्त्तरि पच्यते ओदनः स्वयमेवेत्यादौ निवर्त्तते । कर्त्राश्रयस्य व्यापारस्य कर्त्तरि प्रत्ययेनाभिधीयमाने धातुना ऽभिधीयमानत्वात् । प्रतीयमानत्वं तु तस्य इत्यर्थः पचिरिति भाष्यविरोधादसकृतमेवाख्यातान्तानि धात्वन्तराणीति वक्ष्यमाणत्वाद्विषयविभागेन धात्वर्थता कर्तृव्यापारस्य ग्रन्थकृतो ऽभिप्रेता। तस्मिन्निवृत्ते स्वस्मिन् क्रियावयवे प्रधानक्रियापेक्षया गुणभूते स्वव्यापारे कर्म स्थितं, कर्तृभूतया भूतपूर्वगत्या तस्य कर्मव्यपदेशः । यद्यपि च कर्तृव्यापारे विवक्षिते स्वक्रियायामेवावस्थानं तद्वारेण प्रधानक्रियानिर्वर्तनात् कारकं कर्मेति सामानाधिकरण्याच्च तथापि सामर्थ्यादत्र प्राधान्येनावस्थानं बोद्धव्यम् । अत एव कर्तृव्यापारापेक्षस्य कर्मत्वस्य (निमित्तावात्मीये)? सर्वत्र भवति स्वक्रियाविषये कर्तृत्वे ऽवतिष्ठते इति कर्तृव्यापारापेक्षया पूर्वकर्म भूत्वा सौकर्यादिप्रतिपादनपरतया तदविवक्षायां कर्त्ता सम्पद्यत इति भवति कर्मकर्त्ता । अयं भावः। न केवलं कर्तृव्यापारस्याविवक्षामात्रे कर्मकर्तृता, अपि तु तस्य स्वव्यापारे स्वातन्त्र्यविवक्षायामपि सत्यम्। ततश्चाप्राप्तानि यगादीनि कर्मकार्याणि कर्मवत्तुल्यक्रिय इति शास्त्रेण प्राप्यन्ते । तदुक्तं वार्त्तिककृता कर्मकर्त्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वादिति । तत्र यदा यतो यजेरपि भिदादौ कुसूलादेः परानपेक्षा प्रतिपादिता भाष्ये । यदयं निवाते निरभिवर्षे चिरकृतः कुसूलो भिद्यत इति । निवात इति समीरसम्पातनाद्येति कर्तृव्यापारो व्युदस्तानिरभिवर्ष इति सलिलकलासंस्पर्शोऽव्युदस्तः

अचिरकृत इति कालान्तरपरिवासाधीयमानविशेषव्युदासः। एते हि पातहेतवः कुसूलस्य सम्भाव्येरन्निति व्युदस्ताः। एवं चाढसन्निवेशत्वात् स्वयमेव शीर्यत इति कर्तृत्वोपपत्तिः। यत्रापि, अत्र हस्ते देवदत्तः परिपतन् दृश्यते, लूयते केदारः स्वयमेवेति, अत्रापि तीव्रकरकिरणसम्पर्कसमुत्सारितस्नेहः परिजर्जरभुवनालैः स्वयमेव विशीर्यमाणः केदारः तात्स्थ्याद् व्रीहिरूपो लवने सुकरतामेति। सामग्रीसाध्यत्वाच्च क्रियाणां प्रत्येकव्यापारोत्कर्षणार्थं स्वातन्त्र्याध्यारोपेणाभ्युपपन्नः प्रयोगः, देवदत्तः छिनत्ति, असिः छिनत्ति, स्थाली पचतीत्यादिः। अत्र कर्मण एव कर्तुः कर्मवद्भावो नान्यस्य च्छिद्यते रज्जुः, पच्यते ओदनः स्वयमेवेति। तदेतदुक्तं भाष्ये। तत्रापि यासौ सुकरता नाम तस्या अपि नान्यः कर्तेति सौकर्यातिशयवशाद्व्यापारे केदारे समीहिते, न देवदत्तश्छेदस्य कर्तृव्यपदेशं प्रतिपत्तुं योग्यो ऽपि तु केदार एवेत्यर्थः। ओदनविभक्तौ तु, छेदनकर्तृव्यापारोऽपि नावश्यमपेक्ष्यः। अनपेक्षितकर्तृप्रयत्ना एव हि तण्डुला विक्लिद्यन्ति। करणादिकारकविनियोग एव ह्यत्र मुख्यकर्तृव्यापारो लक्ष्यते ॥ ५६ ॥

ननु चैक एव पच्यादिर्धातुः क्वचित्कर्तृव्यापारे गुणभूतमर्थमाह, पचत्योदनं, भिनत्ति कुसूलं, लुनाति केदारं देवदत्त इति। क्वचित्तु कर्तृव्यापारे प्रतिपन्नगुणाभावं स्वप्रतिष्ठार्थमाह, पच्यत ओदनः स्वयमेवेत्यादाविव रूपभेदे धातूनां विवेको दुर्लभ इति कर्तृप्रत्ययवाक्यैव भावना भवत्वित्याशङ्क्याह ॥

> तानि धात्वन्तराण्येव पचिसिद्ध्यतिवद्विदुः ।
> भेदे ऽपि तुल्यरूपत्वादेकत्वपरिकल्पना ॥ ५७ ॥

कर्मकर्तृविषयाणि पच्यादीनि विक्लित्त्यादिमात्रवचनानि, तदुपसर्जनविक्लेदनादिव्यापारवाचिपच्यादिधातुभ्यो धात्वन्तराणि बोद्धव्यानि। अर्थभेदेन शब्दभेदात्। प्रधानं हि शब्दानां प्रतिपाद्योऽर्थः। प्रधानानुयायी च गुण इति न्यायात् प्रत्यर्थं भिद्यते शब्दः। तद्यथा पचेर्विक्लेदनवचनत्वात् सिध्यतिरन्यो धातुर्विक्लित्तिवचनः। धात्वन्तरत्वे हि चैकत्वेन रूपाभेदादुपदेशो धातुपाठे डुपचष्पाक इत्यादिभिन्नरूपो ह्येकत्वकल्पनासहस्तु। यत्र तूपदेशभेदे फलभेदो ऽस्ति

तत्र द्विस्त्रिरुपदेशः । तद्यथा हि पच्यादीनां विकरणभेदात् क्षि क्षये भ्वादौ, क्षि निवासगत्योरिति तुदादौ दिवादौ च, क्षि हिंसायामिति च क्र्यादौ ॥ ५७ ॥

इदानीमेकमाहुरनेकार्थं शब्दमन्ये परीक्षका इति नयेनाह ॥

एकदेशे समूहे च व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः ॥ ५८ ॥

तुल्येनाभिन्नेन रूपेण स्वभावेन युक्ता एते धातवो भिन्नाः । अबाध्यमानस्यैकाकारप्रत्ययस्याभेदादेकत्वादनेकार्थत्वमेव बाधकमिति चेन्न । शक्तिभेदेन तदुपपत्तेः । अनेकार्थप्रतिपादनशक्तिर्ह्येको ऽपि शब्दो दृष्टः । यथा ग्रामशब्दः शालासमुदायवाटपरिक्षिप्तदेशजनस्य वचनः । यथा चाक्षादिशब्दाः । तत्र कर्मकर्तृविषये विक्लित्तिमात्रवचनः परिपच्यते ओदनः स्वयमेवेति । देवदत्तस्य कर्तुः प्रत्ययेनानभिधानात्तद्व्यापारस्यात्र धातुवाच्यत्वाभावः । प्रधानभूतो हि धात्वर्थो विक्लित्तिः सर्वत्र सम्भवात् । अपेक्षिते ऽपि हि कर्तृव्यापारे देवदत्तः पचतीत्यत्र विक्लित्त्यर्थत्वाद्विक्लेदस्य कर्तृव्यापारस्यार्थेन रूपेण विक्लित्तिरेव । प्राधान्यात्समूहे वृत्तित्वम् । अत्रैव वृत्तिरुक्ता । कर्मकर्तृविषये तु कर्तृप्रत्ययस्याभावात् तद्व्यापारो भावना नाभिधीयते । कर्मैव कर्ता, तद्व्यापारश्च विक्लित्तिरेवेति सैवाभिधीयते । तद्यथा विक्लिद्यन्ति सिद्ध्यन्ति तण्डुला इति विक्लित्तेरेव कर्तृव्यापारस्याभिधानम् । एवं भिद्यते कुसूलं स्वयमेवेति द्विधाभवनं धात्वर्थः । भिनत्ति कुसूलं देवदत्त इति तदुपसर्जनं द्विधा भावनमित्याद्युदाहार्यम् ॥ ५८ ॥

तदेवं विचित्रशक्तिवशाच्छब्दानां विषयभेदेनार्थविवेकः समुदितः । इदानीं कर्मकर्तृप्रसङ्गेन णेरणौ यत्कर्मेत्यत्र कर्मकर्तृत्वात्सिद्धमित्युक्तत्वात् विचारयति ।

न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावना न्यग्भवनं ण्यन्ते ऽपि प्रतिपाद्यते ॥ ५९ ॥
अवस्थां पञ्चमीमाहुर्ण्यन्ते तां कर्मकर्तरि ।
निवृत्तप्रेषणाद् धातोः प्राकृते ऽर्थे णिजुच्यते ॥ ६० ॥

इहारोहयते हस्ती स्वयमेवेत्ययं हस्तिव्यापाराभिधायी प्रयोगोऽस्ति कर्मकर्तृविषयः। तस्य च व्याख्यानोपायपरिकल्पना कर्त्तव्या। तत्र रूपसामान्यानुगमप्रवृत्तिः। तेन रेखापचयाद्वयवभावापोद्धारेण तदर्थाश्रयणेन च आख्यानं प्रवर्त्तते। तथा च, यावतीषु सोपानस्थानीयास्वर्थविभागभूमिषु पदं विन्यस्य इयं प्रयोजिका पर्यन्तभूमिः प्राप्यते ता अन्तरा न भाविन्यो गण्यमाना भूमयो ऽवस्थाशब्दवाच्याः। तत्राद्ये भागे रुहिधातुः प्रत्यभिज्ञायते। तस्य चान्यत्रावस्थाद्वयरूपोऽर्थः प्रसिद्धः स एवेहाङ्गीक्रियते। तदेतदाह। न्यग्भवनं रुहौ शुद्धं प्रतीयते। शुद्धे केवले णिज्रहित इत्यर्थः। आरोहन्ति हस्तिनं हस्तिपका इत्यत्र न्यग्भवन्तं न्यग्भावयन्तीत्यर्थः। अत्र च धात्वर्थमात्रप्रदर्शने तात्पर्यम्। विकरणप्रत्ययाद्युपादानं तु नान्तरीयकम्। नान्यथा प्रयोगार्हः प्रदर्शकः शब्द उपपद्यते, इत्यारोहयते हस्ती स्वयमेवेत्यस्यैव धातोरयमर्थः प्रदर्शितो भवति। एवं च कृत्वा एकेन शब्देन धातुना नान्तरीयकतयोपात्तप्रत्ययसहायेनावस्थाद्वयं न्यग्भवनन्यग्भावनालक्षणमुपात्तम्। धातुभागादूर्ध्वं चात्र गुणायादेशलक्षणकृतविकारो णिच् प्रत्यभिज्ञायेत। स यदि यथास्थितप्रकृत्यर्थनिष्ठप्रयोजकव्यापारं व्याख्यायेत तदा न्यग्भावनिष्ठापरप्रयोजकव्यापारप्रतीतिप्रसङ्गात् प्रकृतवैगुण्यं स्यात्। तेन रुहिधात्वर्थसङ्कोचलभ्यं मध्ये ऽवस्थान्तरं प्रकृत्यर्थत्वेन णिच आश्रीयते हस्तिव्यापारमात्ररूपम्। तत्पर्यन्ते पूर्वशङ्कापरिहाराय दर्शितम्। निवृत्तप्रेषणादित्यादिना। ततस्तन्निष्ठे प्रयोजकव्यापारे प्रागवस्थापचयकारिणा णिजुत्पादितः केवलरुहिबुध्यर्थतां सम्पादयति। तदाह। न्यग्भावना न्यग्भवनं पर्यन्ते ऽपि प्रतिपाद्यत इति। आरुह्यते हस्ती स्वयमेव। आरोहन्ति हस्तिपका इत्युदाहरणद्वयमत्र। एकेन प्रयोज्यव्यापारेणात्र प्रकृत्यर्थरूपो दर्शितः। स च नान्यथा शक्यदर्शन इति यगात्मनेपदकर्मवद्भावप्राप्तेः। नान्तरीयकतयोपात्तं द्वितीयेन, णिजर्थो हस्तिपकव्यापारः प्रदर्शितः। स च प्रयोज्यव्यापारपृष्ठपातित्वेन शक्यदर्शन इति रुहिरुपात्तः। प्रत्ययाद्युपादानं तु नान्तरीकतया पूर्ववत्। तदेताधतस्रो ऽवस्थाः। तत ऊर्ध्वमात्मनेपदसरूपो भागो दृश्यते हस्तिव्यापारमात्रप्रतीतिश्च। एतच्च कर्मकर्त्रवस्थामन्तरेणाशक्यमिति पूर्वावस्थां सम्बन्धलभ्यामाश्रयते। तदाह। अवस्थां पञ्चमीमित्यादि। तदेवं

कर्मकर्तृत्वादारोहयत इत्यात्मनेपदे सिद्धे णेरणाविल्यत्र कर्मकर्तृत्वासिद्धमिति चेद्यक्चिणोः निवृत्त्यर्थं वचनमिति वार्त्तिककारेणोक्तम्। तत्र न वा यक्चिणोः प्रतिषेधादित्यादिना कर्मवद्भावेनैवात्मनेपदमिति सिद्धान्तितम्। गणयति गणः स्वयमेवेत्यत्र तु आत्मनेपदनिवृत्त्यर्थं नियमार्थतया णेरणाविति सूत्रं वार्त्तिककारेण स्थापितम्। ण्यभावनं न विक्लित्तिवत् कर्मस्थमिति रुहिः कर्मस्था क्रिया वाक्यकारस्य कर्मवद्भावः । दृश्यते च धातूनां प्रकृत्यन्तरम ॥ ५९ ॥ ॥ ६० ॥

ण्यन्तानां केषां चित्समानो ऽर्थ इत्यत्र दृष्टान्तमाह ।

ब्रवीतिपचतेरर्थं सिद्ध्यतिर्न विना णिचम् ।
स ण्यन्तः पचतेरर्थे प्रकृते व्यवतिष्ठते ॥ ६१ ॥

सिद्ध्यत्योदन इति विक्लित्तिमात्रवचनो धातुः । पचत्योदनमिति विक्लित्त्युपसर्जनं विक्लेदनलक्षणं पचत्यर्थं णिच्सहितो ऽभिधत्ते साधयत्योदनमिति। एवमाहुर्हि ण्यन्तो ऽपि कश्चित्तदर्थे वर्त्तत इति। इदमत्र तात्पर्यमभिन्नावेव रुही प्रकृत्यन्तण्यन्तरूपौ पचति साधयतिवदेकार्थौ ण्यन्ते तु प्रैषस्य निवृत्तावारोहयते हस्ती स्वयमेवेत्यपि ण्यभवनवचनो ऽन्य एव धातुरेवमुपायपरिकल्पनया व्युत्पाद्येत । नन्वयमत्र परमार्थतो णिच् येनार्थनिवृत्तौ कथमवतिष्ठते इति चोद्यते। अन्वाख्येयं हि लौकिकं शब्दमुद्दिश्य प्रतिपादकशब्दनिष्ठमुपायपरिकल्पनया प्रकृतिप्रत्ययविभागेनासत्येन सर्वत्रानुशासनं लौकिकार्थानुसारेण नैवं क्रियते। नन्वेवमप्यसत्यस्यापोद्धारपदार्थस्यासम्भवे कथं तच्छब्दः । एवं तर्हि कर्मव्यापारातिशयस्य णिच्प्रत्याय्यस्यास्ति सम्भव इत्यशेषः ॥ ६१ ॥

तदेवं प्रैषस्य निवृत्त्या कर्मणः कर्तृत्वमुपपाद्य प्रैषाध्यारोपेणाप्युपपादयितुमाह ॥

केषां चिद्देवदत्तादौ व्यापारो यः सकर्मके ।
स यदा देवदत्तादेः कटादिषु विवक्ष्यते ॥ ६२ ॥

कटं करोतीत्यादौ सकर्मके धात्वर्थे देवदत्तादिप्रधानकर्तृविषये प्रधानकर्तुः प्रयोजकस्य यः प्रैषलक्षणो व्यापारः, असौ यदा

सौकर्यातिशयविवक्षया कर्मणः, तदा कर्तारमन्तरेण तत्र कर्माणि विवक्ष्यन्ते । यथा हि देवदत्तः प्रयुङ्क्ते, एवं करोति देवदत्त इति भवति विवक्षणात् ॥ ६२ ॥

एतत् सामान्येनोक्तं प्रकृते योजयति ॥

निवृत्तप्रेषणं कर्म स्वस्य कर्तुः प्रयोजकम् ।
प्रेषणान्तरसम्बन्धे ण्यन्तत्वेनाभिधीयते ॥ ६३ ॥

कर्तृव्यापारः प्रैषः कर्मणोऽध्यारोपित इति निवृत्तप्रेषणं तद्विवक्षितप्रयोजकव्यापारं स्वातन्त्र्यापेक्षायामात्मीयस्य प्रयोजकत्वासौकर्यातिशयवशात्प्रतिपाद्यमानम् । तच्च कटादिकर्मसम्बन्धिनि देवदत्तादिकर्तृविषये प्रेषणान्तरे प्रयोजकव्यापारान्तरे णिचि सति कार्यते कटः स्वयमेवेति ण्यन्ताद्याकारेण कर्मकर्तृविषयेणाभिधीयत इति णिजभिधेयः प्रैषोऽस्तीति भावः।अत्र चोपायपरिकल्पना, प्रैषो णिचो न तु अण्यन्ते तत्संभव इति प्रयोज्याक्षेपाभावः।तथा च प्रयोज्यकर्मसम्भवादविद्यमानकर्मान्तरसम्बन्धाद्धातोर्विधीयमानं णेरणावित्यात्मनेपदं कथमिति न चोदनीयम् ।तथा हि सौकर्यातिशयप्रतिपादनात्कर्मणो वास्तवः प्रैषाध्यारोपोऽपि न, इति प्रतीयते।तस्मिन् प्रयोजकत्वस्याविवक्षणात् । कर्मकर्तृत्वप्रतीतिसामर्थ्यात्तु भूतपूर्वप्रेषणावस्था ऽवगम्यत इति तद्विषयो णिच् स्वयं निवर्तते।एवं कर्मकर्तृप्रसङ्गेन णेरणावित्यत्र विचारितं त्यदादिषु दृशो नालोचने कञ् चेत्यत्र वार्त्तिके कृदर्थानुपपत्तिरिति चोदितम् । कर्त्तरि कृदिति वचनात् कर्त्तरि प्रत्ययार्थेन भाव्यम् । स चात्र नोपपद्यते । सदृशलक्षणं ह्यर्थं तादृशादयः शब्दाः प्राहुः ॥ ननु दर्शनक्रियायां कर्त्तारमिति वार्त्तिकार्थः । तत्रोक्तं, इवार्थे चायं तद्धित इति इवे प्रतिकृतावित्यत्र प्रकरणेऽयं तद्धितसंज्ञः प्रत्ययो वक्तव्यः। तथा च स इव तादृश इत्याद्यर्थसिद्धिरित्यर्थः । तच्च वार्त्तिककारेण सिद्धान्तितम् । भाष्यकारस्तु कृदर्थानुपपत्तिरिति बोद्ध्यम् । यथान्यासमेव परिहर्तुमाह । कर्मकर्तृत्वासिद्धेरिति । तत्र दृशेः कर्तृस्वभावकत्वात् कर्तृव्यापारदर्शनमात्रवाच्यतया प्रैषस्याभावेन कथं कर्मकर्तृत्वसम्भवः । प्रेषणाध्यारोपे तु णिच् स्यात् । अण्यन्तश्चसूत्रे दृशिरुपात्तः ॥ ६३ ॥

अत्र निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितं । निवर्तमाने कर्मत्वे स्वे कर्तृत्वे ऽवतिष्ठत इति, अनेन न्यायेन कर्मकर्तृत्वं के चित्समर्थयमानाः प्राहुः ।

सदृशादिषु यत्कर्म कर्तृत्वं प्रतिपद्यते ।
आपत्त्यापादने तत्र विषयत्वं प्रतिक्रिये ॥ ६४ ॥

सदृशतादृशादिशब्देषु व्युत्पाद्येषु यत्कर्म कर्तृत्वं प्रतिपद्यते यत्कर्मणः कर्तृत्वमुक्तं तत्र दृशेर्विषयाभावाविषयेच्छापत्त्यापादने क्रियेते इति वाच्ये इति तदाश्रयेण कर्मकर्तृत्वसमर्थना। तथा हि पश्यतीति को ऽर्थः। विषयं घटादिकं दर्शनविषयभावमापाद्यमानमापादयतीति। तत्र विषयस्य परिच्छेद्यत्वेन व्यापार आपत्तिः कर्मभूतस्य तद्विषयमापादनं कर्तृव्यापारो दृश्यर्थो न केवलः। तत्र च कर्तृव्यापारे आपत्तिलक्षणो विषयव्यापारो न्यग्भवतीतितत्सन्निधौ स्वव्यापारे स्वातन्त्र्यं विषयस्य तिरोभवति। यदा तु योग्यदेशावस्थितः स्पष्टतरो लोकमध्यपरिवर्ती विषयः तदा सुदर्शनो भवत् स्वयं दर्शनकर्तृविनियोगमुपकरोतीति स्वव्यापारे स्वातन्त्र्यविवक्षायां कर्म भूत्वा कर्ता सम्पद्यत इति भवति कर्मकर्तृविषयः ॥

इह दृशेः कर्तृत्वं दर्शनमात्रं वाच्यं पश्यतीति। न ह्यतो विषयभावापत्तिरवगम्यते। किं तु विषयज्ञानमेव धात्वर्थः। विषयभावापत्तिर्हि सर्वस्य धात्वर्थो ऽस्तीति विशिष्टमेव दर्शनं दृशेरभिधेयं न्याय्यम्।तच्च दर्शनं विषयप्रतिष्ठमित्यस्मात् कुतश्चित्सामर्थ्याद्विषयाक्षेपद्वारेण विषये भावोत्पादिपदाध्याहारेण विषयगतव्यापारप्रत्यायनात्तदुपसर्जनकर्तृव्यापारवाचित्वकल्पने दर्शनासनाद्यभिधायिनामपि कर्मस्थभावकत्वमेव स्यादिति न कश्चिद्धातुः कर्तृस्थभावक्रियो नाम स्यात् ॥ ६४ ॥

इहापि पतितग्रन्थो हेलराजकृतिः फुल्लराजकृत्या सन्धीयते ॥
अथैतदयुक्तमिति प्रतिपादयितुमाह ।

कुतश्चिदाहृत्य पदमेवं च परिकल्पने ।
कर्मस्थभावकत्वं स्याद्दर्शनाद्यभिधायिनाम् ॥ ६५ ॥

आपाद्यमानमापादयतीत्येवं विचक्षणतया यतः कुतश्चिदध्या-

स्यैव भवनेदमुपकल्प्यते। तदेवं सति दर्शनाद्यभिधायिनां दृश्यादीनां धातूनां कर्मस्थभावकत्वं स्यात्। आदिग्रहणादासनाद्यभिधायिनामासिप्रभृतीनामपि। नचैतदुपपन्नं कर्तृस्थभावकत्वाद् दृश्यादीनामिति। अत्र कर्मस्थभावकत्वं स्यादित्यभिदधता कर्तृस्थभावकत्वं यदुपपन्नमेषां तदेव विघटते इत्युक्तं भवति ॥ ६५ ॥

अथ कथं कर्तृस्थभावकत्वं विज्ञायेतेत्याशङ्क्य तद्व्याख्यातुमाह ॥

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।ऽऽ

यत्र कर्त्तरि कर्मणि वा विशेषः कश्चित्परिदृश्येते तत्रैव क्रियाव्यवस्थितेति बोद्धव्यम् । सपरिस्पन्दसाधनसाध्या क्रिया अपरिस्पन्दसाधनसाध्यो भाव इति विशेषमनपेक्ष्य सूत्रकाराभिप्रायेण क्रियया भावोऽभिधीयत इति टीकाकारस्याभिप्रायस्तथा च लक्षणहेत्वोः क्रियायाः, यस्य च भावेन भावलक्षणमित्यादावभेद एव सूत्रकारस्य क्रियाभावयोश्चेतसि वर्त्तते ॥ ऽऽ

अन्ये त्वेवं नेच्छन्तीत्याह ॥

क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकाश्यते ॥ ६६ ॥

एतदुक्तम्भवति । येऽपि कर्मस्थभावकाः पच्यादयः तथाऽपि कर्त्तर्यपि परिश्रमादिको विशेषः परिदृश्यते ततो नैतद्व्यवस्थापकम्, विशेषदर्शनं यत्र क्रिया तत्रेति। तस्माच्छब्दैरेव च यत्र विशेषः प्रकाश्यते प्रतिपाद्यते तत्रैव क्रिया स्थितेति वक्तुं युक्तं । शब्दप्रमाणकानां हि शब्द एव हि यथार्थमभिधत्ते तथैव तस्याभिधानमुपपन्नम् । न तु वस्तुमुखप्रेक्षितया।शब्दश्च पश्यति घटमित्यादिदृशिक्रियाविषयं विशिष्टमेव प्रत्याययति । काष्ठं भिनत्तीत्यादौ तु भिदिक्रियाविषयं सविशेषमभिधत्त इति तद्दर्शनेव कर्तृस्थभावकत्वं चाभिधानीयम्। एवं च दृश्यते स्वयमेवेति न भवत्येवेति मन्तव्यम् । यत्त्वपरिस्पन्दसाधनसाध्यो भाव इत्यादि लक्षणमभिधाय, कर्मस्थः पचतेर्भाव इत्यादिकमभिदधाति तदव्यव्यवस्थितमिव लक्ष्यते। तथा च पीलुपाके घटं पचतीति घटस्यानलसम्पर्कादवयवक्रियाद्वारेणावयवसंयोगो विघटं विनाशपूर्वकम् । पूर्वकार्यविनाशे उत्तरोत्तरकार्यद्रव्यविनाशात् परिस्पन्दपरमाणुविषयपरिक्रिया ऽपि । ततश्चाव्यवस्थितमेवैतत् ॥ ६६ ॥

एवं तावत्प्रथमसूत्रलक्षितं निर्वर्त्यविकार्यप्राप्यभेदेन त्रिधा भिन्नं कर्म व्याख्याय तत्प्रसङ्गेन च निर्वर्त्यविषयं मतभेदेन निवृत्तप्रेषणण्यन्तधातुविषयमध्यारोपितप्रेषणं च कर्मकर्त्तारं प्रदर्श्य प्राप्यविषयस्य प्रदर्शनपूर्वकं प्रत्याख्यानमुक्त्वा तत्प्रसङ्गेनापि कर्मस्वभावकत्वकर्तृस्वभावकत्वे मतभेदेनैव व्यवस्थाप्य, इदानीं सूत्रान्तरनिर्दिष्टान्यपि कर्माणि व्याख्यातुमुपक्रमते। तत्राकथितसूत्रे कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्चेत्युक्तं तावदनारम्भणीयमिति प्रतिपादयितुमाह ॥

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ ६७ ॥

अकर्मकाणां कथं कर्मणा योगः स्यादिति कालादीनां तत्प्रयोगे कर्मत्वं वक्तव्यमुपजायते । अत्रोच्यते । नात्र कर्मसंज्ञा वक्तव्या यस्मात्कालादीनामकर्मकैर्धातुभिर्योगे कर्मत्वमुपजायत एव । कथमिति विशेषयितुमाह। अन्तर्भूतक्रियान्तरैरिति। अन्तर्भूतं प्रधानक्रियापेक्षया क्रियान्तरं येषामिति ते तथा।तै र्योगे सम्बन्धे सति। अत श्च क्रियान्तरापेक्षया तेषां कर्मत्वं सिद्धमेवेति किमुपसंख्यानेन । तथा च मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपितीत्यादौ मासादीन्व्याप्यास्त इति व्याप्त्यङ्गायामासनादिक्रियायां धातुर्वृत्तः। व्याप्त्यादिक्रियया प्राप्तुमिष्यमाणत्वात् कालादीनां स्फुटमेव कर्मत्वमिति यत्नान्तरेण नार्थः । यद्येवमिदानीमासिप्रभृतयः कालभावाध्वभिः कर्मभिः सकर्मकाः सम्पन्नाः, ततश्च तेभ्यः कालादिष्वेव कर्मसु लकृत्यक्तखलर्थाः प्राप्नुवन्ति न भावे । तत्र मासमास्यते देवदत्तेनेति भावे लकारो न स्यात् । मासमासितव्यं, मासमासितं, स्वासं मासमिति च कृत्यक्तखलार्था भावे न स्युः। भावे चाकर्मकेभ्य इति वचनात्तत्रापि दृश्यते। तस्मात्कालादिकर्मसद्भावादकर्मकत्वं कथम्।सकर्मकत्वे भावे लकारः कथमिति। उच्यते। द्विविधं कर्म अन्तरङ्गं बहिरङ्गं च तत्र द्रव्यकर्मान्तरङ्गं तेनैव च पूर्वं सम्बन्धः। बहिरङ्गं कालादिलक्षणं कर्म। यद्वक्ष्यते शक्तिप्रमाणेत्यादिश्लोकेन। तत्र सकर्मकत्वव्यपदेशोऽन्तरङ्गेणैव न्याय्यः। तथा चोक्तमकर्मकाणामित्युच्यत इत्यादिना भाष्येण। एवं च लादिभिरप्यन्तरङ्गतामेवाह। आधारेति। इतः

प्रकाश एवा।गोदोहं स्वपिति। यावता कालेन गवां दोहः समाप्यते इति कौशलादिः पुनः स्वकालपरिमाणेन क्रियान्तरं परिच्छिनत्तीति । देशो ऽपि कुर्वाद्यवधैः प्राप्यमाणतया परिच्छिनत्ति इति कालादीनां सर्वैरेवाकर्मकैः सकर्मकैश्चापि धातुभिर्योगे प्राकृतमेव कर्मत्वमुपजायत इति नैषा कर्मसंज्ञोपसङ्ख्येयेत्यर्थः । तथा हि । न द्वितीयाविधानार्थमेव कर्मसंज्ञोऽत्र, अपि तु लाद्यर्थो ऽपि । तथा च कालाध्वनोरत्यन्तसंयोग इत्यत्र वार्त्तिकम् । अत्यन्तसंयोगे कर्म च लाद्यर्थमिति। लकृत्यक्तखलर्था अपि संज्ञाफलमिष्यन्त इत्यर्थः । अत्र क्रियान्तरस्य व्याप्तिलक्षणस्याप्यास्यादिधातुभिरङ्गीकृतत्वाद्व्याप्तिक्रियाविषयभावापगमनेन मासादिः प्राप्यं कर्मेप्सिततममेवेति प्राकृतमेवैतत् कर्म यथा घटं करोति, शकटं करोतीति भाष्य उक्तम् । तथा हि । मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपितीति व्यापितां गोदोहमासाम्बनादिधातुभिरभिधत्ते मासं व्याप्यास्ते, मासमासनया व्याप्नोतीत्यर्थः । एवमन्यत्र यथायोगं योज्यम् । यथा बलाहका द्विद्योतते विद्युदिति निःसरणाङ्गे विद्योतने धातुर्वर्तते तथा ऽत्र प्राप्त्यङ्गेऽर्थे धातोर्वृत्तिः । क्रियान्तरमेवेदमन्तर्भूतव्याप्तिकं कालादिविषयम् । देवदत्तः किं करोति, आस्त इत्यत्र तु व्याप्तिरहिते धातुरासनमात्रे वर्तते । तदेतदाह ॥ एकदेशे समूहे च व्यापाराणां पचादयः । स्वभावतः प्रवर्तन्ते तुल्यरूपसमाश्रिताः । पचति, पच्यते स्वयमेवेति तथात्र बोध्यम् । एवं चोपसंख्यानस्य प्रत्याख्यानादकर्मकग्रहणमनर्थकं, सकर्मकाणामपि मासमोदनं पचतीत्यादौ मासादेर्व्याप्तिविषयत्वेन कर्मतासिद्धेः । मासमोदनपाकेन व्याप्नोतीत्यत्रार्थः । एतदर्थं चात्र सर्वग्रहणं व्याख्यातम् । कालादिकर्मणा पचतीत्यादीनां द्विकर्मकत्वेऽपि प्रधाने द्रव्यकर्मणि लादिविधिरुक्तः, प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति । सत्यपि वास्यादीनां व्याप्तिक्रियान्तर्भावे कट आस्त इत्यादौ कटादेरासनया व्याप्तिर्नास्ति, अपि तु मासादिरेवासनादिक्रियापरिच्छेदायोपादीयमानो व्याप्त इति तस्यैव कर्मता न तु कटादेरुपश्लिष्टमात्रस्याधिकरणस्येति सर्वं सुस्थम् ॥ ६७ ॥

कथं पुनः कालादिकर्माप्रधानं द्रव्यकर्म तु प्रधानमित्याह ।

आधारत्वमिव प्राप्तास्ते पुनर्द्रव्यकर्मसु ।

कालादयो भिन्नकक्ष्यं यान्ति कर्मत्वमुत्तरम् ॥ ६८ ॥

कर्तृकर्मव्यवधानेनाधारः क्रियां धारयति यथा, एवं मासादिरपीत्याधारच्छायां लभते। तथा मुदिते जुहोति, रात्रौ भुङ्क्त इति प्रयोगः। क्रोशं शेते कुरून् स्वपितीति च स्फुटमेवाधिकरणत्वमध्वदेशयो कर्तृधारणात्। मासमोदनं पचतीत्यादौ द्रव्यविषये च द्रव्यकर्मधारणं स्फुटमेव। व्याप्तिविवक्षायां तु कर्मत्वमाधारभावस्यावगमाद्दनीव शब्दः। यद्वा कर्तृकर्मव्यवधानेन यथाधारः क्रियायोगं भजते तथा द्रव्यकर्मव्यवधानेन कालादीत्युपमार्थः। द्रव्यकर्मणा च पूर्वं क्रियायोगः। तद्द्वारेण तु कालादिकर्मणेति भिन्ना कक्ष्यावस्थास्य कर्मत्वस्य। तथा हि। शक्तिः प्रमाणं संख्यादेर्द्रव्यधर्माद्विशिष्यते। क्रियासु कालयोगास्तु प्रागयोगो द्रव्यकर्मणोत्युक्तम्। कठिनपाकस्य द्रव्यस्य चिरेण निष्पत्तिः, महापरिमाणस्य बहुसंख्याकस्य च विपरीतस्य त्वचिरेणेति द्रव्यकर्मापेक्षः कालादिविशेषः। एवं गोदोहं स्वपिति, इक्षुपातं पचतीत्यत्रापि वाच्यम्। क्रोशमधीते स्वाध्यायं, कुरून् पञ्चालानधीते इत्यध्ययनप्रचयापचयोपपत्ताध्वदेशयोर्वृद्धिह्रासाविति विप्रकृष्यते कालादिक्रियासम्बन्धं प्रति द्रव्यकर्मापेक्षया। अत एवोत्तरकालमन्तमेतेषां कर्मत्वमासमस्तसाधनसम्बन्धे हि वृत्तेः क्रियायाः परिच्छेदकाः कालादयो ऽपेक्ष्यन्त इति भिन्नकक्ष्यास्ते ऽकथितं चेत्युत्तरेण योगेन कर्मसञ्ज्ञां लभन्ते नेप्सिततमत्वेन ईप्साप्रकर्षाभावात्। दुह्यादिपरिगणने चाकथितसूत्रे कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्चेत्यत्रैवोक्तम्। गुणप्रधानसन्निधौ च प्रधानमेव कार्यैर्युज्यत इति द्रव्यकर्मणि लादिविधिः। मासमोदनः पच्यते, पक्वः, पक्तव्यः, सुपचः, क्रोशमधीयतेऽनुवाक इत्याद्युदाहार्यं। द्वितीया तु भिन्नशब्दोपादाना कालादिकर्मण्यपि भवति। एको हि लादिर्गुणप्रधानभूतं कर्माऽसमर्थो ऽभिधातुमिति प्रधानकार्यसम्प्रत्ययः। भिन्नरूपप्रतिपादकद्वयात्तु विभक्तिरुत्पद्यमाना कर्मद्वयमपि प्रत्याययति॥६८॥

यतश्च कालादीनां सर्वधातुविषयं भिन्नकक्ष्यं च कर्मत्वम्,

अतस्तैः कर्मभिर्धातुर्युक्तो द्रव्यैरकर्मकः।
लस्य कर्मणि भावे च निमित्तत्वाय कल्पते ॥ ६९ ॥

यत्रास्ति द्रव्यकर्म तत्र तदपेक्षया कालादिकर्मणोऽप्राधान्याल्लादिस्तत्र न भवति । यत्र तु द्रव्यकर्म नास्ति तत्र कालादावेव कर्मणि लादिः । लग्रहणस्योपलक्षणार्थत्वाच्च लकृत्यक्तखलर्थाः । आस्यते मासः, आसितव्यः, स्वास इत्यादि । अकर्मकत्वव्यपदेशश्च धातूनां द्रव्यकर्माभावनिमित्तः । कालादिकर्मणः सर्वत्र सम्भवात् । सम्भवव्यभिचाराभ्यां विशेषणयोगादिति कालादिकर्मसम्भवे ऽप्यकर्मकव्यपदेशस्य द्रव्यकर्माभावनिमित्तस्याव्यावृत्तेर्भावे लकारः सिध्यति । मासमास्यते भवतेत्यादि । मासमासितो देवदत्त इति चाकर्मकत्वात् कर्तरि क्तः । गत्यादिसूत्रे चाकर्मकत्वाश्रया प्रयोज्यस्य कर्मसंज्ञा सिध्यति मासमासयति देवदत्तमित्यादौ । अत एव च चाकर्मकग्रहणे कालकर्मणामुपसंख्यानम् । सिद्धं तु कालकर्मणामकर्मकवद्वचनादिति वार्त्तिकार्थो न्यायसिद्धः । तथा च भाष्ये, न केचित्कालभावाध्वभिरकर्मका अत एवं विज्ञास्यामः क्व चिद्ये ऽकर्मका इति अथ वा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेन कर्मणा । न चैतेन कर्मणा कश्चिदप्यकर्मकः । अथ वा यत्कर्म भवति च न भवति, तेन कर्मणाऽकर्मकाणाम् । क्व चैतत्कर्म क्व चिदपि न भवतीति परिहारत्रये को विशेषः । उच्यते शब्दकर्माकर्मकाणामित्यत्र अविवक्षितकर्मका अकर्मका आश्रीयन्ते । एवं ह्यास्ते शेते इति क्रियामात्रविवक्षायां कालादिभिरप्यकर्मकत्वं सम्भवति । तथैव पचादीनामप्यविवक्षया कर्मसम्बन्धे ऽपाकृते अपि कर्तुर्या कर्मसंज्ञाप्रसङ्गात्तस्माद्यस्यात्यन्तमसम्बन्धः कर्मणा सो ऽकर्मकः । स च यदि धात्वर्थ आश्रीयते तदा तस्य क्रियात्मनो विवक्षावशेन कर्मसम्बन्धासम्बन्धयोर्भेदे कालादिभिरप्यकर्मकत्वे च तस्य चरितार्थत्वं भवेत् । तस्मादविद्यमानं कर्मास्येति धातुरन्यपदार्थत्वेनाश्रीयते । गत्यर्थत्वेनागतौ [illegible] सैव, विशेषणीयत्वेन प्रक्रमात् । अथ पाकं पच् धातोः कर्मयोगे च रूपस्याविशेषात् अकर्मकत्वं नोपपद्यते, कालादिकर्मभिः सर्वेषां धातूनामवियोगात् । एवं च विशेषणसामर्थ्याद्विशिष्टा एव धातवो द्रव्यकर्मसम्बन्धरहिताः समाश्रीयन्ते । द्रव्यकर्मविषये ये ऽकर्मका इति पूर्वपरिहारार्थः । द्वितीये तु परिहारे वर्त्तिपदार्थस्य कर्मणः साक्षात् क्रियोपकारकत्वेनान्तरङ्गत्वविशेषमाश्रितः । तृतीये तु परिहारे भवति न भवतीत्यभिनिषिध्यमानस्य

सम्बन्धस्य विशेष आश्रीयते न कर्मणा कदा चित्सम्बन्धो भवति । तेनैव द्रव्यकर्मणा नित्यसम्बन्धो न कालादिकर्मणेत्यर्थः । द्रव्यकर्मापेक्षितत्वाच्च सकर्मकाकर्मकव्यपदेशस्य, उदध्वरः सकर्मकाभिप्रायेण मासमुच्चरति धूम इत्यात्मनेपदं न भवतीत्याहुः ॥ ६९ ॥

न च कालादिकर्मैव भिन्नकक्ष्यमपीष्यत ॥

सर्वं वाऽकथितं कर्म भिन्नकक्ष्यं प्रतीयते ।
धात्वर्थोद्देशभेदेन तत्रेप्सिततमं किल ॥ ७० ॥

गां दोग्धि पयः, पौरवं गां याचते, गामवरुणाद्धि व्रजं, माणवकं पन्थानं पृच्छति, वृक्षमवचिनोति फलानीत्यादि सर्वमेवापादानादिविशेषकथाभिरकथितं द्रव्यकर्मापि गवादि पयःप्रभृतिप्रधानकर्मापेक्षयोपायभूतं नान्तरीयकम् । धात्वर्थस्य हि दोहोद्देश एव भेदो विशेषस्तेन हेतुना गवादीप्साप्रकर्षराहितम् । पयः प्रभृति किलोद्दिश्य धात्वर्थः प्रवृत्तः । तत्र तूपायभूता गवादयो नान्तरीयकाः । धात्वर्थेन चोद्देशो विषयीकरणं तस्य भेदः पूर्वापरकालत्वं । पूर्वं हि धात्वर्थेन प्रधानं पयःप्रभृति विषयीकृतं पश्चान्निमित्तभूतं गवादीत्यन्वर्थं वा दोहादिकमुद्दिश्य यस्माद् गवादयो भेदेनोपायत्वेन प्रवर्तन्ते, अतस्ते भिन्नकक्ष्याः । किलेत्यस्मिन्पक्षेऽरुचिं सूचयति । तथा भिन्नमेवमिति सिद्धान्तयिष्यति । ननु कालादीनां द्रव्यकर्माधीनत्वात् भवतु भिन्नकक्ष्यत्वं तदादौ तु विपर्ययात् कथमेतत् । तथा हि गवाद्यपेक्षाविषयः पयःप्रभृतीति कर्मणि । तथा चोक्तं गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवतियोगात् ॥ मुख्यकर्मप्रेप्सुर्यः स्याद् गव्येव यतेत प्राक् । तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव सम्बन्धः । गोर्दुहिना पयसस्तु प्राक्स्माद् दुहादयस्तस्मिन् इति सत्यमेतत् ॥ प्रधानाप्रधानकृतः कक्ष्याभेदः ॥ ७० ॥

तथा हि ।

प्रधानकर्म कथितं यत्क्रियायाः प्रयोजकम् ।
तत्सिद्धये क्रियायुक्तमन्यत्त्वकथितं स्मृतम् ॥ ७१ ॥

यदुद्दिश्य फलभूतक्रियाप्रवर्तने साधनानि सज्जीभवन्ति यदा वाभ्युदासते तदीप्साप्रकर्षगृहीतं प्रधानं कर्तुरीप्सिततमं कर्मसंज्ञायाः

प्रथममेव कथितम्। यतश्च पयः प्रभृति तदर्थं तु यदनीप्सितमपि नान्तरीयकं क्रियया समन्वेति, तदेवात्राविशेष कर्म कथितं कर्म प्रधानत्वात् भिन्नकक्ष्यमित्यर्थः। तथा गवादिः पूर्वं प्राधान्येऽपि चोपायत्वात् प्रथमं क्रियायोगे लाभेऽपि निमित्तत्वाय कल्पते। अनपेक्षिते तु पयसि गौरेव प्रधानं क्षीरविच्छेदस्तु तस्या मा भूदित्येवमनर्थ्यापि क्षीरेण सम्प्रति गोसंस्कारार्थं दोहं प्रवर्तते इत्यपादानमुत्तराणि गां दोग्धीत्युदाहरणमुपपद्यते। विप्रतिषेधे अन्यथा अकथितकर्मत्वे अपादानसंज्ञाभावात् कथं विप्रतिषेधोदाहरणमेतत्। अपादानादिविशेषकथाभिरसंस्पृष्टं ह्यकथितं कर्म तदेव निमित्तभावेनाश्रितत्वात्। भिन्नकक्ष्यत्वे ऽकथितयोः कर्मणोरभेदादप्राप्ता गवादीनां कर्मसंज्ञा अकथितञ्चेत्यनेनारभ्यत इति स्थितम्॥ ७१॥

इदानीं नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चय, इति भाष्योक्तं व्याचष्टे।

दुह्यादिवन्नयत्यादौ कर्मत्वमकथाश्रयम।
आख्यातमुपयोगे तु नियमाच्छेष इष्यते॥ ७२॥

अजां नयति ग्रामं, प्रधान्वहति नगरं, हरति भारं सुवाहं। गत्यर्थग्रहणेन गतिवत्तद् गुणकर्म गवादि तदेव नान्तरीयकत्वादकथितकर्मैव द्रष्टव्यं परिगण्यते। ननु नियमेनाख्यातानुपयोगे कर्मसंज्ञायां व्यावर्त्ततेऽनटस्य शृणोतीत्यादौ च यदि उपयोगे विशेषकथानाक्रान्तत्वात् भवेदकथितं कर्मेति परिगणनलक्षणात् नियमाच्छेषो ऽयं षष्ठीविषयः॥ ७२॥

तदेवं प्रधानेतरभावेन कर्मभेद उक्तः। केचित्तु प्रधानमेवेदं कर्मेत्याहुः॥

तथा हि।

अन्तर्भूतणिजर्थानां दुह्यादीनां णिजन्तवत्।
सिद्धं पूर्वेण कर्मत्वं णिजन्तनियमास्तथा॥ ७३॥

अन्तर्भूतो वाच्यतया णिचोऽर्थः प्रयोजकव्यापारः प्रेरणा येषां दुह्यादिप्रभृतीनां तेषां प्रयोगे गां दोग्धि पय इत्यादौ कर्तुरीप्सिततमत्वमित्यनेनैव गवादीनामपि सिद्धा कर्मसंज्ञा। तथा गमय

ति ग्रामं देवदत्तो यज्ञदत्तं, इत्यत्र णिजन्तविषये प्रयोज्यस्य प्रयोजकव्यापारेणाप्यमानत्वादिति नियमार्थं सूत्रं गत्यादीनामेव ण्यन्तानां प्रयोज्यः कर्म नान्येषां पच्यादीनामित्यण्यन्तविषये न प्रवर्त्तते। तथा हि गौः पयः क्षरति। तद्देवदत्तः तां क्षरन्तीं क्षारयतीति दुहेरर्थः। तत्र क्षरणोपसर्जनस्य क्षारणस्य शब्दार्थत्वात् गौरेव प्रधानं कर्मेति तत्रैव लादयः। क्षरणेनाप्यमानत्वात्पयः कर्म क्षारणेनाप्यमानत्वात् गौः। यद्यपि स्वार्थेन रूपेण पयः प्रधानभूतं तदुपायभूतस्तु गौः, तथा प्यभिधायनेन गौः पयः दोग्धव्या, दुग्धा, सुदोहेति। अप्रधाने दुहादीनामित्यर्थेन रूपेणाप्रधानमुच्यते। यद्यपि चापायविवक्षया विनाकारेण नोपपद्यते तथा प्यपादानमुत्तराणीति कर्मसंज्ञा बाऽत्र भवति परत्वात्। यदि ह्यकथितसूत्रे कापि संज्ञा नोच्यते तदाऽपादानमुत्तराणीति कर्मसंज्ञैवाकथितत्वात्कथितत्वेनासौ न स्यात्। पूर्वसूत्रेण तु कर्मसंज्ञायामुभयसम्भवे परत्वादपादानमुत्तराणि गां दोग्धीत्युक्तम्। तथा चापादानविभावनेति समीचीनं। एवं पौरवं गां याचते दापयतीत्यर्थः। पौरवो गां ददाति तं प्रयुङ्क्ते याचकश्रद्धोत्पादनेनेति याचेरर्थः। प्रैषो याचनान्तर्भूतः। तत्र दानस्य गौः कर्म प्रैषस्य पौरवः। गामवरुणद्धि व्रजमिति प्रविशन्तीं प्रवेशयतीत्यर्थः। प्रवेशस्य तु गौः॥ यदा तु स्थापयतीत्यर्थः तदा व्रजस्याधिकरणत्वादुभयसंज्ञाप्रसङ्गे तु परत्वात्कर्मसंज्ञा उक्ता, अधिकरणं कर्म। गेहं प्रविशतीति प्रवेशोपसर्जनमत्र स्थानमर्थः। गेहप्रवेशनेन व्यापृत एतीति निमित्तनिमित्तिभावेन प्रवेशस्थानं प्रतीयते। तत्र प्रवेशापेक्षया ऽधिकरणमित्युभयप्राप्तौ परत्वात्कर्मोदाहृतं। माणवकं पन्थानं पृच्छति। माणवकः प्रयुङ्क्ते तमाख्यापयतीत्यर्थः। आचिख्यासति माणवक तं प्रयुङ्क्ते आचिख्यापयतीत्यर्थः। एवं यो गां दित्सति तं प्रयुङ्क्ते याचक इत्यर्थोऽवगम्यते। एवं भिक्षेरप्यर्थो वेदितव्यः। वृक्षमवचिनोति फलानीति। मुञ्चति फलानि वृक्षः तं मोचयतीत्यर्थः। अपायविवक्षायामपि अपादानमुत्तराणीति कर्मसंज्ञाऽत्र। माणवकं धर्मं ब्रूते प्रतिपादयतीत्यर्थः। तत्र प्रतिपत्तर्धर्मः कर्म, प्रेषणस्य तु माणवकः। माणवकमनुशास्ति धर्ममिति। शिक्षते धर्मं माणवकः तं शिक्षयतीत्यर्थः। कर्मणाऽभिप्रेयमाणस्य तु माणवकस्यात्र सम्प्रदानसंज्ञा न भवति। तदानीं कर्मत्वाभावात् सामान्ये। न तु भाष्यकारमतेन सम्प्रदानसंज्ञायां प्रधानव्यापारविवक्षया कर्मसंज्ञ-

चात्र चाध्यत इति वक्तव्यम्। यद्वा कर्तुरीप्सिततमं कर्म तेनाभिप्रेयमाणस्य सम्प्रदानत्वम्। यथोपाध्यायाय गां ददातीति।गौर्हि दातुर्बलुभा तत एव गुणवते दीयते।धर्मस्तु कर्तुर्नाभिमतः पूर्वमेव सिद्धः। तेन तु माणवको ऽनुग्रहीतुमभिप्रेत इति प्रयोज्यस्यात्रेप्सिततमं कर्म न प्रयोजकस्येति न सम्प्रदानसंज्ञाविषयो ऽयमित्यन्ये। एवं नयत्यादावपि पूर्वेणैव कर्मत्वम्।अजां नयति ग्रामं प्रापयतीत्यर्थः । प्रापणेन प्रधानेन सम्बन्धादजा प्रधानं कर्मेति प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति न्यायानियम।अजा नीयते ग्रामं, नेतव्या, नीता, सुनयेति। एवमन्यत्रापि यथायोगमुदाहार्यम्। सत्यपि चात्र ण्यर्थान्तर्भावे गत्यादिनियमेन प्रयोज्यस्य कर्मसंज्ञा न व्यावर्त्यते सजातीयापेक्षत्वनियमस्यान्यत्र ण्यन्ते एव तेन निवारणात् । अत्र प्रैषो ण्यर्थो धातुनैव स्वीकृत इति णिच् न भवति । ननु वास्तवेन रूपेण पयआदेः प्राधान्यात्तस्यैवेप्सिततमत्वं न्याय्यं, न तु गवादेः प्रतीयमानोपसर्जनभूतक्रियापेक्षमीप्सिततमत्वं युज्यते प्रधानसन्निधाने गुणस्येप्साप्रकर्षविषयत्वाभावात् ॥ ७३ ॥

न च कारकप्रकरणं साधकतमं करणमिति तमब्ग्रहणात् प्रकर्षो न विवक्ष्यत इति शक्यते तत्र वक्तु, ईप्सिततममिति साक्षात्प्रकर्षविवक्षार्थं तमप उपादानात्। लिङ्गस्य त्वन्यत्र कृतार्थत्वं च। गङ्गायां घोष इत्यादावधिकरणसंज्ञा यथा स्यादिति। श्रुत्या हि लिङ्गबाधा। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वं पूर्वं बलीयो ऽर्थविप्रकर्षादिति न्यायविद्भिरुक्तत्वात्कथं गवादेः पूर्वेण कर्मसंज्ञेत्याशङ्क्याह।

करणस्य स्वकक्ष्यायां न प्रकर्षाश्रयो यथा ।
कर्मणो ऽपि स्वकक्ष्यायां न स्यादतिशयस्तथा ॥ ७४ ॥

यथा कारकान्तरापेक्षया लब्धप्रकर्षस्य करणसंज्ञायां सजातीयकरणान्तरापेक्षया प्रकर्षो नाश्रीयते येन सर्वस्यैव कार्यं प्रवर्तते। अनेन यथा दीपिकया याति, पादाभ्यां व्रजति बलेन पादेनादत्त इति ।अन्यथा खड्गादेरेव प्रकृष्टतमस्य भवेदिति।तथा कर्मणो ऽपि करणादीनामपि क्रियायामुपयोगादीप्सिततममिति कारकान्तरापेक्ष-

या साधितेप्सितप्रकर्षविषयभावस्य कर्मान्तरे ऽपक्षयात् अतिशयो नाश्रीयत इति सिद्धं । निमित्तनिमित्तिभावावस्थितस्यापि सर्वस्यैव कर्मणः पूर्वेणैव योगेन कर्मसंज्ञेति भाष्यकथितकर्मत्वेकीयमते ना- स्योपन्यासः ॥ ७४ ॥

एतत्तु न युक्तमित्याह ।

कर्मणस्त्वाप्तुमिष्टत्वे आश्रितो ऽतिशयो यतः ।
आश्रीयते ततो ऽत्यन्तभेदं पूर्वेण कर्मणा ॥ ७४ ॥

इह साधनभावस्य सर्वकारकविषयत्वेऽप्युक्तं यत्कारकान्तरापेक्षया लब्धातिशयसाधनभावकरणं स्वकक्ष्यागतं प्रकर्षं नाद्रियेत । कर्म त्वीप्सितप्रकर्षविषयमात्रं कारकान्तरापेक्षया प्रतिपत्तुमसमर्थम् । न हि कारकाणामीप्सितानि । कर्त्रा क्रियया यदाप्तव्यं तदीप्सितं । कारका- न्तराणि तु क्रियायै करणादीन्याप्तव्यानि । न तु क्रियया । तस्मात्तुल्य- जातीयापेक्षत्वादतिशयस्य कर्मण आप्तुमिष्टत्वे ईप्सित इत्येवमा- प्तुमभिप्रेतत्वं आश्रीयते । तमप उपादानादतिशयो यस्मादङ्गीक्रियते तस्मादीप्सितार्थान्तरापेक्ष एवासौ प्रकर्षो ऽभ्युपगन्तव्य इति स्वक- क्ष्याकृत एव सः । तथा च पयः प्रभृति गवादीप्सितापेक्षया प्रकृष्ट- मीप्सितं पूर्वयोगस्य विषयो, गवादेस्तु पूर्वेणासिद्धायां कर्मसंज्ञाया मकथित इत्यनेन सिद्धिरित्येष एव पक्षो ज्याय्यः । ततश्च भिन्नकक्ष्यं कर्मद्वयमेतत् । स्वकक्ष्यापेक्षेऽनाश्रिते तु कर्मणः प्रकर्षे तमब्वचन- मनर्थकं स्यात् । तथा चेप्सितमात्रस्य कर्मसंज्ञायां वारणार्थानामीप्सित इत्यत्र यवेभ्यो गां वारयति, कूपादमुं वारयति, अग्नेर्माणवकं वारय- तीत्युदाहरणं । तस्मात् गवादेरपि कर्मसंज्ञाप्रसङ्गात् । ततश्चैतत्सूत्रं निर्विषयं स्यादिति विषयविभागार्थः कर्मापादानयोः स्वकक्ष्यागतः कर्मणो ऽतिशयः सिद्धान्तितः । तथा च वार्त्तिकं, वारणार्थानां कर्म- ग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनात् । भाष्यमपि । यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थं ईप्सिततममिति । वारणार्था- नामित्यनेनाधारादेरीप्सितेन कूपादिना युक्तस्य कर्मसंज्ञा न सिद्ध्य- तीति ईप्सितमित्यनेन सिद्ध्यतीत्यर्थः । यत्पुनरीप्सितमात्रमपादान- संज्ञाभिरकथितं तस्याकथितसूत्रेण गवादेः कर्मसंज्ञेत्यपि भाष्ये ऽभि- हितम् । ईप्सिततमेव तु यत्स्वात् तस्य भाविन्यत्यकथितेनेति ॥ ७४ ॥

यत्पुनरेतदुक्तं नयत्यादीनां णिजन्तवत्सिद्धं पूर्वेण कर्मत्वमिति तद्व्याचष्टे ।

णिजन्ते च यथा कर्त्ता सक्रियः सम्प्रयुज्यते ।
नयत्यादौ तथा कर्त्ता निष्क्रियो ऽपि प्रयुज्यते ॥ ७५ ॥

गमयति ग्रामं देवदत्तमित्यादौ णिजन्ते प्रकृतिप्रत्ययवाच्ये द्वे क्रिये भिन्ने प्रतीयेते इति तदपेक्षं द्वयोः कर्मत्वं युज्यते । गां दोग्धि पय इत्यादौ तु प्रकृतिवाच्यैकैव क्रियेति कथं कर्मद्वयप्रयोगः । न चा-त्यन्तर्भूतणिजर्थत्वेन तदुपपत्तिः । णिजर्थस्यायोगात् । प्रैषो हि णिजर्थः, स च प्रवृत्तक्रियस्य स्वव्यापारस्य कर्तुरुपलभ्यते । तथा हि तस्य स्वतन्त्रस्य प्रयोजको यो हेतुः तद्व्यापारे णिजुक्तः । अत ए-वाप्रवृत्तक्रियायां करणादीनां प्रयोजकस्य स्वतन्त्रस्य कर्तुर्हेतुसंज्ञा न भवति । तदेवं गवादेर्निष्क्रियत्वान्न तद्व्यापारेणाप्यमानत्वं पय-आदेः कर्मणः अपि तु दोहेन देवदत्तव्यापारेणैव गोपयसोर्द्वयोरपि आप्यमानत्वमित्यतिशयायोगात् पयआदेरेव पूर्वेण कर्मत्वं, गवादे-स्त्वकथितमिति अनेनैवारभ्यते ॥ ७५ ॥

ननु च यथा गच्छन्तं सम्प्रयुङ्क्ते गमयतीति प्रयोगः, तथा क्षरन्तीं क्षारयति दोग्धीत्यर्थं इत्याशङ्क्याह ॥

भेदवाक्यं तु यत् ण्यन्ते नीदुहिप्रकृतौ च यत् ।
शब्दान्तरत्वान्नैवास्ति संस्पर्शस्तस्य धातुना ॥ ७६ ॥

गच्छन्तं प्रयुङ्क्ते इत्यादिना गमयतीत्यादौ ण्यन्ते प्रकृतिप्र-त्ययार्थयोर्विभागप्रदर्शनाय यद्वाक्यं ग्रामं प्राप्नुवन्तीमजां प्रयुङ्क्ते, क्षरन्तीं गां प्रयुङ्क्त इत्यादि च नयति दोग्धीत्यादौ प्रकृतिविषये प्रकृत्यर्थप्रदर्शकवाक्यं, तत्सर्वं गमयतीत्यादेर्णयतान्नयति दोग्धीत्या-देश्च प्रयोगाच्छब्दान्तरं भिन्नार्थमेव । नह्येषो ऽत्र धात्वर्थः । आदरावि-प्रकर्षेण च धात्वर्थमात्रकथनमेतत् । यथा राजपुरुषादौ राज्ञः पुरुष इत्यादि । तथा हि गच्छन्तं प्रयुङ्क्त इत्यादौ वाक्ये प्रयोगकर्तृ-निर्देशनं गमयतीत्यादौ ण्यन्ते प्रयोज्यक्रियामात्रं प्रतीयते । प्रयोज्य-स्तु स्वशब्दोपादानो देवदत्तमिति ॥ यत्र चैतद्भेदकवाक्यं विदूरण्यन्ते, तत्र नयत्यादीनां सुतरां विदूरता । न ह्यत्र वाक्यार्थो धातूपादानः क-

श्चित्।अनन्तस्य वाक्यस्य वाक्यार्थस्य वा दुहादिधातुना नास्ति सम्बन्धः। तस्मादत्र ण्यन्तान्तर्भाव इति क्रियाद्वयाश्रयेणापि कर्मविशेषसमर्थनं समीचीनम्। तदेतदकेचेयं विलक्षणा कर्मद्वयविषया क्रियेति, सर्वं चाकथितं कर्म भिन्नकक्ष्यं प्रतीयते । धात्वर्थोद्देशभेदेन तन्नेप्सिततमं किलेत्येष पक्षो ऽवस्थापितः। अप्राधान्ये ऽपि चाकथितकर्मणो वास्तवे ऽन्तरङ्गत्वात्प्रथमं क्रियायोगाल्लादिविधिरुक्तः। नयत्यादौ तु प्राधान्यमजादेरिति तत्रैव लादयः। ण्यन्ते तु ण्यर्थस्य प्राधान्यात्तेनाप्यमानत्वात् प्रयोज्यकर्तैव प्रधानं कर्मेति तत्रैव लादयः। ततश्च प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणां। अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मण इति न्यायासङ्गमुदाहृतम् ॥ ७६ ॥

इदानीं सिद्धान्तमुद्घाटयति ॥

यथा चैकमपादानं शास्त्रे भेदेन वर्णितम् ।
तथैकमेव कर्मापि भेदेन प्रतिपादितम् ॥ ७७ ॥

ध्रुवमपाय इत्यनेनैव सर्वत्रापादानसंज्ञा भाष्येऽपि प्रतिपादिता । भीत्रार्थादिविषये ऽपि बौद्धस्यापायस्य भावात् । अबुधबोधनार्थं हि भीत्रार्थानामित्यादिना भेदेन कथनम॥ तथा च वक्ष्यति, निर्धारणे विभक्ते यो भीत्रार्थानां च यो विधिः। उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तय इति । एवं कर्मापीप्सिततममेकमेव, कर्तुः क्रियया ऽऽप्यमानत्वस्य सर्वत्र भावात् । मन्दबुद्ध्यनुग्रहाय तूत्तरसूत्रप्रपञ्च इति कारिकार्थः । यद्यपि च पयःप्रभृत्यर्थं गवादेरुपादानं तथाप्यस्येव धात्वर्थेन तस्याप्यमानत्वं। तद्यथा तण्डुलानोदनं पचतीत्यत्र। तण्डुलानां हि विक्लित्तिविशिष्टा विक्लेदना पचेरर्थः। न हि विक्लृत्याख्यगुणद्वारेण तण्डुला अपि कर्म विक्लेदनस्य, साक्षात्त्वोदनम्।तण्डुलान्विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः।इत्थं च गुणप्रधानभूतैकधातुवाच्यक्रियाभेदाश्रयेणात्र यथा कर्मभेदः, तथा क्षरणोपसर्जनक्षारणार्थतायां दुहेर्गोपयसी सममेककर्मभावमनुभवतः। तथा च ण्यर्थान्तर्भावो ऽपि युक्तः। ण्यन्ते ऽपि प्रकृत्यर्थविशिष्टस्य प्रत्ययार्थस्य प्राधान्यान्निष्क्रियत्वं स्वतन्त्रस्य॥ न ह्यत्र णिच् क्रियते येन सक्रियप्रयोगस्तु यदा स विषयो णिच इति न्यायो ऽनुवर्ण्येत। धातुवाच्यस्तु ण्यर्थः । तद्यथा साधयतीति ण्यर्थः पचतिवाच्यः,

भेदवाक्यं तु भवत्यदूरविप्रकृष्टं भिन्नार्थमत्यन्तविशेषापेक्षया त्वेकार्थमेव राजपुरुषवृत्तिवाक्यवत् । तथा च प्रतीयत एवैकत्र तद्वाक्यार्थो ऽत्र प्रयोगे ॥ न चापि गवादीनां निष्क्रियत्वं न्याय्यं क्रियासमवायाभावे कारकत्वाभावात् । आरभ्यमाणे ऽप्यकथितयोगे कर्मसंज्ञा न स्यात् । प्राक्प्रयोगान्निष्क्रियत्वमिति चेत् पयन्ते ऽपि समानमेतत् । यथा च तत्र सम्भावितक्रियस्य कर्तुः प्रयोजकः इति तद्व्यापारोपपत्तिः, तथाऽत्रेति न किंचिदवद्यम् । तमब्ग्रहणस्य च प्रत्याख्यानादीप्साप्रकर्षानाश्रयणम् । यत्तु तमग्रहणस्योदाहरणं दध्ना भुञ्जीयेति, तत्र समकक्ष्यतया दध्नौदनस्येप्सितत्वे तमग्रहणमकिञ्चित्करमभ्यर्हितत्वे हि दध्नस्तत्कृतस्यौदनस्यैवेप्सितत्वमिति नास्त्येतदुदाहरणम् । तथा च भाष्यम् । तस्यात्योदन एवेप्सितः न तु गुणस्तस्यादर इति । यदपि कर्मापादनयोर्विषयविभागदर्शनार्थं तमग्रहणमित्युक्तम् । तत्रापि वारणार्थानां वारयितव्यानां वारणमर्थयन्त इति वारणायोग्यानां यदीप्सितं तदपादानमित्येवं व्याख्यानाददोषः । तथा हि वारयितव्याः प्रतिषेधयितव्याः गवादयः तेषामीप्सिता यवादय एवापादानं तदेवैवमीप्सितमेवं सर्वं कर्म । इत्थं च दुह्याद्युदाहरणार्थं न परिगणनमेतद् । नटश्च शृणोतिक्रियाया निमित्तमात्रं न त्वीप्सितत्वेन विवक्ष्यत इति कर्मसंज्ञाभावः । शृणोतिक्रियायां च सव्यापारो नटः कारकमुपयोगग्रहणादपादानसंज्ञया व्युदस्यते । न चान्या संज्ञाऽस्याविहितेति शेषो ऽयं षष्ठीविषयः । हेतुतृतीयायास्त्वयमविषयः, अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते । द्रव्यादिविषयो हेतुः कारकं नियतक्रियमिति वचनात् ॥ ७७ ॥

ननु निर्वर्त्यादिभेदेन कर्म भिद्यत इति कथमेकमेव कर्मेत्याशङ्क्याह ।

> निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः ।
> क्रियाणामेव साध्यत्वात्सिद्धरूपो ऽभिधीयते ॥ ७८ ॥

इह साधनाश्रयशक्त्याधारो निष्पन्नरूपो नामपदैरुच्यते । आख्यातपदैस्तु साध्यस्वभावः क्रियात्मार्थो ऽभिधीयत इति क्रियाद्रव्ययोः सिद्धसाध्यस्वभावरूपं शब्दप्रतिपाद्यं तद्रूपेण कथ्यते । यद्भाष्ये, क्रिया चेद्यदि भाष्यते स्वभावसिद्धं द्रव्यत्वमिति । तथा च कटं

करोति तण्डुलानोदनं पचति सूर्यं पश्यतीति नामपदैः कर्म शास्त्राधारमविलक्षणं सिद्धतया प्रख्याप्यत इति नास्ति तस्य स्वरूपभेदः।स्वतः क्रियार्थत्वाच्च वस्तुतः साधनानां क्रियाधर्मेण व्यपदेशः । निर्वृत्ति-विपरिणतिप्राप्तिलक्षणा हि क्रियाः स्वप्रामव्यावृत्तमुपकारकं कर्म निदर्शयन्त्यो विभिन्नव्यपदेशनिमित्ततामापादयन्ति । एवं च कृत्वा शब्देन रूपेण सिद्धत्वात् कर्मणः साधनभावो ऽप्युपपद्यते । क्रियाविशेषावेशितव्यपदेशभेदानाश्रये तु क्रियाविषयकारकनिमित्ततयेप्सितमित्येव सामान्याख्यया सर्वं कर्म कथ्यत इति सिद्धम् ॥७८॥

गतमदः, इह कथमीप्सितत्वं, विषं भक्षयति चोरान्पश्यतीत्याशङ्क्याह ।

अहितेषु यथा लौल्यात् कर्त्तुरिच्छोपजायते ।
विषादिषु भयादिभ्यस्तथैवासौ प्रवर्त्तते ॥ ७९ ॥

वाय्वादिधातुवैषम्यनिमित्तेषु यथा ऽऽतुरस्य हितमिति भोजननियमासहिष्णोरभिलाषो भवति तथा स्वाम्यादिभयपरिपीडितस्य क्षत्रियस्य व्याधिदुःखार्त्तस्य वा वरं विषभक्षणमेव ज्याय इति मन्यमानस्य भवति विषं भक्षणेनेप्सितमिति तथा युक्तं चानीप्सितमित्येतदपि कर्म पूर्वेणैव सिद्धं । तदाह भाष्यकारः। य एष मनुष्यो दुःखार्त्तो भवति सो ऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते । लौल्यादिति । न प्रेक्षापूर्वकारितार्घटिता सर्वत्रेप्सा अपि तु प्रकारान्तरेणापि सम्भवतीत्यर्थः । भक्षणक्रियाविषयभावापत्तिरेवात्रेप्सितत्वं तथायुक्तग्रहणादेवावसीयते।सूत्रारम्भेऽपि परोपाहितं चाविज्ञातविषभावं भक्ष्यमाणमीप्सितमेव । प्रवृत्त्यनुमेया चेप्सा सर्वत्र समानैव । भयादपि च पराशयानुवर्त्तनार्थं भक्ष्यमाणमीप्सितमेव विषम्।एवं दर्शिक्रियया वा चोराः ।ईप्सितादन्यत्रैवेप्सितं नानीप्सितं वृक्षमूलादि तदपि पूर्वमनभिसंहितमपि तदानीमुपसर्पणवेलायामीप्सितमेवान्यथोपसर्पणक्रियाविषयभावतामेव नोपेयात् । तमग्रहणं च प्रत्याख्यातमिति भ्रमापनोदार्थं ग्रामगमने ऽप्यन्तरा वृक्षमूलोपसर्पणमभिसन्निहितमिति सिद्ध्यतीप्सितमात्रस्य कर्मसंज्ञा पूर्वेणैवासंज्ञान्तरपूर्वकमपि कर्मेप्सितमित्येव सामान्यलक्षणेन सिद्धम्।ग्राममभिशेते नगरमुपतिष्ठतीत्यादावुपसर्गसम्बन्धे सकर्मकत्वा-

धातूनां परत्वात्कर्मसंज्ञायामधिकरणं कर्म गेहं प्रविशतीत्युक्तम्। अनुपसर्गत्वे अधिकरणसंज्ञा भवति। अक्षान् दीव्यतीति,विजिगीषोपसर्जनपातनवचने दीव्यतावीप्सिततमत्वेनाक्षाणां, क्रियार्थत्वे त्वक्षैर्दीव्यतीति करणता ऽक्षाणामित्युभयसिद्धौ समावेशार्थे कर्मसंज्ञायामवकाशो मनसा दीव्यतीत्यादि मनसादेव इति कर्मण्यण्प्रत्ययः। करणसंज्ञायां तु देवनो ऽक्ष इति करणे ल्युडिति परत्वाद् द्वितीयां बाधित्वा तृतीयैव स्यात्।मनसस्तृतीयाया इत्यलुकि करणसंज्ञाया अवकाशो मनसादेव इत्येतदेवोदाहरणम्। सूत्रारम्भे तु चकारसहिते संज्ञाद्वयसमावेशान्यथानुपपत्त्या द्वितीया तृतीयापि हि सिध्यति। एवं क्रुधद्रुहोरप्यनुपसर्गयोः सम्प्रदानता, उपसृष्टयोस्तु परत्वात्कर्मतेत्येवंजातीयमेव कर्म प्रागत्र प्रतिपादितमस्माभिः पुनरपि स्मारितम् ॥७९॥

गतमेतत्। इदानीं चिन्त्यते इह कर्मद्वययोगे प्रधानमर्थमाश्रित्य प्रधाने लादिरुक्तः।द्वितीया तु प्रातिपदिकादिद्वयादप्युत्पद्यत इति तत्र गुणप्रधानभूतक्रियाद्वयविषयायामपि शक्तावेकस्यां लादिनोक्तायां परस्यत्यभिधानाय द्वितीया कस्मान्नोत्पद्यत इत्याशङ्क्याह ॥

> प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
> शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ ८० ॥

इहार्थानामेकवाक्योपात्तानां समन्वयो भवति।द्वयोः प्रधानयोःसमत्वात् मिथो ऽङ्गाङ्गिभावो नोपपद्यते नापि द्वयोर्गुणयोर्गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यादिति। गुणप्रधानभावेन तु समन्वयोपपत्तावेकवाक्यता भवतीत्याह। प्रधानेतरयोर्यत्रेति ॥ ८० ॥

तत्र प्रधानानुयायित्वाद् गुणानामप्रधानक्रियाविषयकर्मशक्त्यभिधाने द्रव्यस्य गुणस्य क्रियाप्यभिहितवत्प्रकाशत इति प्रधानानुरोधं सामान्येनोक्तं व्याख्यातुमाह।

> प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
> यदा गुणे तदा तद्वदनुक्ता ऽपि प्रकाशते ॥ ८१ ॥

प्रधानक्रियावाचिनो धातोरुत्पन्नेन प्रत्ययेन लादिना यदा प्रधानक्रियाविषया कर्मशक्तिः प्रतीयते तदा गुणक्रियाविषया

साक्षादनुक्ताऽपि तद्धर्मप्रकाशत इतीयमनुक्तिः व्याख्याता ॥ ८१ ॥

अत्रोदाहरणमाह ॥

पचावनुक्तं यत्कर्म क्त्वान्ते भावाभिधायिनि ।
भुजौ शक्त्यन्तरे प्युक्ते तत्तद्धर्मः प्रकाशते ॥ ८२ ॥

पक्त्वौदनो भुज्यत इत्युदाहरणम् । अत्र, क्त्वाप्रत्ययस्य तुमर्थग्रहणानुवृत्त्या भाष्यकारमतेन भावे विधानम् । वार्त्तिककारो क्त्वा च तुमुनः समानाधिकरणा इति यथावकाशं शकधृषेत्यादि विधीयमानात्तुमुन्प्रत्ययादनुप्रयोगधातुना समानाभिधेया णमुलादयः प्रत्यया वक्तव्या इति वार्त्तिकार्थः । तेन स्वादुङ्कारं भुज्यते यवागूर्देवदत्तेनेति णमुला कर्माभिधानाद्यवागूशब्दात् द्वितीया न भवति। देवदत्तशब्दाच्च तृतीया भवति।अन्यथा कृत्त्वात्कर्तरि णमुलापत्तौ देवदत्ते तृतीया न स्यात् । अनेनैव न्यायेन पक्त्वौदनो भुज्यत इत्यत्रापि क्त्वाप्रत्ययो भुज्यत इत्यनुप्रयोगधातुना समानाभिधेय पक्कर्मण्येवोत्पद्यत इति नास्ति कस्याश्चिदपि शक्तेरनभिधानं इति वार्त्तिककारमतेनेदमुच्यते । भाष्यकारस्तु पक्त्वौदनं गम्यते ग्राम इत्यत्रानेन न्यायेन द्वितीया न स्यादिति वार्त्तिकं व्याचष्टे।तुमर्थग्रहणानुवृत्त्या णमुलादीनां भावे विधानं गम्यते। तुमर्थो हि भावः। कृत्त्वात्कर्त्तरि सिद्धे क्त्वाप्रभृतीनां तुमर्थे इति वचनात् कर्त्तुरपकर्षो न वाच्यस्तुमुनोऽर्थो ऽनिर्द्दिष्ट इत्यनिर्द्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वस्याः प्रकृतेरर्थो भावः सिद्धः । एवं क्त्वान्ते पक्त्वेत्यस्मिन्भाववाचिनि पचिक्रियाविषयौदनस्य कर्मशक्तिरनुक्ता। भुजिक्रियाविषयायां कर्मशक्तौ लेनाभिहितायां तथैव तद्धर्मः तस्य प्रधानस्यैव धर्मः प्रत्यायितत्वलक्षणो यस्य तद्धर्मः प्रकाशत इति द्वितीया न भवत्योदनात्।पक्त्वौदनं भुङ्क्त इत्यत्र पचिक्रियापेक्षादेव देवदत्तात्कर्त्तुस्तृतीयापि न भवति । पक्त्वौदनं गम्यते ग्राम इत्यत्र तु गमिप्रत्ययेनौदनगता कर्मशक्तिर्नाभिहितेति भवति द्वितीया । यद्यपि च साधनैकार्थसमवेतायां सङ्ख्यायां भुज्यत इति विभक्तिरुत्पद्यते, तथापि पचिविषयकर्मोपाधिसङ्ख्यानभिधानात् भवेत् द्वितीयेति न्यायो ऽयमुद्घोष्यते।पक्त्वादिष्वपि हि विभक्त्यर्थेष्ववश्यं कर्मादयो गत्वा नापेक्षणीया इति ॥ ८२ ॥

उदाहरणान्तरमप्याह ।

इषेश्च गमिसंस्पर्शाद् ग्रामे यो लो विधीयते ।
तत्रेषिणैव निर्भोगः क्रियते गमिकर्मणः ॥ ८३ ॥

इष्यते ग्रामो गन्तुं इत्युदाहरणम्। अत्रेषरुभे कर्मणी गमेर्ग्राम एवेति ग्रामस्येषिविषयायां कर्मशक्तावभिहितायां गमिविषया ऽपि न-ष्टत्प्रकाशते।तत्र गमनार्थमेषणम्'तथा च क्रियायां क्रियार्थायामुपपदे तुमुनिति फलभूतावगमः प्रधानं नेषिरिति शङ्कायामुदाहरणान्तरमिद-म्।आख्यातपदवाच्ये ह्यर्थे ऽनियतत्वात् प्रधानता सर्वत्र।पक्त्वा भुज्यत इत्यत्र त्वार्थमपि प्राधान्यमस्ति । पाकस्य भोजनार्थत्वात्।गमिसंस्प र्शादिति।इषेर्द्रव्याभिसम्बन्धः क्रियान्तरमुखेनैव सर्वदा भवति।तदिह न दर्शनादिमुखेन ग्रामे इच्छा, अपि त्वेकवाक्योपात्तगमिद्वारेणेत्य-र्थः । निर्भोगश्चैवेणमाख्यानमिति यावत् । इषिणै वेति। इषिप्रत्ययेण लकारेण कर्मणि विहितेन तन्त्रेण शक्तिद्वयमप्यभिदधाति प्रत्यय इति वाक्यपदीये निर्णीतम् ॥ ८३ ॥

मतान्तरेणाप्यत्रोपपत्तिमाह ।

पक्त्वा भुज्यत इत्यत्र केषां चिन्नव्यपेक्षते ।
ओदनं पचतिः सो ऽसावनुमानात्प्रतीयते ॥ ८४ ॥

केषाञ्चिन्मते ऽत्र वाक्ये पचिक्रियौदनं नापेक्षते।प्रथमान्तस्यौ-दनस्य पक्त्वेति सम्बन्धाभावात् । भुज्यते इत्यनेनैव तु सम्बन्धो भवत्योदनस्येत्येकैव कर्मशक्तिः सा चाभिहितेति केदमुपतिष्ठ ते प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत्प्रकाशत इति ॥ यदि तर्हि पचिनौदनस्यासम्बन्धः पक्त्वान्यत् किञ्चिदोदनो भुज्यत इत्यर्थः स्यात् । तथा च विवक्षितमोदनपाकस्य भुज्यङ्गत्वं न प्रती-येत इत्याशङ्क्याह । सो ऽसावनुमानात्प्रतीयते इति । स इति परामृ-ष्टस्यौदनबुध्या साक्षात् कृतस्यासाविति प्रत्यक्षानुकारेण प्रतिनिर्दे-शः।साक्षात्पचिसमन्वययोग्यौदनः सामर्थ्यात्पचेरर्थापेक्षणीयत्वेन प्रतीयते। किं सामर्थ्यमिति चेत् एकवाक्यत्वमिति ब्रूमः।श्रुतसम्बन्धो ह्यश्रुतसम्बन्धपरिकल्पनाल्लघुः । एतच्च सत्येन गुणप्रधानभावेनान्य-थेति पूर्वोक्त एव न्यायो ऽत्राश्रयणीय इति पूर्वोक्तमेव न्याय्यम् । अत एवान्यमतत्वेनास्योपन्यासः । किल भूमिः पाकमपेक्षत इति स-

न्निहितेनैवाकाङ्क्षा पूरयितव्या। पाकस्य भुज्यपेक्षया पूर्वकालस्येति गुणप्रधानभावोपपत्तावेकवाक्यतोपपत्तिः ॥ ८४ ॥

न केवलं कर्मण्ययं कारकविषयो न्यायः यावत्कारकान्तरेऽपीति व्याप्त्यर्थमुदाहरणान्तरमाह ॥

तथाऽभिनिविशौ कर्म यत्तिङन्तेऽभिधीयते ।
क्त्वान्तेऽधिकरणत्वेऽपि न तत्रेच्छन्ति सप्तमीम् ॥ ८५ ॥

भुक्त्वा नगरमभिनिविशन इत्यत्राभिनिविशश्चेति नगरस्याभिनिविशेराधारस्य कर्मसंज्ञायां तिङन्ते ऽभिनिविश्यत इत्यत्र प्रधानभूते विषये ऽभिहिता कर्मशक्तिः। भुक्त्वेति क्त्वान्तविषये ऽधिकरणशक्तिरपि गुणत्वात् स्वकार्यं सप्तमीविभक्तिलक्षणं न प्रयुङ्क्ते। सप्तम्या चात्र प्रधानक्रियाविषया कर्मशक्तिर्न प्रतीयत इति प्रधानोपरोधो गुणेन कृतः स्यात्। न चैष न्यायः प्रधानानुयायित्वाद् गुणानां प्रधानविरोधिनि कार्ये उदासते एव॥प्राधान्यं च सर्वत्र तिङन्तार्थस्य शाब्दव्यवहारविवक्षितस्य वाक्यार्थभूतस्य। अनेनैव न्यायेन नगरे ऽभिनिविश्य भुङ्क्ते इत्यत्र भुज्याश्रयेणाधिकरणत्वेन नगरस्याभिनिविशिकर्मत्वमापाद्यते।गतमेतत्। इह कथं कर्मत्वं गुडं भक्षयतीति गुडो ऽभिनिर्वृत्तः, भक्षणक्रियाकृतं न कंचन विशेषमाकाङ्क्षतीति तथेप्सितम्। अपि तु भक्षणक्रियाया आश्रयविशेषदर्शनार्थमुपादीयत इति क्रियार्थमेतत्। द्रव्यसंस्कारार्था क्रिया दन्तावचूर्णनादिना लक्षणक्रियाफलत्वं अपि त्वगादिना रूपात्। एवं भावलक्षणस्य भक्षणस्य प्रीतिस्तृप्तिलक्षणा फलमिति नास्ति क्रियाकृतो ऽत्र कश्चनोत्पत्त्यादिविशेषः। एतदुक्तं वार्त्तिके। ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गात् क्रियेप्सितत्वादिति। निर्वृत्तस्य निर्वर्त्यकर्मतां प्रतिक्षिपति। उपलक्षणं चैतत्। विकाराद्यभावात् कर्मान्तरतापि नास्ति। निराकाङ्क्षस्य चेत्यर्थः। कारकं च, इति क्रियासिद्धौ निमित्तभावमाह। लक्षणक्रियानिष्पत्त्यर्थं गुडस्योपादानात्। अत एव भक्षणाय गुड इति क्रियासन्दर्शनादिभिराप्यमानत्वादीप्सितं कर्म न तु॥ द्रव्यभक्षणमात्रं हि गुडस्येप्सितं न तु भक्षणप्रत्याख्यानेनान्यस्तत्कृतो विशेषः।अत्र वार्त्तिकपरिहार उक्तः, न वाभयोरीप्सितत्वादिति॥८५॥

अथ कथं गुडादेरीप्सितत्वमित्येतद्व्याख्यातुमाह ॥

यन्निवृत्ताश्रयं कर्म प्राप्तेरप्रचितं पुनः।
भक्ष्यादिविषयापत्त्या भिद्यमानं तदीप्सितम् ॥ ८६ ॥

निवृत्तो निष्पन्नो ऽत एव निराकाङ्क्षः आश्रयो गुडादिद्रव्यं यस्य कर्मणः कर्मशक्तेरिति निर्वर्त्यकर्मताव्युदासः।विकारादीनामाकाङ्क्षणा च विकार्यता ऽपि व्युदस्ता।प्राप्तेरप्रचितमिति। प्राप्तभक्षणक्रियासम्बन्धाद्यो ऽपि प्रचयापचययोः विशेषः तेनाप्ययुक्तमप्रचितमिति प्राप्यकर्मता व्युदस्ता। पूर्वपक्षे आद्येन हि कारिकार्धेन पूर्वपक्षवार्त्तिकार्थः संगृहीतः। द्वितीयेनार्धेनोत्तरवार्त्तिकव्याख्यानम्। भक्षिभुज्यादिक्रियाविषयीभावापत्त्या भिद्यमानं विशेष्यमाणं गुडादीप्सितं प्राप्यमेतत् कर्मस्वरूपम्। तथा हि, न भक्षणादिक्रियैवात्रेप्सिता।एवं लोष्टमपि भक्षयित्वा कृती भवेत्। नापि गुडः क्रियान्तरत्वेनेप्सितः, अपि तु भक्षणाश्रयत्वेनेत्युभयभावमाश्रयाश्रयिभावेन समुदितमीप्सितम्। यस्य हि गुडभक्षणमीप्सितं तस्य गुडो ऽपीप्सितः।भक्षणक्रियासम्बन्ध एव चात्र क्रियाकृतो विशेषः प्राप्यकर्मणो विशेषान्तरस्यानापेक्षणात्। अन्यथा निर्वर्त्यविकार्याभ्यां को विशेषः स्यात्। भक्षणस्य प्रीत्यतिशयो ऽत्र फलम्।स च गुडस्य तत्सम्बन्धे सति घटत इत्ययमेव विशेषः।क्रियाकृतश्चानुरूपफलप्रभवयोग्यता हि संस्कारः।ननु च तृप्तिलक्षणायां प्राप्तौ गुडो ऽयमिति कथं, प्रधानकारकरूपं कर्मत्वं अस्य।उच्यते।तृप्तौ जातायां गुडस्यासत्य इतिकर्त्तव्यताविशेषः यद्भक्षिक्रियाविषयीकरणं तां प्रति प्राधान्यं, नान्यथा तृप्तिः सम्पादयितुं शक्या।तदस्य तृप्त्यङ्गभावे ऽयं प्राथमकल्पिको व्यापारः। तद्यथा गुरुः सेव्यमानो धर्मोत्पत्तावङ्गतामेति तच्चास्य परिचरणक्रियाविषयभावगमनमन्तरेण न घटनामेतीति गुरुं शुश्रूषत इति प्राधान्योपपत्तिः।तदेवमत्र पूर्वपक्षे द्रव्येप्सासाहित्येन क्रियामात्रस्येप्सा दर्शिता। यदि तर्हि क्रियाविषयभावमात्रगमनेन कर्मतासिद्धिः। तथा सति सर्वत्र क्रियामात्रे ऽपि सकर्मकता स्यात्।ततश्चाकर्मकव्यपदेशाः शास्त्रे विरुध्येरन्।न च विरुध्यन्ते।न ह्यवश्यं क्रियामात्रे बाह्यविषयसम्भवः। का चिद्धि क्रिया कर्त्तर्येव विश्राम्यति। न तु बाह्यभावमपेक्षते। तद्यथा आस्ते शेते इत्यादि। द्व्यर्थः पचिरिति वचनात् सर्वधातुविषये ऽपि भावनालक्षणे व्यापारे धात्वर्थे एकत्र भावनापर्य्यवसानात् स एव भाव्यः।आसनं करोति शयनं करोतीति। अत एवात्र बाह्यभावविषयः प्रश्नो नास्ति किमिति।यत्र बाह्य-

जानिष्ठा भावना तत्र तेन बाह्येन भाव्येन कर्मणा सकर्मकत्वम्। नात्र च किमित्यनुयुज्यते। पचति, किमोदनमित्यादि। धात्वर्थस्य हि सर्वत्राव्यभिचारात्, भाव्यत्वे ऽपि न तेन सकर्मकाकर्मकविभागः शक्यक्रियः। कालादिकर्मणेव बाह्यं कर्म । अत एव बाह्यनिष्ठायां भावनायां धात्वर्थः करणमिति न्यायविदः । तेनौदनं भावयतीति वाक्यार्थः । यद्यपीह दर्शने भावना धात्वर्थ एव, तथापि फलपर्यन्ताऽसौ कर्तृव्यापाररूपा दीर्घतरावयवक्रियामात्रात् पृथग्व्यवहारसंज्ञा । एवं सर्वत्र योज्यम् ॥ ८६ ॥

कश्चित्पुनर्वस्तुतो बाह्यकर्मसद्भावे ऽप्यकर्मकव्यपदेशो भवतीत्याह ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणो ऽकर्मिका क्रिया ॥ ८७ ॥

प्रसिद्धादर्थादन्यत्रार्थे यदा धातुर्वर्तते तदा ऽस्य कर्मसमन्वयरहिता क्रिया वाच्या प्रतीयते । तद्यथा वहतिर्देशान्तरप्रापणवचनः सकर्मकः प्रसिद्धो, भारं वहतीति, स यदा नदी वहतीत्यत्र स्यन्दनक्रियामभिधत्ते तदा स्यन्दनस्य जलस्रुतिरूपस्य नद्यात्मभूतत्वात् किमित्यनुयोगाभावादकर्मक इति धात्वर्थमात्रोपेक्षये ऽयं भावना, वहति स्यन्दनं करोतीति । यदापि धात्वर्थक्रियायां कर्मान्तर्भवति तदा ऽप्यकर्मकत्वम्। तद्यथा जीवति प्राणान् धारयतीति ह्यत्रार्थे इति प्राणलक्षणस्य कर्मणो ऽन्तर्भावः। एवं म्रियते, प्राणान् जहातीति। तथा ऽस्ति, आत्मानं बिभर्तीति । यत्राप्यव्यभिचारेण प्रतिनियतस्य कर्मणः प्रतीतिः, तत्राप्यकर्मका क्रियेति व्यवहारः । तद्यथा वर्षतीति । अत्र हि यथा वर्षणक्रियायामव्यभिचारादिन्द्रः कर्ता प्रतीयते तथा कर्मापि जललक्षणमिति प्रसिद्धेः अकर्मकत्वाश्रयः कर्तरि क्त उदाहृतः, वृष्टो देव इति। यत्त्वप्रसिद्धं कर्म तेन सकर्मकत्वमेवास्याः क्रियाया रुधिरं वर्षतीति लाजान्वर्षति। उपलो वृष्ट इति कर्मणि क्तः। विद्यमानो ऽपि वा यत्र कर्मसम्बन्धः क्रियामात्रप्रतिपादनतात्पर्यान्न विवक्ष्यते तत्राप्यकर्मकत्वं सम्भवति। तद्यथा नेह पच्यते, नेह भुज्यत इति। क्रियाप्रतिषेधतात्पर्यात्भावे लकारः । दीक्षितो न ददाति, न पचति, न जुहोतीति । कर्मणो विवक्षा ऽत्र किमिति नापेक्ष्यते । क्रियाप्रतिषेधे तात्पर्यात् ॥ ८७ ॥

तदेवं चतुर्भिरपि प्रकारैरकर्मकव्यपदेशाः शास्त्रे भवन्ति । ए-षामन्ये ऽपि प्रकाराः सम्भवन्तीत्याह ।

भेदा य एते चत्वारः सामान्येन प्रदर्शिताः ।
ते निमित्तादिभेदेन भिद्यन्ते बहुधा पुनः ॥ ८८ ॥

य एते कर्मण्यपि धातूनामकर्मकत्वनिबन्धनभूता भेदाश्चत्वारो विहिताः ते निमित्तादिभेदेनानेकप्रकारा जायन्ते। निमित्तं सहाय उ-पसर्गादिः । आदिशब्देन कालादयः । तद्यथा चरतिः देशान्तरगमनव-चनः सकर्मक उदोर्ध्वगतिवृत्तिलक्षणे ऽर्थान्तरे प्रयुक्तो ऽकर्मको निमि-त्तस्य शब्दान्तरप्रयोगस्य सामर्थ्याद्भवति। बाष्प उच्चरति धूम उच्च-रतीति। उच्छब्दवशाद्धातुरयमूर्ध्वप्रवृत्तावकर्मकः । आदिग्रहणात्क-चिदात्मनेपदप्रयोगादकर्मकत्वाभिव्यक्तिः । उपासत इति। आसत इत्य-र्थः। यावद्भुक्तमुपतिष्ठते, भोजनकालं यावदुदीक्षत इत्यर्थः। अकर्मका-च्चेत्यात्मनेपदम्। सर्पिषो जानीते मधुनो जानीत इति। तेनोपायेन प्रव-र्तत इति ज्ञानपूर्विकायां प्रवृत्तौ अत्र धातुर्वर्तते। अपह्नवे ज्ञ इत्यनुवृत्ता-वकर्मकाच्चेत्यात्मनेपदम्। वाक्यसामर्थ्यात्क्वाचिदकर्मकत्वाभिव्यक्तिः। तद्यथा नदी वहतीति । नदीलक्षणकर्तृविशेषसामर्थ्यात् स्यन्दनवच-नतायामकर्मकत्वम् । एवं वायुर्वहतीति । तथा कर्मकर्तृविषयकर्मणः कर्तृत्वप्रतीतिवशादेकदेशवचनतायान्धातोरकर्मकत्वं, पच्यते ओदनः स्वयमेवेति । एवं च कृत्वा ऽकर्मकव्यपदेशनिमित्तं शास्त्रमत्र विषये प्रवर्तते मुचो ऽकर्मकस्य गुणो वेति। मोक्ष्यते वत्सः स्वयमेवेति। एव-मर्थान्तरे वृत्तेर्धातोरकर्मकत्वनिबन्धनं निमित्तादिभेदेन भिद्यते । धात्वर्थेनोपसंग्रहे ऽपि निमित्तादिभेदेन भेदः । तद्यथा क्वचित्क्रिया-स्वरूपसामर्थ्यलक्षणान्निमित्तात्तिरोहितभेदत्वेन कर्मणो ऽन्तर्भावे ऽक-र्मकव्यपदेशो जीवत्यादौ। क्वचिदन्यापेक्षयामव्यवस्थया निर्धार्यमाणक-र्मभेदस्याप्यन्तर्भावः। तद्यथा पुत्रीयतौ पुत्रकर्मणः । परमार्थतो ऽत्र पुत्रलक्षणं कर्म क्रियाशरीरानुप्रविष्टं भेदेनासत्त्वेन प्रक्रियायामन्या-पेक्षयानिमित्तमाश्रीयते। तथा च वक्ष्यति। पुत्रीयतौ न पुत्रो ऽस्ति विशेषे-च्छा तु तादृशी । विनैव पुत्रानुगमाद्पुत्रे व्यवतिष्ठत इति । क्वचित्पु-त्रोपमा न कर्मान्तर्भूतम् । उपकार्यकर्मणा तु सकर्मकत्वम् । पुत्रीयति-च्छात्रमिति। मुण्डयति माणवकमिति । सामान्यकर्मान्तर्भूतं, विशेषक-

मेणा तु सकर्मकत्वम्।एवं मिश्रयति तिलानित्यादौ। वाष्पायते धूमायते रोमन्थायत इत्यादौ विशेषकर्मण एव निर्ज्ञातरूपस्यान्तर्भावः।पचेः पार्थिवं भिदेश्च सावयवं कर्म प्रसिद्धं, न त्वन्तर्भूतम्।तस्य स्वशब्देनापि वचनात्।पचति पाक्यं, भिनत्ति भेद्यमिति। अन्तर्भावे तु स्वशब्देन निर्देशो न स्यात् । न च भवति जीवति प्राणानिति, जलं वर्षतीति तु भवति। अन्तर्भावाच्च कर्मणो नमस्यति देवानित्यत्र नमःशब्दयोगे चतुर्थी न भवति। तथा वार्त्तिकान्तररीत्या चोदयित्वा प्रकृत्यन्तरत्वात्सिद्धमिति परिहृतं । अनेनैवाशयेन धात्वन्तरमेव नमस्यतिशब्दः, पूजार्थो न सम्भवत्येवात्र नमः शब्दो यावत् कल्पनाद्वारेणेत्येवं व्युत्पाद्यत इत्यर्थः । भाष्यकारस्त्वस्यान्वाख्यानवेलायां नमसः प्रकृतित्वेन परिग्रहात् सम्भवं मन्यमानः पुनश्चोदयति।ननु नमस्यतिशब्दे नमः शब्दो ऽस्ति तेन योगे चतुर्थी प्राप्नोतीति। परिहरति। वार्थवतो नमः शब्दस्य ग्रहणं, न च नमस्यति शब्दे नमः शब्दो ऽर्थवानिति। श्रुत्यानुवृत्तिरियं। अत्र चोपसर्जनार्थः प्रत्ययार्थे गुणीभूत इति नमो देवेभ्य इत्यत्र प्रधानभूतनमःशब्दयोगे सावकाशत्वात् चतुर्थी न भवतीति भाष्यार्थः। प्रसिद्धेरपि यत्राकर्मकत्वं तत्राप्यवान्तरो भेदो देशकालवशात् जायते।तद्यथा,दक्षिणापथे पूर्वाह्णे पच्यतामित्युक्ते यवागूकर्मकः पाको ऽवगम्यते। अपराह्णे पुनरोदनसाधनम्।मांसभूयिष्ठे देशे मांससाधनः पाकः प्रसिद्धः। क्रियास्वरूपसामर्थ्यात् क्व चित्प्रसिद्धिनियतं कर्म, वर्षति, जलं प्रतीयते। कर्तृसामर्थ्यादपि कर्म प्रसिद्धं। यथा दुर्जनः करोतीत्युक्ते उपघातलक्षणं कर्म गम्यते। सज्जनः करोतीति उपकारो ऽवगम्यते।गोष्ठीभेदेन देशभेदेन चापरिमिता प्रसिद्धिरनुगन्तव्या यदुदाह्रियते । अविवक्षापि क्व चित्सादृश्यमात्रप्रतिपादनपरतया वाक्यस्य कर्मणो दृश्यते। तद्यथा ऽनुवदते कठः कलापस्येत्यत्र कठकलापयोर्भाषणसादृश्यं प्रतिपाद्यमिति कर्म न विवक्षितम्।तथा कर्मविशेषप्रतिपादने देवदत्तः किं करोतीति प्रश्ने पचति ब्रवीति इति कर्मसम्बन्धो न विवक्ष्यते। क्रियाप्रबन्धाव्युपरमप्रतिपादने ऽपि न विवक्ष्यते कर्म, पचत्येव ददात्येवेति यथायोगमनुसरणीयं प्रयोगजातमिष्टम् ॥ ८८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशे कर्माधिकारः

इह स्वादिविधिवाक्ये यथा ऽऽनुपूर्व्या विभक्तिप्रत्ययाः सन्निविष्टाः तदनुसारेण तदर्थानां कारकाणां विचारः । तत्र द्वितीयार्थे कर्मणि विचारिते तृतीयार्थः करणं पूर्वं विचार्यते । कर्त्ता तु षष्ठ्या अप्यर्थ इति साधारणत्वात् । न त्वेतस्य स्वं निरूपयिष्यते।तत्र क्रियासंसिद्धौ सामग्र्याः साधनत्वात्कोऽतिशयः करणस्य येन तत्साधकतमं स्यादित्याशङ्क्य लक्षणमाह ॥

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥ ८९ ॥

सन्निपत्योपकारिषु सर्वेष्वपि साधनेषु यद्व्यापारानन्तरभाविनी क्रिया लक्ष्यते तदेव सातिशयं साधकतमं करणम् । तद्यथा छेदने दात्रमनुप्रविश्य छेद्यावयवविभागं साधयत् प्रकृष्टामुपकारकतामासाधयत्यधिकरणादिकारकान्तरेभ्यः । एवं दर्शने चक्षुः प्रणिधीयमानं, इत्युदाहर्तव्यं । साधनव्यवहारस्य च बाह्यवस्तुसमाश्रयत्वाद्विवक्ष्यत इत्याह । विवक्षोपारूढा एव ह्येता व्याकरणे ऽङ्गं न बाह्यवस्तुसत्ये इत्यर्थः । तथा च बलेन आलोकेन पश्यतीत्यादावनादृत्य दात्रादिकं बलादि साधकतमत्वेन विवक्षितं करणम्।तत्र साधनान्तराणां वास्तवेऽप्याधारादिभावे बुध्या ऽन्यथात्वं, यथा स्थाल्या पच्यत इत्यादौ । करणस्य तु रूपमेव विवक्षाधीनमिति । साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धन इत्युक्ते ऽपि विवक्ष्यते इति पुनरुक्तम् ॥ ८९ ॥

एतदेवाह ॥

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ ९० ॥

इदमेव नियतजातीयं उक्तं करणमित्येवं निरूपयितुं न शक्यते । यस्मान्न वस्तु व्यवस्थितं करणतयाभीष्टमस्ति । प्रक्षाताधिकरणभावा ऽपि हि स्थाली तनुतरकपालत्वाच्छीघ्रतरपाककार्यसाधनतया ऽनुभवत्येव वैवक्षिकं करणभावम्। तथा हि प्रयोगः करणतृतीयान्तस्थाल्या पच्यते इति लोके प्रसिद्धः । आर्द्रेन्धनापेक्ष-

या हि सुसन्निवेशा स्थाली क्रियासिद्धौ प्रत्यासीदति ॥ ९० ॥

यतश्च क्रियासिद्धौ प्रकृष्टोपकारकं करणम् । अतस्तत्र कर्तॄणां संरम्भ इत्याह ॥

करणेषु तु संस्कारमारभन्ते पुनः पुनः ।
विनियोगविशेषांश्च प्रधानस्य प्रसिद्धये ॥ ९१ ॥

प्रधानस्य क्रियालक्षणस्यार्थस्य प्रसिद्धये प्रकृष्टोपकारकस्य करणस्यैव फलार्थिनः संस्कारमुत्तेजनादिकमसकृद्व्यापारेण चारभन्ते। उपायद्वारेणोपेये प्रवृत्तेऽत्र काष्ठानामुपधानं संस्कारः । पुनःपुनश्चोपपत्थानं विनियोगः। दात्रस्य तीक्ष्णताधानं संस्कारः । उद्यमाननिपतने विनियोगः । चक्षुषोऽञ्जनादिः संस्कारः, प्रणिधानं विनियोगः, इत्याद्यन्यत्रापि यथायोगं वक्तव्यम् ॥ ९१ ॥

इह कथमुपकारप्रकर्षो दीपिकादिकैः यातीति। बहूना मेकःकरणं विवक्ष्यत इत्याह ॥

स्वकक्ष्यासु प्रकर्षश्च करणानां न विद्यते ।
आश्रितातिशयत्वं तु परतस्तत्र लक्षणम् ॥ ९२ ॥

स्वस्यां कक्ष्यायां करणभावावस्थायां सजातीयापेक्षः प्रकर्षोऽत्र तमप्प्रत्ययवाच्यो नाश्रीयते, अपि तु साधनसामान्यस्यानुगतस्य कारकान्तरापेक्ष एव प्रकर्षस्तमप्प्रत्ययवाच्यः कारणत्वमावेदयते । साधकशब्दाद्धि कारकसामान्यवाचिनः तमबुत्पन्नस्तत एव प्रकर्षं गमयति । परत इति साधनान्तरात् । एवं कारणजात्यपेक्षस्यातिशयस्यानाश्रयणादश्वादीनां सर्वेषामपि साधनान्तरापेक्षया प्रतिलब्धप्रकर्षाणां करणत्वमविरुद्धम् । तथा चाश्वो देशान्तरप्राप्तौ कर्त्राद्यपेक्षया प्रकृष्टोपकारकः पन्था अपि साधुश्चोरद्युपद्रवरहितः। दीपिकाऽपि तमः संहतिमालोकेन निर्भर्त्सयन्ती प्रतिपद्यते साधनान्तरेभ्योऽतिशयेन ॥ ९२ ॥

ननु च कर्तृविनियोगोत्तरकालं साधनानां प्रवृत्तेस्तदपेक्षया कर्तुरेव साधकतमत्वं न्याय्यमित्याह ॥

स्वातन्त्र्ये ऽपि प्रयोक्तारमारादेवोपकुर्वते ।

करणेन हि सर्वेषां व्यापारो व्यवधीयते ॥ ९२ ॥

यद्व्यापारानन्तरं क्रियानिष्पत्तिः तत्करणमित्युक्ते कर्तुः करणत्वप्रसङ्गः । न हि कर्तृव्यापारानन्तरमेव क्रियासिद्धिः । साधनविनियोगो हि कर्तृव्यापारः। विनियुक्तेषु तु साधनेषु स्वव्यापाराविष्टेषु सत्सु क्रिया निष्पद्यते । तत्र चापि करणादीनामिव कर्त्तरि व्यापारो विप्रकृष्यते क्रियासिद्धौ प्रकृष्टतरप्रयोगाभावात् । पारतन्त्र्यायोगेऽपि साधनान्तराणां प्रयोक्तारः कर्त्तारः विनियुक्तसाधनान्तरव्यापारव्यवधानेन क्रियां दूरादेव साधयन्ति । करणव्यापारसमनन्तरमेव तु क्रियासिद्धिः ॥ ९२ ॥

अथ वा कर्त्रा सहातिशयचिन्ता सम्भवतीत्याह ।

क्रियासिद्धौ प्रकर्षो वा न्यग्भावस्त्वेव कर्त्तरि ।
सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकृष्यते ॥ ९३ ॥

इह क्रियासिद्धिविषये साधनान्तरेभ्योऽतिशयः करणस्य विवक्षितः । यदा च निवृत्तानि गृहीतव्यापाराणि कारकाणि तदा क्रियासिद्धिर्विषयीभवति । कर्तृविनियोगे त्वपेक्षिते कर्त्तरि न्यग्भवति । साधनान्यनाधिष्ठव्यापाराणि स्वातन्त्र्यनिबन्धनसामान्यभूतं साधनव्यपदेशादिव नासादयन्तीति कुतः तदपेक्षया कर्तुरतिशयः स्यात् । तदाह । सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकृष्यत इति । यस्मिन्सौ सामान्यं साधनं तत्सिद्धौ निष्पत्तौ सत्यां प्रकर्षमासादयति । निष्पत्तिश्च तस्य कर्तृविनियोगादुत्तरकालं स्वव्यापारावेशे सति। तथा च तस्यां दशायामतिशयश्चिन्त्यमानोऽधिकरणादेस्तुल्यकक्ष्यात् करणस्यैवावतिष्ठते । ननु कर्तुः सद्भिः स्वामाप्राक् प्रवृत्तिः। स्वतन्त्रो न नृपैः सह स्पर्धां धत्ते सजातीयापेक्षो हि प्रकर्षः कर्त्ता तु विजातीय एव, कारकान्तराणां स्वातन्त्र्यपारतन्त्र्यरूपत्वात्। एवं च कृत्वा कर्त्तरि पराधीनस्यापि करणस्य साधनत्वातिशयः कारकान्तरापेक्षो युज्यते भिन्नविषयत्वादिति कथमस्वाधीनं प्रकर्षवत् साधनं स्यादिति न चोदनीयम् ॥ ९३ ॥

यदि तर्हि कर्तुः करणस्य च रूपविप्रकर्षः । कथमिदानीं करणस्यापि कर्तृत्वं असिश्छिनत्तीत्यादावित्याशङ्क्याह ।

अस्यादीनां तु कर्तृत्वे तैक्ष्ण्यादि करणं विदुः ।
तैक्ष्ण्यादीनां स्वतन्त्रत्वे द्वेधात्मा व्यवतिष्ठते ॥ ९४ ॥

यदा छिदिं प्रति सुतीक्ष्णधारत्वात् कर्तृविनियोगातिरस्कारेणासिः स्वातन्त्र्येण विवक्ष्यते तदा सौकर्यमेव न भवति अपि तु यदनन्तरभाविनी क्रिया तस्यैव करणत्वं तैक्ष्ण्यगौरवकाठिन्यसंस्थानादेः । तस्यापि कर्तृत्वविवक्षायां विवक्षाप्रापितरूपभेदाय करणभावः। तथा हि तैक्ष्ण्यं छिनत्ति स्वसामर्थ्येनेति शब्दभेदोपाहितरूपभेदादेकमपि तैक्ष्ण्यं भेदेनैव कर्तृकरणते प्रतिपद्यते । स्वाधीनत्वेनाश्रितमात्मा कर्त्ता साधकतमत्वेनाश्रितः करणमिति हि व्याख्याने क्रियायाः करणाविनाभावात् करणान्तरव्यावृत्तिपरेयं चोदना । तैक्ष्ण्यमेव छिदौ साधकतमं नान्यदिति तस्यातिशयपरिपोषे तात्पर्यं, तदेवं कर्तृकरणं भिन्न एव ॥ ९४ ॥

यद्येवमेकदा प्राप्तौ संज्ञयोः करणं परमिति विप्रतिषेधः कथमुपन्यस्त इत्याह ।

आत्मभेदे ऽपि सत्येवमेको ऽर्थः प्राप्यते यदा ।
तदाश्रयत्वाद्भेदे ऽपि कर्तृत्वं बाधकं ततः ॥ ९५ ॥

विवक्षाप्रापिते सत्यपि कर्तृकरणतया रूपभेदे स एको ऽर्थः शक्त्याधारस्थितो न प्रच्यवलेपादिरित्यर्थः। अत्रोपपत्तिः।तदाश्रयत्वादिति । कल्पनाश्रयत्वात् । काल्पनिको हि भेदो न वास्तवमेकत्वं सहत इत्यर्थः । यद्वा तदाश्रयत्वादिति तदेकार्थाधारत्वात् । कर्तृकरणसंज्ञाया इति केचिद् व्याचक्षते । शक्तिभेदे ऽपि तदाधारद्रव्यैकत्वाविवेकः संज्ञयोर्विप्रतिषेधविषय उपपद्यते । संज्ञा हि शक्तिविशिष्टस्य द्रव्यस्यैव । तदेवं वस्तुविद्यमानमेकत्वं यदा विवक्षोपादत्ते तदैकविषयत्वे विप्रतिषेधे परत्वात् कर्तृसंज्ञा करणसंज्ञां बाधत इत्युदाहृतमसिः छिनत्तीति।अत्र हि साधकतमत्वविवक्षायां भाविस्वातन्त्र्यविवक्षासेरित्येकविषयत्वे ऽनुभयसंज्ञाप्रसङ्गे परत्वात् कर्तृसंज्ञा। साधकतमत्वे हि सत्यसेः स्वातन्त्र्यमारोप्यते।यथा धनुषा विध्यतीत्यपायभावे सत्येव साधकतमेन धनुषा तत्क्रियां प्रति प्रकृष्टोपकारकं करणमिति स्थितम् ॥ ९५ ॥

उपकारश्च भवताऽर्थेन क्रियते, न त्वविद्यमानेनेत्येतामाशङ्का-मप्यपाकरोति ॥

यथा च सन्निधानेन करणत्वं प्रतीयते ।
तथैवासन्निधानेऽपि क्रियासिद्धिः प्रतीयते ॥ ९६ ॥

दात्रादयः सन्निहिताः क्रियोपकारातिशयमापादयन्तः करणतया यथा प्रज्ञायन्ते, तथैव धनाभावेन मुक्त इत्यादावसन्निहितमपि धनं मुक्तिं साधयत् करणमेव प्रसिद्धम् ॥ ९६ ॥

अत्रैव सूत्रकारमतं संवादकमाह ॥

स्तोकस्य वाभिनिर्वृत्तेरनिवृत्तेश्च तस्य वा ।
प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते ॥ ९७ ॥

करणे च स्तोकाल्पेत्यत्रोदाहरणं, स्तोकेन मुक्त इति । अत्र सत्त्ववचनानामपि स्तोकादीनां धर्ममात्राभिधानतात्पर्येण प्रयोगादसत्त्ववचनता । तत्र धर्ममात्रं स्तोकलक्षणं सदसद्वा मुक्तिक्रियाया-मतिशयेनोपकारकं करणमित्युक्तम्। यस्मात् स्तोकं देयं वस्तु नो निष्पन्नं, न चान्यत्सम्भवति निष्किञ्चनत्वात्। अतो मुक्तप्रायत्वात् स्तोकं तद्देयं वस्तु नो विशिष्टमवसितं ततो मुक्तः । यदि च बहु देयं स्यात, न मुच्येतेतिस्तोकेनाभवता मुक्तः । एवमेकेन न विंशतिरेकान्नविंशति-रिति एकाभावो विंशतिनिषेधस्य करणम् ॥ ९७ ॥

तदेवं विवक्षाधीनस्य साधनव्यवहारस्य, यद्यत्साधकतमत्वेन विवक्ष्यते तत्तत्करणम्। तथा च ॥

धर्माणां तद्वता भेदादभेदाच्च विशिष्यते ।
क्रियाऽवधेरवच्छेदाविशेषाद्भिद्यते यथा ॥ ९८ ॥

आश्रितमात्रं धर्मशब्देनाह । तद्वता आश्रयेण । तथा हि, देवदत्तः काष्ठैः पचतीति इन्धनगतस्य तेजसस्तदभेदविवक्षया प्रयोगः। तथा च देवदत्तकर्तृकेन्धनकरणिका चेयं पचिक्रिया । यदा तु तेजो भेदेनेन्धनाद्विवक्ष्यते तदा एधाः पश्यन्ति तेजसेति तेजः करणिकेन्धनकर्तृका च पचिक्रिया । यदा चौष्ण्यं तेजसो भेदेन

क्रियासिद्धावुपयोगमविवक्ष्यते तदा तेजः पचत्यौष्ण्येनेति, भिद्यते साधनविशेषा क्रिया । तद्यथा ऽवधेर्ग्रामादेरवच्छेदविशेषाद्भेदविशेषा क्रिया भिद्यते विशेष्यते । ग्रामादागच्छति ग्रामस्य समीपादागच्छतीत्यादौ तदवस्थापि वाक्यार्थमित्यर्थः । सारण्यके ससीमके सस्थण्डिलके, ग्रामशब्दाभिधेये भेदेन ग्रामादागच्छतीति प्रयोगः । वाटपरिक्षिप्ते तु ग्रामशब्दाभिधेये सीमादीनां भेदविवक्षेति ग्रामस्य समीपादागच्छतीति भिद्यते ऽवधिः । तद्भेदाच्च क्रिया विशिष्यते । एवं चैव हि करणभेदाद्यपि यथाविवक्षमेव । तदेवं प्रधानं करणं तृतीयाव्युत्पत्त्यर्थेन स्फुटं घटादावभिधीयते । पचनमेधः, पचनं तेज , पचनं स्थाली, पचनं औष्ण्यमित्यादि यथाविवक्षमुदाहार्यं प्रयोगजातमिष्टम् ॥ ९८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे
साधनसमुद्देशे करणाधिकारः ।



तृतीयार्थे करणे विचारिते सम्प्रति तदर्थः कर्त्ता विचार्यते ॥ तस्य लक्षणं स्वतन्त्रः कर्त्तेति । स्व आत्मा तन्त्रं प्रधानमस्य । करणादीनां हि परः कर्त्तैव तन्त्रं प्रधानम् । क्रियासिद्धौ तेन प्रयोज्यत्वात् । कर्त्ता त्वनन्यप्रयोज्यः स्वतन्त्र इत्युच्यते । तत्र करणादीनामपि स्वव्यापारे स्वातन्त्र्यात् को ऽतिशयः कर्त्तुरित्याशङ्क्योपपादयति ॥

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्त्तनात् ॥ ९९ ॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात् ।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्त्तुरुच्यते ॥ १०० ॥

करणादिप्रवृत्तेः प्रागेवार्थितादेरन्यस्मान्निमित्तात्, न तु सहकारिभ्य एव सामर्थ्यमासादयति । फलकामो हि कर्त्ता करणादीन्युपार्जयते । तथा च पूर्वमेव शक्तिमान्स्वतन्त्रः । करणादीनां तु कर्तृविनियोगादेव स्वव्यापारे स्वातन्त्र्यं, तत्त्वन्यतः । अत एव कर्त्ता न्यग्भावमात्माधीनतामापादयति ॥ तदायत्तव्यापाराश्च कर्त्रा तु फलमर्थ्यमानेन स्वयं व्यापारावेशात् अतिशयवृत्तानि च करणादीनि निवर्त्त्यन्ते । कर्त्ता तु फलप्राप्तौ स्वयमेव निवर्त्तते । चोदितासम्भवे करणादीनां प्रतिनिधिरुक्तः । कर्त्तुः स नास्ति । कर्त्रन्तरं हि क्रियां निवर्त्तयता प्रतिनिहितं नोच्यते । तस्याप्यर्थिनः समर्थस्यापर्युदस्तस्याधिकारात् । प्रविवेके च कारकान्तराणामभावे, दृश्यते कर्त्तरि क्रिया, अस्ति भवति विद्यत इत्यादौ । यद्यप्यत्राधिकरणादयः सम्भवन्ति तथा ऽपि नान्तरीयकास्ते शब्दव्यापारादप्रतीयमानाः । तस्मादकर्तृकायां क्रियायां मानाभावात् सम्भूयकारिभ्यो विशिष्यते कर्त्ता । एतेन हेतुकलापेन कर्त्तुः करणापेक्षया क्रियासिद्धौ विप्रकृष्टोपकारकत्वे ऽपि स्वातन्त्र्यं प्राधान्यनिबन्धनमुच्यत इति तस्यैव कर्तृसंज्ञा न तु करणादेः स्वव्यापारे स्वतन्त्रस्यापीत्यर्थः । एतेन चेदं भाष्यं व्याख्यातं, "यत्सर्वेषु साधनेषु कर्त्ता प्रवर्त्तयिता भवतीति" । एतच्च भाष्यं गर्भीकृतनान्तरीयकार्थसहं संक्षिप्योक्तमिति गर्भीकृतार्थस्पष्टीकारेणात्र व्याख्यातम् । तथा हि तदधीनप्रवृत्तित्वादित्यनेन साक्षात्प्रवर्त्तकत्वं व्याख्यातम् । सामर्थ्याक्षिप्तं च न्यग्भावनादि नि-

र्दिष्टम्।तथा हि प्रयोक्त्रधीनत्वात्प्रवृत्तेर्स्वयंभावः करणादीनां तत्रा-र्थोक्तः। प्रवर्त्तना तु फलार्थमितिवत् प्रामाण्यप्रतिप्रवृत्तौ निवर्त्तनाख्या-क्षिप्ता। प्रवर्त्तयिता तावत्प्रवर्त्तन्य: प्रागभव इति तदपि व्याख्यातम्। असम्भवे च प्रवर्त्तयितुरेवाभाव इति प्रतिनिध्यभावः सामर्थ्योक्तो ऽभिकृतः साक्षादसमर्थस्य च क्वचिदनपेक्षणात्।अविवेके च दर्शनसाम-र्थ्यं लब्धं व्याख्यातमिति समस्यामिहितं भाष्यं च व्याख्यातम्॥१००॥

अचेतनविषये तर्ह्येवंविधधर्मकलापात् कर्तृता न प्राप्नोतीत्या-शङ्क्याह।

धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि।
कर्तुर्धर्मविवक्षायां शब्दात्कर्ता प्रतीयते॥ १०१॥

अभ्युदितैरुक्तैरेतैः प्रागन्यतः शक्तिलाभादिभिः प्रवर्तयितृ-त्वादिभिः प्रवर्त्तयितृत्वादिलक्षणैर्धर्मैः स्वभावैरुपलक्षितः कर्त्ता, इत्येवंलक्षणो नियमो ऽवश्यंभावः शब्दविषये समाश्रयणीयः। शब्देन यस्यैते धर्माः प्रत्याय्यन्ते स कर्ता बोद्धव्यः। न तु वस्तुविषयतया धर्माणामेषां सम्भवो ऽन्वेषणीयः। येनाचेतनविषये, अग्निर्दहति, एधाः पचन्ति, स्थाली पचतीत्यादौ, कूलं पतति नदी वहतीत्यादौ च कर्तृत्वं न स्यात्। एते धर्मा यदा कर्तृलक्षणाय विवक्ष्यन्ते शब्देन च यथाविवक्षं प्रत्याय्यन्ते तदा शब्दात् कर्ता सुप्रतिष्ठितलक्षणः प्र-तीयत इति करणमिव कर्ता ऽपि वैवक्षिकः प्रतिपादितः।एवं च कृत्वा चेतनेषूपचरितमपि न भवति कर्तृत्वम्। सर्वशास्त्रवृत्तित्वात्प्रयोगस्य मुख्यतासम्भवात्। व्याकरणे हि शब्दार्थो ऽर्थः। न च स्वार्थः ततश्च व्याकरणात् अर्थी कर्ता, तथायुक्तश्चेति लक्षणद्वयं चेतनाचेतनविषय-तया तत्प्रणीतं तेन कौशलमित्युक्तं भवति॥ १०१॥

यदा च विवक्षाधीनं स्वातन्त्र्यं तदेदमपि सिद्धम्भवतीत्याह।

एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते।
कर्मत्वं करणत्वं वा कर्तृत्वं चोपजायते॥ १०२॥

बुध्यात्मानमात्मनेत्येकस्यैवात्मनो विवक्षाप्रापितरूपभेदाद्धेतोः कारकत्रययोगो दृश्यते। स वास्तवैकाकारव्यवहारे न घटते। न ह्येकस्य वस्तुनो युगपद्भिन्नानेकरूपता शक्या ऽवस्थातुम्। न चामूर्त्तस्यात्मनः

शस्त्रादिव्यापारजन्यवधसम्भवविवक्षा तु शब्दनिबन्धना न विहन्यते। तत्र यथोर्हिंसुकुरवस्था प्रतिहासं नानात्वं तदनुसारेण विवक्षया भेदं परिकल्प्य शस्त्राद्युद्यमनानिपातनव्यापारं कुर्वाणो हन्तीति हि कर्तात्मैवात्र विषयभावापादितस्तथैव कर्मकर्तृकार्यातिशयविवक्षायां शस्त्रादिव्यापारनिरासं करणत्वमात्मनः । कर्मकरणे ह्यत्र भेदेन दृष्टे इति तन्निरासाय कर्मैवात्र तथोच्यते भेदेन। अत एव वार्त्तिके कर्मवद्भावो ऽनेन न्यायेन प्रत्याख्यातः । सिद्धं तु प्राकृतकर्मत्वादात्मसंयोगे कर्मकर्तुः कर्मदर्शनादित्यात्मानमात्मना हन्तीति ॥ १०२ ॥

अन्यदपि शब्दऽकर्मकत्वं सिध्यतीत्याह ।

उत्पत्तेः प्रागसद्भावो बुद्ध्यवस्थानिबन्धनः ।
अविशिष्टः सता ऽन्येन कर्ता भवति जन्मनः ॥ १०३ ॥

अङ्कुरो जायत इति जनिकर्तृत्वं सतोऽसतो वा । तत्र "यदि सञ्जायते कस्मादथासञ्जायते कथ"मित्यादिना पूर्वं वास्तवरूपाश्रयेण सदसत्पक्षभेदेनापि जनिकर्तृत्वमुक्तमित्युक्तम् । उपचारसत्ताश्रयेण तूत्पत्तिः सिध्यति उपचर्यं तु कर्तारमित्यादिना । अत्र वैवक्षिके कर्तृत्वे उपचारार्थोऽपि न कश्चिदित्युच्यते। तथा हि विवक्षारूपाया बुद्धेः शब्दनिमित्ताया येऽवस्थाविशेषाः प्रतिनियतशब्दनिबन्धनाः, तदाश्रयेणात्र क्रियान्तरकर्तृकत्वतुल्यं जनिकर्तृत्वं सिद्धम् । विवक्षाप्रापितसन्निधाने ह्यर्थेऽङ्कुर इति शब्दः प्रयुज्यते । स च सदेव वस्तु दर्शयति । ततो जायत इति पदसमवधानावधारितजन्मनाऽस्य कुतः सत्त्वमिति बुद्ध्या निश्चितसत्त्वस्य क्रियासिद्धावुपगृहीतसामर्थ्यस्य बाह्येन रूपेण जन्मेति वाक्यार्थोऽवतिष्ठते । ततश्च येन रूपेण सत्त्वं न तेन कर्तृत्वं येन कर्तृत्वं न तेन सत्त्वमिति नेयं वास्तवी व्यवस्था अपि तु शाब्दव्येवेत्यर्थः । शब्दार्थ एव चार्थ इत्यसकृदुक्तत्वात् प्रयोगस्य मुख्यतैव सर्वत्र, नोपचारार्थः कश्चित् ॥ १०३ ॥

वृत्तपर्यायामपि चाङ्कुरो जायत इति प्रयोग उपपन्न इत्याह ॥

कारणं कार्यभावेन यदा वा व्यवतिष्ठते ।
कार्यशब्दं तदा लब्ध्वा कार्यत्वेनाथ जायते ॥ १०४ ॥

कार्यमुखेन कर्तृता जन्म च सदसत्पक्षभेदेन नोपपद्यत इति बुद्ध्यवस्थासमाश्रयेण पूर्वमुपपादितम् । इदानीं कारणमुखेन प्रतिपाद्यते । अत एव पक्षान्तरसूचको वा शब्दः । तत्र कारणात्पृथगेव कार्यमाजायते इति पूर्वपक्ष उक्तम् । परिणामदर्शने स्वभेदपक्ष इदं कथ्यते । कार्यकारणयोः प्रकृतिविकाररूपतया क्षीरं दधि सम्पद्यते, बीजमङ्कुरो जायत इत्यभेदेन व्यवहारादेकस्यावस्थातुरवस्थाविशेषस्वीकरणमात्रं सत्तन्त्रमिति कार्योन्मुखतायां विशिष्टविकाराभिनिर्वृत्तिप्रक्रमे विशिष्टोत्तरावस्था विशेषगतवाचकाभ्यासात् । कारणमेव सदुपकर्तृ भवदुत्तरावस्थासाधनलक्षणं जन्म प्रतिपद्यत इति युज्यते जायतेऽङ्कुर इति प्रयोग इत्यर्थः ॥ १०४ ॥

युक्तं चैतद्यदुत्तरकारणमेव कार्यभावेनावतिष्ठत इति स्वसिद्धान्तेनैतदुपपादयितुमाह ॥

यथाऽहेः कुण्डलीभावो व्याघ्राणां वा समग्रता ।
तथैव जन्मरूपत्वं सतामेके प्रचक्षते ॥ १०५ ॥

पूर्वं सदसत्पक्षभेदेन कार्यकारणभावासम्भवं प्रतिपाद्य [त्वात्मतात्विवयं व्रति]?रित्यादिना विवर्तनयेन सिद्धान्तितम् । तत्र तेषामेव जन्मार्थो विचार्यमाणोऽवतिष्ठते । यत्तु न तथा तथा सांख्यविशेषमात्रम् । तद्यथा सर्पस्य कौटिल्यमनर्थान्तरभूतम् । पृथग्भूतानां चाङ्गुल्यादीनां सङ्घातो मुष्ट्यादिरित्यवस्थाविशेषमात्रसारः कार्यकारणभाव इत्यवस्थातुरभेदादवस्थास्वनुगमात्सत्त्वे जनिकर्तृतासिद्धिः ॥ १०५ ॥

इदानीं कार्यकारणयोर्भेदवादे अपि वास्तवेन रूपेण जनिकर्तृत्वं प्रतिपादयितुमाह ।

विभक्तयोनि यत्कापि कारणेभ्यः प्रवर्तते ।
स्वा जातिर्व्यक्तिरूपेण तस्यापि व्यवतिष्ठते ॥ १०६ ॥

विभक्ता व्यतिरिक्ता योनिः कारणमस्य तस्यासतो ऽपि कार्यमात्रस्य कारणेभ्यः सकाशाद्व्यतिरिक्तस्योत्पत्तेः । पूर्वं व्यक्तिरूपेणासत्त्वे अपि जात्यात्मना सत्त्वात् सज्जायते । या निरूप्य साधर्मविनियोगात् जातिरेव कारणानां स्वाभिव्यञ्जकसम्पत्त्यर्थं प्रयो-

जिकेति सैव व्यक्तयात्मना जायत इति व्यवहाराज्जातिरूपेण कर्तृत्वं व्यक्तिरूपेण जन्यत्वमिति अत्यन्तं व्यतिरेकाभावाज्जातिव्यक्त्योः सामानाधिकरण्यादुपपद्यत इत्यर्थः ॥ १०६ ॥

इदानीं शब्दार्थो ऽर्थ इति स्वसिद्धान्तं निगमयितुमाह ॥

भावेष्वेव पदन्यासः प्रज्ञाया वाच एव वा ।
नास्तीत्यप्यपदे नास्ति न चासद्विद्यते सतः ॥ १०७ ॥

आकारावग्रहेण ज्ञानशब्दयोः प्रवृत्तेः, निरालम्बनतायोगात्प्रतीयमान एवाकारो भावशब्दवाच्यः सदैव विषय, पदविन्यासस्थानं तयोः । तथा हि नास्तीत्यनालम्बनैकत्वे परपरिकल्पितं स्वयमुत्प्रेक्षितं वाक्यमवलम्ब्य जायते येन सदाकारावलम्बनाभ्यां ज्ञानशब्दाभ्यामनयोर्विशेषाभावः स्वाकारग्रहसाम्यादिति व्यवहारे सर्वमेव भावाभावजातं समानम् । बहिर्वस्तुचर्चा तु नाङ्गं इत्यत एव व्यवहारप्राप्तिसमाप्तेरिति सदाकारावग्रहप्रवृत्तौ जायते ऽङ्कुर इति प्रयोगः सूपपाद इत्यर्थः ॥ १०७ ॥

बुद्धिशब्दविषयभावाव्यतिरेकेण व्यवहारे वस्तूनां बाह्या सत्ता न काचन विद्यत इत्याह ॥

बुद्धिशब्दौ प्रवर्तेते यथा भूतेषु वस्तुषु ॥
तेषामन्येन तत्त्वेन व्यवहारो न विद्यते ॥ १०८ ॥

अभिधानप्रत्ययाधीन व्यवहार इति । तत्र यथाप्रत्ययं यथाभिधानं च पदार्थतत्त्वमेषणीयं, नान्यपदार्थस्वरूपमप्रतीयमानमनभिधीयमानं चाश्रित्य प्रत्यवस्थेयमित्यर्थः । तथा चार्थोल्लेखरहिताया बुद्धेरयोगात्तत्सिद्धेन सत्त्वेन जायमानः कर्ता निरूपितश्चाभिधीयते । यद्वा नास्तीति प्रत्यये बहिरसन्नपि पदार्थो ऽनियतदेशकालयोर्निरूप्यमाणो देशकालान्तरोपलब्धेन नानाकारेणावभासमानः कर्तृप्रत्ययेनाभिधीयते । तथा कार्योन्मुखतायामभिगतमपि वस्तु तज्जातीयानुभववासनया बुद्धावभिमुखीभवत्समर्थहेतुवशाज्जायत इति जन्मनः कर्तृत्वेनाभिधीयत इति प्रकरणार्थः ॥ १०८ ॥

इदानीं सम्बन्धसमुद्देशोक्तं न्यायं चेतसि सन्निवेश्याद्वैतनयेन जन्मनाद्यासम्भवं प्रतिपादयति ॥

आकाशस्य यथा भेदश्छायायाश्चलनं यथा ।
जन्मनाशावभेदे ऽपि तथा कैश्चित्प्रकल्पितौ ॥ १०९ ॥

निष्प्रदेशस्याप्याकाशस्य नित्यसंयोगिपदार्थप्रविभागेन देशभेदाध्यारोपो न भेदपरिकल्पनेत्युक्तम् । तासामभावरूपायाः छायायाश्च निष्क्रियत्वे ऽपि वारकद्रव्यक्रियानुगामितसक्रियत्वाध्यारोपः । एवमभावस्य पूर्वं निराकृतत्वात् जन्मनि कारणव्यापारस्य च निषेधात् विनाशे ऽपि तदनुपपत्तेरावेदितत्वात् । निर्हेतुकविनाशप्रतिषेधाभिन्नस्याद्वयस्य तत्त्वस्य नित्यस्य जन्मनाशायोगादविद्यावशात् प्रतिभासमात्रनिष्ठजन्मनाशवशेन परिकल्पितभावाभावरूपतया व्यवहार इति सम्बन्धसमुद्देश एव विस्तरतो निर्णीतम् । एवं च भावाभावव्यवहारवज्जायत इत्यर्थो ऽपि चारितरमणीयः सिद्ध इत्यर्थः ॥ १०९ ॥

तत्र कल्पितत्वमुपपादयितुमाह ॥

यथैवाकाशनास्तित्वमसन्मूर्त्तिनिरूपितम् ।
तथैवमूर्त्तिनास्तित्वमसदाकाशनिश्रयम् ॥ ११० ॥

व्यापकस्याकाशस्य सर्वत्र भवतो वस्तुनो न क्वचिदभावः । ततश्चासदप्याकाशनास्तित्वं परिमितदेशघटादिमूर्त्तिवत्सम्भवतो न कल्प्यते । यत्र हि घटादयस्तत्रासदाकाशमिति व्यवहारः । एवं मूर्त्तीनामपि पटादीनां क्वचित् नास्तित्वं भावतो विद्यमानमपि । स्वस्वभावस्य स्वरूपविनाशायोगादसत्त्वभावत्वे कदाचिदप्यभावादिति आपादकाकाशस्यान्तराले दर्शनादध्यवसीयते । अन्तराले हि मूर्त्तीनां सत्तायास्तिरोधाने गगनमेव, तद्व्यहितमवधारयन्तो ऽत्रादर्शना नास्तीत्यध्यवस्यन्तीति । आविर्भावसत्तायाः स्वदेशे ऽव्यय ते जन्म प्रतिपद्यन्त इत्येतत् प्रकरणादवगन्तव्यम् । तथा च द्वयोरपि जन्मनाशयोः कल्पितत्वमुपपादितं भवति । यथाध्यवसायं च व्यवहारजन्मनिरोधा एव पदार्थाः सिद्धाः । न ह्याकाशमभावो वस्तुनः पदार्थानामभावमात्रं च सदैवावस्थानाज्जन्मादयो ऽपि न कश्चित् ॥ ११० ॥

इदानीं सत्त्वे ऽपि जन्मनि, प्रकारान्तरेण जायत इति प्रयोगं समर्थयितुमाह ॥

यथा तदर्थैर्व्यापारैः क्रियात्मा व्यपदिश्यते ।
अभेदग्रहणादेव कार्यकारणयोः क्रमः ॥ १११ ॥

कारणं कार्यभावेनेत्यादिना कार्यकारणयोर्व्यावहारिकमभेदमाश्रित्य समर्थितम्। अधुनातूपचरिताभेदाश्रयेणोच्यते । यथा हि पचेर्विक्लित्तिः प्रधानार्थो इति तदर्थे गुणव्यापारे ऽधिश्रयणोदकासेचनादिभिः कर्त्रादिगतैस्तदभेदमध्यारोप्य प्रधानक्रियारूपमुच्यते । अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणाः क्रियाः प्रधानस्य कर्तुः । पाकः, काष्ठानि पचन्ति, आर्विक्लिद्यन्ते ज्वलन्तीति करणस्य पाक इत्यादिना । तथा कार्यार्थत्वात् कारणस्यैवानुपूर्वीक्रमोऽभेदेन व्यवहारे । तथा च कारणमेवाङ्कुरशब्दाभिधेयं सत्कर्तृ कार्यात्मना जायत इति युज्यते व्यपदेष्टुमित्यर्थः ॥ १११ ॥

ननु च कार्यकारणयोरभेदाध्यारोपे ऽपि जन्मतः कर्तृत्वं कार्यस्यैव युज्यते न तु कारणस्य सिद्धत्वादित्याशङ्क्य प्रकृतिविकारविषयपर्यायतः कर्तृत्वं कार्यकारणयोः प्रयोगभेदेनावस्थापयितुमुपक्रमते ॥

विकारो जन्मनः कर्ता प्रकृतिर्वेति संशये ।
भिद्यते प्रतिपत्तॄणां दर्शनं लिङ्गदर्शनैः ॥ ११२ ॥

इह प्रकृतिविकारविषयसामानाधिकरण्यं दृश्यते क्षीरं दधि सम्पद्यत इत्यादौ । अत्र सन्देहः । तथा हि । गुणप्रधानभावस्य समन्वयान्यथानुपपत्त्यवश्यंभावात् किमत्र प्रकृतिः प्रधानं विकारोऽङ्गं, उत विपर्ययः।तत्र प्रधानस्य कर्तृत्वं जनिं प्रति। अङ्गस्य तु प्रधानद्वारको जनिसंस्पर्श इति सामानाधिकरण्यम्।यदा रूपभेदेन निर्देशो बीजादङ्कुरो जायत इति तदाऽसंशयमेव विकारस्य कर्तृत्वम् । अपादानतया प्रकृतेर्निर्देशात् । जनिकर्तुः प्रकृतिरिति । तत्र विकारकर्तृत्वामाशयः । आत्मलाभस्य जन्माख्या असत्ता वात्मा लब्धव्यः। तथा च विकार इति स एवात्र कर्ता युक्तः ।प्रकृतिकर्तृकास्तु मन्यते । असतो विकारस्यात्मलाभं प्रत्याभिमुख्यायोगात्तल्लक्षणे-जन्मनि कर्तृतानुपपत्तिः । आत्मलाभोन्मुखतो हि जन्म सिद्धान्तयिष्यते । प्रकृतिरूपेण चात्मनो लब्धत्वादुत्तरावस्थालक्षणात्मला-

औन्मुख्यमवतिष्ठत इति तत्र प्रकृतेरेव कर्तृत्वमुचितमिति ॥ ११२ ॥

तदेतद्दर्शनद्वयं लिङ्गदर्शनैः प्रयोगभेदस्वभावैर्विषयविभागे-नावस्थापयितुमाह ॥

क्लृपिसम्पद्यमाने या चतुर्थी सा विकारतः ।
सुवर्णपिण्डप्रकृतौ वचनं कुण्डलाश्रयम् ॥ ११३ ॥

क्लृपिसम्पद्यमाने चतुर्थी वक्तव्येति वार्त्तिकस्यायमर्थः । सम्पादनक्रियाकर्तरि चतुर्थी विधेयेति प्रयोगमूलत्वात् स्मृतेर्विकार-वचनाच्च चतुर्थी श्रूयमाणाविकारस्यैव सम्पत्तिक्रियाकर्तृत्वमावे-दयते । मूत्राय सम्पद्यते यवागूर्मूत्रं आयत इत्यर्थः । प्रकृतेरत्र विकारद्वारेण क्रियासमन्वयो न साक्षात् । भेदविवक्षायां तु जनिक-र्तुः प्रकृतिरित्यपादानपञ्चम्येवात्र कारकविभक्तिः । यथाऽन्या मूत्रं जा-यत इति।अभेदविवक्षायां तु चतुर्थ्या अवकाशः।अत एव तत्र सन्देह स्त्ययं निर्णयो व्यवस्थापि । तथा पुनरावृत्तः सुवर्णपिण्डः पुनरप-रया ऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवत इत्यत्र भाष्यप्रयोगे सुवर्णपिण्डस्य प्रकृतित्वे ऽपि न तद्गतमेकत्वं दृश्यते, अपि तु वि-काररूपकुण्डलाद्वित्वाश्रयं भवत इति द्विवचनं कर्तृप्रत्ययरूपं दृ-श्यत इत्यस्मादपि लिङ्गाद्विकारस्य कर्तृत्वावसायः ॥ ११ ॥

लिङ्गान्तरं विषयभेदेन प्रकृतिविकारयोः कर्तृत्वानुमाप-कमाह ॥

वाक्ये सम्पद्यतेः कर्त्ता सङ्घश्च्व्यन्तस्य कथ्यते ।
वृत्तौ सङ्घीभवन्तीति ब्राह्मणानां स्वतन्त्रता ॥ ११४ ॥

अभूततद्भावे कृभ्वस्तियोगे विवक्षायां सम्पद्यकर्त्तरि च्विर्विधीयते तस्यार्थप्रदर्शनाय यद्वाक्यं क्रियते तत्र विकारस्य सम्पद्यकर्तृत्वं दृश्यते। तथा हि असङ्घो ब्राह्मणाः सङ्घो भवतीति सङ्घगतैकत्वप्रत्ययस्य वचनस्य च दर्शनात् सङ्घ एव कर्त्ता । वृत्तौ तूच्यते सङ्घीभवन्ति ब्राह्मणा इत्यत्र प्रकृतिभूतब्राह्मणगतबहुवचनदर्शनात् प्रकृतेः कर्तृ-त्वावसायः । तदेवं प्रयोगभेदेन प्ररूढं प्रकृतिविकारयोः कर्तृत्व-मुन्नेयम् ॥ ११४ ॥

इदानीं प्रकृतेः कर्तृत्वे भाष्यकारोक्तं लिङ्गमाह ॥

स त्वं सम्पद्यते यस्त्वं न तस्मिन्युष्मदाश्रया ।
प्रकृतिः पुरुषस्यास्ति प्रकृतेः स विधीयते ॥ ११५ ॥

स त्वं त्वं सम्पद्यते स्थण्डिलवतीति भाष्य उदाहृतम् । अत्र युष्मदर्थो विकारः । न च तदाश्रयो मध्यमः पुरुषो दृश्यते अपि तु भवतीत्ययुष्मदर्थप्रकृतप्रकृतिगतप्रथमपुरुषदर्शनात्, प्रकृतेरेव कर्तृत्वावसायः ११५

तदेतद्विषयभेदेन प्रयोगप्रामाण्यादवस्थितं कथं युज्यत इत्यत्रोपपत्तिमाह ॥

पूर्वामवस्थामजहत्संस्पृशन् धर्ममुत्तरम् ।
सम्मूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥ ११६ ॥

इह न स्वयैव निष्पत्त्या जायत इत्यभिधीयते ऽपि तु पूर्वां कारणावस्थामविजहदित्युत्पादित प्रकृतेरेव कर्तृत्वसम्भावना नापि सर्वात्मनोदासीनोऽपि तूत्तरावस्थाविशेषं संस्पृशन्नासादयन्निति विकारस्यापि कर्तृत्वसम्भावना । एवं पूर्वापरावस्थोपाध्यवच्छिन्नमेकं पूर्वावस्थानुगुण्येनोत्तरावस्थासादनोन्मुखं प्रचीयमानरूपमिवाध्यवसीयमानं जायत इति धात्वर्थप्रत्ययोपजनगुणमासादयति । तथा च प्रकृतिविकारयोः सामानाधिकरण्यं, उभयोरपि च कर्तृत्वमुपपद्यते ॥ ११६ ॥

यद्येवं सर्वत्रैवोभयोः कर्तृत्वं स्यादित्याशङ्क्याह ॥

सव्यापारतरः कश्चित्क्वचिद्धर्मः प्रतीयते ।
संसृज्यन्ते च भावानां भेदवत्यो ऽपि शक्तयः ॥ ११७ ॥

द्वयोरपि प्रकृतिविकृत्योरुक्तेन न्यायेनाभेदापत्त्या जनिसमन्वयसहत्वे ऽपि कर्तृप्रत्ययोत्पत्तौ क्वचिद्विकारः सव्यापारः क्वचित्तु प्रकृतिरित्युक्तमप्येवमपि च विषयविभागो न जायत इत्यत्र यथोक्तेन प्रकारेण द्वयोरपि कर्तृत्वमुपपादितम् । यतो भावानामन्यत्र भिन्ना अपि शक्तयः क्वचित्संसर्गमपि प्राप्नुवन्तीत्यर्थः । यद्वा सर्वत्रैव द्वयोरपि कर्तृत्वमेकस्य तु साक्षादिति प्रकर्षः सव्यापारतर इत्युक्तः । प्रकृतिविकृत्योर्हि सामानाधिकरण्यान्यथानुपपत्त्या एकस्य ज-

निकर्तृत्वे नान्तरीयकं अपरस्यापि तद्वेदितव्यम् । यो हि विधेयः स प्रधानभूतः प्रकर्षेण जनिव्यापारवान् अन्यस्त्वनूद्यमानो गुणोऽप्रकृष्टव्यापारः ॥ ११७ ॥

तथा च संसर्गः कर्तृशक्त्योर्यदि तर्हि संसर्गः त्वद्भवतीत्यत्र विकारावस्थाश्रयः पुरुषः कस्मान्न भवतीत्याशङ्क्याह ।

विपरीतार्थवृत्तित्वं पुरुषस्य विपर्यये ।

गम्येत साधनं ह्यत्र सव्यापारं प्रतीयते ॥ ११८ ॥

अत्वं त्वं सम्पद्यसे त्वद्भवसीत्येवं युष्मदर्थाश्रयेन मध्यमे पुरुषे विवक्षिते ऽर्थो न प्रतीयतेऽयुष्मदर्थः प्रकृतिः युष्मदर्थो विकृतिरिति । युष्मदर्थः प्रकृतिः सव्यापारा प्रत्ययोत्पत्ताविति तस्यान्या विकृतिः प्रतीयते। सम्पद्यत इति हि साधनं युष्मदर्थः, सव्यापारं प्रतीयत इति तस्य फलवत्तायाः विकारान्तरमनुपज्यते। तथा च युष्मदर्थस्तद्विपरीतमस्मदर्थभावमापद्यत इति विज्ञायेत । तस्मादयुष्मदर्थस्य प्रकृतेः सम्पद्यमानत्वसंप्रत्ययार्थं प्रथम एवात्र पुरुषो न्याय्यः ॥११८॥

विपरीतार्थवृत्तित्व मेव व्याचष्टे

त्वमन्यो भवसीत्येषा तत्र स्यात्परिकल्पना ।

राज्ञो भृत्यत्वपापत्ते यथा तद्वृत्तिर्भवेत् ॥ ११९ ॥

यथा राजा सम्पद्यस इत्युक्ते राजार्थस्य प्रकृते युष्मदर्थस्याख्यातपदेन प्रत्यायनात् सव्यापारस्य स्वार्थविपरीतभृत्यभावेन सम्पत्तिक्रियाकर्तृत्वं प्रतीयते । तथा त्वद्भवसीत्युक्तेऽन्यावस्थासाधने युष्मदर्थस्य कर्तृत्वावसायात् विवक्षितोऽर्थोऽयुष्मदर्थस्य युष्मदर्थतापत्तिलक्षणो न प्रतीयेतेति तत्सम्प्रत्ययार्थं प्रथमपुरुषो ज्यायान् । न ह्यन्यदभिधित्सन्नन्यदभिदधातीत्यम्, सुवर्णपिण्डः कुण्डले भवत इत्यत्र तु विकारस्यापि कर्तृत्वम् । कुण्डले सुवर्णपिण्डात्मतया परिणमेते इति विपरीतार्थवृत्तित्वं न भवति । भवतो कर्तृत्वद्वयं विकारापेक्षाभावात् । च्विविषय एव हि कर्तृत्वद्वयं विकारान्तरावेशः कथ्यते । यस्मात्प्रकृतिविवक्षायां च्विर्विधीयते तेनात्मना च सिद्धा प्रकृतिरिति विकाररूपा साध्यमाना सव्यापारा विशिष्टविकारनिवृत्तिप्रतिपत्तये विकारशब्दाभिधेया कर्त्री न्याय्या । च्व्यन्तस्य क्रियायोगे गतिसंज्ञाविधानात् । गतेः क्रियाविशेषणत्वात् । असत्त्व

अनेन कर्तृत्वायोगात् प्रकृतेरेव कर्तृत्वमुचितं विकाररूपगतिसंब-
न्धान्तरावयविशेषणाविशिष्टायां क्रियायाम् । स्वङ्गवति सङ्गीभवन्ति
ब्राह्मणा इति वाक्ये तु तस्य प्रकृतिविकृत्योः स्वशब्देनोपादानाद्य-
थाविवक्षं गुणप्रधानभावात् उभयोः कर्तृत्वानियमः । तथा हि
कदाचित्प्रकृतेर्निजमेव तत्त्वं सम्पत्तौ व्यापृतं प्राधान्येन विवक्षितं
भवति। कदा चित् समारोपितविकाररूपम् । तद्यथा महद्भूतश्चन्द्रमा
इत्यत्रामहदर्थप्रकृतिरूपस्य कर्तृत्वात् स एव महत्शब्देन विकार-
वाचिना विधीयत इति गौणत्वान्महदर्थस्यात्वं न भवतीत्युक्तम् । म-
हद्भूता ब्राह्मणीत्यत्र तु विकारस्यैव महदर्थस्य भावित्वेन कर्तृत-
या विवक्षितत्वात् समानाधिकरणलक्षणो भवत्येव पुंवद्भाव
इत्युक्तम् ॥ ११९ ॥

गतमानुषङ्गिकम् । इदमिदानीं वक्तव्यम् । प्रागन्यतः शक्ति-
लाभादित्यादिना स्वातन्त्र्यं व्याख्यातं तच्च प्रयोज्यकर्तुर्नोपपद्यते ।
स हि करणादिवत् प्रयोजकव्यापारे न्यग्भवन्न स्वतन्त्रः सत्यपि स्व-
व्यापारे स्वातन्त्र्ये । ततश्च स्वातन्त्र्यनिबन्धना कर्तृसंज्ञा न स्यादस्येति
पाचयत्योदनं देवदत्तेन यज्ञदत्त इत्यत्र देवदत्तात्प्रयोज्यकर्तुस्तृतीया
न स्यात् । तथा च वार्त्तिकम् । स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपस-
ङ्ख्यानमस्वतन्त्रत्वादिति। हेतुः प्रयोजकः तद्वति प्रयोज्य इत्यर्थः। हेतु
संज्ञायास्त्वध्येषणे स्याद्विषयो यत्र नियुज्यमानस्यापि स्वातन्त्र्या-
नपायात् तत्प्रयोजकत्वं न विरुध्यते इति हेतुमतीत्युपलक्षणं युक्तम् ।
अत्र परिहारवाक्यं, न वा स्वातन्त्र्यादिति । स्वव्यापारे ऽस्त्येव
प्रयोज्यस्य स्वातन्त्र्यमिति सिद्धा कर्तृसंज्ञा । न त्वेवङ्करणादीना-
मपि स्यात् । नैतदस्ति । तेषां यथास्वं करणादिसंज्ञाविधाना-
त् । प्रयोज्यस्य तु न कदा चिदन्या संज्ञोक्तेति कर्तृसंज्ञैव ।
एवं स्थिते प्रयोजकायत्तत्वात् प्रयोज्यप्रवृत्तेः कथं स्वातन्त्र्यमि-
त्याशङ्कोपपादयति ।

सम्भावना क्रियासिद्धौ कर्तृत्वेन समाश्रितः ।
क्रियायामात्मसाध्यायां साधनानां प्रयोजकः ॥ १२० ॥
प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्चितः ।
अविशिष्टो भवत्यन्यैः स्वतन्त्रैर्मुक्तसंशयैः ॥ १२१ ॥

यस्तावदप्रवृत्तक्रियः प्रयोज्यः सो ऽनुमितक्रियासामर्थ्य एव प्रयुज्यते । अन्यथा प्रयोग एव न स्यात् । न ह्यशक्तः कस्यां चित् क्रियायां केन चिद्विनियुज्यते सचेतसा । ततश्चावधृतशक्तिः सम्भावितक्रियः कर्तैव स्वतन्त्रो विनियुज्यते । यो ऽप्यात्मसाध्यायां क्रियायां प्रवृत्तः, सव्यापारः करणादिकारककार्यप्रयोजनमन्तरेण प्रवृत्तक्रियः सन् प्रयुज्यते विरामाशङ्कायां मा विरंसीदिति बुद्ध्या, सो ऽपि स्वतन्त्रः कर्तैव प्रयोज्यः, स्वव्यापारस्वातन्त्र्यादेव च प्रयोगमात्रे प्रयोजकप्रैषात् न्यग्भावमायत्ततां विनिश्चितः प्राप्तः । क्रियासिद्धये हि प्रैषः । एवं च क्रिया सिध्यति । यदि साधनान्तरविनियोगलक्षणां स्वातन्त्र्यं प्रयोज्यः प्रतिपद्यते नान्यथेति न प्रयोगेण स्वातन्त्र्यं विरुध्यते । विषयभेदाच्च प्रयोगे पारतन्त्र्यं स्वव्यापारे स्वातन्त्र्यमिति । उपाये एव च स्वव्यापारे स्वतन्त्र्यं प्रयोगे पारतन्त्र्यस्य । एवमन्यप्रयोज्यतया स्वाधीनतया निश्चितैरपरैः समानः स्वतन्त्रः प्रयोज्यः सिद्धः । तदुक्तं वार्त्तिके । इतरथा ह्यकुर्वत्यपि कारयतीति स्यान्न कुर्वन्तीतिति चेत् स्वतन्त्र इति । उदसीनस्याप्यस्याशक्तस्य प्रयोगानुपपत्तेः । सम्भावितस्वातन्त्र्य एव प्रयोज्य इत्यर्थः । यद्येवं स्वतन्त्रस्य प्रयोजको हेतुरित्येव स्वव्यापारे स्वतन्त्राणां करणादीनामपि प्रयोजकस्य प्रयोज्यस्य कर्तुः हेतुसंज्ञाप्रसङ्गः । भवतु को दोष इति, हेतुविषय एव प्रैषो धात्वर्थे ऽन्तर्भवेत् फलार्थत्वात् कर्तृभावनाया धात्वर्थस्य कर्मणश्च तया संस्पर्शात् । अकर्मकत्वात् विषयेषु कारणादिविषयो नियोगो वस्तुतः सन्नप्यनवधारित इति तत्प्रत्यायनाय णिज्नुत्पद्यते । शब्दादिशिष्टसाधनाक्रियाभावनाभावो गम्यते । न तु करणादीनां प्रवणत्वम् । किं च प्रयोज्यस्यापि हेतुसंज्ञायां तत्प्रयोजक इति तच्छब्देन स्वतन्त्रस्य प्रत्यवमर्शो ऽनर्थकः । करणादिप्रयोजकव्यावृत्तये हि सः । तस्यापि तु करणादेः स्वव्यापारस्वातन्त्र्याश्रयेण प्रयोजकस्य हेतुसंज्ञायामनर्थकः प्रत्यवमर्शः । किं च हेतुसंज्ञैवानर्थिका । कर्तृमात्रस्यैव तस्य कर्तृमति णिजित्येवास्तु । तथा च भीस्म्योर्हेतुभये भियो हेतुभये षुक् बिभेतेर्हेतुभय इति अत्र कर्तृभय इति वचने ऽनिष्टं स्यात् । तस्मात्स्वतन्त्रस्य प्रयोजक इति करणादिप्रयोजकस्य हेतुसंज्ञाव्युदासे प्रयतनीयम् । अत्रोच्यते । तस्य प्रयोजक इति सर्वनाम्नानुगवा-

तु कर्तृसंज्ञस्य स्वतन्त्रस्य परामर्शादप्रतिलब्धकर्तृसंज्ञानां करणादीनां प्रयोजकस्य हेतुसंज्ञा न। तथा हि स्वव्यापारे स्वतन्त्रत्वे ऽपि करणादेः प्रधानव्यापारे पारतन्त्र्यात् कर्तृसंज्ञा न भवति। स्वतन्त्रश्रुतिसामर्थ्यात्तु विप्रकृष्टं सामर्थ्यं विवक्षितम्। करणादीनां ह्यनुपकुर्वाणानां कारकत्वायोगात् तदन्यथानुपपत्त्यानुमीयमानस्वव्यापारे स्वातन्त्र्यं यदि परं कारकसंज्ञायामुपयुज्येत। न तु कर्तृसंज्ञायां, प्रधानविनियोगेनाभिभूतत्वात् प्रकृष्टस्य स्वातन्त्र्यस्याभावात्। तनश्च न ते कर्तारः सन्तः प्रेष्यन्ते। प्रयोज्यस्तु प्रयुक्तो ऽपि साधनान्तरविनियोक्तृत्वलक्षणं प्रकृष्टसाधनत्वं नैव त्यजतीति सर्वथा ऽसौ कर्त्तैव प्रयुज्यते। अत एवोक्तं कर्तृत्वेन समाश्रित इति। भूतेन भाविना वा सम्भाव्यमानेन बुद्ध्याभिसंहितेन कर्तृत्वेनेति सिद्धमिष्टम्॥ १२०॥ १२१॥

उक्तमिदं प्रयोगमात्रे न्यग्भावः स्वातन्त्र्यादेव निश्चित इति तदपि वा नास्तीत्याह।

निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये।

अभिप्रायानुरोधे ऽपि स्वार्थस्यैव प्रसिद्धये॥ १२२॥

स्वार्थलिप्सया सर्वः प्रवर्त्तमानः पराधीनतां प्रवृत्तौ नापादयति। केवलं कस्य चित्प्रवृत्तिः कस्य चिदर्थसिद्धये ऽप्यङ्गमित्येतावता भृत्यादिः स्वाम्याद्याज्ञया न प्रवर्त्तते इति न प्रयोज्यता कथ्यते। निर्वेशनिमित्ता हि भृत्यानां प्रवृत्तिः स्वार्थसाधना। वीतरागाणामपि परोपकारात्प्रवृत्तेः। परार्थसम्पादनमेव स्वार्थः फलत्वलक्षणत्वात्तस्य। तदेतद्भाष्ये ऽभिहितं सर्व इमे स्वभूत्यर्थं यतन्ते नेह कश्चित्परो ऽनुगृहीतव्य इति। स्वभूत्यर्थं प्रवर्त्तमानेषु कः प्रयोज्यार्थ इति चोद्ये समाधानमप्युक्तं यदभिप्रायेषु सज्जत इति प्रयोजकाभिप्राया क्रिया सम्पादनान्तत्तदर्थः। फलाभिसन्धानेन प्रवर्त्तमानो ऽपि प्रयोज्यः साधयत्येव। एवं च कृत्वा हेतुमति चेत्यत्रोपसङ्ख्यानानि प्रत्याख्यातानि। न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टमितिस्वरसप्रवृत्तित्वात्। सूर्यस्य माहिष्मत्यामुद्गमनं कस्याभिप्रेतं काकतालीयं तत्सम्पन्नमित्यभिप्रायानुवर्णनात् सूर्यः प्रयोज्यो भवतीत्यादिना पूर्वमेव समर्थितम्। अचेतनविषये ऽपि तर्हि भिक्षा वासयतीत्यादौ दासा-

धानुकूल्याभिप्रायाध्यारोपात् प्रयोजकत्वसमर्थनाय एवं योग्यतामात्रेण निमित्तमात्रहेतुप्रयोजक इत्युक्तम् । निमित्तेभ्य इति वार्त्तिकेऽप्युक्तं हेतुनिर्देशश्च निमित्तमात्रं भिक्षादिषु दर्शनादित्येवं सति न विचारः कर्त्तव्यः ॥ १२२ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे कर्त्रधिकारः ।



कर्तैव प्रयोजकः सन् हेतुरिति कर्तृविचारानन्तरं हेतुं विचारयति।

प्रेषणाध्येषणे कुर्वस्तत्समर्थानि वाचरन्।
कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते ॥ १ ॥

संज्ञापुरःसरा व्यापारणा प्रेषणं, निकृष्टविषयो नियोग इत्यर्थः। यत्पुनरभ्यर्हितं व्यापारयति तदध्येषणं, अभ्यर्हितविषयं प्रबोधनमित्यर्थः। तत्समर्थानि प्रयोज्यक्रियासम्पत्त्यनुकूलानि चेष्टितानि। अयमेव च मुख्यः प्रयोजकव्यापारः, यत्प्रयोज्यक्रियासम्पत्तिसमर्थाचरणं व्यापकत्वाद् भिक्षादिष्वपि भवति। अस्यैव निकृष्टोत्कृष्टविषयतया प्रेषणाध्येषणरूपेण प्रविभागः। तथा च गोबलीवर्दन्यायेन तन्निलक्षणं तत्समर्थाचरणं भिक्षाविषयमत्राभिप्रेतम्। व्यवहारभेदाभेदेनैषामुपादानम्। यथा त्वभिप्रायानुविधानं प्रयोज्यत्वमुक्तं, तथा स्वाभिप्रायप्रकाशनं प्रयोजकत्वमिति तत्समर्थाचरणमेव। सर्वत्र प्रयोजकव्यापारः कर्तैवेति तत्प्रयोजको हेतुश्चेति संज्ञासमावेशार्थं चकारं व्याचष्टे। असति चकारे तदेकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यादिति समावेशार्थोऽसौ। तदुक्तं वार्त्तिके, कर्तृसंज्ञायां प्रयोज्यस्य ग्रहणमिति। विहितां शास्त्र इति। प्रदेशे स्वस्यैव ग्रहणं कृत्रिमतया तथा स्यादित्यर्थः। फलसाधनयोग्याः पदार्था हि लौकिको हेतुर्द्रव्यादिविषयः। तस्यायं विशेषः। क्रियाविषयत्वेन कारकं हेतुः प्रयोज्यप्रयोजकः। अत एव कारकत्वनिबन्धनः प्रेषणादिः स्वव्यापारोऽस्य निर्दिष्टः। तत्र हेतुमति च, भियो हेतुभय, इत्यत्र कृत्रिमस्य हेतोर्ग्रहणम्। तृतीयाविधौ तु हेतावित्यत्र प्रयोजके कर्तृत्वादेव तृतीयासिद्धेर्लौकिकस्य हेतोर्ग्रहणम्। पञ्चमीविधावप्यकर्त्तरीति परिभाषितः पर्युदस्यते। लक्षणहेत्वोः क्रियाया इत्यत्रापि प्रयोज्यस्य कारकत्वात् क्रियायोगाव्यभिचारात् विशेषणासामर्थ्यात् द्रव्यगुणक्रियाविषयत्वेन सम्भवव्यभिचाराभ्यां लौकिक एव हेतुर्गृह्यते। तथा धात्वधिकाराच्च। न हि धातुः साधनरूपे हेतौ वर्त्तते। एवं हेतुहेतुमतोर्लिङित्यत्रापि हेतोर्धात्वर्थानिर्देशात् साधनस्य च धात्वर्थत्वाभावात् लौकिक एव हेतुः। कृञो हेतु ताच्छील्यानुलोम्येष्वित्यत्रापि न प्रयोजको हेतुः। तत्र णिज्विधानात्। कृञ इति च णिज्रहितनिर्देशात्तेनात्र कृत्वा प्राप्तस्य कर्तुर्लौकिको हेतुर्विशेषणम्।

तेन च विरोधाभावान्न निवर्त्यते कर्त्ता ॥ योग्यतारूपेणैव च कृद्भिः कर्त्तुरभिधानान्निमित्तमात्रं हेतुरुपादीयमानो विशेषणं पुनः श्रुतेरवधारणं प्रकल्पयति, हेतुरेवेति । तेनाऽव्यभिचारकारणं विद्यायशःप्रभृतिषु प्रतिपादितं भवति। एते चात्र हेत्वादयः कर्तृविशेषप्रतीतिसामर्थ्यात् गम्यमानाः परम्परया पदार्था एव । अन्यथा वाक्यावस्थायां प्रतीयमानाः पदार्थाधिकस्य व्याख्याङ्गस्य निमित्तभावं नोपेयुः । इह प्रैषातिसर्गेत्यादिसूत्रकारेण समुच्चितो लोडिति प्रैषे णिल्लोटोर्विधानाद्विकल्पप्रसङ्ग इति भाष्ये चोदितम् । पृच्छतु मा भवान् अनुयुङ्क्तां मा भवानित्यत्र णिच् कस्मान्न भवतीति । आत्मनिर्देशेन प्रयोजकाश्रितं प्रैषं दर्शयन् णिचः प्राप्तिं परिपुष्णातीति। अत्र परिहारो भाष्ये ऽभिहितः, अकर्तृत्वात् इति। स्वतन्त्रस्य कर्तुः प्रयोजको हेतुरिति तस्य कर्तृत्वाभावात्तत्प्रयोजकस्य हेतुसंज्ञाभावात्तद्व्यापारे प्रैषे णिज् न भवतीत्यर्थः । चोदकस्तु कालादेः प्रश्नाद्यशक्तस्य प्रयोज्यत्वात्प्रवृत्तस्य च नियोगानर्थक्यात्सम्भावितक्रियत्वेन कर्त्तुः प्रेषणमिदमित्याशङ्क्याह । किं च भोर्वर्तमानाया एव क्रियायाः कर्त्ता भवितव्यं न भूतभविष्यत्कालाया इति । अत्रोत्तरमाभिसम्बन्धस्तत्र क्रियत इति । सामर्थ्ये सम्भावितो भूतभविष्यत्क्रियाविषये क्रियाकारकभावः। तत्र च लोड्विषये प्रयोज्यक्रियैवैका सम्भाव्यत इति क्रियायां कर्त्ता भवति प्रयुज्यते । न त्वपरः प्रयोज्यव्यापारविषयः प्रयोजकव्यापारोऽस्ति । अनन्तरं भाष्यम् । यद्यकर्त्ता कथं प्रत्ययेनोच्यते इति । अस्योत्तरं कथमस्ति न पृच्छति वर्तत इति । तदुक्तं, अभिसम्बन्धस्तत्र क्रियते इमां क्रियां कुर्विति । अनन्तरमुक्तं कर्त्तापि तर्ह्यभिसम्बन्धः क्रियते । अस्यां क्रियायां कर्त्ता भवेति। तथा च यथात्र सम्प्रत्यपृच्छत्यपि पृच्छिक्रियाभिसन्धानेन पृच्छिधातुर्वर्तते, तथा तत्कर्त्राप्यभिसम्बन्धात्कर्तृप्रत्ययो लोटि क्रियत इति कर्त्रापि तर्ह्यभिसम्बन्धः क्रियत इत्युक्तम् । एवं वदता भाष्यकारेण सम्प्रत्यकर्तृत्वादत्र णिज् न भवति इत्युक्तं भवति। तथा हि नवमेवास्याधीयमानकर्तृत्वं न तु विद्यमानम् । क्रियायां कर्त्ता भवेति प्रेष्यते न तु कर्त्तैव सन् । तेन कर्तुः सतः प्रैषः । प्रयोजकसमवायात् णिज्विषयो लोट्प्रत्ययस्तु कर्त्रादिषु विधीयते । धात्वर्थोपाधिस्तु तस्य प्रैषः । स च न धातुप्रत्ययवाच्यः, अपि तु सामर्थ्यात्कर्तैव प्रयोजको

ऽत्रतिष्ठत इति तद्धर्मः प्रैषो ऽवतिष्ठमानो धातुप्रत्ययेन नियतकालतया- त्रावतिष्ठते । तथा च सम्प्रत्यपृच्छत्यपि पृच्छत्विति प्रयोगः । णिचस्तु प्रैषो वाच्य इति शब्दोपादानत्वादभिधेयधर्मो भवन् नियतकालाभि- धायिना प्रत्ययेन लडादिना कालनियमेनावच्छिद्यते । शब्देन हि ण्य- न्तादुत्पन्नेन कर्तृवाचिना लकारेण तृजादिनोपात्तो यः कर्त्ता प्रयो- जकस्तस्य सम्बन्धी प्रतीयतेऽसावित्यभिधेयधर्मः । द्विविधो ह्यर्थः शास्त्रे व्याख्यानाङ्गभावेनोपाधीयते । कश्चित्प्रयोक्तृधर्मो यथा वी- प्सादोहेर्ष्यासूयाकुत्सनादिः । अन्यः प्रतिपाद्यधर्मः । तत्रायं लो- ड्विषयः प्रैष आबाधादिवत् प्रयोक्तृधर्म इत्यभिधेयधर्मत्वाद् व्या- वृत्तः ॥ १ ॥

तदेतत्तात्पर्येण प्रतिपादयति ।

द्रव्यमात्रस्य तु प्रैषे पृच्छ्यादेर्लोड् विधीयते ।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ॥ २ ॥

प्रवृत्तक्रियस्य द्रव्यमात्रस्याप्रतिलब्धकर्तृभावस्य कर्तृत्वार्थ एव प्रैषे द्योत्ये लोडुपदिश्यते । पृच्छ्यनुयुज्यादेर्धातोः परः प्रत्ययः कर्त्रादिकारके वाच्ये । प्रवृत्तक्रियस्य तु विरामाशङ्कायां मा विरं- सीरित्यभिसन्धाय कर्त्तुरेव स्वतन्त्रस्य प्रयोजकहेतुव्यापारे णि- ज्वाचक उपदिश्यते । प्रत्ययार्थविशेषणपक्षो हि हेतुमति चेत्यत्र सिद्धान्तितः । तथा च वार्त्तिकं हेतुमतीति कारकोपादानं प्रत्य- यपरिग्रहार्थमिति । तदेवं णिज्लोड्वाच्यतया धर्मभेदाल्लोड्विषय- स्य द्योतकत्वेन प्रयोक्तृधर्मत्वेन च भेदादत एव तु शब्दद्वयेन पर- स्परस्य शब्दः पूर्वस्मादपकृष्य सक्रियस्येत्यनेन सम्बध्नीयः । पृच्छ- तु मां भवानित्यादौ न प्रैषकर्तुर्वाचकः कश्चिद्विद्यते । केवलमुच्चा- रयितैव कर्त्ता सामर्थ्यात्प्रतीयते इत्यभिधेयमात्रप्रैषात् प्रयोक्तृ- धर्मत्वेनाबाधादिवत् प्रतीयते प्रैषो न त्वस्य वाचकः कश्चिदस्ति । यदि तर्ह्येवमनयोः प्रैषयोः स्फुटो भेदः कथं भाष्ये चोदितं इह- कस्मान्न णिज् भवति पृच्छतु मां भवानिति । लोकव्यवहारमाधिग- म्या ऽयं विभागः कृत इति प्रैषमात्रं समानं मत्वा पूर्वपक्षः ॥ २ ॥

गतमेतत्, इह प्रयोज्यस्य प्रेषणाध्येषणादिना सर्वस्य प्रयो- जकव्यापारेणाप्यमानत्वात् कर्मसंज्ञाप्रसङ्ग इत्याशङ्क्याह ।

गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥ ३ ॥

स्वतन्त्रं नाम परित्यजन्नेव प्रयोज्यः प्रयोजकव्यापारे पाराधीन्यं प्रतिपद्यते । न ह्यस्य प्रयोजकेन स्वातन्त्र्यखण्डना क्रियत इत्युक्तम् । इतरथा ह्यकुर्वन्नपि कारयतीति स्यादिति । तथा च प्रैषेऽपि स्वव्यापारे स्वातन्त्र्यात्कर्तृसंज्ञा भवत्येव । कर्मसंज्ञा तु प्रैषेणाक्षिप्यमाणत्वात् गतिबुद्धीत्यादिना नियमिता । गत्यादिधातुविषय एव प्रयोज्यः कर्मसंज्ञो नान्यत्रेति पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यादौ स्वधर्मेण कर्तृत्वेन प्रयोज्योऽभिधीयते इत्यर्थः ॥

ननु च प्रैष एव कार्ये प्रयुङ्क्ते न तु गुणशक्तिरिति प्रागेव प्रतिपादितम् । तत्र धातुवाच्यः प्रयोज्यव्यापारो ण्यर्थविशेषणत्वादप्रधानं, प्रयोजकव्यापारस्तु णिज्वाच्यः प्रधानम् ।प्रकृत्यर्थावच्छिन्नत्वाद्धि प्रत्ययार्थः सर्वत्रैव प्रधानं, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति । अतश्चात्र प्रयोजकव्यापारस्य प्राधान्यात्तदपेक्षयकर्मशक्तिरेव स्वकार्यं प्रापयति । न तु स्वव्यापारविषया कर्तृशक्तिस्तथौदनस्य विक्लृत्तौ स्वातन्त्र्ये ऽपि न कर्तृसंज्ञा अपि तु विक्लेदनेन देवदत्तव्यापारेणेप्सिततमत्वात् कर्मसंज्ञैव पचत्योदनमिति । तदेवमत्रोभयप्रसङ्गाभावे विप्रतिषेधाभावात् कर्तृसंज्ञाप्राप्त्या सिद्धैव गत्यादिविषयेऽपि कर्मसञ्ज्ञेति नियमार्थ आरम्भः । तथा च पचत्यादिविषये नियमेन प्रधानकार्ये प्रसारिते निःप्रतिपक्षं गुणक्रियायाः स्वातन्त्र्यं स्वकार्ये कर्तृसंज्ञां प्रवर्तयत्येवेति सिद्धम् ॥ ३ ॥

प्रयोजको हेतुरित्युक्तं कर्मणश्चापि फलभूतस्य क्रियां प्रत्यस्त्येव प्रयोजकत्वमिति तस्यापि हेतुत्वप्रसङ्ग इत्याशङ्क्य हेतुकर्मणोर्भेदं दर्शयति ॥

क्रियायाः प्रेरकं कर्म हेतुः कर्तुः प्रयोजकः ॥
कर्मार्था च क्रियोत्पत्तिः संस्कारप्रतिपत्तिभिः ॥ ४ ॥

निर्वृत्तिविकारप्रतिपत्तिभिर्यथाक्रमं निर्वर्त्यादि त्रिविधं कर्म सम्पादकत्वात् क्रियाफलम् । कर्मात्मसम्पत्त्यर्थं क्रियां प्रयुङ्क्ते हेतुः पुनः क्रियार्थी साधनविनियोगे कर्तारं प्रयुङ्क्ते न तु साक्षात् क्रिया तत्परिशेषाय हि कर्तुः प्रवृत्तिः । तस्य कर्तुः प्रयोजक इति वचना-

द्भिन्नविषयत्वाद्धेतुकर्मणोः प्रयोजकत्वस्य स्वरूपभेदः स्फुट इत्यर्थः । स्वशब्दो हेतौ यस्मादुत्पत्त्यादिभिरुपकारात् क्रिया कर्मार्था ततः कर्म क्रियायाः प्रयोजकम् । यद् यदर्थं तत्तस्य प्रयोजकमिति व्यपदिश्यते । तदुद्देशेन तत्प्रवृत्तेः । कारकान्तराणि तु क्रियार्थानि न तु तदर्था क्रियेति न तानि तस्याः प्रयोजकानि । न हि करणाद्यर्थत्वमवसितविचारो हेतुः ॥ ४ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशे हेत्वधिकारः ।



विभक्तिविधानक्रमेण साधनानां विचारे तृतीयार्थे कर्त्तरि निर्णीते चतुर्थ्यर्थे सम्प्रदानं विचारयितुमाह ।

अनिराकरणात्कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥ १ ॥

अन्वर्थत्वात्सम्प्रदानशब्दस्य त्यागाङ्गमिति लक्षणालाभः। त्यागो दानं दीयमानस्य स्वस्वत्वनिवृत्त्या परस्वत्वापादनं। तत्र चाङ्गं निमित्तकारणमित्यर्थः । तथा च कर्मणा यमभिप्रैतीति लक्षणात् परिग्रह एव त्यागः कथं कारकविशेषरूपं लभते इत्याशङ्क्य कारकत्वनिबन्धनं व्यापारं क्रियासिद्धौ निर्दिशति । अनिराकरणादित्यादिना। उच्यते । तदभिप्रायेणैव त्यागात्तदेवं विधत्यागाङ्गं, स चोपाध्यायः तदभिसम्बन्ध्यगानं न निराकरोति, नापि तस्यकर्तुर्मा त्याक्षीरिति निराकरणं क्रियते । यदि हि निराकुर्यात् त्याग एव सम्पद्येत । परस्वत्वापत्तिपर्यंतत्वात्तस्यानुमन्यते च दीयमानं तथा दीयमानं न निराकरोति । बल्यादिदेवतादीनि तदविक्रियायां वा पूर्वके ऽवदाने प्रेरणमभ्यर्थतया दाने प्रवर्तमानमपि सम्प्रदानव्यापारः।तथा च त्यागोपकारित्वात् त्यागाङ्गं भवत्येव कारके सम्प्रदानम् । ननु च दानस्य तदर्थत्वात्तादर्थ्ये चतुर्थीप्रयोगात् किमर्थं सम्प्रदानसंज्ञा । नैतन्न्याय्यम् । दानक्रियार्थं हि सम्प्रदानं न तु दानक्रिया तदर्थं, कारकाणां क्रियार्थत्वात्सम्प्रदानार्थं तु दीयमानं कर्मेति वाक्यार्थभूताया दानक्रियाया अतादर्थ्यात्तादर्थ्ये चतुर्थ्या अप्राप्तौ तदर्था संज्ञा न्याय्या। रजकस्य वस्त्रं ददाति, घृतः पृष्ठं ददातीत्यादौ तु तदर्थो नास्ति। यो हिंसते न च हानात्मकेन ममताविच्छेदस्याक्षेपादेव परोपकारत्वोपयोगाभिसम्बधेन परस्वत्वापादनमपि स्वीकृतं अत्र च तदभाव इति गौणोऽयं ददातेः प्रयोगः । तत् देवताविषये तु दाने दातुः अस्वामिकत्वसङ्कल्पो विद्यते एव । एवमरोचकिनेऽन्नं ददातीत्यादौ । उपयोगाभावस्तु ज्ञानच् । शूद्राय मतिं ददातीत्यत्रापि मतिसंतानस्यापकामतोऽस्त्येव परोपयोगः । तथा चोपाध्यायादागमयतीत्यध्ययनसन्तानस्यापक्रामतो भवत्यपादानमुपाध्यायः। मतिसन्तानस्य चैकदेशस्त्यज्यमान इति स्वत्वनिवृत्त्यपरस्वत्वापादनलक्षणो मुख्य एव ददात्यर्थः । अन्ये तु मतेः दानस-

सम्बन्धानवगमाद्गौण इत्याहुः । कन्यां ददातीति जन्यजनकभावाव्यापकत्वादपि स्वस्वामिसम्बन्धस्य निवृत्तेर्मुख्य एव ददात्यर्थः । खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यादौ वस्तुनो ऽसत्यपि चपेटादिस्वाम्ये तदुपकारितया दातुः स्वामित्वाभिसन्धिरस्त्येव । यद्यपि प्रतिकूलरूपत्वाच्चपेटायास्तदानीमुपयोगो नास्ति तथा ऽपि फलद्वारेणास्त्येव परोपयोगित्वम् । चपेटासहत्वे शास्त्राभ्यासयोगत्वात् फलावाप्तेः । मृजिरस्मायविशेषेणोपदिष्ट इति तु तादर्थ्ये चतुर्थी । अविशेषेण गणपाठतो मृजिर्मार्जकशब्दार्थो ऽपि भविष्यतीत्यर्थः ॥ १ ॥

तदेवं प्रथमं सम्प्रदानं व्याख्यातम् । इदानीमुत्तरं व्याख्यातुमाह ।

हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम् ।
रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते ॥ २ ॥

यथा संज्ञान्तरपूर्वकं कर्म प्रागुक्तं तथेदमपि सम्प्रदानमन्यपूर्वकं शास्त्रेण रुच्यर्थानां प्रीयमाण इत्यादिना व्याख्यातम् । तथा हि देवदत्ताय रोचते मोदक इत्यत्रान्यकर्तृकाभिलाषो रुच्यर्थ इत्यभिलाषविषयभावमापद्यमानं मोदक देवदत्तः प्रयुङ्क्ते लौल्यात्तदानुगुण्यमाचरतीति हेतुसंज्ञायां प्रयोजकस्य देवत्तस्य प्राप्तायां सम्प्रदानसंज्ञा कथ्यते । तथा हि हेतुसंज्ञाभावे णिचोऽभावाद्धेतुसमवायिन्या द्वितीयस्याः क्रियायाश्च प्रतीतेर्मोदकः स्वक्रियायां धातुवाच्यायां कर्ता भवति न कर्म । रोचते मोदकः । हेतुसंज्ञासन्नियुक्तायाः कर्तृसंज्ञाया अपि देवदत्तस्य बाधनात्कर्तुः क्रिययेप्सिततमत्वाभावात् । स्वातन्त्र्योपलक्षणार्थायामपि कर्तृश्रुतौ सार्थाद्धीयत इति प्रतीयते, तत्र भवेत्तदाश्रयं कर्मत्वं, यथा हीयत इति ज्ञानं शब्दोपात्त सा ऽर्थस्येति तदाश्रयावधिकस्य कर्मसंज्ञा । इह तु शब्दोपात्तायां मोदकक्रियायां रोचत इत्यस्मात्र देवदत्तस्य स्वातन्त्र्यं प्रतीयते । स्वातन्त्र्यस्य कारकमात्रविषयत्वात् कर्तृश्रुतिरनर्थिका स्यात् । यदा तु देवदत्ताय रोचते मोदक इत्ययमर्थो देवदत्तं मोदकः प्रीणयति तथा च प्रीयमाण इति संज्ञिविशेषणं तदा कर्मसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञारम्भः । धातोरर्थान्तरे हि वृत्तौ सकर्मकत्वम् । एवं

देवदत्ताय श्लाघते इति गुणोत्कर्षेण देवदत्तः शंस्यमानगुणवत्तया तत्समर्थाचरणादध्यारोपितप्रयोजकभावो हेतुसंज्ञः प्राप्तो गुणाख्याने वा ज्ञापयितुमिष्टो ज्ञानेनाप्यमानत्वात् कर्मसंज्ञ इति श्लाघह्नुङ्स्थादिना सम्प्रदानसंज्ञः कथ्यते। एवं ह्नौतिप्रभृतीनां यथायोगं वाच्यम्। ह्नौतिप्रभृतयो ह्यत्र स्वार्थोपसर्जनज्ञापनवचनत्वात्सकर्मकाः। तथा च ज्ञीप्स्यमान इति संज्ञिविशेषणमुपात्तम्। देवदत्ताय शतं धारयतीति स्वरूपे ऽवतिष्ठमानं शतमवस्थापयत्यधमर्णो धारयति। अत्रोत्तमर्णो देवदत्तो दानक्रियाद्वारेण निमित्तं धारणस्य। यतो ऽसौ ददाति शतं न च तत्र ददातिक्रिया श्रूयत इत्यश्रूयमाणक्रियाविषये ऽत्र कारकशेषे षष्ठ्यां प्राप्तायां धारेरुत्तमर्ण इति सम्प्रदानसंज्ञा। यथासम्भवमिति हेतुत्वादित्रयं प्राप्तमुच्यते न तु प्रत्येकं। पुष्पेभ्यः स्पृहयतीति पुष्पाणामीप्सिततमत्वात्कर्मसंज्ञाप्रसङ्ग उक्तः। क्रुधादौ तु कर्मसंज्ञाप्रसङ्गः। द्रोहस्यापकारत्वात्तदर्थाः सकर्मकाः। एवमीर्ष्यासूयार्था अपि। देवदत्ताय राध्यतीक्षते इति तु दैवं पर्यालोचयन्तं गणकं देवदत्तः प्रयुङ्क्ते इति हेतुसंज्ञायां प्राप्तायां राधीक्ष्योरिति सम्प्रदानता। देवदत्ताय गां प्रतिशृणोतीत्यत्र तु देवदत्तो याच्ञया गां प्रतिज्ञानात् प्रयुङ्क्त इति हेतुसंज्ञायां प्राप्तायां प्रत्याङ्भ्यां श्रुव इति सम्प्रदानता। पूर्वस्य हि धात्वर्थस्य याचनलक्षणस्य देवदत्तः कर्ता भवन् प्रतिश्रवे ऽङ्गीकारे प्रयोजको भवति। होत्रे ऽनुगृणाति प्रतिगृणातीत्यत्रा ऽपि होतारं शंसिता प्रोत्साहयतीति हेतुकर्मसंज्ञाप्रसङ्गे ऽनुप्रतिगृणश्चेति सम्प्रदानता। शताय परिक्रीतो ऽनुब्रूहीति साधकतमस्य परिक्रयणे नियतकालस्वीकारे सम्प्रदानता विकल्पेनोक्ता। तत्र रुच्यादिष्वित्यादिशब्दोपात्तस्य सुज्ञानत्वात् कर्मसंज्ञाप्रसङ्गो नोक्तः। विशेषाविवक्षाया अभावे चात्र सर्वत्रैव क्रियानिमित्तत्वाश्रयेण शेषत्वे प्राप्ते सम्प्रदानतोदाहार्या। क्रुधादिपाठगणनादकथितकर्मतात्र नास्ति। ननु च पूर्वमपि सम्प्रदानशास्त्रेणैवोक्तं कर्मणाभिप्रैतीति, तत्कथमत्र शास्त्रेणेनेति विशेष्यभणितिरुच्यते। अन्वर्थत्वात्सम्प्रदानशब्दस्य लौकिक एव सम्प्रदानार्थः पूर्वमुक्तः। इह तु रुच्यर्थविषये तदर्थाभावाच्च शब्दसंस्कारमात्रप्रतिपादनाय शास्त्रारम्भसामर्थ्यात्सम्प्रदानत्वमुच्यते इति शास्त्रीय लौकिकभेदेन द्विविधं व्याख्यातम्।

इह साध्याय निगूह्यते, युद्धाय संनह्यते, पत्ये शेते इत्यकर्मकधातुविषये कर्म्मणो ऽभावात्तेनाभिप्रेयमाणस्य सम्प्रदानता न सिध्यतीति क्रियाग्रहणमपि कर्त्तव्यमिति वार्त्तिके ऽभिहितम् । क्रिययाभिप्रेयमाणस्य स्यात्सम्प्रदानसंज्ञा । एतद्भाष्ये प्रत्याख्यातं, क्रिया ऽपि क्रिययाप्यमानत्वात्कृत्रिमं कर्म । साध्याय निगूह्यते इत्यादौ च कया क्रियया क्रियाप्यमानेत्युक्तं संदर्शनादिक्रियाधीनभेदेन धातुनाभिधानात् ॥ २ ॥

कथमभेदाश्रयः क्रियाकारकभावो युज्यते इति समर्थयितुमाह ।

भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति ।
परस्याङ्गस्य कर्मत्वान्न क्रियाग्रहणं कृतम् ॥ ३ ॥

संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियाभेदापेक्षयोत्तरोत्तरस्याङ्गस्य प्रधानक्रियार्थस्य कर्मत्वमविरुद्धं पूर्वपूर्वक्रिययाप्यमानत्वादिति क्रियाया अपि कर्म्मतायां तयापि अभिसम्बध्यमानस्य सूत्रेणैव सम्प्रदानता सिद्धेति क्रियाग्रहणं प्रत्याख्यातमाददाति कर्मणोत्ययं तु विशेषो नाङ्गीक्रियते । तदत्र धातुना प्रधानक्रियैवोच्यते । सामर्थ्यप्राप्तास्तु संदर्शनादयः, ततो भिन्ना इति क्रियाकारकभावोपपत्तिः । तद्यथा । सार्थाङ्क्रियते इति प्रतीयमानं सार्थस्य स्वातन्त्र्यं कर्मत्वनिमित्तम् । यदि वा तादर्थ्यात्प्रधानक्रियाणां प्राप्ताभेदानां धातुभिरभिधाने ऽपि न सर्वथैव भेदतिरस्कार इत्यभेदाश्रयकार्यानुमितप्रतीत्या कर्मतोपपत्तिः ॥ ३ ॥

यद्येवमोदनं पचतीत्यादावपि क्रियाकर्मणाऽभिप्रेयमाणस्य सम्प्रदानसंज्ञा स्यात् । ओदनादेः कर्मसंज्ञा तु क्रियाकर्मसु साधय ये- स्यत आह ॥

क्रियाणां समुदाये तु यदैकत्वं विवक्षितम् ।
तदा कर्म क्रियायोगात्स्वाख्ययैवोपचर्यते ॥ ४ ॥

सन्दर्शनादिक्रियासमुदायः परस्परमङ्गाङ्गिभावमनापन्नः समकक्षतया समुच्चीयमानरूपो यदैकफलत्वादभेदेन धातुनाङ्गीक्रियते तदा भेदनिबन्धनस्य क्रियाकारकभावस्याप्रतीतेरप्रतिबद्धकर्मभावया

क्रियया सम्बध्यमानमोदनादिकर्म आप्ययैव क्रिययेप्सिततमं निमित्तभूतया कर्मसंज्ञयैव व्यवह्रियते न तु सम्प्रदानसंज्ञयेत्यर्थः । समुच्चयेनाभिधानादङ्गाङ्गिभावाभावात् क्रियाकर्मरूपता नास्त्यत्र पक्षे ॥ ४ ॥

भेदविवक्षायां तर्हि सम्प्रदानता स्यादित्याशङ्क्याह ।

भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता ।
तस्माद् गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते ॥ ५ ॥

लौकिकप्रयोगः प्रसिद्ध इति तमुद्दिश्यान्वाख्याने यथाप्रयोगमुपायपरिकल्पनादानीयते भेदाभेदविवक्षेत्यर्थः । एवं च गत्यर्थकर्मणि द्वितीयाचतुर्थ्यावपि उभयविवक्षाश्रयेण सिद्धे इति नार्थस्तदारम्भेण । अन्यत्र भेदविवक्षानियमाद्व्यभिचारोऽतिप्रसङ्गो नास्ति ॥ ५ ॥

एतदेवागमेन द्रढयति ।

विकल्पेनैव सर्वत्र संज्ञे स्यातामुभे यदि ।
आरम्भेण न योगस्य प्रत्याख्यानं समं भवेत् ॥ ६ ॥

भेदाभेदविवक्षानियमानाश्रयेण सर्वत्र कर्मसम्प्रदानसंज्ञयोर्भावान्नियमार्थं गत्यर्थकर्मणीत्यादि सूत्रं भाष्यकारो न प्रत्याचक्षीत । प्रत्याख्याने ह्यतिप्रसङ्गः स्यात् । यदा तु विवक्षानियमश्चेतसि भाष्यकारस्य स्फुरति तदारम्भप्रत्याख्यानयोरविशेषं मन्यमानो युक्तं यत्प्रत्याचक्षीत । तदेवं गत्यर्थविषये विवक्षेयम् । शास्त्रे निगदत इत्येवमादौ तु भेदविवक्षैव । पचत्योदनमित्यादावभेदाविवक्षैव । चेष्टायामनध्वनीत्येतत् प्रत्युदाहरणयोरपि वाऽभेदविवक्षैव । मनसा पाटलिपुत्रं गच्छत्यध्वानं गच्छतीति । सूत्रारम्भे स्त्रियं गच्छत्यजां नयतीत्यातिप्रसङ्गे, सिद्धं त्वप्राप्तवचनादित्युक्तम् । असङ्गमनेनासम्बन्धात् क्रमात्तत्र द्वितीयाचतुर्थ्यौ वक्तव्ये । अजास्त्रियोस्तु सम्प्राप्ते कर्मणीत्यतिप्रसङ्गो न भवति । एवं च विशेषसूत्रारम्भे प्रतिषेधो न वक्तव्यः । अजा हि सम्प्राप्तकर्मात्र प्रतिषेद्धुमभिप्रेतं, तस्य चासम्प्राप्तवचनादेव व्युदासः सिद्धः । अत एव भाष्येऽभिहितं, भाषितप्रतिषेधो वक्तव्य इति ॥ ६ ॥

त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम् ।
आस्थितं कर्म यत्तत्र द्वैरूप्यं भजते क्रिया ॥ ७ ॥

अध्वन्यर्थग्रहणमिति वचनादध्वपर्यायेऽपोऽपि प्रतिषेधः पन्थानं गच्छतीत्यादौ । आस्थितः आक्रान्तो गमिक्रियया अध्वा । उदाहरणप्रवृत्ता गमिक्रिया सा द्विरूपाभावमतिक्रान्तस्य पर्यायो भवति । क्रमाद्यो यो भागः तत्र त्यागरूपं हीनरूपं, क्रियायाः प्राप्ये त्वासादनीये भागे संसर्गरूपं प्राप्तरूपामिति त्यागोपादानलक्षणावयवभेदात् क्रिया द्विविधा । तथा च त्यागोपादानरूपाविच्छिन्नप्रवाहगामिक्रियाक्रान्तोऽध्वा क्रियाविषयभावमात्रविधीयमानकर्मसंज्ञागोचरो न तु क्रियया कर्मभूतया ऽभिसम्बध्यते क्रियाभेदाभावादिति सम्प्रदानसंज्ञाभावः । ग्रामादेरेव तदुपायप्राप्यसाधनाध्वरूपस्य तद्योगः । यस्तु नास्थितो ऽध्वा तत्र विभक्तिर्भवति । कथं वा नास्थितो, ऽध्वा भवति यथोत्पथेन प्राप्नोति पन्थानं, पथे गच्छतीति । तदैव सूत्रारम्भे विशेषो वक्तव्यः प्रत्याख्याने त्वविवक्षानियमेनैवेष्टं सिद्धम् ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
सम्प्रदानाधिकारः ।



इदानीं विभक्तिविधानक्रमेण तदर्थविचारे चतुर्थ्यर्थे निर्णीते प्राप्तावसरं पञ्चम्यर्थमपादानं विचारयितुमाह ।

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधा ऽपादानमुच्यते ॥ १ ॥

अपाये साध्ये यद् ध्रुवमेकरूपमनाविष्टापायलक्षणक्रियमस्मिन्नपायेनाविष्टेऽपि तत्साधनमपादानमित्यवधिविशेषापेक्षत्वात् संरब्धोदासीनं भवतु, को ऽपादानोपादानस्य विषयः।कथ्यते। स निर्दिष्टः स्वशब्दः तस्य तदेकमपादानं।यथा ग्रामादागच्छति पर्वतादवरोहतीत्यादि । उपात्तः क्रियान्तरस्य गणभावेन प्रधानभावेन वा यत्रापायलक्षणो विषयः तदन्यदुपात्तविषयमपादानम् । तद्यथा बलाहकाद्विद्योतते, कुसूलात् पचति, ब्राह्मणात् शंसतीति । अत्र हि निःसरणाङ्गे विद्योतने विद्योतनाङ्गे च निःसरणे विद्युतिर्वर्त्तते इति निःसरणलक्षणोऽपायो विद्यते तस्य गुणप्रधानभावेनोपात्तः। बलाहकात् निःसृत्य ज्योतिर्विद्योतते, बलाहकाद्वा विद्योतमानं निःसरतीत्यर्थः।कुसूलादादाय पचतीत्यपादानाङ्गे पाके पचिः। ब्राह्मणात् गृहीत्वा शंसतीति ग्रहणाङ्गे शंसने शंसिर्वर्त्तते। पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानामित्यलुक्। तत्र वार्तिककारस्य द्वितीयार्थे पञ्चम्येवाभिमता। यदाहान्यथैतानि ब्राह्मणानि ग्रन्थविशेषरूपाणि यः शंसति स कथ्यते ब्राह्मणाच्छंसीति वृत्तिविषये ऽत्र द्वितीयार्थे पञ्चमी वक्तव्या। भाष्यकारस्तु ब्राह्मणाद् गृहीत्वा आहृत्य शंसतीत्याहरणाङ्गे शंसने शंसिर्वर्तते इति उपात्तविषयमेवापादानं मन्यते।अपेक्षितक्रियं त्वपादानं,यत्र सर्वथैव क्रियाशब्दस्यानुपलब्धेरश्रुता क्रियाऽनुमीयमाना सम्बन्धिषु द्रव्येषु संज्ञाविशेषहेतूनां शक्तिभेदानामाविर्भावनिमित्तत्वाय कल्प्यते । तद्यथा माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इति । अत्र हि प्रकर्षप्रत्ययसामर्थ्यात् विभागहेतुरनुमीयमानापकर्षक्रिया ऽपायलक्षणेत्यपेक्षिता। मेघत उपात्तनः चैत्रतः पाकनिरसनयोः शंसतीत्यादौ विद्योतनादिमात्रवचनत्वे ऽपि अन्यत्र निःसरणाद्यङ्गवृत्तेरविरोधात पञ्चमीश्रुतिसामर्थ्यात् अपायोऽत्र प्रतीयते। स च निःसरणाद्यङ्गत्वे धात्वर्थस्योपपद्यते

नान्यथेति तदर्थतानिश्चयः ॥ १ ॥

किं ध्रुवमपाये, किमङ्गमात्रं नेत्याह ।

संयोगिभेदाद्भिन्नात्मा गमिरेव भ्रमिर्यथा ।
ध्रुवावधिरपायो ऽपि समवेतस्तथा ध्रुवम् ॥  ॥

ध्रुवे संयोगेन साहचर्याद्विभागो ऽप्यवधिः स्वीकृतः । तेन दिग्विशेषावच्छिन्नसंयोगविभागकार्यम् । यथा गमनमेव भ्रमणमिति व्यपदिश्यते यथा च गमनग्रहणाद् भ्रमणरेचनस्पन्दनादयो गृह्यन्ते न जात्यन्तराणीति काणादाः, एवं ध्रुवमचलमनाविष्टापायमवधियस्याध्रुवे चले समवेतोऽसौ संरब्धोदासीनसाधनसाध्यस्त्यागस्तुभयकारकगतिविभागलक्षणफलोपायाख्यो गतिविशेषो बोद्धव्यः । गन्तरि समवेतापीयं क्रिया ऽवध्यपेक्षणादपायाख्यां लभत इति तत ध्रुवस्य क्रियासिद्धौ निमित्तत्वकारकत्वमुपपद्यत इत्याशयः। स चापादानसंज्ञाया विषयभावेनाश्रितोऽपायो धातुना ऽभिधीयमानानुमीयमानो वा ध्रुवमपादानसंज्ञमपाये साध्यत इति तन्निमित्तत्वं ध्रुवस्य कारकस्य । एवमपायो व्याख्यातः । ध्रुवं तु स्थिरमचलं लोके प्रसिद्धम् । ततश्च वार्त्तिके चोदितङ्गतियुक्तेष्वपादानसंज्ञा नोपपद्यते ध्रुवत्वादिति। धावतो ऽश्वात्पतितः सार्थाद्गच्छतो हीन इत्यादौ गतियुक्तेष्वपादानसंज्ञासु ध्रुवत्वस्य स्थिरत्वस्याचलत्वस्याभावात् संज्ञा न प्राप्नोतीत्यर्थः।अत्र परिहारो हि उदितः, न चाध्रौव्यस्याविवक्षितत्वादिति ॥ २ ॥

तद्व्याख्यातुमाह ।

द्रव्यस्वभावो न ध्रौव्यमिति सूत्रे प्रतीयते ।
अपायविषयं ध्रौव्यं यत्तु तावद्विवक्षितम् ॥ ३ ॥

ध्रुवं कूटस्थं निष्क्रियमिति द्रव्यस्वभावो ध्रौव्यं सूत्रे न प्रत्येतव्यं अपि त्वसंसृष्टवचनो ऽत्र ध्रुवशब्दः । तथा ह्यपाये साध्ये यद्ध्रुवं तेनापायेनासंसृष्टमित्येषो ऽर्थः।एवं च कृत्वा धावतो ऽश्वात्पततीत्यत्र पतने स्वकर्तृकत्वाभावादेवानाविष्टधावनस्याश्वस्य तत्रास्त्येव संरब्धोदासीनसाधनसाध्यो ह्यपायः । तत्राश्व उदासीनः अपायानु-

संबद्धः । ग्रामादागच्छति यथा पर्वतमितिरूपः। करणस्य पर्वतस्य कर्मणोऽपायेनावेशाद् ध्रुवतायां सत्यामपि परत्वात् करणादिसंज्ञाभिधानादपादान संज्ञा न भवति । तथा च वार्त्तिकं अपादानमुत्तराणि । धनुषा विध्यति, कंसपाव्यां भुङ्क्ते, गां दोग्धि, धनुषा विध्यतीति । तदेवमपायविषयस्य ध्रौव्यस्याश्रयणात् अश्वस्यापायेनावेशादस्तु तद्विषमध्रौव्यं भवदेवाविवक्षितमिति वार्त्तिकार्थः ॥ ३ ॥

तथा हि ॥

सरणे देवदत्तस्य ध्रौव्ये पाते तु वाजिनः ।
आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ॥ ४ ॥

सरणेऽश्वसमवायिन्यां वेगिनायां गतौ यथा देवदत्तस्य ध्रौव्यं तस्य सरणेनानावेशात् तथा देवदत्तसमवेते पाते पतनक्रियायां वाजिनोऽश्वस्य तयानावेशात् ध्रौव्यमिति दृष्टान्तदार्ष्टान्तिकाभावेनेदमुदाहरणं । हेतुत्वेन स्वपायोऽनावेशात् व्यतिरेकमुखेनोभयत्रापि ध्रौव्य उपात्तः।यद्यपि गतिं विना स्वविभिन्ना नापाय इति गम्यत इति वक्ष्यमाणत्वादविभागेन देवदत्तस्यानुपादानात्तत्रापादानं भवत्येव समानो देवदत्तः ॥ ४ ॥

उभावप्यध्रुवो मेषौ यद्यप्युभयकर्मजे ।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ॥ ५ ॥

ततश्च ॥ ५ ॥

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥ ६ ॥

इतरेतरक्रिययेतरेतरस्यानावेशात् अन्यक्रियायामन्यस्य ध्रौव्यं स्वक्रियायां तु कर्तृत्वं द्वयोरपि । यदा तु परस्परमवधिभावो न विवक्ष्यते अपि त्वेकशब्दोपादाने द्विगते अपि क्रिये विवक्ष्येते ॥६॥

तदा ॥

अभेदेन क्रियैका तु द्विसाध्या चेद्विवक्षिता ।
मेषावपाये कर्त्तारौ यद्यन्यो विद्यते ऽवधिः ॥ ७ ॥

मेषावपसर्पेत इत्याख्यातपदमे कर्तृद्वये निर्वर्त्यक्रियापेक्षेण प्रत्यायिते तद्वयोरपि मेषयोः क्रियाविशेषकर्तृत्वमपायेन त्वकस्यावधित्वमित्यपादानता न भवति । एवं च कृत्वा ऽपायकर्तृत्वं मेषयोर्भवति । यद्यन्यः पर्वतादिरवधिः ध्रुवलक्षणो ऽत्र भवति । तथा च तस्यापादानसंज्ञा । पर्वतादपावर्तेत इति परस्परतो मेषावपसर्पेत इत्येवमभिधाने मेषान्तरक्रियापेक्षमवधित्वं द्वयोरेव क्रियापेक्षं सर्वं कर्तृत्वमुक्तम् । कर्तृभेदाद्यत्र क्रियाभेदानुमानमाख्यातादेकेनापि प्रतीयते ॥ ७ ॥

यद्यन्यो विद्यते ऽवधिः तदा तेषामपायकर्तारि नान्यथेत्येतत् भाष्यं ग्रन्थसंवादेनोपपादयितुमाह ॥

गतिर्विना त्ववधिना नापाय इति गम्यते ।
वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितम् ॥ ८ ॥

कारकसूत्रे संज्ञिनिर्देशः कर्तव्यस्तथा चोदितं साधकं कारकमिति वक्तव्यम् । अन्यथा अक्रियानिमित्तस्यापि कारकसंज्ञाप्रसङ्ग इत्यनिष्टप्रसङ्गोपादानं च । वृक्षस्य पर्णं पततीत्याद्युदाहृतं वार्तिकं च भाष्यमिति । भाष्य इत्याह । एतच्च ततः सावधिकाया अपायत्वे न लिङ्गं अपि त्वस्य परिहाराय। तत्रापायस्याविवक्षितत्वादिति । यदुक्तमित्यनेन भाष्यप्रबन्धो ऽत्र निर्दिष्टः प्रपञ्चार्थः । वृक्षसम्बन्धिनः पर्णस्य पातो वाक्यार्थो विवक्षितः, इति वृक्षस्यावधिना विवक्षात्र नास्ति । तथा चापायो ऽयं न भवति।अपायत्वेनावध्यपेक्षारूपेणाविवक्षितत्वादित्यत्रापादानता वृक्षस्य न भवति । यदि त्वपायो ऽत्र विवक्ष्यते तदा वृक्षस्यावधित्वात् वृक्षात्पर्णं पततीति भवति । ततश्च न ज्ञायेत कस्य सम्बन्धि पर्णकं वृक्षस्य वान्यस्य वेत्युक्तम् । तस्मात्पर्णविशेषणत्वेन वृक्षस्य विवक्षितत्वात् वृक्षमत्यजदपि पर्णमात्रं भूमिं स्पृशति इति प्रयोगो भवत्येवेत्यपायाविवक्षोक्ता ।तस्माच्चावसीयते सावधिकगतिरपायो न अश्वाजन्यया ऽवध्यविवक्षया ऽन्यत्रापायसम्भवादपादानत्वं स्यादेवेति ज्ञापकमेतत् ।एतच्चापायेनैवावधेराक्षेपात्तस्यैव विशेषणम् । शब्दवत्संज्ञिप्रतिपत्त्यर्थं ध्रुवग्रहणं संरब्धोदासीनोभयसाधारणतामपायस्य दर्शयितुमितिव्याख्यातम् ॥ ८ ॥

गतमदः इदमिदानीं वक्तव्यं अपादानमुत्तराणीति विप्रतिषेधः कात्यायनेनोक्तः तथाचोक्तैः कारकैरपादानस्य बाधितत्वात्,

बलाहकाद्विद्योतते बलाहको विद्योतते बलाहके विद्योतत इति भाष्ये संज्ञासमावेशो दर्शितो विरुद्ध इत्याशङ्क्य भाष्यं समर्थयितुमाह ।

भेदाभेदौ पृथक्भावः स्थितिश्चेति विरोधिनः ।
युगपन्नविवक्ष्यन्ते सर्वे धर्मा बलाहके ॥ ९ ॥

धूमज्योतिःसलिलमरुतां सङ्घातो बलाहकः, तत्रावयवस्य ज्योतिषो विद्योतनं । तत्र ज्योतिर्यदा तस्मात्समुदायात्मनो बलाहकात् भेदेन विवक्ष्यते तदा भेदविवक्षायां पृथग्भावेनैव वा विवक्ष्यते तत्रावस्थानेनैव वा ॥ यदा पृथग्भावेन विवक्ष्यते तदा बलाहको ऽवधिः पृथग्भावलक्षणस्यापायस्येत्युपात्तविषयमिदमपादानं व्याख्यातम् । बलाहकाद्विद्योतते विद्युज्ज्योतीरूपेति बलाहकात्पृथग्भूय निःसृत्येति निःसरणाङ्गे विद्योतने धातुः । यदा तु निराधारस्य तेजसो ऽवस्थानाभावाद् बलाहकः स्थितिहेतुत्वादाधारभावेन विवक्ष्यते तदाधिकरणसंज्ञा ऽसौ जायते बलाहके विद्योतत इति, बलाहके स्थित्वा प्रकाशत इत्यर्थः।अविन्धनत्वाद्वैद्युतस्य जातवेदसो बलाहको जलपूर्णो ऽप्याधारो युज्यते । स्वस्योदकसम्भेदात् पार्थिवेन धूमेन वा विलीकारात् बलाहकाद्भेदो नास्ति । नास्ति तावत्तेजसः प्रकाशकर्तृत्वाभाव इति भेदविवक्षायां शक्तिद्वयाविर्भावो बलाहके दर्शितः । पृथग्भावे स्थितौ च भिन्नविषये एव । यदा तु स्वरूपत्वाद्बलाहकद्रव्यस्य तत्रत्यात्रत्यमुद्रकादितेजसः प्रकाशे प्रतिबन्धकं न भवतीत्यभेदेन बलाहकाख्यः समुदायस्तेजोवयववशाद्विद्योतनसमर्थो विवक्ष्यते तदात्र कर्तृशक्तिरेवोज्जृम्भते बलहको विद्योतत इति अवयवनिबन्धनाहि समुदायमनुगतामिति व्यपदेशाः । तद्यथा किसलयितमुपवनमिति वृक्षसमुदायस्योपवनशब्दवाच्यत्वेन तदवयवानां सञ्जातकिसलयत्वे समुदायस्तथा व्यपदेशार्हः। तदेवं विवक्षाभेदात्पर्यायेण भिन्नशक्तिबलाह्नाष्य उदाहृतः। ननुयुगपच्छक्तिविवक्षायामिति भवति प्रतिषेधे वचनेनास्य विरोधः कश्चित् ॥ ८ ॥

यत् विप्रतिषेधोदाहरणं तत्र युगपदेव शक्त्यो विवक्षेत्याह ।

धनुषा विध्यतीत्यत्र विनापायविवक्षया ।
करणत्वं यतो नास्ति तस्मात्तदुभयं सह ॥ १० ॥

धनुषा विध्यतीति परत्वात्करणसंज्ञाऽपादानसंज्ञां बाधत इत्युदाहृतम्। तत्र युगपत्प्राप्तिरेव नैकस्य संज्ञयोरिति तद्वद्वयं साधकत्वमपायश्च सहैकस्मिन् द्रव्ये वर्तेते । यतोऽपायविवक्षामन्तरेण साधकतमत्वं व्यधने धनुषो नास्ति। न हि दण्डेनेव धनुषा विध्यतेऽपि तूत्सर्पच्छरस्यावधिभावमुपयद्धनुर्व्यधननिमित्ततां प्रतिपद्यत इति युगपदुभयविवक्षायां भिन्नविषययोरपि शक्त्योर्निमित्तनिमित्तिभावेनावस्थानादेकत्र द्रव्ये समावेशात् सनिमित्तसंज्ञाद्वयहेतुत्वे युगपदेकस्मात्प्रातिपदिकात् तत्कार्यविभक्तिद्वयोत्पत्त्ययोगात् एकसंज्ञाधिकारोपनीते विरोधे परत्वात्करणसंज्ञानिमित्ता विभक्तिर्भवति। शक्त्योर्हि नास्ति अत्र विरोधः भिन्नविषयत्वात्। शरनिःसरणे ह्यपादानं व्यधने तु करणं धनुः, आविष्टशक्ति द्रव्यमेव संज्ञाविषय इति तदपेक्षयैव च प्राप्तिः। तथा हि विभक्तिविधाने अपादाने करण इत्यादिसंज्ञाविशेषेण द्रव्यत्वमेव विशिष्यते । एकस्यानेकसंज्ञाप्रवृत्तावपि नास्ति विरोध इति संज्ञाकार्यविभक्तिमुखेन विरोधोऽत्र व्याख्येयः । एतच्चोदाहरणमुपलक्षणार्थमुपात्तमन्यत्रापि विप्रतिषेधोदाहरणमुभयविवक्षा योज्येति । यथा हि कंसपात्र्यां भुङ्क्ते इत्यत्रास्वादनादिरूपाया भुजेः कंसपात्री धारयन्त्यन्नमन्नाधारः। स चाप्याधारभावस्तावन्नोपपद्यते यावदपादानता नास्ति कंसपात्र्यामन्नमुद्धृत्य भुज्यत इत्यपादानम्। न हि पर्णपुटेन (संहानमभ्यवहारोतोऽस्यादेस्तत्र)? भुङ्क्ते इति भवत्याधारसम्प्रत्ययः। यदि च कंसपात्री न भवेदन्नादस्यावधिस्तदा भुजिनैव निष्पद्येतेत्यपायविवक्षां विना ऽत्र करणत्वाभावः । उभयोर्युगपद्विवक्षायां संज्ञाद्वयप्रसङ्गे ऽपादानमुत्तराणीति अधिकरणसंज्ञया परया पूर्वाऽपादानसंज्ञा बाध्यत एव। गां दोग्धीति क्षारणवचने दुहौ नान्तरीयकोपायः । न हि गोस्तनपतितपयसः क्षारणं संपद्यत इति अपादाननान्तरीयका कर्मशक्तिः गोः परत्वात् कार्यं प्रयुङ्क्ते । एवं धनुर्विध्यतीत्यपायविवक्षां विना व्यधने धनुषः स्वातन्त्र्यं नास्तीत्युभयसंनिधौ ऽपादानमुत्तराणीति परा कर्तृसंज्ञैव भवति। एवमत्र विषये द्वे शक्ती अभ्युपगम्ये ॥ १० ॥

नान्तरीयकत्वादेकत्र द्रव्ये समावेशे संज्ञाद्वयप्राप्तौ विभक्त्याश्रयकार्यद्वारेण विरोधे सति परत्वेन व्यवस्थोक्ता॥ सम्प्रति शक्त्य-

भेदमाश्रित्य संज्ञयोरभिन्नविषयोपादानमाह ।

> एकैव सा सती शक्तिर्द्विरूपा व्यवतिष्ठते ।
> निमित्तसंज्ञयोस्तत्र परया बाध्यतेऽपरा ॥ ११ ॥

परा भिन्नक्रियाविषयाऽपि द्रव्यस्यैकैव शक्तिः। तथा हि न द्रव्यं क्रियाद्वयं सम्पादयतीति तत्र क्रियाद्वयविषये अपादानकरणादिसंज्ञाद्वयं लभत इति एकत्र शक्तौ संज्ञाद्वयप्राप्तौ परसंज्ञया न परा अपरा पूर्वा संज्ञा बाध्यते विरोधादेकसंज्ञाधिकारनिमित्तादित्यर्थः।शरनिःसरणेऽत्र ध्रुवभावो धनुषः साधकतमशक्तावन्तर्भावितः । तेन विनापायोऽपीति तावत्येकैव शक्तिर्भेदात् परस्परनिरपेक्षस्य कार्यद्वयस्य प्रविभक्तरूपशक्तिद्वयपरिकल्पकस्याभावात् । व्यधनक्रियया हि शरापगमक्रियाऽत्र गुणभूतेऽपि पृथगात्मनि शक्त्यन्तरं नाक्षिपति । केवलमेकैव शक्तिर्ग्रहणप्रधानभूतक्रियाद्वयविषयतया भिन्नरूपेण चकास्ति । द्रव्यमेव तर्ह्येकं क्रियाद्वयाद् द्वयं सम्पादयत् साधनमस्तु किं शक्तिपरिकल्पनेनेति । नैतदुपपद्यते । अभिन्नस्वभावत्वादस्या नानाक्रियाविषयतायोगात् । शक्तिस्तु सामर्थ्यमनेके कार्यमपि भवति । तद्यथोक्तं, न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिरिति । यद्येवं पक्त्वौदनो भुज्यतामित्यत्राप्येकैव शक्तिरस्तु नैवमुपपद्यते । अन्तर्भूतेनापायेन पृथगात्मानमलभमानेन द्विनिमित्तशक्तिभेदस्यानाक्षेपादिति स्थितम् ॥ ११ ॥

पूर्वं तु गुणप्रधानभावानाश्रयेण क्रियाद्वयमात्रविषयं शक्तिद्वयमुक्तम् । तदेतदिदानीं ध्रुवमपायेऽपादानमित्यनेनैव लक्षितं सर्वमपादानमस्यैवामी विषया अपरस्तु ॥

> निर्धारणे विभक्तेऽयो भीत्रार्थानां च यो विधिः ।
> उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ॥ १२ ॥

पञ्चमी विभक्त इति विभक्तविशिष्टे निर्धारणे न-स्यमाने पञ्चमीलक्षणो यो विधिरुक्तः सोऽपेक्षितापायः । अपायस्यानुमीयमानस्यापेक्षणादस्यपादानसंज्ञयैव सिद्धः । तस्य

हि माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्येतदुदाहरणम् । अत्र निर्धारणस्य विभक्तविषयत्वाद्भेदेन विभक्तताप्रतिपत्त्यर्थं विभक्तग्रहणमिति पृथग्भूता एव प्रतिपाद्यमाना एतस्य विषयः । ननु गवां कृष्णा सम्पन्नक्षीरतमेत्यादि गोत्वेनापृथग्भावात् तत्रात्मनि विभागेऽपि विवक्षिते पूर्वमाढ्यत्वेन बुद्ध्या साम्यमवस्थापेक्ष्य तथा ह्याढ्यत्वेन समानेन गुणेन बुद्ध्यैकत्वमापाद्यातिशयविशिष्टाढ्यत्वयोगात् पृथक्क्रियेत्यस्ति बुद्धिसंश्लेषपूर्वको विश्लेषोऽपायाख्य इत्येव सिद्धाऽत्र पञ्चमी । अपेक्षितक्रियं च ध्रुवमपादानम् । ननूक्तं भाष्ये, यतः सत्वं गतवान् स एवं प्रयुङ्क्त इति । कारकाधिकारे तमग्रहणमतिशयत्वेन विवक्ष्यत इति गौणे ऽप्यत्र बौद्धेऽपाये अपादानता विरुद्धा । नैवं गोत्रादिकारकव्यवहारो बुद्ध्यवस्थानिबन्धन एव सर्वः । उक्तं प्राक् । बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा । पुनर्विभजते वक्ता तदापायः प्रतीयते इति । एवं सामान्येनैव सिद्धे सूत्रारम्भे बौद्धमपायं प्रतिपाद्यमानं प्रति विवक्षानियमार्थं अपायविवक्षैवात्र कर्तव्येत्यर्थः । तथा भीत्रार्थानां भयहेतुः, पराजेरसोढ इत्यादिष्वपि यो विश्लेषपादानलक्षणः सोऽप्युपात्तो गुणभावेन विषयोऽपायलक्षणक्रिया यत्र स एवंविध इति उपात्तविषयोपादानभेदोदाहरणरूपः पूर्ववादोऽनुवादो भवार्थ एव । तथा हि वृकेभ्यो भयं, चोराद् बिभेतीति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स तु बुद्ध्या चिन्तयति यदि मां वृकाः प्राप्नुयुः ध्रुवमनिष्टापात इति इत्येवं बुद्ध्या वृकान् प्राप्य बुद्ध्यन्तरेण ततो विभागं प्रतिपद्यत इति भयपूर्विकायां निवृत्तौ बिभेतेर्वर्तनात्तस्यैवापायः । एवं चौरेभ्यस्त्रायत इत्यत्राप्यनर्थप्रतिघातवचने त्रायतावनर्थचौरकत्वं बुद्ध्या निश्चित्य ततः स्वमपनयति सह इति सम्भाव्योपायः । अध्ययनात्पराजयत इत्यध्ययनाभ्यासपरिश्रान्तो गुरुपर्युपासनायां (स चायासरूपः प्रागिवाध्ययने) ? ततो निवर्तत इत्यस्यैवापायः । पराजयनिश्चाऽत्र खेदपूर्वके निवर्तने वर्तते खिन्नः सन्निवर्तत इत्यर्थः । पूर्वमेवाप्रवृत्तौ तु खेदं बुद्ध्या समीहितः । एके (घृतयसानित्यं) ? हष्टोपचरतो गुरून् । यवेभ्यो गां वारयतीति यवमुख्य एवापायः । कूपादन्धं वारयति अग्नेर्माणवकं वारयतीति बुद्ध्या कूपाग्निसम्प्राप्तिमनिष्टहेतुभूतां गम्यमानोऽनु वारयतीति

कल्पया ततो निवर्तयतीति बुद्धिसंश्लेषको ऽपायः । उपाध्याया-दन्तर्हित इत्युपाध्यायसमीपप्राप्तौ प्रेषणोपालम्भादि दुःखं ममा-स्ति निश्चित्य ततो ऽपैतीत्यपायः । उपाध्यायादधीत आगमयती-ति च ग्रन्थम्, इत्युपाध्यायमुखोदीरिता हि शब्दाः सन्तानेन वर्तमानाः शिष्यमनुप्रविशन्तीत्युपाध्यायादवधिभूतात्तेषामपक्र-मो ऽवसीयते । तदुक्तं भाष्ये सत्यादिष्वनुपयोगे तु नटस्य शृ-णोतीत्यपायो न विवक्ष्यते । न हि नटादयमादत्ते, अपि तु नटसम्बन्धि शृणोत्येतावदत्रार्थसतत्त्वम् । शृङ्गाच्छरो जायत इति निःसरतीत्येवं लोकस्य प्रतिपत्तेरित्यस्त्येवापायः । शास्त्रे च पदा-र्थो लौकिकः प्रविभज्यत इत्युक्तमिति निर्विकल्पिते प्रक्रियानादरः । तीर्थिको नहि कश्चित्कार्यकारणयोः परिमाणाश्रयेण भेद इति विभागभावः । हिमवतो गङ्गा प्रभवतीति स्रोतोरूपा गङ्गा ततः प्र-सर्पतीति मुख्य एवापायः । गौणं चापायमाश्रित्य जुगुप्साविराम-प्रमादार्थानामुपसंख्यानं प्रत्याख्यातम् । तथा हि अधर्माज्जुगुप्सते विरमतीत्यास्तिकः । परत्र दुःखानुबन्धिनमधर्ममवगत्य जुगुप्सापूर्व-कतया ऽपैतीत्यस्त्यपायः । नास्तिकः पुनरिहैकक्लेशफलं धर्म-मवगत्य ततः प्रमादेन निवर्तत इति प्रमाद्यतीत्युच्यत इति सर्वत्र पूर्वेणैवापादानसंज्ञायामुत्तरो विधिः प्रपञ्चार्थः । लक्षणप्रपञ्चाभ्यां हि व्याकरणं यथोक्तं त एव विधय इत्यादीनि सिद्धम् ॥ २२ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशे ऽपादानाधिकारः ।

इदानीं विभक्तिविधानक्रमायातं षष्ठ्यर्थं शेषलक्षणमतिक्रम्य कारकविशेषप्रक्रमायातमधिकरणे सप्तम्यर्थं विचारयति ॥

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ १ ॥

लोकेऽधिकरणमविशेषेण द्रव्यगुणक्रियाविषयमभिधीयते । शास्त्रे त्वस्मिन् कारकप्रकरणात् क्रियामेवोपकारविशेषेणाधारेण लक्षणेनाधिकरणसंज्ञा अवतिष्ठते । तत्र क्रिया कर्तरि कर्मणि वावतिष्ठत इति तयोः क्रियाधारणादधिकरणसंज्ञा वचनात्पर्यायेण स्यात् । कर्मस्थक्रियाविषया वा कर्तृसंज्ञा कर्तृस्थक्रियाविषया वा कर्मसंज्ञा स्यादिति तत्र यथायोगं कर्तृकर्मसंज्ञा नाधिकरणसंज्ञा प्रसज्यत इत्याशङ्क्योक्तं कर्तृकर्मव्यवहितामित्यादि ॥ कटे आस्ते स्थाल्यां पचतीति कर्तृकर्मधारणे तु तत्समवेतायां क्रियायामुपकारकमधिकरणं पारम्पर्येण । असतीत्याधारे कर्तृकर्मणी क्रियोपकारं न प्रतिपद्येयातामिति तद्योगो नास्तीत्याधारोपकारपरत्वात्कर्तृकर्मसंज्ञे एव । कारकाणां च क्रियानिमित्तत्वं, यथा ऽपि तावदाश्रीयत इति व्यवधानात् क्रियोपकारकत्वमविरुद्धम् । व्यवहितामित्युक्तेऽप्यसाक्षादिति वचनं लोकानुसारेणापि परार्थव्यवस्थायामधिकरणस्य क्रियाधारणं प्रति व्यवधानपरिपोषणार्थम् । तथा हि शब्दात्प्रतीयमानोऽर्थो लौकिकः संस्कारनिमित्तमुच्यते । पृथिव्यां शेते, स्थाल्यां पच्यत इत्यादौ साक्षात् शब्दात् क्रियाविशिष्टे कर्तृकर्मणी प्रतिपद्येते नाक्रियामात्रं ततो निकृष्टरूपमिति क्रियाश्रयधारणादेव लोकेऽधिकरणस्य क्रियोपकारः प्रतीयते न साक्षात् । ॥ १ ॥

इदानीमौपश्लेषिकादिभेदोऽप्यधिकरणस्य । सामान्यमेतल्लक्षणमनुगतमित्याह ॥

उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु ।
उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम् ॥ २ ॥

उपश्लेष आधारस्याधेयेन सम्बन्धः । यद्वशादसावाधारः ।

तस्य त्रिष्वधिकरणेषु भेदः । अन्यथा तु संयोगिन्याधारे सम्बन्धः । अन्यथा तु समवायिनीति सम्बन्धभेदाद्भिन्नत्वेन व्यपदेशः । तथा हि कटे आस्ते देवदत्त इति संयोगिनः कटस्य सकलावयवव्याप्त्या देवदत्तोपश्लेषो न दृश्यते ऽपि तु कतिपयावयवव्याप्त्येत्यविशेषादौपश्लेषिक इति सामान्यसंज्ञया आधारो ऽयमुच्यते । तिलेषु तैलमिति तु समवायिना तैलरसेन तिलानां समस्तावयवव्याप्त्या लोकप्रसिद्धया सम्बन्धाद्व्यापकमधिकरणम्। खे शकुनय इत्यत्र आकाशस्य नास्तिकावयवाभावात्कल्पितप्रदेशतया सम्बन्धाद्वैषयिकमेतदधिकरणमनन्यभावश्चात्र विषयार्थः एवं (अमतत्त्वा)? इति आधारप्रदेशापेक्षया चैतदौपश्लेषिकमधिकरणम्। गुरौ वसतीति शिष्याणां गुर्वधीनानां नावृत्तौ दैशिकमधिकरणं गुरुः । उपश्लेषो ऽत्यत्र बोद्धः । युद्धे सन्नह्यतीति युद्धाभिसम्बन्धिनः सन्नहनस्य तनुत्रादिबन्धनरूपस्य प्रवृत्तेः युद्धं विषयाधिकरणम् । गङ्गायां गाव इति गङ्गाशब्दः सामीप्यात् प्रदेशवृत्तिरित्यौपश्लेषिकमधिकरणम् । शक्तेरभावे सुखमित्यादावस्य बोद्धं कारकत्वमिति प्रागेव निर्णीतम् ॥ २ ॥

के पुनरुपकारा इत्याह ।

> अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता ।
> दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ॥ ३ ॥

अविनाशस्तैलस्य तिलकृत उपकारः । तिलविनाशे हि तैलं विकीर्णं नश्येत् । पर्यङ्के शेत इति शयितुर्गुरुत्वप्रतिबन्धे स्वतन्त्रः कर्त्ता आधारः । अन्यथा गुरुत्वात्पतनो भवेत । खे शकुन्तादय इत्यादौ केन शकुन्ता दे(देनाधारदिशा) ? सम्बन्धस्यात्यवृत्तनमित्ययमेव नत्स्याक्षेपोपयोगः । आदिशब्दाच्छकटादिनाधारेण देशविशेषसमाप्तिः । गुरुणा शिष्याणां संस्कारातिशयः पर्यङ्कादिना चैकस्थित्यमित्येवमादय उपकाराः प्रतिपाद्यन्ते । प्राच्यामादित्य उदेति प्रतीच्यामस्तमेति दक्षिणस्यामगस्त्य उत्तरस्यां ध्रुव इति दिग्विशेषसम्बन्धप्रतिपादनमात्रोपयोगमेतदधिकरणम् ॥ ३ ॥

मूर्त्तानां सर्वेषामन्याधीनायां स्थितौ मूर्त्तस्याधारस्याप्यपरमधिकरणमिति पर्यन्तवर्त्ति मुख्यमधिकरणं किमित्याह ॥

आकाशमिव केषां चिद्देशभेदप्रकल्पनात् ।
आधारशक्तिः प्रथमा सर्वसंयोगिनां मता ॥ ४ ॥

ग्रहनक्षत्रविमानादीनां तावदाकाशमेवाधिकरणं प्रसिद्धमेव । अन्यत्रापि पृथिव्येकदेशो रथादीनामधिकरणं तेषामपि तस्य पृथिव्येकदेशस्याकाशाधारत्वात्पारंपर्येणाकाशमेवाधार इति संग्रहेणाह । समवायिनां तु स्वावयवे आधार इति मुख्याधारशक्तिराकाशाश्रया । भावानां चैकदेशतया संकरः संयोगिभिरपरिमितदेशमुख्यभागकल्पने भिन्नतयाकाशदेशभावं प्रतिपद्यते यतस्तदुक्तं देशभेदप्रकल्पनादिति । संयोगिनां देशतया व्यवच्छिद्यमानस्याकाशभेदस्य तैरेव संयोगिभिरव्यापकैः परिकल्पनादाकाशं सर्वेषामसङ्करेणाधिकरणमित्यर्थः । केषां चित्, ये ह्याकाशमभ्युपयन्ति संसर्गवादिनां तेषां मते इत्यर्थः । तत्रैतत्स्यात् किमिदमनध्यक्षमाण आकाशो नामशब्देन गुणेन गुणवर्णो ऽनुमीयत इति शब्दस्याकाशगुणत्वस्यैवासिद्धेः । शब्दस्यानमप्येतत् न स्पर्शवद्विशेषगुणः शब्दः । अयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलम्भादित्यादिहेतूपन्यासो वायं न्यायरूपादीनामपि ॥ ४ ॥ (सत्यप्याश्रये निमित्तान्तरादप्रवृत्तिदर्शनादाकाशस्य च द्रव्यत्वासिद्धौ शब्दाश्रयत्वस्य विवादास्पदत्वाद्यावद्द्रव्यभावित्वं शब्दे असिद्धं कर्णशष्कुल्यवच्छिन्नाकाशदेशे पवोपपन्नाश्रयाव दन्यत्रोपलभ्यमानत्वासिद्धसमानेन्द्रियग्राह्यलाक्षणिकानेकविशेषगुणयोगित्वमपि स्पर्शवभावस्वकृता तानियामित्याशङ्क्याकाशसद्भावे लोके प्रसिद्धं लिङ्गमाह ॥) ?

इदमत्रेति भावानामभावान्न प्रकल्पते ।
व्यपदेशस्तमाकाशनिमित्तं संप्रचक्षते ॥ ५ ॥

इहाधारशक्तिरेषान्यथानुपपत्तेराकाशसद्भावं गमयति । तथा हि शब्दप्रमाणकानां शब्दार्थो ऽर्थः । अस्ति चायं शब्दः इदं नक्षत्रमत्र निष्ठन्ति । (अर्थात यं निर्दिष्टमसिव न वस्तु भवत्पृथिव्यादिव्यस्याकाशमवलम्बता नचावस्त्वेतत सर्वसामर्थ्यविरहलक्षणादवस्तु न संबंधिव्यपदेशाभावाभिरूप्य हि व्यपदेशो निरू-

पणवस्तुनि बह्वाबह्वानिरूपितस्यैव वस्तुत्वादत एव शाखोरभावे सुखमित्यादौ निरूप्यमाणस्याभावस्याप्याधारभाव इत्यस्ति लोकप्रसिद्धव्यवहारनिमित्तमाकाशमाधारोपगमम) ?। परमार्थविचारे प्रपञ्चरूपमसद्रूपस्यैव सत्त्वादित्यविचारितरमणीयलौकिकपदार्थाभयलक्षणप्रवृत्तिरेव विरुद्धेत्याशयः ॥ ५ ॥

आकाशस्य सर्वभावाधारत्वं यदुक्तं तत्सिद्धस्वभावविषयं, साध्यस्वभावविषयं तु कालस्याधारत्वमित्याह ।

कालात्क्रिया विभज्यन्ते आकाशात्सर्वमूर्त्तयः ।
एतावांश्चैव भेदोऽयमभेदोपनिबन्धनः ॥ ६ ॥

प्रतिबन्धाभ्यनुज्ञाभ्यां ते न विभज्यन्त इति वक्ष्यमाणनयेन अनादिनिविरोधप्रविभागेन आरादप्युपकुर्वन्कालः क्रियास्वाधारभावोपगमनेन प्रविभागमवस्थापयति । आकाशत्वं सर्वगतद्रव्यपरिमाणं पदार्थे संयोगादि तु प्रविभागमसङ्करेणाधारभाव(मुपपामियतदेशे तया तपदार्थव्यक्तिर्विभज्यते।)? मूर्तिक्रियाविवर्तरूपश्चेदं विश्वं भेदावभासबहुलं (लक्षनेत्यवहारे) ? (यथायथमाद्यायां दशायामभिन्नमतीत्येदर्पणकालाकाशाख्याभेदनिमित्तकालाकाशयोरभेद उपनिबन्धनं निमित्तमस्य मुक्तियाविधस्तस्यत्यर्थव्यक्तिः । दशायामभिन्नमभीष्टेर्थोदये ययाकालकाशाख्याभेदनिमित्तः । तस्याधिनेषक्ती यथा क्रियते इत्युपपादितं प्रथमकाण्डे ।)? उपान्वध्याङ्वस इत्युपादिपूर्वस्य वसतेराधारः कर्मसंज्ञः । तत्र वार्त्तिककार आह । वसतेरश्यर्थस्य प्रतिषेध इति ग्राममुपवसतीति यथा तिष्ठतिगतिनिवृत्तिविशिष्टमवस्थानमाह । एवं भोजननिवृत्तिविशिष्टवासमुपवसिरिति वार्त्तिककारो मन्यते । तथा च । वसेस्तु तिष्ठति वत्तु (ग्रामेऽस्ति सवधि) ? इति प्राप्ता कर्मसंज्ञा निवर्त्त्यते विचक्षणैः ।(अनेन वार्त्तिकेना भक्षेस्यवमग्रामो भिकरणां किं न त्रोप तु पूर्वस्य ग्रामे सौ वासंत्रिरात्रमुपवसतीति तत्रायमाशयो भाष्यककारस्य)? इह कालविशेषोऽतरङ्ग प्रकृ-

तमेव कर्म । प्रभुञ्जानस्य चावस्था न निश्चयेनोपपद्यते इत्याधारोऽपेक्षितो नियमः । तत्रोपपूर्वस्य वसेर्न ग्रामस्याधिकरणत्वाभावात् कर्मसंज्ञा ॥ ६ ॥

महावमपि यदाकाशवद्देशोऽपि नियतोऽपेक्षितः; तीर्थे उपवसन्तीत्यादौ तदास्यैवोपवसंदेश इति न कुतः कर्मसंज्ञेत्याशङ्क्य भाष्यं समर्थयितुमाह ॥

यद्यप्युपवसिर्देशविशेषमनुरुध्यते ।
शब्दप्रवृत्तिधर्मात्तु कालमेवावलम्बते ॥ ७ ॥

तीर्थादिदेशविशेषमवलम्ब्य भोजननिवृत्तावभिसंहितायां देशविशेषेण सम्बन्धो यद्यप्युपपूर्वस्य वसेरस्ति तथापि नासौ शब्दसामर्थ्येऽपि निपतितो देशसम्बन्धः। भोजननिवृत्तिमात्रं ह्युपवासार्थः। स चानियतकालोनोपपद्यत इति कालविशेषोत्तरं योग(भीयुक्तः)?। शब्द एव शब्दस्य वृत्तिरभिधानव्यापारः शब्दस्य धर्मस्वभावः शब्दशक्तिरिति यावत्। देशस्तु देवदत्तसत्ताया निराधाराया अनुपपत्तेरपि संहितोऽपि तीर्थादिभिः शब्दार्थे नान्तर्भवति, भोजननिवृत्त्या देशस्य सम्बन्धाभावात्। तत्र त्वङ्गभूतो यो वासः तेनैव देशस्याभिसम्बन्धः। यथा (ग्रामभूतवसति)?क्रियाद्वारेणोपवासेऽधिकरणतां देशः प्रतिपद्यते साक्षात्कालेनैव तथास्या योगः। भोजननिवृत्तेर्नियतकालत्वाकालव्यवधाने भोजनरूपत्वात्तस्यास्तदन्तेवासो नियतदेश इति तद्द्वारेणात्र देशोऽधिकरणम्। अत एव भाष्ये ग्रामे यत्रिरात्रमुपवसतीति उपवासाङ्गस्य वासरेण ग्रामस्य सम्बन्धो दर्शितो न पवरूपत्वात्तस्यैव साक्षात्। सा चात्र वसतिक्रियाङ्गभूतत्वादाक्षिप्तैवेति तद्द्वारेणेष्यते क्रियाकारकसम्बन्धः। वसत्यादेर्भोजननिवृत्तिर्नियतकाला उपवसेरर्थः। अतश्च ग्राम उपवसतीति उक्ते गम्यते वसतिक्रियापेक्षया देशस्याधिकरणता ॥ ७ ॥

प्रधानभूतभोजननिवृत्त्यपेक्षया च कालस्याप्रयुज्यमानस्यापि कर्मता प्रतीयत इत्याह ॥

वसतौ च प्रयुक्तेऽपि देशो ऽधिकरणं ततः ।
अप्रयुक्तं त्रिरात्रादि कर्मोपवसतौ स्मृतम् ॥ ८ ॥

भाष्य इति शेषः। श्रूयमाणोपवासक्रिया सा चानर्हत्वाद् ग्रामादिसा-

मध्येप्रासादं प्रयुज्यमानायामपि वसतिक्रियायामाधिकरणं साधनं श्रूयमाणामन्वययोग्यां क्रियामाक्षिपति । प्रविश पिण्डीमिति भक्षिक्रियाकर्म । अत्र च विशेषप्रतिपत्तिनिबन्धनाभावादव्यभिचरितसम्बन्धसामान्यरूपेण सत्ता प्रतीयते । यस्य चेष्टा अधिकरणसत्ता ग्रामे ऽसौ वसतीति वासं प्रत्यधिकरणं ग्रामादिदेशो ऽत्रातिष्ठते । श्रूयमाणाया उपवसतीति क्रियायाः काल एवान्तरङ्गो ऽधिकरणमित्यप्रयुज्यमानमप्येतद्योगादाक्षिप्यते प्रवेशनक्रिययेव गृहं । तत्र च सा उपवसत्याधार(भूतायां)? कर्मसंज्ञाअङ्गभूतवसतिक्रियाद्वारा यात्रा आधारग्रामाधिदेशलक्षणां (नविमाह)?। प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययात् कारकाधिकारे च कारकात्साक्षात्कारकाणां(प्रवर्त्तो)? नाद्रियते । ननु क्रियासम्बन्धनिमित्तान्तरङ्गबहिरङ्गभावो न देशे ऽन्यथा स्वव्यापारे स्वातन्त्र्यात्कर्मणः कर्तृसंज्ञा स्यात् । कर्मसंज्ञा सन्दर्शनादिभिरीप्सिततमायां क्रियायां सावकाशा यदा वा विशेषस्य उपादिशब्देन द्योतनादस्त एव विशिष्ट उपवसत्यर्थः, तदा कर्मसंज्ञा देशे ऽपि चरितार्था ग्राममुपवसतीति अधितिष्ठतीत्यर्थः । अतश्च भोजननिवृत्त्यर्थतायामुपवसतेः साक्षात्काल आधारः, कर्मसंज्ञादेस्त्वभिसंहितो ऽसौ वासद्वारेणैवाधारो न साक्षादिति स्थितम् । यस्तु निवृत्तिरूपत्वादुपवसेराधारं सम्बन्ध इति व्याचष्टे तस्य कालेनाधारेण सम्बन्धो ऽवस्यात् । अस्ति च निवृत्तिवचनस्यापि उपवसेराधारेण सम्बन्धः । सर्वव्यापारोपरमलक्षणश्च वासः । ग्रामे तिष्ठति ग्रामक्रिया सहभेदावभासकत्वय आस्त इति नियतकालभोजननिवृत्तेश्च क्रियात्वमुपवसेरस्याः क्रियात्वमविरुद्धमेव । कारकाणां हि प्रवृत्तिविशेषः फलानुमेयः । क्रियासत्ता च नियतकालभोजननिवृत्तिरूपस्फुटवचनापि संकल्पविशेष एव । स चात्र व्यापारो निवृत्तिः सन्दर्शनादीनां प्रधानक्रियया सह भेदाभावाद् युद्धाय संनह्यते इत्यादावेव भेदविवक्षेत्युक्तम् । तथा चात्र सङ्कल्पपूर्वककर्तृव्यापारो नियतकालव्यवच्छिन्नमाह, भोजनादिरूपोपादानादिति नान्तरीयककालाख्याधारसम्बन्ध एव कर्मसंज्ञाविधिरिति सिद्धम् ॥ ८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
साधनसमुद्देशेऽधिकरणाधिकारः ॥

इदानीं षष्ठ्यर्थः कारकभेदो विचार्यते स च शेषलक्षणः सम्बन्धः । तस्य कथं कारकभेदत्वं कथं च शेषत्वमित्येतदुपपादयितुमाह ।

सम्बन्धः कारकेभ्यो ऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां वा क्रियायां सो ऽभिधीयते ॥ १ ॥

कारकेभ्यो ऽन्यः कर्मादिविशेषलक्षणेभ्यः षड्भ्यो ऽन्यो ऽयं सम्बन्धः स शेष इत्युपयुक्तेभिन्नवचनशेषशब्दाश्रयेण कारकाणामविवक्षा शेष इति भाष्यं व्याख्यातम् । क्रियाकारकपूर्व इत्यनेन कारकत्वं व्याचष्टे शेषस्य । तथा हि राज्ञः पुरुषो वृक्षस्य शाखा पशोः पादः पितुः पुत्र इत्यादावश्रूयमाणक्रियाविषये स्वस्वामिभावावयवावयविभावजन्यजनकभावादौ सम्बन्ध (इदं ददाति छिनत्ति जनयति क्रियाप्रविभागात)? पूर्वभावि कारकत्वं उत्तरावस्थायामप्यनुगतमिति भवत्येव शेषः । कारके राजा पुरुषाय ददाति । अत्र राज्ञः पुरुष इति स्वस्वामिभावो ऽवतिष्ठते । तत्र क्रियाकारकसम्बन्धः कारणभूतः । शेषसम्बन्धस्तु फलभूतः । क्रियाकारकसम्बन्धो हि वृत्तः स्वाश्रये शेषसम्बन्धफलं निवेश्योपरमते । तत्र पूर्वं कर्तृसम्प्रदानरूपौ राजपुरुषावभूतां, शेषसम्बन्धकाले कर्मादिविशेषरूपतानवगम इति तच्छेषभूतं सामान्यकारकत्वमवतिष्ठत्येव । करणादिसाधनभेदोपाख्यानिमित्ताभावात् कारकेभ्यो ऽन्यः कारकाणां अविवक्षा शेषः । कारकपूर्व इत्यत्र च कारकत्वैकार्थसमवायिनः करणादयः साधनभेदाः कारकशब्देनोच्यन्ते । न तु कारकसामान्यमपि । द्रव्याणां हि सिद्धस्वभावानामयःशलाकाकल्पानां परस्परसम्बन्धाभावात् क्रियाकृत एव सः । क्रिया हि निःश्रयणीव द्रव्याण्युपश्लेषयति । तथा च भाष्यम् । प्रातिपदिकार्थानां क्रियाकृता विशेषा उपजायन्ते, कर्म, करणमित्यादि । तत्र कर्मादिरूपव्यावर्तकेणान्यविशेषस्य दृष्टः शेषाख्यः सम्बन्धः कर्मादिरूपो ऽवतिष्ठमानो ऽनुभूतकर्मादिविशेषे स्वाधारे पदमुपनिदधदपि विवक्षितकर्मादिभेदरूपमात्मानमुपदर्शयति । ततश्च राजपुरुषयोर्वर्तमानत्वसंप्रदानत्वे एकफलावस्थायामनुद्रिक्तस्वस्वरूपसामान्यरूपे सम्बन्ध इति व्यपदेशमर्हतः । तथा चानुल्लिङ्गितविशेषरूपा सप्तमीयं कारकयो

भि: परिगण्यते शब्दार्थसम्प्रत्ययभेदात् । अन्यो हि सम्प्रत्ययो राजा पुरुषाय ददातीति । न ह्यस्मान्नियमेन स्वस्वामिभावनिमित्तं दानं प्रतीयते । करुणादिनापि निमित्तेन दानसंभवात् । अन्यस्तु राज्ञ: पुरुष इति स्वस्वामिभावावयवमान्नूनम् । अतश्च प्रतीतिभेदादनन्यत्वे सिद्धे कर्मादिविशेषेणैव शेषाख्येनाप्यनेनैव प्रातिपदिकार्थोऽभिद्यमानो ऽभिधीयते । तदयं श्रूयमाणक्रियाविषय: सम्बन्ध: स्वस्वामिभावादिनिमित्तानां दानादिक्रियाणामश्रुते: । सम्बन्धलक्षणकार्यान्यथानुपपत्त्याऽनुमीयमाना स्वादानादिक्रिया संनिहितैवेति सर्वमुपपद्यते । ग्रामस्य समीपादागच्छति वृक्षस्य पर्णं पतनीत्यादौ आगमनादिक्रियां प्रति तु ग्रामादेरप्यस्त्येव समीपभावादौ सम्बन्धे क्रियाकारकपूर्वत्वम् । समीपस्य हि ग्राम आश्रय: । एवं पर्णस्य वृक्ष इत्ययमेव सर्वत्र न्याय: । आगमनादिक्रियां प्रति तु ग्रामादेरकारकत्वमुच्यते। श्रूयमाणक्रियाविषयस्तु सम्बन्ध: कारकभेद एवाविवक्षितकर्मादिविशेष: सम्बन्धसामान्यस्वभाव: क्रियाकारकसम्बन्ध एव स इति नैतत्पूर्वक: । तद्यथा नटस्य शृणोतीत्यादि । करणादिसंज्ञानामत्र निमित्ताभावादप्रवृत्ते: । दुह्यादिपरिगणनादकथितकर्मत्वाभावात् । कारकेभ्योऽन्योऽयं शेष: कारकएव। तथा चोपयोगग्रहणमर्थवदित्युक्तं । एवं मातु: स्मरति न माषाणामश्नीयात् सर्पिषो जानीत इत्यादौ कर्मादिकारकभेद एवाविवक्षितरूप: शेष इत्युक्त: । अत्र च शेषषष्ठीप्रसङ्गे प्रतिषेध: कार्य इत्यर्थविभक्तिरुक्ता । सम्बन्धस्य द्विष्ठत्वाच्च द्वाभ्यामपि सम्बन्धिभ्यां षष्ठीप्रसङ्गे इति चोदितं, षष्ठीशेष इति चेत् विशेष्ये प्रतिषेध इति । राज्ञ: पुरुष इति पुरुषशब्दादपि षष्ठीप्रसङ्गे प्रतिषेध: कार्य इत्यर्थ: । सम्बन्धस्योद्भूतत्वात् विशेष्ये प्रथमा न प्राप्नोतीति सा विधेयेत्युक्तं, तत्प्रथमाविधिरिति । अत्रोभयत्रापि परिहारायोक्तं पूर्वेणैवाभिहितमप्रातिपदिकार्थसूत्रं पदसामानाधिकरण्य उपसंख्यानमधिकत्वादिति चोदिते, न वा वाक्यार्थत्वादिति उक्तमनेनैवाभिनिवेशायानूदितम् । राज्ञ इत्यनेनस्सम्बन्धसमन्वयदर्शने पुरुषस्य सम्बन्धित्वं अवगम्यत इति वाक्यार्थो ऽत्र सम्बन्धोऽन्तरङ्ग पदार्थभावाश्रयं संस्कारनिमित्तं भवति न बहिरङ्ग इति नीर: पुरुषो नीलमुत्पलमित्यादिवत् अत्र षष्ठ्यभा-

व: प्रधानसिद्ध इत्यर्थः । यद्येवं राजशब्दादपि श्रीरादिशब्दादिवा-नेन न्यायेन षष्ठी न स्यात् । नैतदस्ति विशेष्यगतस्यैवाधिक्यस्य वाक्यार्थत्वात् । तद्धि प्रधानं प्रथममजहत्स्वरूपमेव उपकार्यतामा-क्षिपति गुणे समापद्यत इति तस्यैवाधिक्यं वाक्यार्थः कथ्यते।गुणस्य तु प्रधानोपकाराय प्रवर्त्तमानस्य स्वात्मप्रतिष्ठस्योपकारकत्वासम्भवा-दुपक्रम एव प्रधानोपयोगक्षमं सम्बन्धिसामान्यापेक्षया रूपान्तरं विपरिवर्त्तते । तदुक्तं अर्थरूपमेवैतज्जातीयकमिति । तथा च गु-णाक्षेपे षष्ठी न्याय्या ।समानाधिकरणं तु विशेषणं नीलादि प्रधाने-नोत्पलादिना सहैकात्म्यमिवापाद्यमानं न व्यतिरेकं भजत इति न तत्र षष्ठी भवति ॥ १ ॥

एतद्वस्तु सतत्त्वं प्रतिपादयति ।

द्विष्ठो ऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधाने ऽप्युपयुज्यते ॥ २ ॥

द्विष्ठः एकः सम्बन्धः तत्र एकैव षष्ठी न्याय्या । षष्ठीद्वये सम्बन्धिद्वयं प्रतीयते । तथा चैका षष्ठी भवन्ती गुणादेव भ-वति न प्रधानात् । यस्मादसौ सम्बन्धो द्वयोरपि सम्बन्धिनोः स्थितः तयोर्गुणप्रधानभावेनैकवाक्यत्वात्, प्रधानानुरोधित्वाद् गुणा-नामेव रूपपरिवर्त्तनस्यौचित्यात् । तत्रैव फलतीति गुणादेव सम्ब-न्धकार्या षष्ठी न्याय्या । तथा च गुणेषु व्यतिरिक्तमाधिक्यं दर्शयति। सम्बन्धस्वरूपं प्रधानं तु स्वरूपादप्रच्यवमानमेव सम्बन्धमनुभवति । इदं हि तस्य प्राधान्यं भवति । यदि गुणानुरोधेन रूपपरिवर्त्तन-मासादयति गुणाश्रयतया च सम्बन्धस्याभिधाने षष्ठ्याः प्रधान-गतमपि रूपमुपभुक्तं स्पष्टमेवाभिहितमेवेत्यर्थः । एतत्तदुच्यते प्रधानगतस्याधिक्यस्य वाक्यार्थत्वं गुणसम्बन्धेन प्रतीयते । परस्प-रसाकाङ्क्षस्य वाक्यत्वाद्राज्ञ इति हि स्वामित्वमवगम्यमानमन्य-थानुपपत्त्यैव गमितत्वात्प्रातिपदिकार्थमेवाधिक्यं सा । ननु प्रवेशात् मत्या पुरुषे ऽपि स्वस्वलक्षणमतिरेकमावेदयते । तथा च पुरुषा-दन्तरङ्गात् प्रथमैव भवतीति बहिरङ्गस्य सम्बन्धस्य पदान्तरसम-न्वयान्यथानुपपत्त्यैव गमितत्वात् प्रातिपदिकार्थ एवाधिक्यं सा न तु प्रवेशात । यदा तु विशेषणविशेष्यभावे कामचारात्पुरुषस्य राज्ञे-

त्युच्यते तदा गुणात्पुरुषादेव षष्ठीति न व्यभिचरति लक्षणम् ॥ २ ॥

उक्तमिदं क्रियाकारकपूर्वकः सम्बन्ध इति, तत्र क्रियाकारकसम्बन्धोऽस्य निमित्तं । स च फलभूतात्सम्बन्धादनुमीयमानो न विशेषेणानुमातुं पार्यते, अपि तु सामान्येन एवंस्वभावत्वादनुमानस्येति कुतोऽयं विशेषावसाय इत्याह ॥

निमित्तनियमः शब्दात् सम्बन्धस्य न गृह्यते ।
कर्मप्रवचनीयैस्तु स विशेषे ऽनुरुध्यते ॥ ३ ॥

पितुः पुत्रः, पशोः पदं, इत्यादौ सम्बन्धिस्वरूपविशेषावधारणादेव नियतस्थितिजननादिक्रियाभावान्वितत्वं सम्बन्धस्य प्रतीयते। राज्ञः पुरुष इत्यादौ तु (अन्वादिभि मपापहारप्रभृतिभिरपि)? स्वस्वामिभावस्य सम्भवाद्यदपि नियतनिमित्तत्वं नावधार्यते, तथापि दानादीनामन्यतमाविनाभावात् क्रियानुमितस्वसम्बन्धिस्वरूपादिति नायं कर्मप्रवचनीयविषयः । क चित्तु शब्दसामर्थ्यान्निमित्तविशेषो नावधार्यते। निमित्तसामान्यावधारणं तु सोऽयमेवंविधो विषयः कर्मप्रवचनीयानां तैरन्वादिभिर्निवृत्तनियमएव च क्रियते सम्बन्धः। तथा हि शाकल्यस्य संहितामनु प्रावर्षदित्यत्र संहिताप्रवर्षणयोः हेतुहेतुमद्भावो निशामयतिक्रियाजनित इति अनुना द्योत्यते । तथा क्रिययान्यत्रानुनिशम्येत्यादौ साहचर्योपलब्धेः कर्म प्रोक्तवन्त इति कर्मप्रवचनीयेष्वतिक्रान्तक्रियाप्रकाशनां (पीयकारात्)? सम्प्रति क्रियामयं नद्योत्र भवति । नापि तद्वाचकक्रियापदस्याश्रुतिहेतुभ्यो ऽभिधायकत्वाभावात् नियमद्योतकत्वाभावात् । स्वरूपेण तु सम्बन्धो विभक्त्यैव प्रतिपाद्यत इति नापि तद्वाचकक्रियापदाक्षेपे ऽनुशब्दस्य सामर्थ्ये कारकविभक्त्यभावादिति सम्बन्धविशेषावद्योतकत्वं स्थापितं कर्मप्रवचनीयानान्तदुक्तमनन्तरकाण्डे। क्रियाद्योतको न सम्बन्धस्य वाचकः। नापि क्रिया पराक्षेपात् सम्बन्धस्य तु भेद इति । एवमपि ब्रह्मदत्त पञ्चाला इति परिपालनादिक्रियाया निमित्तत्वं स्वस्वामिभावस्या ऽभिना वेद्यते।अभितः पुरजनेभ्यः प्रतीति परपराज्यनादिक्रियावृत्तेरनुकार्यानुकरणभावो जनाभिन्नः सम्बन्ध इति प्रतिना प्रकाश्यते । एवमन्यत्रापि यथायोगमनुगन्तव्यम् । तदयमश्रुतक्रियाविषयसम्बन्धे कर्मप्रवचनीयानां महिमा,

क्रियाविषये तु श्रूयमाणैव क्रिया नियतनिमित्तमवधार्यत इति ॥ ३ ॥

ननिवदं विचार्यते। शेष इत्येवं सिद्धायां षष्ठ्यां अधीगर्थेत्यादिना पुनर्विधानं किमर्थं, कर्मणि शेषे इति च सामानाधिकरण्येन विशेषणानुपपत्तेः, कर्मत्वाविवक्षायां हि न शेषः कारकाणामविवक्षा शेष इत्युक्तफलभूतः शेषाविवक्षा अतिरोहितत्वात् कर्मत्वस्येत्याशङ्क्याह।

साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ ४ ॥

कर्मादीनि साधनानि शेषस्य व्यपदेशार्थान्यत्रोपादीयन्ते न तु स्वार्थशेषे षष्ठी। कस्मिन् शेषे, कर्मणि, करण इति वा भूतावस्थानागतकर्मत्वादिरूपाश्रयेण शेषस्य विशेषणात् कर्माद्येकार्थसमवायिनि फलभूते शेष इत्यर्थो ऽवतिष्ठते। तथा च विशेषणोपपत्तिः। षष्ठी तु सिद्धापि प्रतिपदमधीगर्थेत्यादिना नियतविषया पुनः विधीयते, समासो यथा निवर्त्तेतेति पुनः प्रवृत्तिर्हि नियमार्था। तथा च षष्ठ्येव भवतीति वाक्यार्थः। नियमे चान्यनिवृत्तिः प्रधानं अन्यथा प्रतियोगं व्यवच्छेदः। स चात्र षष्ठ्यभावः स चासमासे भवतीति सामर्थ्यात् समासनिषेधो भवति षष्ठ्याः। तदुक्तं प्रतिपदविधाना च षष्ठी न समस्यत इति सूत्रव्यापार एवानेन वार्त्तिकेन च दर्शितो नापूर्वार्थः। क्व पुनरयं समासप्रतिषेधो यत्र समासस्य प्राप्तिः। क्व च प्राप्तिः सुबन्तेषु मातुः स्मृतमिति ॥ ४ ॥

तथा च।

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ॥ ५ ॥

कृद्योगा च षष्ठी समस्यत इत्युक्तं। तथा च कर्तृकर्मणोः कृतीति या षष्ठी तत्र भवत्येव समासः। धर्मस्मरणं मनुस्मरणमित्यादौ न शेषषष्ठीनियमः। कर्तृकर्मणोः कृतीति पुनः कर्तृकर्मग्रहणाच्छेषग्रहणनिवृत्तेरित्यपूर्वविधानमिदं। तेन षष्ठ्येवेति षष्ठी नियमद्वारेण समासप्रतिषेधमावेदयते। मातुःस्मृतमित्यादौ तु निष्ठाप्रयोगे न लोकाव्ययेत्यादिना कर्तृकर्मणोः कृतीति षष्ठी निषिद्धेत्यधीगर्थद-

येनां कर्मणीत्यनेन कर्मणि शेषत्वेन विवक्षिते षष्ठीति सामान्येन सिद्धायां पुनर्विधानात् समासप्रतिषेधार्थं विज्ञायते। ननु च क्तस्य च वर्तमाने, नपुंसके भाव उपसंख्यानमित्यनेनात्र षष्ठी॥ नैतत्। शेषविज्ञानात् सिद्धमित्यस्य प्रत्याख्यानाच्छेषषष्ठ्येवेयं पुनर्विधानेन समासाभावं ज्ञापयति। एवमपि मातुः स्मृतमिति प्रयोगानुपपत्तिः। स्मृतेः सकर्मकत्वात् कर्मणि निष्ठाप्रसङ्गान्मातृसामानाधिकरण्यान्माता स्मृतेति स्यात्। सम्बन्धान्तरापेक्षायां तु मातुःस्मृताया अपि इति प्रयोगो स्यात्। सत्यमेतत्। कर्मादिष्वकर्मवद्वचनमिति तूक्तम्। तथा चात्र कर्मवद् भावे प्रत्यये तेन कर्मणो ऽनभिधानाच्छेषविवक्षया तत्र षष्ठी पुनर्विधानाभावात् समासप्रतिषेधाय सम्पद्यत इति स्थितमेतत्। एवं ज्ञो ऽविदर्थस्य करण इत्यादौ प्रतिपदविधाने सर्पिषो ज्ञानं, मधुनो ज्ञानमित्यादिः समासप्रतिषेध उदाहार्यः। ननु चात्र समासे कृते सम्बन्धमात्रं प्रतीयते, न तु करणपूर्वकः सम्बन्ध इति प्रकृतवाक्यार्थाभिधाने सामर्थ्याभावात् समासो न भविष्यतीति किमन्येन यत्नेन। स्ववाक्ये ऽपि नाशाब्दः सम्बन्धविशेषावसायः साहचर्यात्। तथा हि कर्मषष्ठ्यामपीदृशमेव वाक्यम्। तत्र यथा प्रकरणादिना जानातेर्विदर्थस्य च सम्प्रत्यये कर्मषष्ठ्या अपि भवेत्समासः सत्यज्ञानं, वर्णज्ञानमित्यादौ, तथा सर्पिषो ज्ञानमित्यत्रापि करणादेरविदर्थस्य सम्प्रत्यये करणषष्ठ्या अपि भवेत्समास इति शेषग्रहणानुवृत्त्या ऽत्रापि षष्ठ्याः पुनर्विधानमाश्रित्य परिहरणीय इति स्थितम्। विभक्तिविधानस्य च स्वादिविधिनैकवाक्यत्वे ऽप्यवयववाक्यानां स्वव्यापारस्य निवृत्तेः प्रतिपदविधानं न काचिदनुपपत्तिः। द्विष्ठः सम्बन्धो गुणे व्यतिरिच्यत इत्युक्तम्। गुणप्रधानभावस्य चैकत्र विरोधात् भाष्य उक्तम्, न हीदानीं भवति राज्ञः पुरुषस्येति तत्र प्रतिसमाधानमुक्तं भवति बाह्यमर्थमपेक्ष्येति॥५॥

एतच्चाप्यं व्याचष्टे।



अन्येन व्यपदिष्टस्य यत्रान्यत्रोपजायते।
व्यतिरेकः स धर्मो द्वौ लभते विषयान्तरे॥ ६॥

राज्ञः पुरुषस्य कम्बल इत्यादौ राज्ञो विशेषणेन व्यपदिष्टस्य विशे[illegible]स्य नात्र कम्बलादौ प्रतियोगिनि

